Bauddha Bharati Series 2

# TATTVASAṄGRAHA

OF

ĀCĀRYA SHĀNTARAKṢITA

WITH THE COMMENTARY PAÑJIKĀ

OF

SHRI KAMALASHĪLA

in two volumes

Vol 2

BAUDDHA BHARATI
VARANASI-1
1968

बौद्धभारतीग्रन्थमालाप्रकाशनम्–२

आचार्यश्रीशान्तरक्षितविरचितः

# तत्त्वसङ्ग्रहः

श्रीकमलशीलकृतपञ्जिकोपेतः

[ स्याद्वादपरीक्षातः समाप्तिपर्यन्तम् ]

## द्वितीयो भागः

सम्पादकः

स्वामी द्वारिकादासशास्त्री

व्याकरणपालि-साहित्यबौद्धदर्शनाचार्यः

वाराणसेयसंस्कृतविश्वविद्यालय, वाराणसी




१९६८ खिष्टाब्दः ]  वाराणसी  [ २५१२ बुद्धाब्द.

# प्रकाशकीयम्

१९५८तमे खिस्ताब्दे क्रमेणाहं नालन्दापालित्रिपिटकप्रकाशन-प्रतिष्ठानस्य वाराणसीशिविरे नियुक्तस्तत्रत्याधिकारिभिः। यद्यपि तत्र संस्कृत-भाषायाः साहाय्येन पालिभाषायाः शब्दानां वाक्यानां चावबोधे नातिकाठिन्यं मयानुभूतम्, तथापि सौगतदर्शनं प्रति तु बाल एवाहमासम्। अथ यथा यथाहं तस्मिन् कर्मणि व्यापृतस्तथा तथा तज्ज्ञानं प्रति ममौत्कण्ठ्यमवर्धमानमेवाभूत्, अतो मया पालिसाहित्ये आचार्यपरीक्षामुत्तरीतुं मनीषा कृता। परन्तु तदा तत्परीक्षायां निर्धारितानि प्रायः सर्वाणि पुस्तकान्यनुपलब्ध्यान्यासन्। यथाकथमपि कल्याणमित्राणां साहाय्येन सा परीक्षोत्तीर्णा। ततो हीनयानसिद्धान्तानां कथ-ञ्चित् परिचये जाते महायानसाहित्याध्ययनार्थं मया प्रयतितम्। तदर्थं च वाराणसेयसंस्कृतविश्वविद्यालयस्य बौद्धदर्शनाचार्यपरीक्षोत्तीर्णा। तस्यां परीक्षायां निर्धारितानि ग्रन्थानि स्वल्पत्वेऽप्यनुपलब्ध्यान्येव, का कथा तस्य कालस्य! अतोऽध्ययनकाल एव मया इदं निरणायि यत् सत्यवकाशे बौद्धसाहित्यस्य सौलभ्यार्थं कोऽपि प्रयत्नः करणीयः।

वर्षद्वयात् पूर्वमहं केनापि कार्यविशेषेण नालन्दां गतवान्। तत्रत्य-पुस्तकालये मया तत्त्वसंग्रहस्य कस्याश्चित् पुराणमातृकाया एका चित्रप्रति-कृतिर्दृष्टा। तां दृष्ट्वा हृष्टमानसेन मया तत्रत्याधिकारिणः प्रार्थितास्तस्या उपयोगार्थम्। तैर्निर्दिष्टोऽहं तत्रैवोपित्वा तां प्रतिकृतिमक्षरशो मासमधीतवान्। परं तत्र केषाञ्चित् पत्राणां प्रतिकृतिः स्पष्टा नासीदिति 'कुत इयं प्रतिकृतिरागता' इत्येतद्विषये तत्रत्याधिकारिणोऽपि न किञ्चित् प्रामाणिकमवाबोधयन्। अतोऽहं-स्ततोऽनुमानबलाश्रयेणैव राजस्थाने जैसलमेरं प्रति प्रतस्थे। मम सौभाग्येन तत्रत्यजिनभद्रसूरीश्वरज्ञानभाण्डागारे एका मातृकोपलब्धा, या वस्तुतो नालन्दा-स्थचित्रप्रतिकृतेरुपजीव्यभूता अस्तीति तद्भाण्डागारस्याधिकारिभिः सेविदास ज्ञापितम्। अस्तु। तत्रोषित्वा मया पुनः सा मातृका अक्षरशः पठिता। एवं तत्त्वसंग्रहस्य तन्मातृकाधारेण प्रायः शुद्धः पाठो निर्धारितोऽभूत्।

तदनन्तरमस्य ग्रन्थस्य पुनः प्रकाशनाय पुनः पुनः सम्बोध्यमानोऽपि न कश्चन प्रकाशकोऽस्मिन् कर्मणि व्यापृतोऽभूत् । अन्ते मयैवैतत्साहसमाचरितम्, निरणायि च यद् बौद्धसाहित्यस्य दुर्लभग्रन्थानां पुनर्मुद्रणार्थमेकं प्रतिष्ठानं स्थापनीयम्, यत्रेमे तत्त्वसंग्रहसदृशाः सर्वेऽपि दुर्लभा बौद्धग्रन्थाः प्रकाशमाप्नुयुः । इत्येषा बौद्धभारतीपरिषदः स्थापनाभूमिः ।

एवमितो बौद्धभारतीपरिषदो वयं सर्वाङ्गसौष्ठवसम्पन्नं कमलशीलपञ्जिकासनाथं तत्त्वसंग्रहाख्यमिमं प्रथमं दुर्लभं बौद्धग्रन्थं प्रकाश्य विदुषां समक्षं समुपस्थापयामः । अग्रेऽपि अन्यान् सुदुर्लभान् ग्रन्थान् प्रकाशयिष्याम इत्याशासाना वयं बौद्धदर्शने कृतभूरिपरिश्रमाणाम्, अनुरागमावहतां च विदुषामस्मिन् शुभे कर्मणि सर्वविधं साहाय्यं प्रार्थयामहे ।

अन्ते चास्या बौद्धभारतीपरिषदः स्थापने, तत्त्वसंग्रहसम्पादनकर्मणि च येषां विदुषां योगः प्राप्तस्ते कृतज्ञानामस्माकं सर्वथा प्रणम्याः—इति विज्ञापयति ।

रक्षाबन्धनम्, २०२५ वै०
वाराणसी

प्रकाशकः

# FOREWORD

Swami Dwarika Das Shastri is now editing the *Tattvasaṅgraha* of Śāntarakṣita with kamalaśīla's *Pañjikā*. It was first edited and published in the Gaekwāra Oriental series. It created a stir in the academic world. Dharmakīrti's Pramāṇavārttika was then inaccessible. The Tattvasaṅgraha throws literally a flood of light on Buddhist metaphysics of the Sautrāntika Yogācāra school and logic and epistemology. The most remarkable feature of this work is its reproduction of the views of scholars who otherwise would have remained in perfect oblivion. Kamalaśīla gives the names of the authors and quotes from them. It shows the philosophical activities and speculations of nearly three centuries from time of Dharmakīrti down to Uddyotakara. It was a period of brisk speculation and hard thinking. Diṅganāga and Dharmakīrti's works gave a good jolt and shock to orthodox schools of philosophy. They were faced with the risk of loss of prestige and even existence. The philosophical complacency was made impossible.

From the study of this work along with Uddyotakara's *Nyāyavārttika* and Kumārila's works one can easily gather the cultural movements of centuries The ruthless attack on the realism sponsored by the Nyāya school and particularly the reputation of the Soul theories, backed by powerful logic created a veritable peril. The criticism of the infallibility of the Vedas provoked spirited counter-attacks from the Mīmāṁsā school of which Kumārila was the most powerful exponent, and acted as the defender of the faith. The counter-criticisms of these orthodox stalwarts succeeded in undermining the prestige of the Buddhist church. But the Buddhist were not supine and reacted with vigour and verve. The *Tattvasaṅgraha* pre-eminently represents this phase of Buddhist reaction. This rivalry and intellectual combats served a very salutary purpose. It brought into

being intellectual stalwarts on both sides. These giants were to be admired not only for their thoughts but also for their language. Such a command of Sanskṛt and its felicity of expression and masterful diction will remain an object of admiration for all time to come

The Gāekwāra publication was long out of print, and a fresh edition was the crying need Swami Dwarika Das Shastri has made his mark as a keepable editor of Sanskrt classics He deserves the thanks of the Sanskrit academies and scholars interested in Indian thought for rescuing the invaluable treasures of India from oblivion.

As for the *Tattvasangraha* and the *Pañjikā*, the old edition was based upon imperfect manuscripts. We have got in the Nalanda library photostat copies of a manuscript which supplies all the lacunae I request my learned friend Swami Dwarika Das Shastri to utilise this source. It is a matter of congratulation that Sanskrit has not lost its favour even in the present secular India, which is suffering from a thousand and one maladies India's regeneration will come through Sanskṛt It is the immortal language of India Though perhaps 99% of old Sanskṛt classics have met with death, the surviving classics are sufficient to make us alive to the heights and depths of Indian thought when India was not enslaved by foreigners

I consider it my duty to bring to a focus the academic activities of Sanskrit scholars in the present-day, and I can point to Swami Dwarika Das Shastri as one of them I am proud of his achievements and it is my confidence that I am voicing the general belief

Ratma,
Dakshingram P O.
Dist Birbhum,
West Bengal.

SATKARI MOOKERJEE
11 7. 68

श्रीनवनालन्दामहाविहारस्याध्यक्षचरणानां

डा० सातकारिमुकर्जीमहाभागानां

# प्रास्ताविकम्

स्वामी द्वारिकादासशास्त्री कमलशील-पञ्जिकासनाथस्य श्रीशान्तरक्षित-विरचितस्य तत्त्वसंग्रहस्य सम्पादनकर्मण्यद्यत्वे प्रवृत्तोऽस्ति। पूर्वमयं ग्रन्थो बटोदरस्थगायकवाड्ग्रन्थमालायामपि सम्पादितः प्रकाशितश्चाभूत्। तदैतद्ग्रन्थे प्रकाशमायाते, विद्वज्जनमनांसि कुतुकाक्रान्तानि मोदमानानि चाभूवन्। आचार्यधर्मकीर्त्तेः प्रमाणवार्त्तिकं तदात्वेऽनुपलम्भात्तिरोभूतमिवासीत्, अतस्तदानीं केवलं तत्त्वसंग्रहेणैव सौगतवादाः प्रामाणिकत्वेन ज्ञातुं पार्यन्ते स्म। तत्त्व-संग्रहतः सौगतेषु सौत्रान्तिक-योगाचारनिकाययोस्तत्त्वशास्त्रस्य, तर्कशास्त्रस्य, ज्ञानमीमांसायाश्चानेके प्रश्ना याथातथ्येन दार्शनिकैरवबोद्धुं शक्यन्ते।

ग्रन्थस्यास्य स्वकीयं वैशिष्ट्यमिदमेव यदत्र ग्रन्थकारोऽन्येषां दार्शनिकानां मतान्यपि निर्दिशति। कमलशीलश्च नामग्राहं तद्वचनान्युदाहरति। ग्रन्थकारो-ऽयं तदानीन्तनशतकत्रये जातां धर्मकीर्त्ति उद्योतकरपर्यन्तां दर्शनपरिचर्चां शुक्षिपति। अस्मिन् काले ( ग्रन्थकर्तुः समये ) दार्शनिकाः प्रश्नाः सूक्ष्मेक्षि-कया विवेच्यमाना आसन्। आचार्यदिङ्नाग-धर्मकीर्त्तिप्रबन्धैरास्तिकदर्शनाना सर्वमान्याः सिद्धान्ता न केवलं भृशं कम्पिताः, अपि तु तेषामस्तित्वमपि सौगत-प्रबन्धानां पुरतः सन्दिग्धमिव जातम्। 'अहमेव तत्त्वदर्शी' इति दार्शनिकाना-मात्मतोषस्तदात्वेऽसम्भव एवाभूत्।

ग्रन्थेनानेन सहोद्द्योतकरीयन्यायवार्त्तिकस्य, कौमारिलप्रबन्धानां श्लोक-वार्त्तिकादीनाञ्चाध्ययनेन पाठकैरनायासेनैव तेषु शतकेषु जाता सांस्कृतिकप्रगतिः, दार्शनिकानां तत्त्वान्वेषणा वा अधिगन्तुं शक्यते। तदा नैयायिकानां वस्तुवाद आत्मवादश्च बौद्धानां तर्ककुलिशप्रहारैः निःसत्त्वाविव जातौ। बौद्धानां च वेदप्रा-माण्यवादखण्डनं मीमांसाशास्त्रनिष्णातेन कुमारिलविदुषा महताऽऽटोपेन निरस्तम्, मीमांसासम्प्रदायश्च रक्षितः। एवमास्तिकदार्शनिकानां युक्तिजालेन बौद्धानां सम्मानं दार्शनिकजगति धूलिसादिव जातम्। परं बौद्धा अपि न तूष्णीमासुः, तैरप्यास्तिकदार्शनिकाः भृशमप्रत्याख्येयाभिर्वाचोयुक्तिभिः प्रतिप्रहृताः। सोऽयं

तत्त्वसंग्रहोऽस्यामेवाहमहमिकायां समयपरम्परायां निबद्धः। एवमस्या दर्शन-प्रतिद्वन्द्वितायाः बौद्धिकसंग्रामस्य वा सुखद एव परिणामः समभूत्। उभय-त्रापि, बौद्धेषु आस्तिकेषु च, उद्भटा विद्वांस आचार्यास्तत्त्वमीमांसकाः प्रादुर-भूवन्। इमे दर्शनकेसरिणो न केवलं तत्त्वमीमांसायामेव प्रशस्याः, अपि तु एषां भाषासौष्ठवमपि तथैव प्रशस्ततमम्। इत्थमेषां दर्शने, भाषायाम्, छन्दोरचनासु च यावान् गरिष्ठोऽधिकारः, सोऽस्माकं वराकाणां कृते सततमनुकरणीय एव।

तत्त्वसंग्रहस्य गायकवाड्ग्रन्थमालासंस्करणं बहुहायनेभ्यः पूर्वमेव समाप्तम-भूत्। अतोऽस्य ग्रन्थस्य नवं सर्वाङ्गसौष्ठवसम्पन्नं संस्करणं नितरामावश्यक-मासीत्। स्वामिना द्वारिकादासशास्त्रिणा, प्राचीनसंस्कृतग्रन्थानां विश्वसनीयेन सम्पादकेन, इमं ग्रन्थं साधु सम्पाद्य वस्तुतो लुप्ता भारतीसम्पद् पुनरुज्जीविता। अतोऽयं मनीषी प्राच्यविद्याप्रतिष्ठानानाम्, दर्शनेषु सञ्जाततत्त्वीनां विदुषां चातीव धन्यवादार्हः।

गायकवाड्ग्रन्थमालासंस्करणमेकां त्रुटितामत एवापूर्णां मातृकामुपजीव्य सम्पन्नमासीत्। नवनालन्दामहाविहारस्य पुस्तकालयेऽस्माभिरेका पुराणमातृका-याश्चित्रप्रतिकृतिरुपलब्धा, यत्र सर्वास्त्रुटयः सम्पूरिता इव दृश्यन्ते। अहमस्त-न्मित्राणि स्वामिद्वारिकादासमहोदयाननुरुणध्मि यत्ते इमां मातृकामप्यवश्यमेव परिशीलयेयुः। इदं सन्तोषावहमेव यदद्यत्वेऽप्यस्मिन्नाधुनातने धर्मनिरपेक्षे संस्काराच्च्युते च भारते संस्कृताध्ययनाध्यापनं मनीषिभ्यो रोचत एव। भारतस्य पुनरुत्थानं संस्कृतमाध्यमेनैव भविष्यतीति मे बलिष्ठो विश्वासः। यद्यप्यधुना संस्कृतस्य शताब्दनवतिर्भन्या अस्मद्दौर्भाग्येण लुप्ता एव, तथापि, येऽवशिष्टास्ते-ऽप्यस्मान् प्राचीनभारतस्य दार्शनिकतत्त्वज्ञानं प्रति सततं जागरूकान् विदधति।

इदञ्च मदीयं कर्तव्यं यन्मुत्रां संस्कृतविदुषां लेखनकार्याणि विद्वज्जनपर्षदि समुपस्थापयेयम्। एषु युवसु विद्वत्स्वेकः स्वामी द्वारिकादासशास्त्री, गर्वितोऽह-मस्योपलब्धौ—इति कथयन्नहं न केवलं ममैव, अपि तु विद्वज्जनपर्षदोऽपि हार्दं प्रकटयामीति मे दृढीयान् विश्वासः।

नवनालन्दा
पो० आ० दक्षिणग्राम.
'वीरभूममण्डलम्
वङ्गप्रदेशः

सातकारी मुकर्जी
११. २. ६८

# संक्षिप्तसंकेतविवरणम्

ग्रन्थकर्त्ता च व्याख्याता ये ये ग्रन्था इहोद्धृताः ।
तेषां संक्षेपसंकेतः स्फुटं विक्रियतेऽधुना ॥

| संकेत | नाम | प्रकाशनस्थानम् | वत्सर |
|---|---|---|---|
| अ० को०, अभि० को० | =अभिधर्मकोष | काशीविद्यापीठम्, काशी | १९३२ |
| अ० को० भा० | =अभिधर्मकोश-भाष्यम् | काशीप्रसाद जा० संस्थानम् पटना | १९६८ |
| ऋ० वे० | =ऋग्वेद | प० सातवलेकरसंस्करणम् | |
| काद० | =कादम्बरी | निर्णयसागरमुद्रणालय, बम्बई | १९१२ |
| का० लं० | =काव्यालङ्कारः | बिहारराष्ट्रभाषापरिषद्, पटना | १९६२ |
| जा० मा० | =जातकमाला | मिथिलाविद्यापीठम्, दरभङ्गा | १९५९ |
| तत्त्व० | =तत्त्वसंग्रहः | इदमेवास्मत्सम्पादितं संस्करणम् | १९६८ |
| तत्त्वटी० | =तत्त्वटीका | अमुद्रिता | |
| दी० नि० | =दीर्घनिकायः | नालन्दाप्रकाशनम्, नालन्दा | १९५९ |
| ध० प०, धर्मप० | =धर्मपदम् | नालन्दाप्रकाशनम्, नालन्दा | १९५९ |
| न्या० द० | =न्यायदर्शनम् | अस्मत्सम्पादितम्, भारतीय विद्याप्रकाशनम्, काशी | १९६६ |
| न्या० वा० | =न्यायवार्त्तिकम् | चौखम्बासंस्करणम्, वाराणसी | १९१५ |
| पा० य० भा० | =पातञ्जलभाष्यम् | निर्णयसागरसंस्करणम्, बम्बई | १९३६ |
| पा० सू० | =पाणिनिसूत्रम् | [द्र० अस्मत्सम्पादिता काशिका] तारा पब्लिकेशन्स, वाराणसी | १९६२ ६७ |
| प्र० भा० | =प्रशस्तपादभाष्यम् | चौखम्बासंस्करणम्, वाराणसी | १९६५ |
| प्र० भा० उप० | =वैशेषिकदर्शनम्, उपस्कारसहितम् | गुजरातीप्रेससंस्करणम्, बम्बई | |
| प्र० वा० | =प्रमाणवार्त्तिकम् | (मनोरथनन्दिवृत्तियुतम्) बी० ओ० आर० सोसायटी, पटना | १९३० |
| प्र० विनि० | =प्रमाणविनिश्चय | महिशूरसंस्करणम्, मैसूर | |
| प्र० समु० | =प्रमाणसमुच्चय | महिशूरसंस्करणम्, मैसूर | |
| बौ० ध० द० | =बौद्धधर्मदर्शनम् | बिहारराष्ट्रभाषापरिषद्, पटना | १९५६ |

| संकेतः | नाम | प्रकाशनस्थानम् | वत्सरः |
| --- | --- | --- | --- |
| बार्ह० सू० | =बार्हस्पत्यसूत्रम् | चौखम्बासंस्करणम्, वाराणसी | १९५६ |
| म० भार० | =महाभारतम् | गीताप्रेस, गोरखपुर | २०१२ वै० |
| म० व० | =महावग्गो | नालन्दाप्रकाशनम्, नालन्दा | १९५६ |
| म० वि० | =मध्यान्तविभङ्ग-सूत्रम् | | |
| मी० द० शा० भा० | =मीमांसादर्शन-शाबरभाष्यम् | आनन्दाश्रमसंस्करणम्, पूना | १९२९ |
| मी० सू० | =मीमांसासूत्रम् | चौखम्बासंस्करणम्, वाराणसी | १९०० |
| ल० सू० | =लङ्कावतारसूत्रम् | मिथिलाविद्यापीठम्, दरभङ्गा | १९६३ |
| वा० प० | =वाक्यपदीयम् | पूनाविश्वविद्यालयप्रकाशनम्, पूना | १९६५ |
| वि० का० प० | =विज्ञानकायपादः | अमुद्रितः | |
| वै० द० | =वैशेषिकदर्शनम् | गायकवाडसंस्करणम्, बड़ोदा | १९६१ |
| वै० द० भा० | =वैशेषिकदर्शनस्य प्रशस्तपादभाष्यम् | चौखम्बासंस्करणम्, वाराणसी | १९६५ |
| शा० सू० | =शालिस्तम्बसूत्रम् | मिथिलाविद्यापीठम्, दरभङ्गा | १९६१ |
| श्लो० वा० | =श्लोकवार्तिकम् | चौखम्बासंस्करणम्, वाराणसी | १८९८ |
| सं० नि० | =संयुत्तनिकायः | निर्णयसागरसंस्करणम्, बम्बई | १९४१ |
| सां० का० | =सांख्यकारिका | नालन्दाप्रकाशनम्, नालन्दा | १९५९ |
| हेतुमु० | =हेतुमुखम् | अमुद्रितम् | |

# विषयक्रमः

स्वयं कमलशीलेन व्याख्यातोऽयं यथा यथा ।
तथैवास्य प्रबन्धस्य विषयक्रम उच्यते ॥

## स्याद्वादपरीक्षा

चोद्योपक्रमः

नन्वनेकात्मकं वस्तु यथा[1] मेचकरत्नवत् ।
प्रकृत्यैव सदादीनां को विरोधस्तथा सति ॥ १७०८ ॥

अह्रीकस्य प्रयोगद्वयम्

भावो भावान्तरातुल्यः खपुष्पान्न विशिष्यते ।

---

"अणीयसापि नांशेन मिश्रीभूतापरात्मकम्" (तत्त्व० ३) इत्येतत्समर्थनार्थं चोद्योपक्रमपूर्वकमाह—नन्वित्यादि । यदुक्तम्—

"अर्थक्रियासमर्थं च सदन्यदसदुच्यते ।
समावेशो न चैकत्र तयोर्युक्तो विरोधतः ॥ (तत्त्व० १६७४) इति ।

तत्राह्रीकादयश्चोदयन्ति—"सर्वमेव वस्तु सामान्यविशेषात्मकत्वेनानेकात्मकम्, यथा— श्यामलाभासं रत्नम्; तत् कथं सदादीनां विरोधः, येनोच्यते—'समावेशो न चैकत्र' इति । आदिशब्देन क्रियाक्रियैकत्वानेकत्वादयो गृह्यन्ते । यद्यपि चेदं [G 487] चोद्यम् 'ननु सदेतत्' (तत्त्व० १६७५) इत्यादिना परिहृतम्, तथापि विस्तरेण प्रतिपादनाय, वादान्तरं वा दर्शयितुं पुनरुच्यते ॥ १७०८ ॥

तत्र सामान्यविशेषात्मकत्वसाधनाय यथाक्रममह्रीकः प्रयोगद्वयमाह—भाव इत्यादि[2]। भाव[3] इति[3] किञ्चित् विवक्षितं वस्तु घटादि, स यदि घटादिर्भावः पटादिना भावान्तरेणातुल्यः स्यात् = ततो यदि व्यावृत्तः स्यात्, तदा खपुष्पान्न तस्य विशेषः स्यात्; सर्वथा वस्त्वन्तराद्व्यावृत्तत्वात् । न च वस्त्वन्तराद् व्यावृत्त-

---

१. यथा—पा०, गा० । २. इति—पा०, गा० ।
३-३. पा० गा० पुस्तकयोर्नास्ति ।

# तत्त्वसङ्ग्रहः

## स्याद्वादपरीक्षा

चोद्योपक्रमः

नन्वनेकात्मकं वस्तु यथा[1] मेचकरत्नवत् ।
प्रकृत्यैव सदादीनां को विरोधस्तथा सति ॥ १७०८ ॥

अह्रीकस्य प्रयोगद्वयम्

भावो भावान्तरात्तुल्यः खपुष्पाच्च विशिष्यते ।

---

"अणीयसापि नांशेन मिश्रीभूतापरात्मकम्" (तत्त्व० ३) इत्येतत्समर्थनार्थं चोद्योपक्रमपूर्वकमाह—नन्वित्यादि । यदुक्तम्—

"अर्थक्रियासमर्थं च सदन्यदसदुच्यते ।
समावेशो न चैकत्र तयोर्युक्तो विरोधतः ॥ (तत्त्व० १६७४) इति ।

तदत्राह्रीकादयश्चोदयन्ति—"सर्वमेव वस्तु सामान्यविशेषात्मकत्वेनानेकात्मकम्, यथा—शबलाभासं रत्नम्; तत् कथं सदादीनां विरोधः, येनोच्यते—'समावेशो न चैकत्र' इति । आदिशब्देन नित्यानित्यैकत्वानेकत्वादयो गृह्यन्ते । यद्यपि चेदं [G 487] चोद्यम् 'ननु तदेवं' (तत्त्व० १६७५) इत्यादिना परिहृतम्, तथापि विस्तरेण प्रतिपादनाय, वादान्तरं वा दर्शयितुं पुनरुच्यते ॥ १७०८ ॥

तत्र सामान्यविशेषात्मकत्वसाधनाय यथाक्रममह्रीकः प्रयोगद्वयमाह—भाव इत्यादि[2] । भाव[2] इति[3] किञ्चिद् विवक्षितं वस्तु घटादि, स यदि घटादिर्भावः पटादिना भावान्तरेणातुल्यः स्यात् = ततो यदि व्यावृत्तः स्यात्, तदा खपुष्पात् तस्य विशेषः स्यात्; सर्वथा वस्त्वन्तराद् व्यावृत्तत्वात् । न च वस्त्वन्तराद् व्यावृत्त-

---

१. यथा—पा०, गा० । २. इति—पा०, गा० ।
२–३. पा० गा० पुस्तकयोर्नास्ति ।

अतुल्यत्वविहीनश्च[1] तेभ्यो भिन्नो न सिद्धयति ॥ १७०९ ॥

तस्य विस्तरेण समर्थनम्

सर्वथापि ह्यतुल्यत्वादभिप्रेतेऽस्य[2] वस्तुनः ।
वस्त्वन्तरेण नियतं वस्तुत्वमवहीयते ॥ १७१० ॥
वस्तुनो हि निवृत्तस्य कान्या[3] सम्भाविनी[3] गतिः ।
लक्ष्यते नास्तिता मुक्त्वा तारापथसरोजवत् ॥ १७११ ॥
तस्मात् खपुष्पातुल्यत्वमिच्छता तस्य वस्तुनः ।
वस्तुत्वं नाम सामान्यमेष्टव्यं तत्समानता ॥ १७१२ ॥
अन्यथा हि न सा बुद्धिर्वह्निभुग्दशनादिषु ।
वर्तते नियता त्वेषा भावेष्वेवेति किं कृतम् ॥ १७१३ ॥

स्यान्या गतिः सम्भवति खपुष्पता मुक्त्वा । तस्मात् तस्य वस्तुनः खपुष्पातुल्यत्वमभ्युपगच्छता भावान्तरतुल्यत्वं वस्तुत्वं नाम सामान्यमभ्युपगन्तव्यमिति सिद्धं सामान्यात्मकत्वम् ।

विशेषात्मकत्वं तर्हि कथमिति चेत् ? अत्रोच्यते—अतुल्यत्वविहीनश्च तेभ्यो भिन्नो न सिद्धयति । स एव घटादिर्भावो यदि पटादिना भावेन यदतुल्यत्वं तेन विहीनः स्यात्, तेन पटादिना यदतुल्यो न भवेदिति यावत्, तदा—'अयं घटः', 'अयं न पटः'—इति पटादिभ्यो घटादिर्भिन्नो न सिद्धयेत्, स्वस्वरूपवत् । सिद्धयति च, तस्माद् विशेषात्मकत्वमपि सिद्धम् ॥ १७०९ ॥

सर्वथाऽपीत्यादिनाऽस्यैव प्रयोगद्वयस्यार्थं विस्तरेण समर्थयते ॥ १७१०-१७१२ ॥

अन्यथा हि न सा बुद्धिरित्यादिना सामान्यात्मकत्वसाधनस्योपपत्त्यन्तरमाह ।

[G 408] अन्यथेति । यदि च भावो भावान्तरातुल्यः स्यात्, तदा किमिति घटादिष्वेव 'भावो भावः'—इत्यभिन्ना बुद्धिर्भवति, न तु वह्निदन्त्वादिष्विति

1. अतुल्यत्व०—जै०, अतुल्यत्वविहीनश्चेत्—पा०, गा० ।
2. ह्यतुल्यत्वे ह्यभिप्रेते०—पा०, गा० ।
3-3. कान्या सम्भाविनी—पा०, गा० ।

सारूप्यान्नियमोऽयं चेत् सामान्यं च तदेव नः ।
स्वभावानुगता शक्तिरनेनैवोपवर्णिता ॥ १७१४ ॥
अत्यन्तभिन्नता तस्माद् घटते नैव कस्यचित् ।
सर्वं च[1] वस्तुरूपेण भिद्यते न परस्परम् ॥ १७१५ ॥
अवधीकृतवस्तुभ्यो वैरूप्यरहितं यदि ।
तद्वस्तु न भवेद् भिन्नं तेभ्योऽभेदस्तदात्मवत् ॥ १७१६ ॥
तेभ्यः स्वरूपं भिन्नं हि वैरूप्यमभिधीयते ।
वैरूप्यं न च भिन्नं चेत्येतदन्योऽन्यबाधितम् ॥ १७१७ ॥
तस्माद् भिन्नत्वमर्थानां कथञ्चिदुपगच्छता ।
वैरूप्यमुपगन्तव्यं विशेषात्मकताऽप्यतः ॥ १७१८ ॥
वस्त्वेकात्मकमेवेदमनेकाकारमिष्यते ।

---

क्व कारणं वक्तव्यम् । सारूप्यं कारणमिति चेत् ! तदेव तर्हि सामान्यमिति सिद्धम्; सामान्यपर्यायत्वात् सारूप्यस्य । अनुयायिनी शक्तिरस्ति घटादिष्वेव, न काष्ठक्रन्तादिषु, अतः स्वभावानुगता शक्तिः कारणमिति चेत् ! साऽप्यनेनैव सारूप्येण उपवर्णिता = व्याख्याता । सारूप्यवदत्रापि समानगुत्तरमिति यावत्; तस्या एव सामान्यरूपत्वप्रसङ्गात् । तस्माद् वस्तुरूपेण सर्वं घटादि परस्परमभिन्नमिति सिद्धम् ॥ १७१३–१७१५ ॥

भेदसमर्थनार्थमाह—अवधीकृत इत्यादि । अवधीकृतवस्तुभ्य[2] इति घटादिभ्योऽर्थान्तरेभ्यो यदि घटादि वैरूप्येण रहितं भवेत्, तदाऽभेदात् तेभ्यः घटादिभ्यस्तद् घटादि भिन्नं न भवेद्; आत्मस्वरूपवदभिन्नत्वप्रसङ्गात् । तथा हि—तेभ्यः घटादिभ्यो यद्भिन्नं स्वरूपं घटादीनां तदेव खलु वैरूप्यमुच्यते, नान्यत् । ततश्च सत्यपि वैरूप्ये पटादीनाम् 'न च घटादिभ्यो भेदोऽस्ति' इति स्ववचनव्याहतिः, भेदवैरूप्ययोः पर्यायत्वात् ॥ १७१६–१७१८ ॥

एवं सामान्यविशेषात्मकं प्रसाध्य तयोः सामान्यविशेषयोरसाङ्कर्येण व्यवहारहेतुत्वं प्रतिपादयन्नाह—वस्त्वेकात्मकमेवेदमिति । [C. 489] अयमत्र

---

१. हि—पा०, गा० । २. अवधीकृतेभ्य—पा०, गा० ।

ते चानुवृत्तिव्यावृत्तिबुद्धिग्राह्यतया स्थिताः ॥ १७१९ ॥
आद्या एतेऽनुवृत्तत्वात् सामान्यमिति कीर्तिताः ।
विशेषास्त्वभिधीयन्ते व्यावृत्तत्वात् ततोऽपरे ॥ १७२० ॥

तत्प्रतिविधानम्

परस्परस्वभावत्वे स्यात् सामान्यविशेषयोः ।
साङ्कर्यं तत्त्वतो नेदं द्वैरूप्यमुपपद्यते ॥ १७२१ ॥
परस्परास्वभावत्वेऽप्यनयोरनुषज्यते ।
नानात्वमेवम्भावेऽपि द्वैरूप्यं नोपपद्यते ॥ १७२२ ॥

---

परमार्थः—मेचकरत्नवदेकमेव वस्त्वनेकाकारम्, ते चाकाराः केचिदनुवृत्तिबुद्धिग्राह्याः, केचिद् व्यावृत्तिबुद्धिग्राह्याः । तत्र येऽनुवृत्तिबुद्धिग्राह्याः, तेऽनुवृत्ततया 'सामान्यम्' इति कीर्त्यन्ते; ये तु ततोऽपरे व्यावृत्तिबुद्धिग्राह्याः, ते व्यावृत्तत्वाद् 'विशेषाः' इति कल्प्यन्ते । तत्रानुवृत्तिबुद्धिः—'भावो भव' इत्याद्येवमाकारा, व्यावृत्तिबुद्धिः—'घटोऽयं न पटः' इत्येवमादिमेवाकारा ॥ १७१९-१७२० ॥

तदत्र प्रतिविधत्ते—परस्परस्वभावत्वे इत्यादि । अत्र पक्षद्वयम्—किं यदेव सामान्यं स एव विशेषः, आहोस्विदन्यत् सामान्यमन्यो विशेष इति । तत्र प्रथमे पक्षे सामान्यविशेषयोः परस्परस्वभावत्वे साङ्कर्यं स्यात् । ततश्च—'इदं सामान्यमयं विशेष' इति विभागाभावात् परमार्थत एकस्य वस्तुनो द्वैरूप्यं नोपपद्यते । अथ मा भूत् साङ्कर्यमिति द्वितीयः पक्षः समाश्रीयेत ? तत्र परस्परास्वभावत्वेऽप्यङ्गीक्रियमाणे नानात्वम् = स्वभावभेदः सामान्यविशेषयोः सम्प्रसज्यते । एवं चानयोरसाङ्कर्यं भवेत्, यद्यनयोर्नानात्वं स्यात्, तथैवम्भावेऽपि = नानात्वेऽपि वस्तुद्वयमेव केवलं जातमिति नैकस्य वस्तुनो द्वैरूप्यं युक्तम् ।

अथापि स्यात्—यदि नाम सामान्यविशेषयोः परस्परं स्वभावविवेको जातः, तथापि सामान्यविशेषात्मकं वस्त्वभिन्नमेवेति ? तदेतत्तु परस्परविरुद्धम् । तथा हि—एकस्माद्वस्तुनः सामान्यविशेषयोरभेदेऽङ्गीक्रियमाणे कथमनयोः परस्परं स्वभावविवेकः सिद्ध्येत्; एकस्मादभेदे तयोरप्यभेदप्रसङ्गात्, एकवस्तुस्वभाववत् । सामान्यविशेषयोश्च परस्परं स्वभावविवेकेऽङ्गीक्रियमाणे ताभ्यामभिन्नमेकं वस्तु

सुमतिमतम्

सत्यप्येकस्वभावत्वे धर्मभेदोऽत्र सिद्धयति ।
भेदसंस्थाऽनिरोधश्च[1] यथा कारकशक्तिषु ॥ १७२३ ॥
न दृष्टेऽनुपपन्नं च तत्सामान्यविशेषयोः[2] ।
ऐकात्म्येऽपीक्ष्यते भेदलोकयात्रानुवर्त्तनम् ॥ १७२४ ॥

तत्प्रतिविधानम्

ननु सत्येकरूपत्वे धर्मभेदो न सिद्धयति ।

---

न सिद्धयेत्; ताभ्यामभिन्नत्वात् तस्याप्येकत्वेनाभिमतस्य द्वित्वप्रसङ्गात्, सामान्यविशेषस्वरूपवत् । तस्माद् 'एकमुभयात्मकम्' इति परस्परव्याहतमेतत् ॥ १७२१–१७२२ ॥

सत्यपीत्यादिना सुमतेर्मतमाशङ्कते । [G 490] स हि चोद्योपक्रमे परिहारं किलाह—तत्सामान्यविशेषयो परस्परस्वभावविरहानभ्युपगमे सङ्कीर्णता प्राप्नोति । नैष दोष, तयोरेकस्वभावतया सत्यामपि सङ्कीर्णतायां धर्मभेदः प्रसिद्धयति, कारकशक्तिवत् । तथा हि—वलाहको विद्योतते, बलाहकाद् विद्योतते–इत्यादिकार्यभेदाद् भिद्यमानात्मान कारणशक्तय समुपलभ्यन्ते द्रव्यस्वभावाव्यतिरिक्ततया साङ्कीर्णतायामपि सत्याम् । तदनभ्युपगमे लोकशास्त्रविरोधोऽवश्यम्भावी ।

अपि च—न हि दृष्टेऽनुपपन्नं नाम । तथा हि—सामान्यविशेषयोरेकवस्तुस्वभावत्वेऽप्यसङ्कीर्णताया भेदेन[3] लोकयात्रानुवर्तनमुपलभ्यत एव । भेदेन लोकयात्रा भेदलोकयात्रा; साऽनुवर्त्यते येनैकात्म्येन तथोक्तम् । प्रयोगः—एकस्य वस्तुनो यो भेदव्यवहारः स धर्मभेदनिबन्धन, यथा कारकशक्तिषु । भेदव्यवहारश्चायमेकस्मिन् वस्तुनि सामान्यविशेषलक्षण इति स्वभावहेतुः ॥ १७२३-१७२४ ॥

नन्वित्यादिना प्रतिविधत्ते । अनेन हेतोर्विरुद्धतामाह । इष्टविपरीतसाध-

---

१. सत्याऽविरोधश्च—पा०, गा० । २. तत्सामान्य०—पा०, गा० ।
३. भेदेऽपि—पा०, गा० ।

अकल्पितो विभेदो हि नानात्वमभिधीयते ॥ १७२५ ॥
नानात्मत्वं तु[1] शक्तीनां विवक्षामात्रनिर्मितम् ।
एकवस्त्वात्मकत्वे[2] हि न भेदोऽत्रापि युक्तिमान् ॥ १७२६ ॥
एकमित्युच्यते तद्धि यत् तदेवेति गीयते ।
नानात्मकं तु तन्नाम न तद् भवति यत् पुनः ॥ १७२७ ॥
तद्भावश्चाप्यतद्भावः परस्परविरोधतः ।
एकवस्तुनि नैवायं कथञ्चिदवकल्प्यते ॥ १७२८ ॥
विधानप्रतिषेधौ हि परस्परविरोधिनौ ।
शक्यावेकत्र नो कर्तुं केनचित् स्वस्थचेतसा ॥ १७२९ ॥

---

नात् । तथा हि—पारमार्थिको धर्मभेदोऽत्र[3] वादिना साधयितुमिष्टः, स चाकल्पितो धर्मभेदो न सिद्ध्यति, वस्तुन एकत्वाभ्युपगमात्, तस्य चैकस्य वस्तुनो भेदविरोधात्, यतो भेद इति नानात्वमभिधीयते, यच्च नाना तत् कथमेकं स्यात् ! ॥ १७२५ ॥

दृष्टान्ते च[4] न केवलं साध्यशून्यता, अपि तु साध्यविपर्ययेण हेतुर्व्याप्त इति दर्शयन्नाह—नानात्मत्वमित्यादि ॥ १७२६ ॥

स्यादेतत्—यद्यपि भेद इति नानात्वमभिधीयते, तदेव नानात्वमेकस्य वस्तुनो भविष्यति कथं विरुद्धम्, येन तद्विपरीतं[5] साधयद् विरुद्धो भवेत् ? इत्याह—एकमित्यादि । [C 491] यत्तदेवेदमिति तत्त्वेन विधीयते तद् 'एकम्' इत्युच्यते, यथा चैतन्यपुरुषयोः । वस्तुनः सतस्तत्त्वनिषेधे नानात्वम्, यथा गुणचैतन्ययोः । तनयोः विधिप्रतिषेधयोरेकत्रायोगात् तद्भावलक्षणात् तदभावलक्षणयोरेकत्वनानात्वयोः परस्परविरोध इति कल्पित एवैकस्य धर्मभेदः ॥ १७२७ १७२८ ॥

अथ तद्भावाभावयोर्विरोधः ? इत्याह—विधानेत्यादि ॥ १७२९ ॥

१ च—पा०, गा० ।
२. एकनानात्व—पा०, गा० ।
३ धर्मभेदः—पा०, गा० ।
४ पा०, गा० पुस्तकयोर्नास्ति ।
५. साधयन्—जै० ।

सजातीयविजातीयानेकव्यावृत्तवस्तुनः ।
ततस्ततः परावृत्तेर्धर्मभेदस्तु कल्प्यते ॥ १७३० ॥
एकस्यापि ततो युक्ता कल्पितानेकरूपता ।
वास्तवं नैकभावस्य द्वैरूप्यमपि सङ्गतम् ॥ १७३१ ॥

नरसिंहादीनामपि द्वैरूप्यनिषेधः

नरसिंहादयो ये हि द्वैरूप्येणोपवर्णिताः ।
तेषामपि द्विरूपत्वं भाविकं नैव विद्यते ॥ १७३२ ॥
स ह्यनेकाणुसन्दोहस्वभावो नैकरूपवान् ।
यच्चित्रं न तदेकं हि नानाजातीयरत्नवत् ॥ १७३३ ॥
ऐक्ये स्याच्च द्विरूपत्वान्नानाकारावभासनम् ।
मेचकादिपदार्थेऽपि विहितोऽनावृतिश्च न ॥ १७३४ ॥

स्यादेतत् । धर्मभेदकल्पनायाः किं निबन्धनम्, अवश्यं ह्यस्या[1] भिन्नेन निबन्धनेन भाव्यम्, अन्यथा वस्तुसाङ्कर्यं स्यात्, तच्च यदिदं निबन्धनं स एव च पारमार्थिको धर्मभेदोऽस्माकम् ? इत्याह—सजातीयेत्यादि । सजातीयं विजातीयं च तदनेकं चेति कर्मधारयः, तस्माद् व्यावृत्तं च तद्वस्तु चेति विग्रहः । तादृशस्य वस्तुनः, ततस्ततः = सजातीयाद् विजातीयाच्च, या परावृत्तिः, सा धर्मभेदव्यवस्थाया निबन्धनम् । तस्मादेकस्य कल्पिताऽप्यनेकता सम्भवति, तस्माद् वास्तवं द्वैरूप्यमेकस्य न सङ्गतम् । अपिशब्देन सामान्येन धर्मभेदपूर्वकत्वमात्रे साध्ये सिद्धसाध्यतामपि सूचयति ॥ १७३०–१७३१ ॥

स्यादेतत् । नरसिंहादिभिरनेकान्तः, तथा हि—नरसिंहादय एकस्वभावा अपि भाविकेन द्वैरूप्येणाविरुद्धाः समुपलभ्यन्ते ! इत्याह—नरसिंहादय इति । [G. 492] आदिशब्देन मेचकरत्नादिपरिग्रहः । स हीति नरसिंहः । सन्दोहः = समूहः । रूपमस्यास्तीति रूपवान्, एकेन रूपवानिति विग्रहः । अनेन दृष्टान्तस्य प्रतिवाद्यसिद्धतामाह । न हि बौद्धं प्रति नरसिंह एकोऽवयवी सिद्धः; अनेकाणुसमूहत्वात् । तदेकत्वनिराकरणे प्रमाणमाह—यच्चित्रं न तदेकम्,

1. चास्या—पा०, गा० ।

नृसिंहभागानुस्यूतप्रत्यभिज्ञानहेतवः ।
ते चाणवः प्रकृत्यैव विशिष्टप्रत्ययोद्भवात् ॥ १७३५ ॥
एतेनैव प्रकारेण चित्ररत्नादयो गताः ।
नानात्मना हि वैचित्र्यमेकत्वेन विरुध्यते ॥ १७३६ ॥
अर्थक्रियासमर्थत्वं वस्तुत्वमभिधीयते ।
यदि तस्यानुगामित्वं सर्वं स्यात् सर्वकार्यकृत् ॥ १७३७ ॥
एकोऽपि[1] जनकस्तस्य[1] भावः सामर्थ्ययोगतः ।
तद्वाविशिष्टमन्यस्मिन्नित्यनुत्पादकः कथम् ॥ १७३८ ॥

---

यथा नानाजातीयरत्नसमूहः। चित्रश्च नरसिंह इति स्वभावविरुद्धोपलम्भः, व्यापकविरुद्धस्य वा। ऐक्ये सति द्विरूपत्वनिमित्तनानाकारावभासानुपपत्तिर्बाधकं प्रमाणम्, प्रतिभासभेदनिबन्धनत्वाद् भेदव्यवस्थायाः। एकदेशावरणे सर्वावरणप्रसङ्गश्च बाधकं प्रमाणम्। न ह्येकस्यावृतत्वमनावृतत्वं चेति युगपद्विरुद्धधर्मसंसर्गो युक्तः ॥ १७३२-१७३४ ॥

यद्यनेकाणुसमूहमात्रं नरसिंहः, कथं तर्हि द्विरूपानुगतैकवस्त्वध्यवसायी[2] प्रत्ययः? इत्याह—नृसिंहेत्यादि। नृसिंहयोर्ये भागास्तैरनुस्यूतम् = निर्भासीकृतं यत् प्रत्यभिज्ञानं तद्धेतवः। एवम्भूतस्य प्रत्यभिज्ञानस्य यदा प्रकृत्यैव त एवाणवो हेतवो भवन्ति, तदा किमपरमन्वयिना कल्पितेन। सा च तादृशी प्रकृतिः कुतस्तेषामिति चेद्? आह—विशिष्टप्रत्ययोद्भवात् = विशिष्टात् कारणादुत्पत्तेः। तत्र विशिष्टः प्रत्ययो गतिविशेषसंवर्तनीयं कर्म, स्वजातिसमुद्गतश्च कल्पादिश्च। अनेनैव नरसिंहविचारेण मेचकरत्नादयो गताः = व्याख्याताः, इति न तेषां पृथक् दूषणं वक्तव्यम् ॥ १७३५-१७३६ ॥

यदुक्तम्—"सर्वं च वस्तुरूपेण भिद्यते न परस्परम्" (तत्त्व० १७१५) इत्यत्राह—अर्थक्रियेत्यादि। [G 193] अर्थक्रियाकारि यद्रूपं तद् वस्तुत्वमुच्यते, नान्यत्। तच्चेत् सर्वमनुगामि सर्वं सर्वार्थक्रियाकारि प्राप्नोति। तेनैव हि

1-1. एकोऽर्थजनक०—पा०, गा०।   २. ०गोचरप्रत्यय०—पा०।

नीलाद्येव च वस्तुत्वमनुगामि यदीष्यते ।
सितपीताद्यपि प्राप्तं नीलसंसाध्यकार्यकृत्[1] ॥ १७३९ ॥
एकमेव ततो जातं द्वितीयात्मविवर्जितम् ।
सर्वं विश्वमतो नैकमनेकाकारमस्ति वः ॥ १७४० ॥
तदेव चेन्न वस्तुत्वं कणाशिमतसत्त्ववत् ।
नैकस्यानेकरूपत्वमेव वः स्याद् विभेदतः ॥ १७४१ ॥
विरुद्धधर्मसङ्गश्च वस्तूनां भेदलक्षणम् ।
कथञ्चिदन्ययेष्टोऽपि न भेदो नीलपीतयोः ॥ १७४२ ॥
अनुगाम्यन्यथाभावात् स च सामान्यभेदयोः ।
विद्यते तत् कथं नास्ति तयोर्भेदः परिस्फुटम् ॥ १७४३ ॥

रूपेण सर्वे जनका इष्यन्ते । तस्य च सर्वत्राविशिष्टत्वादिति यत्किञ्चिद् यत-कुतश्चिदुत्पद्येत । किञ्च—यदेतन्नीलपीतादि, तदेव किं वस्तुत्वम्, आहोस्विदन्यत् ? यदि तदेव, तदा तस्यानुगामित्वात् सितपीताद्यपि नीलसाध्यवस्त्वज्ञानाद्यर्थक्रिया-कारि प्राप्नोति । अपि च—द्वितीयस्य स्वभावस्याभावात् 'एकस्यैव च भावे'[2] सर्वं जगदेकमेव वस्तुजातमिति 'एकमनेकाकारम्' इति प्रतिज्ञातार्थहानिः स्यात् । अथान्यदेव वस्तुत्वं नीलादिभ्य, कणादाभिमतसत्त्ववत् यथा कणादस्य अभिमतं सत्सामान्यं व्यतिरिक्तं वस्तुत्वं नामेति, एवमपि सुतरामेकस्यानेकत्वम-युक्तम्; एकान्तेनैव भेदात् । किञ्च—यौ विरुद्धधर्मसंसर्गिणौ तौ भिन्नौ, यथा—शीतोष्णौ । विरुद्धधर्मसंसर्गश्च सामान्यविशेषयोर्विद्यते; अनुगाम्यन्यथाभावादिति स्पष्ट एव तयोर्भेदः । अन्यथाभाव = अननुगामित्वम् । यदि च विरुद्धधर्म-संसर्गेऽपि भेदो नेष्यते, तदा नीलपीतयोर्योऽप्ययं कथञ्चिद्विशेषरूपेण भेद इष्टः, स न स्यात्, "बुद्धिभेदाच्च नैकत्वं रूपादीना प्रसज्यते" ( श्लो० वा०, प्र० सू० १५८ ) इति वचनात् कुमारिलेन नीलादीना भेदस्योपवर्णितत्वात् ॥ १७३७–१७४३ ॥

1. नीलसाध्य०—पा० । 2–2. पा०, गा० पुस्तकयोर्नास्ति ।

## कौमारिलमतेनानैकान्तिकत्वोद्भावनम्

यथा कल्माषवर्णस्य यथेष्टं [1]रूपनिग्रहः ।
चित्रत्वाद् वस्तुनोऽप्येवं भेदाभेदावधारणे ॥ १७४४ ॥
यदा तु शबलं वस्तु युगपत् प्रतिपद्यते ।
तदाऽन्यानन्यभेदादि सर्वमेव प्रलीयते ॥ १७४५ ॥
वस्तुनोऽनेकरूपस्य रूपमिष्टं विवक्षया ।
युगपत्क्रमवृत्तिभ्यां नान्योऽस्ति वचसां विधिः ॥ १७४६ ॥

यथेत्यादिना कौमारिलमतेन पुनरप्यनैकान्तिकत्वमुद्भावयति । [G. 494] कल्माषवर्णं = शबलो वर्णः । तस्य यथा नीलमिति वा, पीतमिति वा, लोहितमिति वा—इत्यादिना यथेष्टं रूपनिग्रहः[2] = रूपावधारणम्, तथा चित्रस्य = अनेकरूपस्य वस्तुनः स्वपररूपाभ्याम् = सदसदात्मनः सामान्यविशेषरूपस्य वा बुधात्मनः इच्छावशाद् भेदाभेदावधारणा[3] । यदा [4]भेदमवधारयितुमिच्छति तदा तमवधारयति, यदा[5] त्वभेदं सामान्यमवधारयितुमिच्छति तदा तमवधारयति[5] । यदा तु युगपत्सामान्यविशेषात्मकं वस्तु [6]झगिति प्रतिपद्यते, तदाऽन्यानन्यभेदादि चोद्यं प्रलीयते, नावतरतीत्यर्थः, प्रत्यक्षेण शबलस्य वस्तुनः प्रतीयमानत्वात् ।

तत्रेदमन्यानन्यादिचोद्यम्—भिन्नेभ्योऽश्वादिपिण्डेभ्योऽनन्यत्वात् सामान्यस्यापि भिन्नत्वम्, स्वरूपभेदप्रसङ्गः, सामान्याद्वाऽप्यभिन्नत्वादभेदो भेदानां सामान्यस्येव प्रसज्यते । तथा भेदाभेदौ परस्परं सामान्यविशेषयोः कथं विरुद्धौ स्याताम् । आदिशब्देन 'एकत्वानेकत्वे परस्परविरुद्धे', तथा 'तदेव सामान्यं स एव विशेषः'—इत्येवमादि ग्रहीतव्यम् ॥ १७४४–१७४५ ॥

यदेतत्, सर्वत्रैव शबलस्य प्रतीतिः स्यात्तु क्रमयौगपद्याभ्याम् ? इत्याशङ्क्याह—वस्तुन इत्यादि । युगपत् क्रमेण वा यदस्य सामान्यविशेषादिरूपं व्यवस्थाप्यते, तद्विवक्षावशात् । यदा यौगपद्येन सदसद्रूपे विवक्षति सामान्यविशेषरूपं वा,

1. वर्णनिग्रह इति त्रिषु पुस्तकेषु पाठः ।
2. वर्णनिग्रह—पा०, गा० ।
3. °रूपावधारणे—पा०, गा० ।
4. विशेषणमिलयं ।
5-5. पा०, गा० पुस्तकयोर्नास्ति ।
6. झगिति—पा० ।

तत्प्रतिविधानम्

नैवम्; चित्रत्वमेकत्वं प्रतिषिद्धं ह्यनन्तरम् ।
अनेकरूपं वैचित्र्यमेकत्वेनासहस्थितम् ॥ १७४७ ॥
ते हि यावन्त आकारास्तस्मिन् वस्तुनि भाविकाः ।
तावन्त्येवोपजातानि[1] वस्तुनीत्येकतास्ति[2] न[2] ॥ १७४८ ॥
एकस्माद् वस्तुनोऽन्यत्वे तादात्म्यविकलं भवेत् ।
नाकाशपुष्पसङ्काशं तद्वचप्यर्थक्रियाक्षमम् ॥ १७४९ ॥

---

तदा तस्य रूपं व्यवस्थाप्यते । अथ क्रमेण विवक्षति सद्रूपमसद्रूपं सामान्यविशेषं वा, तदाऽस्य तद्व्यवस्थाप्यते । सर्वमेव हि तस्य स्वरूपं स्वेच्छया[3] क्रमाक्रमाभ्यां व्यपदिश्यते, विचित्ररत्नकोश इव मरकतपद्मरागादिरिति । अथ क्रमाक्रमौ मुक्त्वाऽन्येन प्रकारेण कस्मान्न निर्दिश्यते ? इत्याह—नान्योऽस्ति वचसां विधिरिति । युगपत्क्रमवृत्तिभ्यामित्यपेक्षणीयम् । विधि = प्रकार ॥ १७४६ ॥

नैवमित्यादिना प्रतिविधत्ते । [G 495] 'एकं चित्रम्' इति परस्परविरुद्धमेतदिति 'यच्चित्रं न तदेकम्' ( तत्त्व० १७२७ ) इत्यादिना प्रतिपादितम् । यतो विचित्रमित्यनेकत्वमुच्यते । एकत्वानेकत्वयोश्च परस्परपरिहारस्थितिलक्षणो विरोधः । तस्मान्नैकस्मिन् भाविका[4] बहव आकाराः सम्भवन्ति ।

भवन्ति वा, तथाप्येकस्यानेकत्वं न प्रतिपादितमेव । तथा हि—तावन्त्येवापराणि वस्तूनि जातानीति, यदि परं भाविकत्वेन प्रतिपादितं स्यात् । न त्वेकस्यानेकत्वम्, परस्परविरोधात् ॥ १७४७–१७४८ ॥

यदुक्तम्—"वस्तुनो हि निवृत्तस्य काऽन्या सम्भाविनी गतिः" ( तत्त्व० १७११ ) इत्याह—एकस्मादित्यादि । यदि हि वस्तुमात्राद् व्यावृत्तिर्हेतुत्वेन क्रियते खपुष्पाविशेषत्वे साध्ये तदा हेतुरसिद्धः । न हि घटस्य वस्तुमात्राद् व्यावृत्तिः सिद्धा, किं तर्हि ? स्वस्वभावं मुक्त्वाऽन्यस्माद् वस्तुविशेषात् । अथ वस्तु-

---

1 °वा जातानि—पा°, °वाय जातानि—गा° ।
२–२ °तास्तिता—पा०, तास्थिता—गा° ।
३ पा°, गा° पुस्तकयोर्नास्ति ।
४. पारमार्थिका इत्यर्थः ।

परोद्भावितवस्तुत्वानुपपत्तिपरिहारः

शक्तं रूपं न चैकस्य वस्तुत्वन्येषु वर्त्तते ।
कार्योपलम्भनिर्भासभेदादेरिति वर्णितम् ॥ १७५० ॥
अतद्वस्त्वात्मकत्वं तु तदश्लेषेण युज्यते ।
नाविशेषमवस्तुत्वं वस्तुलक्षणभावतः ॥ १७५१ ॥
तदर्थक्रियायोग्यमिति वस्त्विति कल्पने ।
असमर्थपरावृत्तिः सादृश्यं तद्विकल्पितम् ॥ १७५२ ॥
ततश्चात्यन्तभेदेऽपि तुल्यताऽस्ति विकल्पिता ।
भावो भावान्तरैस्तुल्यः खपुष्पात् तद्विशिष्यते ॥ १७५३ ॥

---

विशेषाद् व्यावृत्तिर्हेतुत्वेनोपादीयते, तदाऽनैकान्तिको हेतुः । तथा हि—एकस्माद् घटादेर्वस्तुनो व्यावृत्तं घटादिकं वस्तु यदि[1] परं तादात्म्यविकलं सिद्ध्येत्, न तु सर्वथा निःस्वभावम्; तस्याप्यर्थक्रियाकारित्वात् ॥ १७४९ ॥

शक्तमित्यादिनैतदेवानैकान्तिकत्वं समर्थयते । यदि कार्यक्रियासामर्थ्यलक्षणं वस्तुत्वं नामानुयायि स्यात्, ततो व्यावृत्तस्य निःस्वभावता स्यादर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः; यावता शक्तं रूपं यदेकस्य नीलादेस्तदन्येषु सितादिषु न वर्तत इति पूर्वमुक्तम्—"नीलस्यैव च वस्तुत्वमनुगामि यदीष्यते" ( तत्त्व० १७३९ ) इत्यादिना । कस्मात् ? कार्यभेदाद्, उपलम्भनिर्भासभेदाच्च । उपलम्भः = ज्ञानम्, तस्य निर्भासः = आकारः । आदिशब्देनोत्पादस्थितिनिरोधाद्याः[2] गृह्यन्ते । तस्मादतद्रूपेण [G 496] हेतुनाऽतद्वस्त्वात्मकमित्येव साधयितुं युज्यते, नाविशेषम् = निर्विशेषणम्, अवस्तुत्वं साधयितुं युक्तम् । कुतः ? तत्राप्यर्थक्रियाकारित्वस्य वस्तुलक्षणस्य भावात् ॥ १७५०-१७५१ ॥

नन्वत्यन्तभेदे सति कथमनुगामी 'वस्तु वस्तु' इति प्रत्ययो भवेत् ? कथं च खपुष्पाद्भेदो वस्तुनः सिद्ध्यति, यदि सादृश्यं न भवेत् ? इत्याह—तदर्थेत्यादि । असमर्थपरावृत्तिरिति । असमर्था = वन्ध्यासुतादयः, तेभ्यः

---

1. पा०, गा० पुस्तकयोर्नास्ति । २. ०निरोधाद्यो—पा०, गा० ।

सुमतेश्चोद्यम्

ननु . येनात्मना वस्तु समानापरवस्तुनः ।
व्यावृत्तं तत्सजातीयैस्तेनैव सदृशं यदि ॥ १७५४ ॥
विज्ञायेत विजातीयैरपि तुल्यतया तदा ।
तस्यात्मनोऽविशिष्टत्वान्न च तज्ज्ञायते तथा ॥ १७५५ ॥
सजातीयासमानोऽपि तस्माद् येन भवत्ययम् ।
आत्मना तत्समानश्च तयोर्भेदः स्वभावयोः ॥ १७५६ ॥

तत्प्रतिविधानम्

तेनैवासौ स्वभावेन समान इति गम्यते ।
एकप्रत्यवमर्शस्य हेतुत्वेनान्यभेदतः ॥ १७५७ ॥

---

पराङ्वृत्तिः = अतद्रात्मता । यतश्च सादृश्यं कल्पितमस्ति, तस्माद्यदुक्तम्—"भावो भावान्तरातुल्यः" (तत्त्व० १७०९) इति, तदसिद्धम् ॥ १७५२–१७५३ ॥

नन्वित्यादिना सुमतेश्चोद्यमाशङ्कते । स आह—येनात्मना सजातीयविजातीयाभ्यां व्यावृत्तं वस्तु तेनैवात्मना तद्वस्तु यदि सजातीयैः सदृशं भवेत्, तदा विजातीयैरपि तुल्यतया विज्ञायेत; तस्यात्मनोऽविशिष्टत्वात् । न च ज्ञायते, तस्माद्येन स्वभावेन सजातीयासमानोऽपि भवति, येन च स्वभावेन तत्सदृशो भवति, तयोः स्वभावयोर्भेदोऽभिवाञ्छितव्यः । ननु स यदि सजातीयः, कथं तेनासमानो भवति, अथ तेनासमानो भवति कथं सजातीय—इति परस्परव्याहतमेतत् ? नैष दोषः; यतः परेण सर्वमेव वस्तु सामान्यविशेषात्मकमिष्टम्, तस्माद् वस्तुत्वादिना सामान्येन सर्वमेव सजातीयमित्युच्यते, विशेषरूपेण तदेव विजातीयमिष्टमिति, तदपेक्षया पुनरसमान इत्यभिधीयत इत्यदोषः । **समानापरवस्तुनः** [G 497] इति । समानं च तदपरं चेति समानापरवस्तु । अपरमिति समानम् । शेषं सुगमत्वान्न विभक्तम् ॥ १७५४–१७५६ ॥

तेनैवेत्यादिना प्रतिविधत्ते । तेनैव स्वभावेन समान इत्युच्यते, एकप्रत्यवमर्शप्रत्ययकारणत्वात् । एतदुक्तं भवति—ये ह्येकप्रत्यवमर्शं प्रति कारणभावं

अन्यथा निर्विशिष्टत्वाद् भेदेन श्रवणाद्यपि ।
जनकं तस्य किं नेष्टं चक्षू रूपादिभेदवत् ॥ १७६२ ॥

तत्प्रतिविधानम्

व्यावृत्तिश्चक्षुरादीनां न सिद्धा जनकादियम् ।
अविशेषेण यत् तेषामात्मापि[1] जनको मतः ॥ १७६३ ॥
स्वभावान्न च भावानां व्यावृत्तिरुपपद्यते ।
स्वभावाद्धि परावृत्तौ नैःस्वाभाव्यं प्रसज्यते ॥ १७६४ ॥
अन्यस्माज्जनकात् तेषां व्यावृत्तिरुपवर्ण्यते ।
अतज्जनकरूपत्वं वाच्यं तच्चेष्टमेव नः ॥ १७६५ ॥

---

देर्व्यावृत्तं चक्षुरिति व्यापकविरुद्धोपलब्धिप्रसङ्गः। न चैवं भवति, तस्माद्विपर्ययः। यो हि यज्जनकः स तज्जनकस्वभावापरावृत्तः; यथा नीलज्ञानजनकं नीलं स्वस्मात् स्वभावात्। नीलज्ञानजनकं च चक्षुरिति स्वभावहेतुः। एवं नीलादयोऽपि पक्षत्वेन वाच्याः। तस्माद् 'अस्ति भवान्प्रत्यय' इति प्रसङ्गविपर्ययेण दृष्टान्तासिद्धिमाह ॥ १७५९–१७६१ ॥

अथापि स्यात्-- ततो व्यावृत्तं च भविष्यति तज्जनकं च--इत्यनैकान्तिकं प्रसङ्गसाधनम्' इत्याह--अन्यथेत्यादि। श्रोत्रादीनामपि नीलादिज्ञानजनकत्वप्रसङ्गो विपर्यये बाधकं प्रमाणम्; भेदेनाविशिष्टत्वात् = नीलादिभ्यो यो भेदश्चक्षुषस्तेन भेदेन श्रोत्रादीनां चक्षुरादिना तुल्यत्वात्। यथा चक्षुर्नीलादेर्व्यावृत्तं तथा श्रोत्रमपीति यावत् ॥ १७६२ ॥

व्यावृत्तिरित्यादिना प्रतिविधत्ते। [G 499] अविशेषेण तज्जनकस्वभावात् परावृत्तिमात्रं यदि हेतुत्वेन वर्ण्यते तदा न सिद्धो हेतुः। न हि चक्षुरादीनां नीलादिज्ञानजनकात् स्वभावादविशेषेण व्यावृत्तिः सिद्धा; यतस्तेषामपि चक्षुरादीनां यः स्वभावः सोऽपि जनकः इष्टः। को ह्यत्र नियमः--तेनैव तत्कार्यं कर्त्तव्यम्, नान्येनेति। अन्योऽपि कुर्यात्, सोऽपीति न विरोधं पश्यामः। यदि तु पुनरविशेषेण व्यावृत्तिः स्यात्, तदा स्वस्वभावादपि स्यात्, ततश्च निःस्वभावताप्रसङ्गः स्यात्। तस्मान्न स्वभावाद् भावानां व्यावृत्तिर्युक्ता।

---

1. ॰मात्मापि—पा॰।

न ह्यप्युत्पादकं तस्य स्वरूपेणैव वर्ण्यते ।
नियतास्तत्र ते सर्वे स्वहेतुभ्य समुत्थिता ॥ १७६६ ॥
एकात्मानुगतत्वात् तु यद्येकजनका इमे ।
आत्मैकत्रापि सोऽस्तीति किमन्यै सहकारिभि ॥ १७६७ ॥
विशेषान्तरवैकल्यादेके न जनका यदि ।

---

अथ स्वस्वभाव मुक्त्वाऽन्यस्मादजनकाद् व्यावृत्तिश्चक्षुरादीना सा हेतुत्वेनाभिमता, तदाऽनैकान्तिकत्वा हेतो । तदा ह्यन्यस्मात् स्वभावाद् व्यावृत्तस्तत्स्वभावो मा भूत्, न तु तदजनक, यत सर्व एव स्वरूपेणैव जनको न पररूपेण । येन चात्मीयेन स्वभावेनासौ जनक इष्यते, तस्माच्च न व्यावृत्त इति कथमजनक स्यादित्यनैकान्तिका हेतो । अथातत्स्वभावता पर्युदासवृत्त्या साध्यते, तदा सिद्धसाध्यता, परस्पर भावाना स्वभावविवेकस्येष्टत्वात् ।

अतज्जनकरूपत्वमिति । स चासौ जनकश्च तज्जनको रूपादि, तस्य रूपम् = स्वभाव, स यस्य नास्ति सोऽतज्जनकरूपस्तद्भाव तत्त्वम् । तस्य = अन्यस्य यज्जनकरूप तेन रहितत्वमिति यावत् ।

अथ वा—तच्च तज्जनक चेति तज्जनकम्, तज्जनक च तद्रूप चेति कर्मधारय कृत्वा नञा बहुव्रीहि कार्य । त्रिपदो वा बहुव्रीहि ।

[G 500] अथैकस्मिन् कार्ये कर्तव्ये [illegible] एव तेषा चक्षुरादीना परस्परासङ्कीर्णो जनक स्वभाव कुत आयात, येन त एव तु कार्ये नियता स्यु ? इत्याशङ्कयाह—नियता इति । यदुक्तम्—'भेदेन निर्विशिष्टत्वाच्चक्षुरन्यायपि जनक तस्य कि नेष्यते' ( तत्त्व० १७६२ ) इति, तदनेन परिहृतम् । तस्मात् स्वभावनियमाद्भेदेऽपि कश्चिज्जनको भवेत्नापर इति न किञ्चिद्विरुद्धम् ।

यदि तु पुनरेकस्वभावानुगमत्वेन भिन्ना अपि चक्षुरादयो जनका स्यु, तदैकस्यैव स्वभावो जनक एकस्मिन्नपि कारणेऽस्तीति तत एवैकस्मात् कार्योत्पत्ति स्यात् । ततश्च शेषसहकारिकारणवैयर्थ्यप्रसङ्ग स्यात् ।

अथ विशेषान्तरवैकल्यादेकस्मान्न कार्योत्पत्तिरिति चेत् ? ये ते विशेषा विकल्प्यन्ते तेषामसत्त्वात् । कस्मात् ? भेदात् = समर्थाभिमतादनु

ननु भेदादसक्तास्तेऽभेदे वा विफला कथम् ॥ १७६८ ॥
यथा त्वय विशेषेऽपि न सर्वं सर्वकारणम् ।
नानात्वस्याविशेषेऽपि तथैव नियमो भवेत् ॥ १७६९ ॥
भेदेऽपि जनकः कश्चित् स्वभावनियमाद् भवेत् ।
अन्वये त्वेक एकस्य जनकोऽजनकश्च किम् ॥ १७७० ॥
भेदोऽप्यत्रास्ति चेदस्तु स किं तस्यैव वस्तुनः ।
न हि तस्यान्वयादन्यो ननु भेदादकारकः[1] ॥ १७७१ ॥

वाचिना स्वभावाद्, अन्यत्वादिति यावत्। न चाक्षयस्य वैकल्ये कार्यानुत्पत्तिर्युक्ता, कस्यचिदनुत्पत्तिप्रसङ्गात् । अथापि स्यात्— न ह्यस्माभिः सामान्यविशेषाणां परस्परमत्यन्त[2] भेद[2] इष्ट, ततश्च 'भेदात्' इत्यसिद्धो हेतुः इत्याह—अभेदे वा निष्फलाः कथमिति । सामान्याद्विशेषाणामभेदेऽङ्गीक्रियमाणे न तर्हि वक्तव्यम्— "विशेषान्तरवैकल्यादेक न जनकम्" ( तत्त्व० १७६८ ) इति । अतस्तस्मिन् सामान्ये तिष्ठत्यविकले सति तदव्यतिरेकिणां विशेषाणामपि वैकल्यासिद्धिः । न हि यो यदेकयोगक्षेमो न भवति, स तत्स्वभावो युक्तः ।

अपि च—समानः एवायं प्रसङ्गो भवतामपि, अन्यत्वाविशिष्टत्वात् किमिति सर्वं सर्वं न जनयेत् ? यथा भवतामन्यत्वस्याविशेषेऽपि सर्वं सर्वस्य जनकं न भवति, तथाऽस्माकमपीति यत्किञ्चिदेतत् । किञ्च—भेदाविशेषेऽपि कश्चिज्जनयति नापर इति जनकत्वभावप्रतिनियमादेव भवेत्, एकस्य च स्वभावो नाऽसौ परस्येति कृत्वा, न चैव सति किञ्चिद् विरुध्यते ।

यदा त्वनुगतस्यैकात्मनो जनकत्वम्, तदैकस्यैकस्मिन् कार्ये जनकत्वमजनकत्वं चेति कथं विधिप्रतिषेधौ युगपदेकाधारौ । भिन्नाधिकरणौ तु न विरुद्धावित्यत एकस्येत्याह ।

अथापि स्यात्— नास्माभिरेकान्तेनान्वय एवेष्टः, येनैकस्यैकत्र जनकत्वाजनकत्वविरोधः स्यात्, किं तर्हि ? भेदोऽप्यत्रास्ति, तेनाजनकत्वं न विरुद्धमिति ?

१ भेदो न कारक —पा०, गा० ।
२-२ ०मत्यन्तभेद —पा०, गा० ।

स एव भाविकश्चार्थो यो नामार्थक्रियाक्षमः ।
स च नान्वेति, योऽन्वेति कार्यं तस्मान्न जायते ॥ १७७२ ॥
यं चात्मानमभिप्रेत्य पुमानेव प्रवर्तते ।
चिन्त्येते[1] तद्गतावेव भेदाभेदावकल्पितौ ॥ १७७३ ॥
अन्यथा ह्यात्मना भेदो व्यावृत्त्या च समानता ।
अस्त्येव वस्तु नान्वेति प्रवृत्त्यादिप्रसङ्गतः ॥ १७७४ ॥

---

अस्तु भेदः, स किं जनकस्वभावाद् भेदस्तस्यैवानुगतस्य जनकात्मनोऽभीष्टः, आहोस्विदन्यस्येति वक्तव्यम् ? न तावत्तस्यैव, न हि स्वभावाद् भावस्य परावृत्तिर्युक्ता, निःस्वभावत्वप्रसङ्गात् । नाप्यन्यस्य भेदे तस्य जनकस्वभावस्याविकलस्याजनकत्वं युक्तम्, अतिप्रसङ्गात् । भवतु वा तस्यैव स्वभावाद् भेदः, तथाप्येकस्य जनकत्वाजनकत्वविरोधो न परिहृत एव । तथा हि—भेदादपि तस्यैकस्याकारको भवेत् । ननु नान्वयोऽन्वयात्, किं तर्हि ? स एवान्वयः, ततश्च स एवैकस्य [G 501] जनकत्वाजनकत्वविरोधस्तदवस्थ एव । अन्वेतीत्यन्वयः = जनक एव स्वभाव उच्यते । नन्विति अभिमुखीकरणम् ।

अपि च—अन्वयव्यतिरेकाभ्यां विशेषेभ्य एव कार्यसिद्धेस्त एव वस्तुलक्षणयुक्ताः[2], न सामान्यार्थम्, क्रियाकारित्वलक्षणत्वाद् वस्तुत्वस्य, ततश्च किं सामान्यस्वलक्षणादिकम्, अहोस्विदभिन्नमिति किमर्थं क्रियार्थिनस्तत्र भेदाभेदचिन्तया, यस्माद् यमेव स्वभावमर्थक्रियायोग्यमभिसंधायैव पुमानर्थक्रियार्थी प्रवर्तते, तद्गतावेव भेदाभेदौ चिन्त्येतेऽर्थक्रियार्थिभिः, न व्यसनितया । अन्यथा हि यदि कल्पितौ भेदाभेदौ नेष्येते, तदा तस्यार्थक्रियायोग्यस्यात्मना = स्वेन रूपेण भेदः पारमार्थिकोऽन्येन, व्यावृत्त्या च विकल्पबुद्धिनिर्भासानुरोधिन्या कल्पितया सामान्यताऽभ्युपगन्तव्याऽन्येन—इत्यविवाद एव । इयतैवार्थक्रियार्थिनो भेदसामान्यचिन्ता समाप्तेति किमनर्थक्रियाकारिणि सामान्यस्य भेदाभेदचिन्तया ।

अथापि स्यात्—अस्त्येव सामान्यमस्तु, किं परिकल्पितया व्यावृत्त्या ? इत्याह—अस्त्येवेत्यादि । यदि परमार्थतो घटादिरन्वियात्, तदा मधूदकाद्याहरणार्थी

१ विशे—पा०, गा० ।    २ °लक्षण°—पा०, गा० ।

कल्पनारचितस्यैव वैचित्र्यस्योपवर्णने ।
को नामातिशयः प्रोक्तो विप्र-निर्ग्रन्थ-कापिलैः ॥ १७७५ ॥

वर्द्धमानकभङ्गेन रुचकः क्रियते यदा ।
तदा पूर्वार्थिनः शोकः प्रीतिश्चाप्युत्तरार्थिनः ॥ १७७६ ॥

हेमार्थिनस्तु माध्यस्थ्यं तस्माद् वस्तु त्रयात्मकम् ।
नोत्पादस्थितिभङ्गानामभावे स्यान्मतित्रयम् ॥ १७७७ ॥

कुमारिलमतम्

न नाशेन विना शोको नोत्पादेन विना सुखम् ।
स्थित्या विना न माध्यस्थ्यं तेन सामान्यनित्यता ॥ १७७८ ॥

---

पटादावपि प्रवर्त्तेतेति प्रवृत्त्यादेः प्रसङ्गः स्यात् । आदिशब्दात् तुल्योत्पत्तिनिरोधादिप्रसङ्गः ॥ १७६३-१७७४ ॥

अथ सौगतैरिव परैरपीदमिष्यते—

"तस्माद्यतो यतोऽर्थो नान्यावृत्तस्तन्निबन्धनाः ।
जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः" ॥ (    ) इति ?

अत्राह—कल्पनारचितस्येत्यादि । वैचित्र्यस्येति भेदस्य[1] ॥ १७७५ ॥

वर्द्धमानकभङ्गेनेत्यादिना कुमारिलमतमाशङ्कते । स आह—उत्पादस्थितिनाशस्वभावत्वात् सर्वमेव वस्तु त्र्यात्मकम् । एकस्मादपि प्रीत्यादिकार्यत्रयदर्शनात्, तथा हि—यदा वर्द्धमानकं भङ्क्त्वा रुचकः क्रियते, तदा [G. 502] वर्द्धमानकार्थिनः शोक उत्पद्यते, रुचकार्थिनः प्रीतिः, सुवर्णार्थिनस्तु माध्यस्थ्यम् । यदि च वस्त्वेकरूपमेव स्यात्, तदेकाकारैव बुद्धिः स्यात्, न त्रिप्रकारा । वर्द्धमानकरुचकौ = भाजनविशेषौ ॥ १७७६–१७७७ ॥

स्यादेतत्—यदि नाम त्र्यात्मकं वस्त्विति सिद्ध्यति, तथापि नाशादिरूपेण त्र्यात्मकमित्येतत् कुतः ? इत्याह—न नाशेन विनेत्यादि । तेन सामान्यनित्यतेति । यस्मात् स्थित्यादिना न माध्यस्थ्यस्य स्थित्यविनाभावित्वेन, सामान्यस्यापि = सुवर्णत्वस्य, नित्यता प्रतीयते ॥ १७७८ ॥

---

1. जातिभेदादिरूपस्येत्यर्थः ।

उत्पत्तिविधानम्

इत्येतदपि नो युक्तमसमानाश्रयत्वतः[1] ।
उत्पादस्थितिभङ्गानामेकार्थाश्रयता न हि ॥ १७७९ ॥
समानकालताप्राप्तेः परस्परविरोधिनाम् ।
इह तु क्षणभङ्गित्वे सति सर्वमनाकुलम् ॥ १७८० ॥
वर्द्धमानकभावस्य कलधौतात्मनः क्षयम् ।
अनन्वये विनाशे हि कस्यचिच्छोकसम्भवः ॥ १७८१ ॥
सर्वथा पूर्वरूपस्य रुचकस्य तदात्मनः ।
जन्मन्युत्पद्यते प्रीतिर्नावस्थानं तु कस्यचित् ॥ १७८२ ॥
शातकुम्भात्मको भावो यदा पश्यति मूढधीः ।

इत्येतदित्यादिना प्रतिविधत्ते । असामान्याश्रयत्वत इत्येतद्ग्रहणकवाक्यम् । अस्य व्याख्यानम्— उत्पादस्थितीत्यादि । यदि हि वस्त्वेकमप्युत्पादादिस्वभावेन त्र्यात्मकं स्यात्, तदा युगपत्परस्परविरोधिन उत्पादस्थितिविनाशाः प्राप्नुवन्ति । न च विरोधिनामेकत्र युगपद्भावो युक्तः, अन्यथा हि विरोधित्वमेव न स्यात् ।

कथं तर्हि प्रतीतित्रयस्योत्पत्तिर्युक्तेति चेत्? यथा युक्ता तथा श्रूयतामिति दर्शयन्नाह—इह त्वित्यादि । वर्द्धमानकभावः । स किंविशिष्टः? कलधौतात्मा = कलधौतं सुवर्णम्, स एवात्मा स्वभावो यस्येति विग्रहः, तस्य क्षयः = स्वरसेन, विनाशे सति कस्यचित्तदर्थिनः शोक उत्पद्यते । अपूर्वस्य तु रुचकाख्यभावस्य तदात्मनः = हेमात्मनः जन्मनि = उत्पादे सति, कस्यचिद् रुचकाध्यवसितस्य प्रीतिरुत्पद्यते । न तु कस्यचित् सुवर्णात्मनोऽवस्थानमस्ति, निरन्वयत्वादुत्पादविनाशयोः ॥ १७७९–१७८२ ॥

[ G 503 ] यद्येवम्, कथं तर्हि माध्यस्थ्यबुद्धिः? इत्याह—शातकुम्भेत्यादि । शातकुम्भात्मकौ सुवर्णस्वभावौ वर्द्धमानरुचकाख्यौ भावौ क्रमेण यदा पश्यति मूढमतिः । पश्यन्नपि स्वभावविवेकं सदृशापरोत्पत्तिविप्रलब्धः, विवेचयितुमशक्तत्वात् । अत एव समानापरभावेन भ्रान्तिनिमित्तेन विप्रलब्धोऽवस्थाद्वयेऽपि

१ ॰सामान्याश्रयत्वत —पा॰, गा॰ ।

समानापरभावेन स्थिरत्वं मन्यते तदा ॥ १७८३ ॥
हेम्नोऽव्यवस्थितरूपत्वे तद्रूपं रुचकाद्यपि ।
पूर्वोत्तराद्यवस्थासु दृश्येतानेकताऽन्यथा ॥ १७८४ ॥

# त्रैकाल्यपरीक्षा

बौद्धैकदेशिनो वसुमित्रस्य
भावत्रैकाल्यमतम्

हेमानुगमसामान्ये[1] त्रिकालानुगतो ननु[1] ।
अवस्थाभेदवान् भावः कश्चिद् बौद्धैरपीष्यते ॥ १७८५ ॥

हेम्नः स्थिरत्वं मन्यते । समानापरभावेनेति[2] । अहेमव्यावृत्तिमात्रसाधर्म्येण समानस्यापरस्य भावः = उत्पादः समानापरभावः । कथं पुनरवसीयते—समानापरभावेन विकल्पः स्थिरत्वं मन्यते, न तु पुनर्वस्तुन एव तथाभावात् ? इत्याह—हेम्न इत्यादि । यदि हेम्नः स्थिरत्वं स्यात्, तदा तदव्यतिरिक्तं रुचकाद्यपि वर्द्धमानावस्थास्वपि दृश्येत; उपलब्धिलक्षणप्राप्तत्वात् । अन्यथा = यदि रुचकस्य वर्द्धमानावस्थायां न दृष्टिर्वर्द्धमानस्य च[3] रुचकावस्थायामनुपलब्धिलक्षणप्राप्तस्य, तदानीं तयोः परस्परतो भेदः, ततश्च व्यतिरेकाच्च तत्स्वभावत्वद्धेम्नोऽपि भेदः सिद्धः स्यादित्यालोच्याह—अनेकताऽन्यथेति । यच्च "अवधीकृतवस्तुभ्यः" ( तत्त्व० १७०० ) इत्यादिना[4] भेदसाधनमुक्तम्, तत्र सिद्धसाध्यतैवेति दूषणमुच्यते ॥ १७८३-१७८४ ॥

इति स्याद्वादपरीक्षा

---

"असङ्क्रान्तिम्" ( तत्त्व० ४ ) इत्यस्य समर्थनार्थमाह—हेमेत्यादि । "नावस्थानं [redacted] कस्यचित्" (तत्त्व० १७८०) इत्यत्रेदं चोद्यम्—ननु कथमिद-

---

१-१. हेम्नोऽनुगमसाम्येन स्थिरत्वं मन्यते तदा—पा०, गा० ।
२. ०भाव इति—जै० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।
४. इत्यादि—पा०, गा० ।

अवस्थाभेदभावेऽपि यथा वर्ण्यं जहाति न ।
हेमाध्वसु तथाभावो द्रव्यत्वं न त्यजत्ययम् ॥ १७८६ ॥
अतीताजातयोर्ज्ञानमन्यथाऽविषयं भवेत् ।
द्वयाश्रयं च विज्ञानं तायिना कथितं कथम् ॥ १७८७ ॥

मुच्यते 'नावस्थानं तु कस्यचित्' इति, यावता कैश्चिद् धर्मत्रातप्रभृतिभिर्बौद्धैरपि कालत्रयावस्थितो भाव इष्टः, अवस्थाभेदात्, हेमानुगमसाधर्म्येण ॥ १७८५ ॥

एतदेव द्वितीयेन श्लोकेन दर्शयति । तत्र भावान्यथावादी भदन्तधर्मत्रातः । स किलाह—"धर्मस्याध्वसु वर्तमानस्य भावान्यथात्वमेव केवलम्, न तु द्रव्यस्य" इति । यथा सुवर्णद्रव्यस्य कटककेयूरकुण्डलाद्यभिधाननिमित्तस्य गुणस्यान्यथात्वं न सुवर्णस्य, तथा धर्मस्यानागतादिभावादन्यथात्वम् । तथा हि—अनागतभावपरित्यागेन वर्तमानभावं प्रतिपद्यते धर्मः, वर्तमानभावपरित्यागेन चातीतभावम्, न तु द्रव्यान्यथात्वम्, सर्वत्र द्रव्यस्याव्यभिचारात् । अन्यथाऽन्य एवानागतः, अन्यो वर्तमानः, अन्योऽतीतः—इति प्रसज्यते । कः पुनर्भावस्तेनेष्टः ? गुणविशेषः, यतोऽतीताद्यभिधानज्ञानप्रवृत्तिः ।

लक्षणान्यथावादी भदन्तघोषकः । स किलाह—धर्मोऽध्वसु वर्तमानोऽतीतोऽतीतलक्षणयुक्तोऽनागतप्रत्युत्पन्नाभ्यां लक्षणाभ्यामवियुक्तः । यथा—पुरुष एकस्यां स्त्रियां रक्तः शेषास्वविरक्तः, एवमनागतप्रत्युत्पन्नावपि वाच्यौ[1] ।

अस्य अतीतादिलक्षणवृत्तिलाभापेक्षो व्यवहार इति पूर्वकाद् भेदः ।

अवस्थान्यथावादी भदन्तवसुमित्रः । स किलाह—"धर्मोऽध्वसु वर्तमानोऽवस्थामवस्थां प्राप्यान्योऽन्यो निर्दिश्यतेऽवस्थान्तरतः, न द्रव्यतः, द्रव्यस्य त्रिष्वपि कालेष्वभिन्नत्वात् । यथा मृद्गुडिका एकाङ्के प्रक्षिप्ता एकमित्युच्यते, शताङ्के शतम्, सहस्राङ्के सहस्रम्, तथा कारित्रेऽवस्थितो भावो वर्तमानः, ततः प्रच्युतोऽतीतः, अप्राप्तोऽनागतः" इति । अस्य व्यवस्थापेक्षया व्यवहारः, यथा मृद्गुडिकायाम् । न हि तस्याः स्वभावान्यथात्वं भवति, किं तर्हि ? स्थानविशेषसम्बन्धात् सङ्ख्याभिधानस्य संज्ञान्तरमुपजायते ।

1. वाच्यौ—पा०, गा० ।

कर्मातीतं च निःसत्त्वं कथं फलदमिष्यते।
अतीतानागतं ज्ञानं विभक्तं योगिनां च किम् ॥ १७८८ ॥

अन्यथान्यथिको [1]भदन्तबुद्धदेवः। स किलाह—"धर्मोऽध्वसु वर्तमानः पूर्वापरमपेक्ष्यान्योन्य उच्यते" इति। यथैका स्त्री माता चोच्यते, दुहिता चेति। अस्य पूर्वापरापेक्षो व्यवहारः। यस्य पूर्वमेवास्ति नापरः सोऽनागतः, यस्य पूर्वमस्ति अपरं च स वर्तमानः, यस्यापरमेव न पूर्वं सोऽतीत इति।

एते चत्वारः [2]सर्वास्तिवादा भावलक्षणाऽवस्थान्यथान्यथिकसंज्ञिताः।

तत्र प्रथमः परिणामवादित्वात् साङ्ख्यमतान्न भिद्यते। [G 505] यस्तस्य प्रतिषेधः सोऽस्यापि द्रष्टव्यः। तथा हि—पूर्वस्वभावापरित्यागेन वा परिणामो भवेत्, परित्यागेन वा? यद्यपरित्यागेन, तदाऽध्वसङ्करप्रसङ्गः। अथ परित्यागेन, तदा सदाऽस्तित्वविरोधः।

द्वितीयस्यापि वादिनोऽयं सङ्कर एव; सर्वस्य सर्वलक्षणयोगात्। स्त्रियामन्यतरस्मिन् रागसमुदाचाराद्रक्त उच्यतेऽविरक्तश्च समन्वागममात्रेण, न तु धर्मस्य लक्षणसमुदाचारो लक्षणसमन्वागमो वा प्रासिलक्षणोऽस्ति, अन्यत्वप्रसङ्गाल्लक्षणस्य प्राप्तिवदिति न साम्यं दृष्टान्तस्य दार्ष्टान्तिकेन।

तृतीयस्य कारित्रेणाध्वव्यवस्थेति[3] तस्य विस्तरेण दूषणं वक्ष्यते।

चतुर्थस्याप्येकस्मिन्नेवाध्वनि त्रयोऽध्वानः प्राप्नुवन्ति। तथा हि—अतीतेऽध्वनि पूर्वपश्चिमौ क्षणावतीतानागतौ, मध्यमः क्षण प्रत्युत्पन्न इति। एवं दूषणदिगेषां स्पष्टा।

तृतीयमेवारभ्य भूयस्त्रैकाल्यपरीक्षाऽऽरभ्यते—

हेमदृष्टान्तेन [illegible] सिद्धान्तोपक्षेपमात्रं कृतम्, न तु धर्मत्रातदर्शनमेवाभिमतम्। तथा च वक्ष्यति—"कारित्रेण विभागोऽयमध्वनां यत् प्रकल्प्यते" (तत्त्व० १७९०) इति। न च धर्मत्रातस्य कारित्रेणाध्वव्यवस्था, किं तर्हि? वसुमित्रस्य। तत्र यद्यतीतमनागतं न स्यात्, 'अमूल्महासम्मतो भविष्यति

१. बुद्धदेवः—पा०, गा०। २. सर्वेऽस्तिवादाः—पा०, गा०।
३. ०ध्वव्यवस्थेति—पा०, गा०।

न द्रव्यापोहविषया अतीतानागतास्ततः ।
अध्वसंग्रहरूपादिभावादेवर्तमानवत्[1] ॥ १७८९ ॥
न चैवमिह मन्तव्यमध्वभेदः कुतो न्वयम् ।

शङ्खश्चक्रवर्ती' इत्यतीतानागतयोर्विज्ञानं निरालम्बनमेव स्यात्, ततश्च विज्ञानमेव न स्याद्, आलम्बनाभावादिति भावः । तथा हि—प्रतिवस्तु विज्ञप्त्यात्मकं विज्ञानम्, असति च ज्ञेये न किञ्चिदनेन ज्ञेयमित्यविज्ञानमेव स्यात् । किञ्च—"द्वयं प्रतीत्य विज्ञानमुत्पद्यते" ( ) इति भगवतोक्तम्—"कतमद् द्वयम्? चक्षूरूपाणि यावन्मनोधर्मा" ( ) इति । असति चातीतानागते तदालम्बनं विज्ञानं द्वयं प्रतीत्य न स्यादित्यागमविरोधः । अपि च—अतीतं कर्म फलदं न स्यात्, यदि तस्य सत्त्वं सत्ताशून्यं भवेत्, फलोत्पत्तिकाले विपाकहेतोरभावात् । न चासतः कार्योत्पादनशक्तिरस्ति, सर्वसामर्थ्यविरहलक्षणत्वादसत्त्वस्य । किञ्च—'आसीन्मान्धाता[2] महाचक्रवर्ती, भविष्यति शङ्खश्चक्रवर्ती मैत्रेयस्तथागतः' इत्यादिना विभागेन योगिनामतीतादिविषयं विभक्तं विज्ञानं न स्यात् । न ह्यसतां विभागोऽस्ति । यस्मादतीतानागता भावा व्रीह्यादयो न द्रव्यप्रतिषेधरूपाः, अध्वसंगृहीतरूपादित्वेनोपदिष्टत्वाद्, वर्तमानवत् । उक्तं हि भगवता—"अतीतं चेद् भिक्षवो रूपं नाभविष्यत्, न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यत् । यस्मात्तर्ह्यस्त्यतीतं रूपम्, तस्माच्छ्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षो भवतीति विस्तरः" तथा—"यत्किञ्चिद्रूपमतीतमनागतादि तत्सर्वमभिसंक्षिप्य 'रूपस्कन्ध' इति सङ्ख्यां गच्छति" ( ) इत्यादि । अध्वना संग्रहो येषां तेऽध्वसंग्रहा रूपादयः । आदिशब्देन वेदनादिपरिग्रहः । तेषां भावो [G 506] रूपादित्वम् । अत्राप्यादिशब्देन दुःखसमुदयादित्याद्यादित्वेनोपदिष्टत्वादिति गृह्यते ॥ १७८६–१७८९ ॥

अथापि स्यात्—आकाशवत् सदास्तित्वादतीतादिव्यवस्था तर्हि कथम्? इत्याह—न चैवमित्यादि । यतः सम्प्राप्तकारित्रो वर्तमान उच्यते, उपरतकारि-

1 °रूपादिभावा°—पा०, गा० ।
2 °मान्धाता—चै०, °मान्धाता—पा०, गा० ।

कारित्रेण विभागोऽयमध्वनां यत् प्रकल्प्यते ॥ १७९० ॥
कारित्रे वर्त्तते यो हि वर्त्तमानः स उच्यते ।
कारित्रात् प्रच्युतोऽतीतस्तदप्राप्तस्त्वनागतः ॥ १७९१ ॥
फलाक्षेपश्च कारित्रं धर्माणां जनकं न तु ।
न चाक्षेपोऽस्त्यतीतानां नातः कारित्रसम्भवः ॥ १७९२ ॥

तत्प्रतिविधानम्

तैः कारित्रमिदं धर्मादन्यत् तद्रूपमेव वा ।

---

ऽतीतः, अप्राप्तकारित्रोऽनागत इत्यध्वानः कारित्रेण व्यवस्थिताः । किं पुनरत्र कारित्रमभिप्रेतम् ? यदि दर्शनादिलक्षणो व्यापारः, यथा पश्चानां चक्षुरादीनां दर्शनादिकम्—यतश्चक्षुः पश्यति, श्रोत्रं शृणोति, घ्राणं जिघ्रति, जिह्वा स्वादयतीत्यादिविज्ञानस्यापि विज्ञातृत्वम् विजानातीति कृत्वा रूपादीनामिन्द्रियगोचरत्वम् । एवं सति मत्कुपन्नस्य तत्समागस्य[1] चक्षुषो निद्राद्यवस्थायां कारित्राभावाद् वर्त्तमानता न स्यात् ।

अथ फलदानग्रहणलक्षणं कारित्रम्, यथा—चक्षुष सहभुवा धर्मा आत्माश्रयः पुरुषकारफलम्, अनन्तरोत्पन्नं चक्षुरिन्द्रियं पुरुषकारफलमधिपतिफलं निष्यन्दफलं च, एतत् फल जननात् सभागहेतुभावावस्थानाद् गृहचक्षुर्वर्त्तमानमुच्यत इति ? एवं तर्ह्यतीतानामपि सभागसर्वत्रगविपाकहेतूनां फलदानाभ्युपगमाद् वर्त्तमानत्वप्रसङ्गः । अथ समस्तमेव फलदानग्रहणलक्षणं कारित्रमिष्यते, एवमतीतस्य सभागहेत्वादेरवर्त्तमानत्वप्रसङ्गः ?—इत्येतद्दोषभयाद्राचार्यरोहगुप्त[2] आह—"धर्माणां कारित्रमुच्यते फलाक्षेपशक्तिः, न तु फलजननम् । न चातीतानां सभागहेत्वादीनां फलाक्षेपोऽस्ति; वर्त्तमानावस्थायामेवाक्षिप्तत्वात् । न चाक्षिप्तस्याक्षेपो युक्तः; अनवस्थाप्रसङ्गात् । तस्मादतीतानां न कारित्रसम्भव इति नास्ति लक्षणसङ्करः।" (   ) इति ॥ १७९०–१७९२ ॥

तैरित्यादिना प्रतिविधत्ते । [ G. 507 ] तत्कारित्रं धर्मादन्यद्वा स्याद्, अनन्यद् वा ?—इति तैरभ्युपगन्तव्यम्; अन्यानन्ययोरन्योऽन्यपरिहारस्थितलक्षणत्वात्,

---

1. तत्समानरूपस्येत्यर्थः । 2. ॰भदन्तभद्र—पा॰, गा॰ ।

अभ्युपेयं यदन्याऽस्ति गतिः काचिन्न वास्तवी ॥ १७९३ ॥
अन्यत्वे वर्त्तमानानां प्रागूर्ध्वं वाऽस्वभावता ।
हेतुत्वसंस्कृतत्वादेः कारित्रस्येव गम्यताम् ॥ १७९४ ॥
अन्यथा नित्यतासक्तिः[1] स्वभावावस्थितेः सदा ।
नैतद् रूपातिरिक्तं हि विद्यते नित्यलक्षणम् ॥ १७९५ ॥
नित्यस्य हेतुता पूर्वं क्रमाक्रमविरोधतः ।
निषिद्धा संस्कृतत्वं हि व्यक्तं नित्ये निरास्पदम् ॥ १७९६ ॥
स्कन्धादिव्यतिरिक्तस्य कारित्रस्योपवर्णनम् ।
स्वसिद्धान्तविरोधश्च दुर्निवारः प्रसज्यते ॥ १७९७ ॥
अनन्यत्वेऽपि कारित्रं धर्मादव्यतिरेकतः ।

---

एकनिषेधस्यापरविधिनान्तरीयकत्वात् । नान्या वस्तुनो गतिरस्ति । तत्र यद्यन्यत्, तदा वर्त्तमानानां प्रागूर्ध्वमन्ययोर्निःस्वभावता प्राप्नोति, हेतुत्वसंस्कृतत्वादेर्हेतोः[2], कारित्रवत् । आदिशब्देन वस्तुत्वादयो गृह्यते । अन्यथा यदि प्रागूर्ध्वं च निःस्वभावता न स्यात्, तदा सर्वस्य संस्कृतस्य नित्यता प्राप्नोति, स्वभावस्य सर्वदा व्यवस्थितत्वात् । न च सदासत्त्वव्यतिरेकेण नित्यत्वलक्षणमस्ति । यदाह—"नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यति" (       ) इति ॥ १७९३-१७९५ ॥

स्यादेतत्—यदि नाम नित्यता शक्ति, हेतुत्वसंस्कृतत्वादेस्तु हेतोः कथं साध्यविपर्ययेण विरोधः ? इत्याह—नित्यस्येत्यादि । पूर्वमिति स्थिरभावपरीक्षायाम् । सर्वस्य च संस्कृतस्यानित्यत्वाभ्युपगमात् संस्कृतत्वं नित्ये न सम्भवतीति स्पष्टमेवावसीयते । किञ्च—स्कन्धायतनव्यतिरिक्तस्य कारित्रस्योपवर्णने सिद्धान्तविरोधः । तथा हि भगवतोक्तम्—"सर्वं सर्वमिति ब्राह्मण यदुत पञ्चस्कन्धाः, द्वादशायतनानि, अष्टादश च[3] धातवः[3]" (       ) इति ॥ १७९६-१७९७ ॥

१. नित्यतापत्ति —पा०, गा० ।
२. ०त्वादेर्हेतोः—पा०, गा० ।
३-३. धातव —पा०, धातव —गा० ।

स्वरूपमिव धर्मस्य प्रसक्तं सार्वकालिकम् ॥ १७९८ ॥
ततश्चाध्वविभागोऽयं तद्वशान्न प्रकल्प्यते ।
न हि तस्य च्युतिः प्राप्तिरप्राप्तिर्वा विभागतः ॥ १७९९ ॥
कारित्राव्यतिरेकाद्वा धर्मः कारित्रवद् भवेत् ।
पूर्वापरव्यवच्छिन्नमध्यमात्रकसत्त्ववान्[1] ॥ १८०० ॥
कारित्रं सर्वदा नास्ति सदा धर्मस्तु[2] वर्ण्यते ।
धर्मान्नान्यच्च कारित्रं व्यक्तं देवैर्विचेष्टितम् ॥ १८०१ ॥
कारित्रान्तरसापेक्षा तत्राप्यव्यस्थितिर्यदि ।
तुल्यः पर्यनुयोगोऽयं ननु सर्वत्र धावति ॥ १८०२ ॥

[G 508] अथानन्यत्कारित्रमभ्युपगम्यते, तदा धर्मस्वरूपवत् तदव्यतिरेकात् तदपि सार्वकालिकं प्राप्नोति । ततश्च कारित्रात् प्रच्युतोऽतीत, तत्प्राप्तो वर्तमान, तदप्राप्तोऽनागत –इति कारित्रवशादयमध्वविभागो न स्यात्; यतोऽस्य कारित्रस्य यदि विभागेन [3]च्युतिप्राप्त्यप्राप्तय. स्यु', तदा स्यादयमध्वविभाग', न च तानि विभागेन सम्भवन्ति; सदावस्थितैकरूपस्य विभागाभावात् ॥ १७९८–१७९९ ॥

किञ्च—कारित्राद्व्यतिरिक्तत्वाद् धर्मोऽपि पूर्वापरकोटिशून्यसत्तायोगी प्राप्नोति कारित्रवत् । पूर्वापरव्यवच्छिन्नम् = पूर्वापरकोटिशून्यम्, मध्यमात्रकं च तत्सत्त्वं[4] चेति विग्रह. । तदस्यास्तीति तद्वान् ॥ १८०० ॥

कारित्रमित्यादिना परस्परविरुद्धाभ्युपगमोद्भावनेनोपहसति । एवं तर्हि रूपादिधर्मो न सदास्तीति प्रसक्तम्, कारित्राद्व्यतिरिक्तत्वात् ? इत्याह—सदा धर्मश्चेति । एवमपि धर्मादन्यत् कारित्रं प्रसज्यते ? इत्याह—धर्मान्नान्यच्च कारित्रम् । देवा' = ईश्वरादय, ते हि शुक्लाशुक्लमनालोच्य स्वातन्त्र्येणैव वर्तन्ते इति तेषां यथाचेष्टितं युक्तिनिरपेक्षं स्वातन्त्र्येण प्रवृत्ति, तद्वदेतदिति यावत् । किञ्च—यदि कारित्रस्य कारित्रमन्तरेणानागतादित्वमिष्यते, न तर्हि वक्तव्यम्—'अध्वान कारित्रेण

१. सर्वदान्—पा०, गा० । २. धर्मश्च— पा०, गा० ।
३. यदि प्राप्त्य०—पा०, गा० । ४. तत्सर्वं—पा०, गा० ।

स्वरूपाद् व्यतिरिक्तोऽपि दृष्टः सप्रतिघत्ववत् ।
विशेषश्चेदिदं नैव प्रकृतस्योपकारकम् ॥ १८०३ ॥
न हि सप्रतिघत्वादिः पदार्थस्यानुगामिनः ।
कादाचित्को मतः कश्चिद्भावस्यैव तथोद्भवात् ॥ १८०४ ॥
अनाक्षिप्तान्यभेदेन भाव एव तथोच्यते ।
सद्रूपस्येति[1] शब्देन चेतसो भासनापि च[2] ॥ १८०५ ॥

व्यवस्थिता' इति, व्यभिचारात् । यथा चारित्रस्य स्वरूपसत्तापेक्षयाऽनागतादित्वं व्यवस्थाप्यते, एवं भावानामप्यनागतादित्वं भविष्यतीति किं चारित्रकल्पनया ।
अथ मा भूद् व्यभिचारदोष इति चारित्रस्यापि चारित्रमभ्युपगम्यते ? तदा तत्रापि व्यतिरेकादिचिन्तया तुल्यः पर्यनुयोगः, अनवस्थादोषश्च ॥ १८०१-१८०२ ॥

यदुक्तम्—अनन्यत्वेऽपि चारित्रं सार्वकालिकं प्राप्नोति धर्मस्वरूपवदविशेषादिति । अत्र भदन्तसहतभद्र आह—स्वरूपादित्यादि[3] । [G 509] "स्वरूपाद् व्यतिरिक्तोऽपि विशेषको धर्मो दृष्टः, यथा—सप्रतिघत्वादि पृथिव्यादीनाम् । ते हि पदार्थत्वेनाविशिष्टा अपि सप्रतिघा अप्रतिघाः, सनिदर्शना अनिदर्शना इति स्वरूपाद्व्यतिरिक्तैर्धर्मैर्विशिष्टाः प्रतीयन्ते, तद्वत्चारित्रेणापि धर्मः" इति । तदेतदप्रकृतानुपकारकम् । तथा हि इदमत्र प्रकृतम्—'पदार्थात् चारित्रस्याभेदेऽभ्युपगम्यमाने सत्येकस्यैव पदार्थस्यात्मभूतचारित्रस्याविशेषात्तद्वशादध्वविभागो नावकल्पते' इति । पृथिव्यादयस्तु परस्परमन्योऽन्यलक्षणभेदात्सद्भाभिन्ना इति युक्तं यत् केचित् सप्रतिघा भवन्ति केचिदप्रतिघा एव, यथा—वेदनादयः, न तु य एवाप्रतिघास्त एव सप्रतिघा इति, यतो न कश्चिदेकोऽनुगामी पदार्थोऽस्ति पृथिव्यादीनां यः सप्रतिघत्वादिधर्मं कादाचित्को भवेत्, किं तर्हि ? भावस्य निरवयवस्य तथा सजातीयविजातीयव्यावृत्तस्योद्भव इति न स्वरूपाद्व्यतिरिक्तो धर्म एकस्य भेदको युक्तः ॥ १८०३-१८०४ ॥

कथं रूपस्य सप्रतिघत्वमिति व्यतिरेकीव व्यपदेशः, यदि स्वरूपाद्व्यतिरिक्तो धर्मो भेदको न भवेत् ? इत्याह—अनाक्षिप्तेत्यादि । अनाक्षिप्तान्यभेदेनेति

1 तद्रूप—पा०, गा० । 2 ०चा—जै० । 3. पा०, गा० पुस्तकयोर्नास्ति ।

पुनस्तत्प्रत्यवस्थानस्य निरसनम्

तत्त्वान्यत्वप्रकाराभ्यामवाच्यमथ वर्ण्यते ।
सन्तानादीव कारित्रं स्यादेवं सांवृतं ननु ॥ १८०६ ॥
अतश्च कल्पितत्वेन तत् क्वचिन्नोपयुज्यते ।
कार्ये सन्ततिवद् यस्माद् वस्त्वेवार्थक्रियाक्षमम् ॥ १८०७ ॥
सन्निधानं च तस्येदं भाविकं नेति तत्कृतम् ।
अध्वत्रयव्यवस्थानं तात्त्विकं नोपपद्यते ॥ १८०८ ॥

---

मेवान्तरप्रतिक्षेपेणेत्यर्थः । यथोच्यत इति व्यतिरेकीव । तदिति समतिय-स्यम् । स्वब्देनेति रूपस्य समतिपत्त्वमित्यनेन[1] । अत्र दृष्टान्तमाह—चेतसो वासनापिवेति । अपिचेति समुदायो निपात इवार्थे द्रष्टव्यः ॥ १८०५ ॥

पुन स[2] एवाह—"न कारित्रं धर्मादन्यत्, तद्व्यतिरेकेण स्वभावानुपलब्धेः । नापि धर्ममात्रम्, स्वभावास्तित्वेऽपि कदाचिदभावात् । न च न विशेषः, कारित्रस्य भागभावात्, सन्तानवत् । तथा धर्मनैरन्तर्योत्पत्तिः सन्तान इत्युच्यते, न चासौ धर्मव्यतिरिक्तस्तदविभागेन गृह्यमाणत्वात् । न च धर्ममात्रम्, एकक्षणस्यापि सन्तानत्वप्रसङ्गात् । [illegible] च नास्ति, तत्कार्यसद्भावात्" इति । आह च—

"सन्ततिकार्यं चेष्टं न विद्यते सापि सन्ततिः क्वचित् ।
तद्वदवगच्छ युक्त्या कारित्रेणाऽध्वसंसिद्धिम्" ॥ ( ) इति ।

अत्राह—तत्त्वान्यत्वेत्यादि । [G 510] सन्तानादीवेति । आदि-शब्देन समूहादिपरिग्रहः । यथा सन्तानिभ्यस्तत्त्वान्यत्वेनावाच्यत्वात् पुद्गलवत् सन्तानो निःस्वभावः, [3]तद्वत् कारित्रमपि निःस्वभावं[3] स्यात् । स्वभावे हि सति तत्त्वमन्यत्वम्, अतश्च तत्कारित्रं कल्पितत्वान्न क्वचित् कार्ये सन्ततिवदुपयुज्येत । न हि कल्पितस्य सन्तानस्य क्वचित् कार्येऽस्त्युपयोगः; तस्य निःस्वभावत्वात् । स्वभावप्रतिबद्धत्वात् कार्योदयस्य । तस्माद् वस्त्वेव सन्तानिस्वभावमर्थक्रियाक्षमम्,

---

१. प्रतिपत्त०—पा० ।
२. भदन्तघदत्तमद्र इत्यर्थः ।
३-३. पा० पुस्तके नास्ति, तथा कारित्र निस्वभाव—ग० ।

कारित्राख्या फलाक्षेपशक्तिर्या शब्दगोचरा[1] ।
शक्तेरेव च वस्तुत्वात् सा प्रज्ञप्तिसती कथम् ॥ १८०९ ॥

विस्तरेण भावानां त्रैकाल्यनिरसनम्

यच्चेदमीक्ष्यते[2] रूपं दाहपाकादिकार्यकृत् ।
अतीतानागतावस्थं किं तदेवाभ्युपेयते ॥ १८१० ॥
तदेव चेत् कथं नाम तस्यैवैकात्मनः सतः ।
अक्रिया च क्रिया चापि क्रियाविरतिरित्यपि ॥ १८११ ॥
एकस्मिन् निर्विशिष्टेऽस्मिन् परस्परपराहताः ।
प्रकाराः कथमेते हि युज्यन्ते नाम वस्तुनि ॥ १८१२ ॥
एकावस्थापरित्यागे परावस्थापरिग्रहात् ।
नैवैतत् निर्विशिष्टं चेद् वस्त्वध्वस्विति कल्प्यते ॥ १८१३ ॥

---

न सन्तानः कल्पितः । ततश्च कारित्रस्य प्रज्ञप्तिसत्त्वात् प्रागवत्[3] पश्चादपि न परमार्थतः सन्निधानमस्तीति तद्वशादध्वत्रयव्यवस्थानमपि कल्पितमेव स्यात्, न भाविकम् ॥ १८०६–१८०८ ॥

अथापि[4] स्यात्—अस्तु कारित्रं प्रज्ञप्तिसत्, तत्कृतं चाप्यध्वव्यवस्थानं प्रज्ञप्तिसत्, ततश्च को दोषः ? इत्याह—कारित्राख्येति ।

[G 511] फलाक्षेपशक्तिर्हि धर्माणां कारित्रमिति वर्णितम् । या[5] च फलाक्षेपशक्तिः सा[6] नान्या वस्तुस्वलक्षणात्, किं तर्हि ? तदेव । अत एवासौ न शब्दगोचरा; असाधारणत्वात् स्वलक्षणे शब्दाप्रवृत्तेः । ततश्च शक्तिरेव वस्तु नान्यदिति कथं सा शक्तिः[7] प्रज्ञप्तिसती[8] भवेत् ? नैव भवेदिति । ततश्च तद्वशादध्वव्यवस्थानं तात्त्विकमेवेदं भवतेति[6] भावः । किञ्च—यदेतद्दाहपाकाद्यर्थक्रियाकारि वह्न्यादिरूपमुपलभ्यते, किं तदेवातीतानागतावस्थम् ? आहोस्विदन्यत् ?

---

1. शब्दगोचरः—जै० ।
2. यच्चेदमिष्यते—पा०, गा० ।
3. प्रागनु—पा०, गा० ।
4. तथापि—पा०, गा० ।
5. सा—पा०, गा० ।
6–6. पा०, गा० पुस्तकयोर्नास्ति ।
7. ०र्गता कथ—गा० ।
8. प्रज्ञप्तीति—पा०, गा० ।

किं वै भावाद् विभिद्यन्तेऽवस्था नाकर्तृतास्थितेः ।
तासामेव हि सद्भावात् कार्यसत्तोपलभ्यते ॥ १८१४ ॥
अभेदमनुमन्यन्ते कथमध्वसु वस्तुनः ।
ता अभूत्वा भवन्त्यश्च तदात्मिकाः ॥ १८१५ ॥
अवस्थायां च मध्यायां स्वरूपेणैव कारकम् ।
तद् तदेव स्वरूपं च दशयोरन्ययोरपि ॥ १८१६ ॥
तत्क्रियाक्रियाभ्रंशौ कथमस्य तयोर्मतौ ।
पररूपेण कर्तृत्वे प्राप्ताऽस्याकर्तृता पुनः ॥ १८१७ ॥

---

यदि तदेव, कथमेकस्मिन्नविशिष्टेऽस्मिन् रूपादिके वस्तुन्यनित्यादयः परस्परविरुद्धा धर्मा युज्यन्ते, येन यथाक्रममनागतवर्तमानातीतव्यवस्था स्यात्। यदि हि विरुद्धधर्माध्यासेऽप्येकत्वं स्यात्, उत्सन्ना तर्हि भेदव्यवस्था, ततश्च सर्वमेव जगदेकमेव स्यात्, एकत्वे च सहोत्पत्त्यादिप्रसङ्गः। अथाप्यवस्थापरित्यागपरिग्रहभेदेन भिन्नत्वादध्वसु वस्तु न निर्विशिष्टमिति कल्प्यते, एवमपि किं [illegible] अवस्था भावाद्भिन्नाः? आहोस्विदभिन्नाः?—इति वक्तव्यम्। पर आह—नेति। भिद्यन्ते भावादिति सम्बन्धः। कस्मात्? भावस्याकर्तृत्वास्थितेः[1] = अकर्तृत्वप्रसङ्गात्। अन्वयव्यतिरेकाभ्यां तासामेवावस्थानां कार्यं प्रति सामर्थ्यसिद्धेः ॥ १८०९-१८१४ ॥

अत्र दूषणमाह—अभेदमित्यादि। वस्तुनः सकाशादभेदं कथमवस्थास्वनुमन्यन्ते[2] = प्रतिपद्यन्ते? नैव; यस्मादभूत्वा भवन्त्यवस्थाः, भूत्वा च विनश्यन्ति। न च तथा वस्त्विष्टम्; सर्वदाऽस्तित्वाभ्युपगमात्। ततश्च कथं ता अभूत्वा भवन्त्यो विनश्यन्त्यश्च तदात्मिका युक्ताः? नैव; भिन्नयोगक्षेमत्वात्। अन्यथा हि तदात्मत्वे तासामपि सदाऽस्तित्वप्रसङ्गो वस्तुस्वभाववत्, [G 512] ततोऽव्यतिरेकाद् वस्तुनो वाऽभूत्वाभावादिप्रसङ्गोऽवस्थास्वरूपवत्।

भवतु नावस्थाभेदपरिकल्पना, तथापि विरुद्धधर्माध्यासो न परिहृत एव। तथा हि—वस्तु मध्यावस्थायां किं स्वरूपेण कारकम्? आहोस्वित् पररूपेण? यदि

---

१. कर्तृतास्थितेः—पा०, गा०।  २. °वस्थानुमन्यन्ते—पा०।

अतीतानागतावस्थमन्यच्चेदनलादिकम् ।
तत्साङ्कर्यादिदोषोऽयमस्मिन् पक्षे निरास्पदः ॥ १८१८ ॥
तदिदानीममूत्वैव कार्ययोग्यं प्रजायते ।
न च तिष्ठति भूत्वेति सिद्धाऽस्यानन्वयात्मता ॥ १८१९ ॥
स एव भाविको भावो य एवार्थक्रियासमः[1] ।
स च नास्ति तयोर्योऽस्ति न तस्मात् कार्यसम्भवः ॥ १८२० ॥
अतीतश्च पदार्थोऽयमभूत्वा भवनात् स्फुटम् ।
वर्तमानोऽन्यवत् प्राप्तः कादाचित्कतयापि च ॥ १८२१ ॥

स्वरूपेण, तदैव स्वरूपमन्ययोरपि दशयोरतीतानागतावस्थयोरस्तीति कथमस्य कारकस्वभावस्य क्रियाक्रियाश्रमौ स्याताम्। अथ पररूपेण, तदाऽस्याकर्तृता पुन, प्राप्नेयवस्तुत्वमसङ्ग । एव तावत् तदैव दहनादिरूपमतीतानागतावस्थायां न युक्तम्। अथान्यत्, अस्मिन् पक्षे न भवत्येकत्र क्रियाक्रियादिपरस्परपराहतधर्म-साङ्कर्यादिदोष, भिन्नत्वाद् वस्तुन। किन्तु यत्तदाऽपाकादिकार्ययोग्यमनलादिकं वस्तु तदभूत्वा जायते, भूत्वा च विगच्छतीति सदाऽस्तित्वाभ्युपगमविरोध स्यात्; अन्वयाभावात् ॥ १८१५–१८१९ ॥

स्यादेतत्—यद्यपि कार्ययोग्यमभूत्वा जायते, भूत्वा च विगच्छतीति, तथाप्यतीतानागतावस्थायामकार्ययोग्यं वस्तु विद्यत एव, ततश्च न सदाऽस्तित्वाभ्युपगमविरोध ? इत्याह— स एवेत्यादि। स एवेति अर्थक्रियाक्षम। तयोरिति अतीतानागतावस्थयो। योऽस्तीति अकार्ययोग्य ॥ १८२० ॥

अथापि स्यात्—अतीतस्य सभागहेत्वादे कार्ययोग्यत्वमिष्यत एव, ततश्चासिद्धमेतत् 'न तस्मात् कार्यसम्भव' ? इत्याह—अतीतश्चेति। [ [illegible] 513 ] अन्यवदिति। अविवादास्पदीभूतवर्तमानवत्। कादाचित्कतयाऽपि चेति। वर्तमानोऽन्यवत् प्राप्त इति सम्बन्ध। न चायं हेतुरनन्वय। तथा हि—हेतुप्रत्ययजनितो योऽर्थ स वर्तमान उच्यते, यश्च कादाचित्क सोऽवश्यं हेतुप्रत्ययनिमित्त, यस्मादहेतुकस्य द्वे एव गती—यदुत सदा सत्त्वम्, असत्त्वं

1. एतद क्रिया०—पा०, गा०।

सदा सत्त्वमसत्त्वं वाऽहेतुत्वेऽस्यानपेक्षणात्[1] ।
हेतोर्नियतसत्त्वश्च वर्तमानोऽयमुच्यते ॥ १८२२ ॥
प्रतिसङ्ख्यानिरोधादिवैलक्षण्यं परैर्मतम् ।
संस्कृतत्वं च रूपादेर्जातिस्थित्यादियोगतः ॥ १८२३ ॥
तत्र जातिर्विशेषं कं जनयन्त्यभिधीयते ।
जनिकाऽस्येति तद्रूपादजातादपरं परम् ॥ १८२४ ॥
अशक्योत्पादनस्तावदनन्योऽतिशयस्ततः ।
सत्त्वात् प्रागपि निष्पत्तेर्निष्पत्त्युत्तरकालवत् ॥ १८२५ ॥

वा; अन्यानपेक्षणात् । तस्माद्यः कादाचित्कः सोऽवश्यं हेतुप्रत्ययनिर्मितसत्त्वः, सोऽवश्यं वर्तमान एवेति सिद्धम् । वर्तमानत्वेन कादाचित्कत्वस्य व्याप्तिः ।

किञ्च—यद्यतीतानागतं द्रव्यतोऽस्ति, तदा सर्वसंस्काराणां शाश्वतत्वप्रसङ्गः । ततश्च प्रतिसङ्ख्यानिरोधादिभ्यो रूपादीनां विशेषो न प्राप्नोति ।

अथ रूपादेः संस्कृतलक्षणयोगात् संस्कृतत्वम्, नाकाशादीनाम्, तेन भवति प्रतिसङ्ख्यानिरोधादेर्वैलक्षण्यं रूपादेरिति परैर्मतम्, तदेतदसम्यक्; तथा हि—जातिः, जरा, स्थितिः, अनित्यता च—इति चत्वारीमानि संस्कृतलक्षणानि । तत्र जातिर्जनयति, स्थितिः स्थापयति, जरा जरयति, अनित्यता विनाशयति—इत्येवं जननादिरेषां व्यापार इष्टः ।

तत्र जातिस्तावत् कं विशेषं जनयन्ती सत्यस्य रूपादेर्जनिका इत्यभिधीयते—किं तस्माद्रूपादेः परम् = व्यतिरिक्तम्, आहोस्विदपरम् = अव्यतिरिक्तं विशेषं जनयन्तीति पक्षद्वयम् । तत्र न तावदव्यतिरिक्तम्; यस्मादसौ विशेषो जातिव्यापारात् प्रागपि निष्पन्नत्वादशक्यक्रियः, निष्पत्त्युत्तरकालवत् । न हि निष्पन्नस्य क्रिया युक्ता; अनवस्थाप्रसङ्गात् । नापि व्यतिरिक्तोऽतिशयः क्रियते; व्यतिरेके ह्यस्य रूपादेरयमतिशय इति सम्बन्धासिद्धेः । तथा हि—न तादात्म्यलक्षणः सम्बन्धः; व्यतिरेकाभ्युपगमात् । अनभ्युपगमे वा पूर्वोक्तदोषप्रसङ्गात् । नापि तदुत्पत्तिलक्षणः; जातेरेव तदुत्पत्तेः । न चान्यः सम्बन्धोऽस्ति; आधाराधेयत्वादीनां तदु-

१. ०न्यानपेक्षणात्—पा०, गा० ।

अन्यस्त्वतिशयो नास्ति व्यतिरेकादसङ्गतेः ।
असत्कार्यप्रसङ्गश्च तस्य पूर्वमसत्त्वत ॥ १८२६ ॥
अन्यथात्वे स्थितौ नाशे चान्यानन्यविकल्पयोः ।
जरादिविषया दोषा एत एवानुषङ्गिण. ॥ १८२७ ॥
स्वकार्यारम्भिण इमे सामर्थ्यनियमात्मना ।
जात्यादयश्च तद्रूप प्राक् पश्चादपि विद्यते ॥ १८२८ ॥
समर्थरूपभावाच्च प्रारभन्ते न किं तदा ।
स्वानुरूपा क्रिया तस्या प्रारम्भे चामिताध्वता[1] ॥ १८२९ ॥
किञ्चातीतादयो भावा क्षणिका. स्युर्न वा यदि ।
आद्या, पुनस्तयो प्राप्ता सैवापरिमिताध्वता ॥ १८३० ॥

त्यन्तर्गतत्वात् । अथ तदुत्पत्तिरभ्युपगम्यते, तन्मात्रभाविनो विशेषस्य नित्यो त्पत्तिप्रसङ्गात्कानिरिदानी[2] किङ्करी स्यात् । जातिमपेक्ष्योत्पादयतीति चेत् । न ह्यनुपकारिण्या [ G 514 ] जात्यपेक्षा युक्ता, अतिप्रसङ्गात् । उपकारे वा तस्योपकारस्यातिशयस्य तत्त्वान्यत्वचिन्तायामनवस्थाप्रसङ्गात् । तस्माद् व्यतिरेके सति सम्बन्धो न सिद्धयति ।

किञ्च—तस्यातिशयस्य पूर्वमसत्त्वादसत्कार्यमभ्युपगत भवेत् । एव जरसान्यथात्वे क्रियमाणे, स्थित्या ऽवस्थिते, अनित्यतया च नाशे क्रियमाणे, एषामन्यथात्वादीनामन्या ऽनन्यविकल्पे सति ये दोषास्ते जातिवज्जरादिष्वपि वाच्या ॥ १८२६ १८२७ ॥

किञ्च—जात्यादीना स्वकार्यारम्भित्व यत तत् समर्थस्वभावनियमादिष्टम् । स च समर्थ स्वभावस्तेषा सर्वदा ऽस्तीति सदैव स्वकार्यारम्भित्वप्रसङ्ग । न च हेतुप्रत्ययवैकल्यम्, तेषामपि सदावस्थितत्वात् । ततश्चातीतानागतवस्तुनोर्जात्यादिभिर्नित्यकार्यकारणात् एकस्मिन्नेवाध्वन्यपरिमिताध्व प्रसङ्ग ॥ १८२८–१८२९ ॥

1 चाभिनाध्वता—जै० । 2 ०जाति —पा०, गा० ।

यः क्षणो जायते तत्र वर्त्तमानो भवत्यसौ ।
उत्पद्य यो विनष्टश्च सोऽतीतो भाव्यनागतः ॥ १८३१ ॥
अथाप्यक्षणिकास्ते स्युः कृतान्तस्ते विरुध्यते ।
'क्षणिकाः सर्वसंस्काराः' सिद्धान्ते हि प्रकाशिताः ॥ १८३२ ॥
युक्तिबाधापि—सत्त्वेऽनियमात् क्षणभङ्गिनः ।
वर्त्तमाना इव प्राक् तु प्रतिबन्धोऽस्य[1] साधितः ॥ १८३३ ॥
अर्थक्रियासमर्थाः स्युरतीतानागता इमे ।
न वा सामर्थ्यसद्भावे वर्त्तमानास्तदन्यवत् ॥ १८३४ ॥

---

अपि च—अतीतानागताः क्षणिका वा स्युः, न वा क्षणिका इति पक्षद्वयम् । तत्र यद्याद्यः, क्षणिका इति यावत्, तदा सैवामिताध्वता प्राप्ता । यः क्षण इति तामेव दर्शयति ॥ १८३०–१८३१ ॥

अथाक्षणिका इति पक्षः, एवं सति कृतान्तविरोधः । कृतान्तः = सिद्धान्त उच्यते । तथा हि "क्षणिकाः सर्वसंस्काराः" इति सिद्धान्तः ॥ १८३२ ॥

[ G 515 ] किञ्च—न केवलं सिद्धान्तविरोधः, अनुमानविरोधोऽपि[2] प्रतिज्ञायाः । तथा हि—यत्सत् तत् सर्वं क्षणिकम्, यथा वर्त्तमानम् । सन्तश्चातीतानागता इति नियमात् क्षणभङ्गिनः प्राप्ताः । प्राक्तु क्षणभङ्गाधिकारे । प्रतिबन्धोऽस्य हेतोः प्रसाधित इति नानैकान्तिकत्वम् । तथा हि—अर्थक्रियाकारित्वं सत्त्वलक्षणम्, अक्षणिकस्य च क्रमयौगपद्याभ्यामर्थक्रियाविरोधादर्थक्रियानिवृत्तौ तल्लक्षणस्य सत्त्वस्य निवृत्तिरिति साध्यविपक्षान्निवृत्तं सत्त्वम् ॥ १८३३ ॥

किञ्च—इमेऽतीतानागता अर्थक्रियासमर्था वा स्युः, न वा समर्था इति पक्षौ । यदि समर्थाः; तदा सामर्थ्यसद्भावे वर्त्तमाना आप्नुवन्ति, अविवादास्पदीभूतवर्त्तमानवत् । प्रयोगः—ये येऽर्थक्रियासमर्थास्ते वर्त्तमानाः, यथाऽविवादास्पदीभूता वर्त्तमानाः । अर्थक्रियासमर्थाश्चातीतादय इति स्वभावहेतुप्रसङ्गः ।

---

१. ०ऽन—पा०, गा० ।
२. मानविरोधोऽपि—पा०, गा० ।

अवर्तमानताया तु सर्वशक्तिवियोगिनः ।
नष्टाजाता प्रसज्यन्ते व्योमतामरसादिवत् ॥ १८३५ ॥
तुल्यपर्यनुयोगाश्च सर्वे व्योमादयोऽकृता ।
अनैकान्तिकताक्लृप्तेर्न तेऽपि विनिबन्धनम् ॥ १८३६ ॥
नियमार्थक्रियाशक्तिर्भावाना प्रत्ययोद्भवा ।
अहेतुत्वे सम सर्वमुपयुज्येत सर्वत ॥ १८३७ ॥
नियतार्थक्रियाशक्तिजन्म प्रत्ययनिर्मितम् ।
वर्तमानस्य भावस्य लक्षण नान्यदस्ति च ॥ १८३८ ॥
अतीतानागताना च तदजन्य समस्ति च ।
तत्किं न वर्तमानत्वममीषामनुपज्यते ॥ १८३९ ॥

---

न चायमनैकान्तिक, यतो वर्तमानत्वनिवृत्तौ नष्टाजाताना सर्वसामर्थ्यवियोगित्व प्रसज्येत, आकाशाम्भोरुहवत् । प्रयोग — ये वर्तमाना न भवन्ति ते क्वचित् समर्था अपि न भवन्ति, यथा व्योमाम्भोरुहम् । न भवन्ति चातीतादयो वर्तमाना इति व्यापकानुपलब्धि । न चाकाशप्रतिसङ्ख्यानिरोधाप्रतिसङ्ख्यानिरोधैरसम्भूतैरनैकान्त, तेषामपि पक्षीकरणात् । अतोऽनैकान्तिकत्वकल्पनाया नातिनिबन्धनम् । तथा हि — येयं प्रतिनियतार्थक्रियाशक्तिर्भावानाम्, [G 516] सा प्रत्ययोद्भवेत्यङ्गीकर्तव्यम् । अन्यथा यदि निर्हेतुका स्यात्, तदा नियमहेतोरभावात् प्रतिनियता शक्तिर्भावाना न स्यात् । ततश्च सर्वं सर्वस्मिन् कार्ये उपयुज्येत । तस्मात् कृतकानादीना[1] सामर्थ्यनियमो न युक्त इति न तैरनैकान्तिकत्वकल्पनाया निबन्धनम् । न च प्रथमे हेतौ सन्दिग्धविपक्षव्यावृत्तिकता[2] यस्मान्नियतार्थक्रियाया या शक्तिस्तस्या यज्जन्म हेतुप्रत्ययनिर्मितं[3] तदेव वर्तमानस्य लक्षणम् । एतच्च वर्तमानलक्षणमतिक्रान्तानागतेष्वप्यस्तीति निमित्तान्तराभावात् किमिति वर्तमानता न[4] प्रसज्यते । ॥ १८३५-१८३९ ॥

१ कृताका० — पा० ।
२ ०विपक्षव्यावृत्तिक — पा० ।
३ ०प्रत्ययनिर्मित — पा० ।
४ पा० पुस्तके नास्ति ।

स्वर्गापवर्गसंसर्गयत्नोऽयमफलस्ततः ।
ईहासाध्यं न किञ्चिद्धि फलमत्रोपलक्ष्यते ॥ १८४० ॥
अथ नार्थे[1] क्रियाशक्तिस्तेषामभ्युपगम्यते[1] ।
प्राप्तैवमत एवैषामसत्त्वं व्योमपुष्पवत् ॥ १८४१ ॥

अतीतादिसत्तासाधकप्रमाणानामपाकरणम्

हेतवो भावधर्मास्तु नासिद्धे सिद्धिभागिनः ।
वर्तमानत्वसिद्धेर्वा विरुद्धा धर्मबाधनात् ॥ १८४२ ॥

---

किञ्च—यस्यातीतानागतं द्रव्यतोऽस्ति, तस्य फलमपि नित्यमस्तीति स्वर्गापवर्गप्राप्त्यर्थो यत्नो विफलः स्यात्, ईहासाध्यस्य कस्यचित् फलस्याभावात्। किं तत्र व्रतनियमादिलक्षणया ईहायाः सामर्थ्यं स्यात्। उत्पादने सामर्थ्यमिति चेत् ? उत्पादनं तदभूत्वा भवतीति सिद्धम्। अथ तदप्यस्ति ? कस्येदानीं क्व सामर्थ्यम् ? वर्तमानीकरणसामर्थ्यमिति चेत् ? किमिदं वर्तमानीकरणं नाम ? देशान्तराकर्षणं चेत् ? नित्यं तर्हि वस्तु प्रसक्तम्; सर्वदाऽवस्थितत्वात्। अरूपाणां वेदनादीनां निष्क्रियत्वात् कथमाकर्षणं भवेत् ? यच्च तदाकर्षणम्, तदभूत्वा भवतीति सिद्धम्। स्वर्गः = सुमेरुपृष्ठादिः, अपवर्ग = मोक्ष, तयोः प्राप्तिः = संसर्ग, तत्र यत्नः = व्रतनियमादिः ॥ १८४० ॥

अथ नार्थे[2] क्रिया[2] समर्था इति द्वितीयपक्ष आश्रीयते। एवं तर्ह्येत एवार्थक्रियाशून्यत्वादसत्त्वं प्राप्नोति, खपुष्पवत्: सर्वसामर्थ्यविवेकलक्षणत्वादसत्त्वस्य ॥ १८४१ ॥

एवं तावदतीतानागतानामसत्तासाधकं प्रमाणमभिधाय सत्तासाधकं प्रमाणमपाकर्तुमाह—हेतव इत्यादि। हेतवो हि पूर्वोक्ता अध्वसंगृहीतत्वादित्यादय आश्रयासिद्धाः, अतीतादेर्धर्मिणोऽसिद्धत्वात्। [G 517] यथाह—"नासिद्धे भावधर्मोऽस्ति" (प्र० वा० ३-१९०) इति। यद्यपि सिद्धाः स्युः, तथापि वर्तमानत्वसिद्धेर्धर्मस्वरूपविपरीतसाधनाद् विरुद्धा हेतवः ॥ १८४२ ॥

कथमिदानीमध्वसंगृहीतत्वमतीतानागतानां रूपादीनां निर्दिष्टम्, न हि

---

१–१. नार्थक्रिया॰—पा॰, गा॰। २–२. नार्थक्रिया—पा॰, बा॰।

भूत्वा यद् विगतं रूपं तदतीतं प्रकाशितम् ।
सति प्रत्ययसाकल्ये भावि यत् तदनागतम् ॥ १८४३ ॥
सत्त्वे तु वर्तमानत्वमासज्येतेति साधितम् ।
विद्यमानत्वमात्रं हि वर्तमानस्य लक्षणम् ॥ १८४४ ॥
रूपादित्वमतीतादेस्तां तां भाविनीं तथा ।
अध्यारोप्य दशामस्य कथ्यते न तु भावतः ॥ १८४५ ॥
द्वय प्रतीत्यविज्ञानं यदुक्तं तत्त्वदर्शिना ।
सेष्टा सविषयं चित्तमभिसन्धाय देशना ॥ १८४६ ॥
नित्येश्वरादिबुद्धीनां नैवालम्बनमस्ति हि ।
शब्दानामादिधर्माणां तदाकारवियुक्तितः ॥ १८४७ ॥
बोधानुगतिमात्रेण विज्ञानमिति चोच्यते ।

---

शशविषाणमत्यन्तासदतीतमनागतं वा व्यवस्थाप्यते ? इत्याह—भूत्वेत्यादि । सुबोधम् ॥ १८४३-१८४४ ॥

रूपवेदनादिभावस्तर्हि कथं निर्दिष्ट ? इत्याह—रूपादित्वमित्यादि । तां दशामिति सामकम्याम् ॥ १८४५ ॥

द्वयाश्रयं तर्हि कथं विज्ञानमुक्तम् ? इत्याह—द्वय प्रतीत्येति । द्विविधं हि विज्ञानम्—सालम्बनम्, अनालम्बनं च । यत्सालम्बनं तदभिसन्धाय द्वयाश्रयविज्ञानदेशना भगवतः ॥ १८४६ ॥

अथ निरालम्बनमपि ज्ञानमस्तीति कथमवसितम् ? इत्याह—नित्येश्वरादीत्यादि । आदिशब्देन प्रधानकालादयः परिकल्पिता गृह्यन्ते । न केवलमेतावद्—'शब्दाद्यालम्बना इमा बुद्धय' इति, दर्शयति—शब्दनामादीत्यादि । तस्येश्वरादेराकारे निष्कलमकम्पेतुत्वादि, यस्मा बुद्ध्याऽध्यवसीयते, तेनाकारेण वियोग शब्दस्य नाम्ना वा विप्रयुक्तसंस्कारविशेषस्य । आदिशब्देन निमित्तं प्रत्ययसम्पादनविकल्पाभिव्यक्त्यादिग्रहणम् ॥ १८४७ ॥

यदि तर्हि निर्विषयमपि विज्ञानमस्ति, तत् कथं ज्ञानमिति व्यवह्रियते, यथा हि [P. 518] 'विजानातीति विज्ञानम्' इति गीयते, अस्ति च विज्ञेये

सा चास्याजडरूपत्वं प्रकाशयात् परिकल्पितम् ॥ १८४८ ॥
विपाकहेतुः फलदो नातीतोऽभ्युपगम्यते ।
तद्वासिताद् तु विज्ञानप्रबन्धात् फलमिष्यते ॥ १८४९ ॥
तामेव वासनां चेतःसन्ततावधिकृत्य तत् ।
अस्ति कर्मेति निर्दिष्टं भक्त्या मूलाविनाशवत् ॥ १८५० ॥
उच्छेददृष्टिमाश्राय चैवं शास्त्रा प्रकाशितम् ।
अन्यथा शून्यतासूत्रे देशना नीयते कथम् ! ॥ १८५१ ॥

किं विज्ञानतः[1] विज्ञानं स्यात् ? इत्याह—बोधानुगतिमात्रेणेति । बोधानुगमोऽपि विना बोधेन न[2] सम्भवतीति चेद् ? इत्याह[3]— सा चेति । सा = बोधानुगतिः । अस्य = विज्ञानस्य । किमुच्यते ? अजडजडरूपत्वम्, प्रकाश्यवस्त्वन्तराभावात् प्रकाशान्तरविरहाच्च नभोवर्त्यालोकवत् प्रकाशरूपत्वादभिधीयते बोधरूपतेति ॥ १८४८ ॥

कर्मातीतं च कथं फलदम् ? इत्यत्राह—विपाकहेतुरित्यादि । वासितम् = परम्परया फलोत्पादनसमर्थगुणाहितम् ॥ १८४९ ॥

यद्येवम्, कथमुक्तं भगवता—'अस्ति तत्कर्म यत्क्षीणं निरुद्धं विपरिणतम्" (        ) इति ? आह—तामेवेति । भक्त्येति उपचारेण । यथा मूलद्रव्यप्रसूतस्य हिरण्यादेः फलप्रबन्धस्य समभावे[4] विनष्टमपि मूलद्रव्यमविनष्टमित्युच्यते, तद्वत् कर्मापि ॥ १८५० ॥

उपचारेण देशनायाः किं प्रयोजनम् ? इत्याह—उच्छेददृष्टीति । 'नास्त्यतीतं कर्म' इत्युक्ते पारम्पर्येण यत्फलोत्पादनसामर्थ्यमाहितमतीतेन कर्मणा, तस्याप्यभावं प्रतिपद्येरन्—इत्युच्छेददृष्टिमापन्नाः स्युर्विनेया इति 'अस्ति कर्म' इत्युक्तं भगवता । अन्यथा हि यद्यतीतं स्वरूपेण स्यात्, तदा परमार्थशून्यतासूत्रे देशना कथं नीयते—"चक्षुरुत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचित् सन्निचयं गच्छतीति हि चक्षुरभूत्वा भवति भूत्वा च प्रतिविगच्छति" (        ) इति ।

1. पा०, गा० पुस्तकयोर्नास्ति । 2. पा० पुस्तके नास्ति ।
3. आह—पा०, गा० । 4. समावे—पा० ।

पारम्पर्येण साक्षाद् वा कार्यकारणतां गतम् ।
यद्रूपं वर्तमानस्य तद्विजानन्ति योगिनः ॥ १८५२ ॥
अनुगच्छन्ति पश्चाच्च विकल्पानुगतात्मभिः ।
शुद्धलौकिकविज्ञानैस्तत्त्वतोऽविपर्ययैरपि ॥ १८५३ ॥
तद्धेतुफलयोर्भूतां भाविनीं चैव सन्ततिम्[1] ।
तामाश्रित्य प्रवर्तन्तेऽतीतानागतदेशनाः ॥ १८५४ ॥
समस्तकल्पनाजालरहितज्ञानसन्ततेः ।
तथागतस्य वर्तन्तेऽनाभोगेनैव देशनाः ॥ १८५५ ॥

वर्तमानेऽप्यन्यमूला भवतीति चेत्? न, अध्वनो भावानर्थान्तरत्वात् तत्र[2] एवान्यानन्तत्वावस्थितिवचनात् । अथ [G 519] स्यादन्यमूला भवति, तदा[3] सिद्धम्— अनागतं वस्तु नास्तीति । अपि च— सदाऽवस्थितत्वे संस्काराणां हेतुफलयोरभावात् दुःखसमुदयसत्याभावः, तदभावाच्च निरोधमार्गयोरपि; ततश्च सत्यचतुष्टयाभावात् परिज्ञानप्रहाणसाक्षात्क्रियाभावना न युज्यन्ते, तदभावाच्च फलस्थानां प्रतिपन्नकानां च पुद्गलानामभाव इति सकलमेव प्रवचनं निरुध्यत इति नातीतादिवस्तुव्यवस्था साध्वी ॥ १८५१ ॥

"अतीतानागत[4] ज्ञान[5] निमित्तं योगिनां कथम्?" (तत्त्व० १७८८) इत्याह— पारम्पर्येणेत्यादि । अतीतापेक्षया कार्यतां गतम्, अनागतापेक्षया कारणताम् । विकल्पानुगतात्मभिरिति । सविकल्पैरित्यर्थः । तत्त्वतोऽविपर्ययैरिति अविसंवादित्वात्, स्वलक्षणस्याविषयीकरणात् । तत् = तस्मात् । हेतुफलयोः सन्ततिं भूतां भाविनीं चाश्रित्य[6] अतीतादिदेशना योगिनामपरिशुद्धानां प्रवर्तन्ते । भगवतस्तु तथागतस्य शुद्धलौकिकमपि ज्ञानं नास्ति, नित्यसमाहितत्वात् सर्वविकल्पानाम् । विकल्पस्य चासम्भवात् । यदाह—

1. [illegible]—पा०, गा० ।
2. तत्र—पा०, गा० ।
3. तथा—पा०, गा० ।
4-5. [illegible]—पा०, गा० ।
6. [illegible]—पा०, गा० ।

## लोकायतपरीक्षा

चोद्योपक्रमः

यदि नानुगतो भावः कश्चिदप्यत्र विद्यते ।
परलोकस्तदा न स्यादभावात् परलोकिनः ॥ १८५६ ॥

चार्वाकाणां देहानतिरिक्तात्मवादसमर्थनम्

देहबुद्धीन्द्रियादीनां प्रतिक्षणविनाशने ।
न युक्तं परलोकित्वं नान्यश्चाभ्युपगम्यते ॥ १८५७ ॥
तस्माद् भूतविशेषेभ्यो यथा शुक्तसुरादिकम् ।

---

"विकल्पः स्वयमेवायमविद्यारूपतां गतः ।
स्वाकारं बाह्यरूपेण यस्मादारोप्य वर्तते ॥" (  ) इति ।

तस्य पूर्वप्रणिधानपुण्यज्ञानसम्भारसामर्थ्यादवाप्तचिन्तामणिसदृशात्मभावस्या-नाभोगेनैव देशनाः प्रवर्तन्ते ॥ १८५२-१८५५ ॥

इति त्रैकाल्यपरीक्षा

"अनाद्यन्तम्" (तत्त्व० ४) इत्येतत्समर्थनार्थं चोद्योपक्रमपूर्वकमाह — यदीत्यादि । [G. 520] कश्चिदिति आत्मादिः । तत्रात्मनः पूर्वं प्रतिषिद्धत्वादभावादेव नानुगामित्वम्; विज्ञानादीनां च क्षणिकत्वात्, त्रैकाल्यपरीक्षायां चान्वयस्य निषिद्धत्वाच्चान्वयः ॥ १८५६ ॥

न च[1] देहादयः परलोकिनो भविष्यन्ति ? इत्याह — देहेत्यादि । आदिशब्देन वेदना-संज्ञा-संस्काराणां ग्रहणम् । नान्यश्चाभ्युपगम्यत इति । आत्मा । तल्लोकायतपक्षानुरोधेनैव ज्ञातम्[2] । तथा हि तस्यैतत् सूत्रम् — "परलोकिनोऽभावात् परलोकाभावः" (बा० सू० १७) इति । तथा हि — "पृथिव्यापस्तेजोवायुरिति चत्वारि तत्त्वानि" (बा० सू० २) "तेभ्यश्चैतन्यम्" (बा० सू० ३) इति । तत्र केचिद् वृत्तिकारा व्याचक्षते — उत्पद्यते तेभ्यश्चैतन्यम् ।

---

1. तु — पा०, गा० । 2 वातम् — पा० ।

तेभ्य एव तथा ज्ञानं जायते व्यज्यतेऽथ च[1] ॥ १८५८ ॥
सन्निवेशविशेषे च क्षित्यादीनां निवेश्यते ।
देहेन्द्रियादिसंज्ञेयं तत्त्वं नान्यद्धि विद्यते ॥ १८५९ ॥

अतीतजन्मनिषेध

कार्यकारणता नास्ति विवादपदचेतसोः ।
विभिन्नदेहवृत्तित्वाद् गवाश्वज्ञानयोरिव ॥ १८६० ॥
न विवक्षितविज्ञानजन्या वा मतयो मताः ।
ज्ञानत्वादन्यसन्तानसम्बद्धा इव बुद्धयः ॥ १८६१ ॥

अन्ये—अभिव्यज्यत इत्याहु । अत पक्षद्वयमाह—जायते व्यज्यतेऽथ चेति[2] । शुक्तम् = अम्लत्वम् । सुरेति मदजननशक्तिः । आदिशब्देन मूर्छाविजननसामर्थ्यपरिग्रह ॥ १८५७–१८५८ ॥

ननु "चक्षुरादीनि विषयाश्च रूपादीन् प्रतीत्य विज्ञानमुत्पद्यते" (      ) इत्यतिप्रतीतमेतत्, तत्कथमुच्यते तेभ्य एव विज्ञानम् ? इत्याह—सन्निवेशविशेष इति । तथा च तेषा सूत्रम्—"तत्समुदाये विषयेन्द्रियसंज्ञा" (बा० सू० २) इति । न हि महाभूतव्यतिरेकेणेन्द्रियादीनि सन्ति, तत्सस्थानविशेष एव तत्प्रज्ञप्ते । न च सस्थान नामान्यत सस्थानिभ्य । इद च महाभूतचतुष्टयं प्रत्यक्षससिद्धम् । न चैतद्व्यतिरेकेणान्यत्तत्त्वमस्ति प्रत्यक्षसिद्धम् । न च प्रत्यक्षादन्यत् प्रमाणमस्ति, येनान्यस्य परलोकादे ससिद्धि स्यात ॥ १८५९ ॥

[C   ?1] अपि च—यद्यतीतदेहवर्त्तिनश्चेतस प्रथमजन्मचित्त प्रति कारणभाव स्यात, मरणचित्तस्य चागामिचित्त प्रति, तदा चित्तप्रतिबन्धानुपरमात् परलोकक्रम स्यात् । यावता प्रथमयोस्तावद् विवादास्पदीभूतयोश्चेतसोर्न कार्यकारणताऽस्ति, भिन्नदेहवर्त्तित्वात्, गवाश्ववर्त्तिनोरिव ज्ञानयो ।

अथ वा—जन्मबुद्धयो धर्मिण्य, तासामतीतदेहवर्त्तिचरमविज्ञानजन्यत्वप्रतिषेध साध्य, ज्ञानत्वादिति सामान्य हेतु, अन्यसन्तानवर्त्तिन्यो बुद्धयो निदर्शनम् । प्रयोगस्त्वेवम्—यद् ज्ञानम्, न तद् विवक्षितातीतदेहवर्त्तिचरमज्ञान

1. वा—पा०, मा० । 2 ०चेति—पा०, गा० ।

अनागतजन्मनिषेधः

सरागमरणं चित्तं न चित्तान्तरसन्धिकृत् ।
मरणज्ञानभावेन वीतक्लेशस्य तद् यथा ॥ १८६२ ॥

कायादेव चित्तोत्पत्तिः

कायादेव ततो ज्ञानं प्राणापानाद्यधिष्ठितात् ।
युक्तं जायत इत्येतत् कम्बलाश्वतरोदितम् ॥ १८६३ ॥
कललादिषु विज्ञानमस्तीत्येतच्च साहसम् ।
असञ्जातेन्द्रियत्वाद्धि न तत्रार्थोऽवगम्यते ॥ १८६४ ॥
न चार्थाधिगतेरन्यद् रूपं ज्ञानस्य युज्यते ।
मूर्च्छादावपि तेनास्य सद्भावो नोपपद्यते ॥ १८६५ ॥

---

जन्यम्; ज्ञानत्वात्, यथाऽन्यसन्तानवर्ति ज्ञानम् । ज्ञानरूपाश्चेमा विवक्षितदेहवर्तिन्यो जन्मबुद्धय इति विरुद्धव्याप्तोपलब्धिः; विवक्षितविज्ञानजन्यविरुद्धेन[1] ज्ञानत्वस्य व्याप्तत्वात् ॥ १८६०—१८६१ ॥

एवं तावदतीतजन्मनिषेधः कृतः । साम्प्रतमनागतजन्मनिषेधायाह—सरागस्येत्यादि । सरागस्य मरणचित्तं चित्तान्तरं न प्रतिसन्धत्ते; मरणचित्तत्वात् । अर्हच्चरमचित्तवदिति व्यापकविरुद्धोपलब्धिः । वीतक्लेशस्य तद्यथेति । मरणज्ञानम् ॥ १८६२ ॥

कुतस्तर्हि चित्तस्योत्पत्तिः ? इत्याह—कायादेवेत्यादि । तथा च सूत्रम्—"कायादेव" (      ) इति । कम्बलाश्वतरोदितमिति ॥ १८६३ ॥

ननु च कायानिष्पत्तावपि कललाद्यवस्थायां विज्ञानमस्त्येव मूर्च्छितम्, तच्चातीतभवविज्ञानजन्यतया सिद्धम् चित्तम्[2], तत्[2] कथं कायादेवेति नियमः ? इत्याह—कललादिष्वित्यादि । [G. 522] इन्द्रियार्थौ हि विज्ञानोत्पत्तेः कारणम्; अर्थाधिगमरूपत्वाज्ज्ञानस्य । कललाद्यवस्थायां चेन्द्रियार्थयोरभावात् कथं तत्कार्यं विज्ञानं स्यादिति कारणानुपलब्ध्या मूर्च्छाद्यवस्थायां विज्ञानाभावः सिद्ध इति समुदायार्थः । न च शक्तिरूपेण तदा विज्ञानमस्तीति कल्पयितुं युक्तम्;

---

१. °ज्ञानजन्यत्व°—गा॰ ।   २. पा॰, गा॰ पुस्तकयोर्नास्ति ।

न चापि शक्तिरूपेण तदा धीरवतिष्ठते ।
निराश्रयत्वाच्छक्तीनां स्थितिर्न ह्यवकल्पते ॥ १८६६ ॥
ज्ञानाधारात्मनोऽसत्त्वे देह एव तदाश्रयः ।
अन्ते देहनिवृत्तौ च ज्ञानवृत्तिः किमाश्रया ॥ १८६७ ॥
तदनन्तरसम्भूतदेहान्तरसमाश्रया[1] ।
यदि देहोऽपरो दृष्टः कथमस्तीति गम्यते ॥ १८६८ ॥
भिन्नदेहप्रवृत्तं च गजवाज्यादिचित्तवत् ।
एकसन्ततिसम्बद्धं तद् विज्ञानं कथं भवेत् ? ॥ १८६९ ॥
एको ज्ञानाश्रयस्तस्मादनादिनिधनो नरः ।

ज्ञानाश्रयस्यात्मनो नैयायिकादिप्रकल्पितस्य विज्ञानप्रबन्धस्य वा तदानीमभावात् । न च निराश्रया शक्तिर्युक्ता । तस्मात् सामर्थ्याद्देह एव तदानीमाश्रयः अन्यस्य ज्ञानाधारात्मनः, ज्ञानाधारस्य भावस्य, विज्ञानप्रबन्धस्यात्मनो वा तदानीमसत्त्वात् । ततश्चान्ते मरणावस्थायां देहस्याश्रयस्य निवृत्तौ निराश्रयं कथं ज्ञानमवतिष्ठेतेति सिद्धोऽनागतजन्माभावः ॥ १८६६–१८६७ ॥

अथापि स्यात्—मरणसमनन्तरसमुद्भूतमन्तराभविकं देहमाश्रित्य चित्तवृत्तिर्भविष्यतीति । तदेतदसम्यक्, न हि मरणानन्तरमपरो देह उत्पद्यमानो दृष्टः । न चादृष्टस्यास्तित्वनिश्चयो युक्तः, तस्यासद्व्यवहारविषयत्वात् । न चैकसन्तानवर्तिनश्चेतसो देहान्तरसमाश्रयणं युक्तम्, गजवाज्यादिचित्तस्यैकसन्तानसम्बन्धित्वप्रसङ्गात् । प्रयोगः—यद्भिन्नदेहप्रवृत्तं विज्ञानं न तदेकसन्तानसम्बद्धम्, यथा गजवाजिनोश्चित्तम् । भिन्नदेहवृत्ति चान्तराभवमरणभवयोश्चित्तमिति व्यापकविरुद्धोपलब्धिप्रसङ्गः । न चैवम्, तस्माद्विपर्ययः—यदेकसन्तानसम्बद्धं तद्भिन्नदेहप्रवृत्तं न भवति, यथा गजचित्तमश्वदेहानाश्रितम् । एकसन्तानसम्बद्धं च प्राणिनश्चित्तमिति विरुद्धव्याप्तोपलब्धिः, भिन्नदेहप्रवृत्तत्वविरुद्धेनाभिन्नदेहप्रवृत्तत्वेनैकसन्तानसम्बद्धत्वस्य व्याप्तत्वात् ।

एक इत्याद्युपसंहारः । आदिः = उत्पादः, निधनम् = नाशः, तौ विद्येते

1. ० समाश्रय — पा०, गा० ।

संसारी कश्चिदेष्टव्यो यद्वा नास्तिकता परा ॥ १८७० ॥

चार्वाकाणां प्रतिविधानम्

तदत्र परलोकोऽयं नान्यः कश्चन विद्यते ।
उपादानतदादेयभूतज्ञानादिसन्ततेः ॥ १८७१ ॥
काचिन्नियतमर्यादाऽवस्थैव परिकीर्त्यते ।
तस्या[1] अनाद्यनन्तायाः[1] परः पूर्व इहेति च ॥ १८७२ ॥
दृष्टमात्रसुखासक्तैर्यैतावानिति कल्प्यते ।
परलोकोऽन्यदेशादिस्तथाऽत्रास्माभिरुच्यते ॥ १८७३ ॥
यदि तद्व्यतिरिक्तस्तु परलोको निषिध्यते ।

आदिनिधने [G 523] यस्यासावनादिनिधनः । नर इत्यात्मा । यद्वा नास्तिकता परेत्यनेन "परलोकिनोऽभावात् परलोकाभावः" (बा० सू० १७) इत्येतत् सूत्रं सूचयति ॥ १८६८–१८७० ॥

तदत्रेत्यादिना प्रतिविधत्ते । तत्र कोऽयं परलोको नाम, यस्य भवता निषेधः क्रियते ? किं विज्ञानादिसन्तानव्यतिरिक्त उपादानोपादेयत्वेन कार्यकारणभूतादन्यः ? आहोस्वित्तदेव ? न तावदाद्यः पक्षः; तस्यानभ्युपेतत्वात् । न ह्युपादानोपादेयभूताया विज्ञानादिसन्ततेरन्यः परलोकोऽस्ति, यस्याभ्युपगमः स्यात् । किं तर्हि ? तस्या ज्ञानादिसन्ततेरनाद्यनन्तायाः काचिदेव वर्षशतावधिरूपमर्यादाव्यवस्थैव परलोकः, पूर्वः, इहेति वा व्यवस्थाप्यते । यथा भवद्भिर्दृष्टमात्रसुखाभिषक्तैरेतावतीन्द्रियगोचर एवान्यदेशादि. परलोकादित्वेन कल्प्यते । यथोक्तम्— "एतावानेव पुरुषो यावानिन्द्रियगोचरः" ( ); तथा "पुनरुक्तदेशान्तरं कालान्तरमवस्थान्तरं वा परलोकः" ( ) इति । यदि तु कार्यकारणभूतविज्ञानादिसन्तानव्यतिरिक्तस्य परलोकस्य निषेधः क्रियते, तदा सिद्धसाध्यत्वात् साधनवैफल्यम्; तथाभूतस्य परलोकस्यानभ्युपगतत्वात् ।

ननु च सन्ततेरवस्तुत्वात्तस्यामवस्थाविशेषो यो व्यवस्थापितः सोऽप्यवस्त्वेव, ततश्च तत्र तस्यां सन्ततावक्स्थाविशेषेऽवस्थापितोऽयं परलोकोऽपि न पार-

१-१. तस्याद्यना०—पा०, गा० ।

तदा साधनवैफल्य तदसत्त्वे विवादत ॥ १८७४ ॥
सन्ततेर्नन्ववस्तुत्वान्नावस्थान्तरसम्भव ।
तत्रावस्थापितो लोकः परो वा तात्त्विक कथम् ॥ १८७५ ॥
नैव सन्ततिशब्देन क्षणा सन्तानिनो हि ते ।
सामस्त्येन प्रकाश्यन्ते लाघवाय वनादिवत् ॥ १८७६ ॥
एकत्वेनाववलृप्तत्वान्नि स्वभावतया मता ।
तत्त्वान्यत्वाद्यनिर्देश्या वियत्कमलपङ्क्तिवत् ॥ १८७७ ॥
सा चानादिरनन्ता च न सिद्धि कथमृच्छति ।
यद्यहेतुकमेतत् सा[1] चित्तमाद्यतया मतम् ॥ १८७८ ॥
नित्यहेतुसमुद्भूत नित्य सत् स्वत एव वा ।
भूतमात्रोद्भव वाऽपि यद्वाऽन्यज्ञानमात्रजम् ॥ १८७९ ॥

---

मार्थिक स्यात ? नैष दोष, सन्ततिशब्देन क्षणा एव वस्तुभूता [G 524] सन्तानिनो व्यवहारलाघवाय सामस्त्येन युगपत् प्रकाश्यन्ते, वनादिशब्देनेव धवादय ॥ १८७१–१८७६ ॥

कथ तर्हि सन्ततेरवस्तुत्व पूर्वमुक्तम्—"सन्तानादीन कारित्रम्" (तत्त्व० १८०६) इत्यत्र प्रस्तावे ? इत्याह—एकत्वेनेत्यादि । या त्वेकत्वेन कल्पिता सन्तति सा तत्त्वान्यत्वाभ्यामवाच्यत्वादवस्तुत्वेनाभिमता, आकाशाम्भोरुहपङ्क्तिवदिति, न तस्या अनन्याविशेषे परलोकत्वमस्माभि क्रियते । यथास्या एव विज्ञानादिसन्तते परलोकसंज्ञिताया प्रतिषेध क्रियते ? तदा तस्यास्तावत् स्वरूपनिषेधद्वारेण परलोकनिषेधो न शक्यते कर्तुम्, तस्यापह्नोतुमशक्यत्वात्, किं तर्हि ? अनाद्यनन्तत्वधर्मनिषेधद्वारेण ।

[illegible] चेयमनाद्यनन्ता कथ न सिद्ध्यति ? यदि यत्तस्या आद्यचित्तमाद्यतया मतम्, निर्हेतुकं वा स्यात् ? नित्यविज्ञानेश्वरादिहेतुसमुद्भूत वा ? यद्वा—स्वत एव नित्यम् ? भूतमात्रादुत्पन्न वा ? [G 525] अन्यसन्तानवर्तिज्ञानहेतुक वा ?—

---

1. स्यात्—पा०, गा० ।

गर्भादावादिविज्ञानं तत्राहेतु न युज्यते ।
कादाचित्कतया सत्त्वं सर्वथास्यान्यथा भवेत् ॥ १८८० ॥
नापि नित्यमनःकालदिगीशात्मादिभिः कृतम् ।
तत एव सदा सत्त्वप्रसङ्गात् तदभावतः ॥ १८८१ ॥
एकं नित्यस्वभावं च विज्ञानमिति साहसम् ।
रूपशब्दादिचित्तानां व्यक्तं भेदोपलक्षणात् ॥ १८८२ ॥
क्षोणीतेजोजलादिभ्यो भूतेभ्यो भूतिरस्य न ।
व्यक्तिर्वा सर्वचित्तानां यौगपद्यप्रसङ्गतः ॥ १८८३ ॥
स्थिररूपं परैरिष्टं तद्धि भूतचतुष्टयम् ।
सहकारिव्यपेक्षाऽपि स्थिरे पूर्वमपाकृता ॥ १८८४ ॥
अथ क्षणिकमेवेदं परैरभ्युपगम्यते ।
कथं स्वोपगमस्तेषामेवं सति न बाध्यते ? ॥ १८८५ ॥

इति पञ्च पक्षाः । यदि हि स्वसन्तानवर्तिपूर्वपूर्वज्ञानहेतुकं पूर्वमेव चित्तं स्यात्, अनादिता चित्तसन्तते, नान्यथा—इत्यभिप्रायेणैषा पक्षाणामुपन्यासः ।

तत्र न तावदाद्य. पक्षः; नित्यसत्त्वादिप्रसङ्गात् । अपेक्षया हि भावाः कादाचित्का भवन्ति । यश्च निर्हेतुकः स न किञ्चिदपेक्षत इति किमिति विरमेत ! नापि द्वितीयपक्षः; अत एव नित्यसत्त्वप्रसङ्गात् । कारणवैकल्याद्धि कार्याणामसत्त्वम्, यथाविकलकारणं तत्किमिति न भवेदिति वक्तव्यम् । नापि तृतीयः पक्षः; कस्मात् ? तदभावतः = सदा सत्त्वाभावतः । एकमित्यादिना तमेव तदभावं दर्शयति । अनेन प्रतिज्ञायाः प्रत्यक्षे विरोधमाह । क्षोणीत्यादिना चतुर्थं पक्षं निराकरोति । क्षोणी = पृथिवी । नित्येश्वरादिहेतुसमुद्भवपक्षवदत्रापि तुल्यो दोषः; यतो महाभूतचतुष्टय परैर्नित्यमिष्टम् । न च 'सहकारिकारणापेक्षणानुक्रमेण नित्यादुत्पत्तिः' इति युक्त वक्तुम्; नित्यस्यानुपकारिणि सहकारिण्यि नापेक्षा—इति निर्लोठितप्रायत्वात् ॥ १८७७-१८८४ ॥

अथेदं महाभूतचतुष्टयं परैः = चार्वाकैः क्षणिकमभ्युपगम्यते यथोक्तदोषभयात्, तदापि दोष एवेत्यभिप्रायः । तथा हि—न तावद् बुद्धिदेहयोः कार्य-

बाध्यता काममेतत् तु न्याय्यमित्युपगम्यते ।
क्षणिकं सर्वयुक्तिभ्यः सर्वभावविनिश्चितम् ॥ १८८६ ॥

कारणभावसिद्धौ किञ्चित् प्रमाणमस्ति, परस्य येन तद्व्यवहारः सिद्ध्येत्। प्रयोगः—यत्र यद्भावसिद्धौ न किञ्चित् प्रमाणमस्ति, न तत्र तद्व्यवहारः प्रेक्षावता कार्यः, यथा वह्नौ शीतव्यवहारः । नास्ति च बुद्धिदेहयोः कार्यकारणभावसिद्धौ किञ्चित् प्रमाणमिति व्यापकानुपलब्धिः ।

न चासिद्धता हेतोः, तथा हि—प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः । स चान्वयात्, व्यतिरेकाद्वा विशिष्टादेव निश्चीयते, न दर्शनादर्शनमात्रेण । तत्रान्वयात् कार्यनिश्चये कर्तव्ये येषामुपलम्भे सत्युपलब्धिलक्षणप्राप्तं पूर्वमनुपलब्धं सदुपलभ्यत इत्येवमाश्रयणीयम् । अन्यथा हि यद्युपलब्धिलक्षणप्राप्तमनुपलब्धमित्येव नापेक्षेत, तदा तत्र कार्यस्य प्रागपि सत्त्वम्, अन्यतो वा देशादागमनम्[1] । येन कारणात् प्रागवस्थिताः कुड्यादयस्तेषां कारणता न निषिद्धा स्यात् । उपलब्धिलक्षणप्राप्तानुपलम्भोपदर्शने [G 526] तु सा निषिद्धा भवति, तत्र तस्या व्यभिचारात् । एवं तावदन्वयात् कार्यनिश्चयः ।

व्यतिरेकादपि कार्यनिश्चये—सत्सु तदन्येषु समर्थेषु तद्धेतुषु यस्यैकस्याभावे न भवतीत्येवमाश्रयणीयम्, अन्यथा हि केवलं तदभावे न भवतीत्युपदर्शने सन्दिग्धमत्र तस्य सामर्थ्यं स्यात्, अन्यस्यापि तत्र[2] समर्थस्याभावात्, ततश्चैवमपि सम्भाव्येत—अन्यदेव तत्र समर्थमस्ति, तदभावात् तन्निवृत्तिः ।

यत्पुनरेतन्निवृत्तौ सत्यामस्य निवृत्तिरुपलभ्यते सा यदृच्छासंवादः । मातृविवाहोचितदेशजन्मनः पिण्डखर्जूरस्यान्यत्र देशे मातृविवाहाभावे सत्यभाववत् । तस्मात् समर्थेष्विति विशेषणीयम् । एवं हि तस्यैव कारणत्वं निश्चीयते, तद्व्यतिरेकस्यैवानुविधानात् । न ह्यनुपकारिणो व्यतिरेकः केनचिदनुविधीयते, अतिप्रसङ्गात् । एवमन्वयव्यतिरेकाभ्यामसन्दिग्धं कार्यकारणत्वं प्रतीयते, नान्यथा । न चैतयोरन्वयो व्यतिरेको वा कायचित्तयोर्निश्चितोऽस्ति । तथा हि—न तावत् स्वदेहयोरन्वयनिश्चयः शक्यते कर्तुम्, गर्भादौ प्राक् चित्तोत्पत्ते

1 देशादागमनम्—पा०, देशादागमनं सम्भाव्येत—गा० । 2 तत्र—पा०, गा० ।

केवलकायोपलम्भाभावात्, न हि चित्तमन्तरेणोपलम्भो भवति। परशरीरेऽपि चेतसोऽनुपलब्धिलक्षणप्राप्तत्वान्न पौर्वापर्यग्रहणमस्ति। ततो नान्वयनिश्चयः।

नापि व्यतिरेकनिश्चयः। तत्रापि हि न तावदात्मदेहव्यतिरेकेण स्वबुद्धिव्यतिरेको ज्ञातुं शक्यः; सर्वथा स्वयमभावात्। नापि परदेहव्यतिरेकेण तत्सम्बन्धिन्या बुद्धेर्व्यतिरेको निश्चेतुं पार्यते; तद्बुद्धेरनुपलब्धिलक्षणप्राप्तत्वेन देहनिवृत्तावपि बुद्धिव्यतिरेके संशयात्। अत एव कुड्यादौ देहाभावेऽपि न बुद्धिव्यतिरेकनिश्चयः; [1]तत्सत्तायामनुपलब्धिलक्षणप्राप्तत्वेन संशयात्। [2]परिस्पन्दादिकार्यदर्शनादप्यभावनिश्चयो न युक्तः; नावश्यं[3] कारणानां कार्यवत्त्वात्[4]।

अपि च—देहविशेषपरिग्रहहेतोस्तृष्णाविपर्ययात् तल्लक्षणस्य स्वकारणस्याभावात् किं तत्र कुड्यादौ बुद्धेरभावः, आहोस्विद् देहव्यतिरेकादिति संशयः। तस्मादसिद्धो हेतुः। नापि विरुद्धः; सपक्षे भावात्। नाप्यनैकान्तिकः; अतिप्रसङ्गात्, प्रेक्षावत्त्वहानिप्रसङ्गाच्च। तत्र तर्हि बुद्धेर्न देहः कारणमित्यत्र किं बाधकं प्रमाणमिति चेत्? न; समस्त्येव प्रमाणम्। तथा च—मनोमतेर्न देहः कारणमित्यत्र "स्वतन्त्रा मानसी बुद्धिः" (तत्त्व० १९२९) इत्यादिना प्रमाणमुपदर्शयिष्यति; तस्या एव देहान्तरप्रतिसन्धाने मत्याभिमतत्वाद् देहानाश्रितत्वे सिद्धे परलोकसिद्धेः।

किञ्च—मनोमतेर्देहः कारणं भवत्, एकोऽवयविरूपो वा भवेत्, अनेको वा परमाणुसञ्चयात्मकः, यद्वा सेन्द्रियः, अनिन्द्रियो वा, किमुपादानकारणम्, आहोस्वित् सहकारिकारणम्—इति विकल्पाः[5]। तत्र न तावदेकोऽवयवी युक्तः; [G. 527] तस्य पूर्वनिषिद्धत्वात्, चतुर्महाभूतात्मकत्वहानिप्रसङ्गाच्च। न ह्येकस्य स्वभावचतुष्टयं युक्तम्; अनेकव्यवहारोच्छेदप्रसङ्गात्। [6]तस्मादनेकपरमाणुसञ्चयात्मकोऽङ्गीकर्तव्यः।

ते च परमाणवः प्रत्येकं वा हेतवः स्युः, समुदिता वा? न तावत् प्रत्येकम्; प्रतिरोमाङ्कुरोत्पादवत् प्रतिपरमाणु विकल्पोत्पत्तिप्रसङ्गात्। नापि

१. तत्रापि तत्सत्ता०—पा, गा०। २. ०कार्यादर्श०—षा०।
३. नावश्यं हि—गा०। ४. कार्यवत्त्वम्—षा०। ५. विकल्प्यते—षा०, गा०।
६. न तस्मादनेक०—पा०, न च तस्मादनेक०—गा०।

समुदिताः; नासिकाद्येकाङ्गवैकल्येऽपि मनसोऽनुत्पादापत्तेः[1], क्षित्यादीनामन्यतरापायेऽङ्कुरानुत्पत्तिवत्। न हि सामग्रीप्रतिबद्धं कार्यमन्यतराभावे भवति; तत्प्रतिबद्धस्वभावत्वहानिप्रसङ्गात्।

अथ यथासन्निधानं सर्वेऽपि चैतन्यस्य हेतवः? एवं तर्हि विकलाविकलाङ्गदेहजन्मिनोर्विशेषेण भवितव्यम्; कारणभेदात्, अन्यथा कार्यस्य भेदो निर्हेतुकः स्यात्। न चाऽविकलाङ्गस्य सतः पश्चाद् विकलाङ्गतायामुपजातायां कश्चिन्मनोमतेर्विशेषोऽस्ति; स्मृत्यादिसंस्कारस्य तदानीमप्यविकलस्यैवानुवृत्तेः। गजादिदेहवर्तिनी च मनोमतिरतिशयवती प्राप्नोति, न मनुष्यादेः। ये बाल्यशरीरमनुजन्मानस्ते मन्दधियः, महाशरीरास्तु पटुधियः; कारणस्य निर्ह्रासातिशयाभ्यां कार्यस्य निर्ह्रासातिशययोगदर्शनात्। न हि यद्भेदाद् यस्य भेदो न भवति, तत्तस्य कार्यं युक्तम्; अतिप्रसङ्गात्, कार्यभेदस्य च निर्हेतुकत्वप्रसङ्गाच्च।

नापि सेन्द्रिय इति पक्षः। तथा हि—इन्द्रियात् प्रत्येकं वा मनोमतिः स्यात्, समस्ताद्वा? न तावत् प्रत्येकम्; एकैकेन्द्रियापायेऽपि मनोमतेरविकलत्वात्। तथा हि—प्रसुप्तिकादिरोगादिना कायेन्द्रियादीनामुपघातेऽपि मनोधीरविकलैवाविकला[2] स्वसत्तामनुभवति। न च यस्य विकारेऽपि यन्न विक्रियते तत् तत्कार्यं युक्तम्; अतिप्रसङ्गात्। किञ्च—चक्षुरादिविज्ञानवत् प्रतिनियतार्थग्राहिता निर्विकल्पकत्वमर्थसन्निधानसापेक्षप्रवृत्तिकता च प्राप्नोति, अभिन्नकारणत्वात्; युगपदनेकविकल्पोत्पत्तिप्रसङ्गाच्च। नापि समस्तादिति पक्षः; एकेन्द्रियाभावेऽप्यभावप्रसङ्गात्, एकसहकार्यपायेऽङ्कुराद्यपायवत्।

नाप्यनिन्द्रिय इति पक्षः, कलेवरच्युतस्यापि पाण्यादेस्तद्धेतुत्वप्रसङ्गात्। विशिष्टस्य हेतुत्वे सेन्द्रिय एवेष्टः स्यात्। न हि सेन्द्रियादन्यो विशिष्टः शक्यते दर्शयितुम्।

नाप्युपादानकारणमिति पक्षः। तथा हि—यः कार्यगताशेषविशेषानुयायिनः स्वभावस्य हेतुः[3], सन्नात्मसत्तामप्युपस्थापयंस्तदुपकारी, यस्य विकारापादन-

1. मानसानुत्पादा०—पा०, गा०। 2. ०रविकलैवाऽवि०—पा०, गा०।
3. पा० गा० पुस्तकयोर्नास्ति।

मन्तरेण कार्यमशक्यविकारम्, स एव कारणविशेष उपादानत्वेन प्रसिद्धः । यथा पूर्वपूर्वो मृदात्मा कलाप उत्तरोत्तरस्य घटसंज्ञितस्य कार्यकलापस्योपादानम् । अत एव यो यद्विकारयितुमिच्छति स तदुपादानविकारेणैव तद्विकारयति, नान्यथा । न ह्युपादाने पूर्वस्मिन्नप्रतिबद्धसामर्थ्ये सति [1]तत्कार्यस्योत्तरस्योत्पित्सुनः [ G. 528 ] केनचित् प्रतिघातः शक्येत कर्तुम् । यथा घटादेरुत्तरस्योत्पत्स्यमानस्य कार्यस्य पूर्वकं मृदात्मानमप्रतिबद्धमसमर्थक्षणोत्पादनतः[2] शक्यते न विकारापादनं कर्तुम् । सर्वत्रैव च [3]विकारापादनेऽयमेव क्रमो [4]यदुतासमर्थोत्तरपादानक्षणोत्पादनम्; अन्यथा न किञ्चित् साक्षात् विरुद्धं सम्भवति । यदि हि सम्भवेत्, कार्यस्यापि कारणविकारापादनवत् साक्षाद् विकारापादनं स्यात्, नोपादानविकारापादनद्वारेणैव ।

यत् पुनः प्रदीपमविकृत्यैव देशान्तरवर्तिन्यास्तत्प्रभाया आवरणेन विकारापादनं क्रियते, तत्र तस्याः साक्षात् प्रदीप उपादानकारणम्, किं तर्हि ? पूर्वपूर्वः प्रभाक्षणः; [5]तस्यैवासमर्थक्षणान्तरोत्पादनलक्षणविकारापादनात् । आवरणेन प्रभा प्रतिहन्यते । यत् पुनर्वस्त्वविकृत्यैव यद्विकार्यते न तत्तदुपादानम्, यथा गवयमविकृत्य गोर्विकार्यमाणः । अविकृत्य च शरीरं मनोमतेरनिष्टाचरणादिना दुर्मनस्कतादिलक्षणस्य विकारस्योपादानं क्रियत इति व्यापकविरुद्धोपलब्धिः ।

ननु [6]चाहारस्यापादिना देहस्य पुष्ट्यादिविकारे सति रागादिलक्षणा मनोमतेर्विकाराः परिदृश्यन्त एव ? यदि नाम दृश्यन्ते ततः किम् । न ह्येतावता हेतोरसिद्धत्वम् । तथा हि—यदविकारेऽपि यस्य विकारापादनं सम्भवति न तत्तदुपादानमित्येतावन्मात्रमिह विवक्षितम् । सम्भवन्ति च [7]कस्याञ्चिदवस्थायामनिष्टाचरणादिना देहविकारापादनमन्तरेणैव बुद्धेर्विकारापादनमिति कुतोऽसिद्धत्वं हेतोः ।

---

१ कार्यस्यो॰—पा॰, गा॰ । २. मप्रतिरुद्ध॰—गा॰ ।
३. विकारोत्पादने॰—पा॰, गा॰ । ४. समर्थान्तरो॰—पा॰, गा॰ ।
५. तथैवा॰—पा॰, गा॰ ।
६. चाहारस्यापादिना—पा॰, चाहारधारणादिना—गा॰ ।
७. कस्यांचिदवस्थायाम॰—पा॰, गा॰ ।

न चाप्येवम्भूतात् कादाचित्कात् तदीयविकारानुविधानात्तदुपादानत्वं युक्तम्; अतिप्रसङ्गात्। एवं हि विषयस्याप्युपादानत्वं स्यात्। तथा हि—शार्दूलशोणितादिबीभत्सविषयदर्शनादिबलेनापि कस्यचित् कातरमनसः सञ्जायत एव मोहादिलक्षणो मनसो विकारः, न चैवमसौ सा मनोभूमिस्तदाश्रिता भवति। कामशोकादिवितर्केण च मनस्युपहते देहविकारदर्शनाद्देहस्यापि तदुपादानताप्रसङ्गात्। किन्तु नियमेन साक्षाच्च यस्यैव यो विकारमनुविधत्ते स तदुपादानो युक्तः। न च रागादिलक्षणो विकारो नियमेन [1]शरीरपरिपोषादितो भवति; कस्यचित् परिपुष्टशरीरस्यापि प्रतिसङ्ख्यानवतोऽसम्भवात्। तथा परिक्षीणवपुषोऽप्ययोनिशोमनस्कारबहुलस्य पुंसस्तिर्यग्गतस्य च कस्यचिदुपचितपरिमाणस्याप्यतीव रागादिदर्शनात्। न च यदभावेऽपि यद्भवति तत्तस्य कार्यं युक्तम्; अतिप्रसङ्गात्।

नापि साक्षाद्देहाद् रागादिः सम्भवति, अयोनिशोमनस्कारादिव्यवहितत्वात्। तथा हि—देहपुष्टौ सत्यामन्तश्चेष्टव्यलक्षणविषयोपजनितसुखाद्यनुभवः। [2]तत आत्मस्नेहवतस्तस्मिन्[2] सुखादौ तत्साधने च नित्यादिविपर्यासपरिगतमनसो ममेदमनुग्राहकमुपघातकं [ G. 559 ] चेत्यात्मोपकारकप्रतिकूल्यादिविकल्प', ततस्तत्परितोषद्वेषमन्म्यादिसम्भवः। तस्माच्च सुखादिविषयाध्यवसायादिमध्यतय[3] इत्येतथान्वयव्यतिरेकाभ्यां प्रतीतमेव; सौमनस्यादिसम्भव एव रागादिदर्शनात्, सत्यपि पुष्ट्यादौ तदसम्भवे चादर्शनात्। अतो न पुष्ट्यादि साक्षान्मनोगतेविकारकम्।

अत एव च साक्षादनुपकारित्वात् सहकारिकारणमपि न देहस्तस्या इति सिद्धम्; साक्षादेवोपकारिणामङ्कुरादिषु क्षित्यादीनां सहकारित्वप्रसिद्धेः, अन्यथाऽतिप्रसङ्गः स्यात्। तस्मात् सजातीयपूर्वबीजप्रबोधप्रवृत्तय एव रागादयः। देहपुष्टियौवनकालादयस्तु केषाञ्चित् प्रतिसङ्ख्यानाभ्यासविकलानां तद्वासनाप्रबोधहेतवो भवन्ति।

भवतु वा साक्षादुपकारी देहो मनोमतेः स्वोपादानप्रच्छाया. कदाचित्,

१. शरीरपोषादितो—पा०, गा०।  २-२. तथात्मदेहवत०—पा०, गा०।
३. ०व्यवसायादि०—पा०, गा०।

तथापि न देहनिवृत्तावपि तस्या निवृत्तिः सिद्ध्यति, यथा वह्निनिवृत्तावपि न घटादिविनिवृत्तिः; स्वोपादानप्रवृत्तत्वादिति नानिष्टापत्तिः। नाप्यनैकान्तिकता हेतोः; अतिप्रसङ्गात्। नापि विरुद्धता; सपक्षे भावात्। अतो नोपादानकारणं देहः। नापि सहकारिकारणमिति सिद्धं मनोमतेः पूर्वपूर्वबुद्धिप्रभवत्वमेव।

स्यादेतत्—ययोः सहस्थितिनियमस्तावुपादानोपादेयभूतौ, यथा—प्रदीपप्रभे। अस्ति च सहस्थितिनियमः शरीरमनोविज्ञानयोरिति स्वभावहेतुः। तदयमन्यतरासिद्धो हेतुः; विरूपे धातौ शरीरमन्तरेणापि मनोमतेरवस्थानाभ्युपगमात्। नापीष्टसिद्धिः; मनोमतेरपि देहं प्रत्युपादानत्वप्रसङ्गात्। अनैकान्तिकता च; हेतुभेदादपि सहावस्थानसम्भवात्। यथा—अग्नितामद्रवत्वयोः। तथा हि—वह्निसहकारि ताम्रं द्रवतामारभते, न केवलम्; एवमिहापि देहस्योपादानं कललादि मनोविज्ञानसहकारि देहमुत्तरमारभते, इत्यतस्तयोः सह स्थानं नोपादानोपादेयभावादित्यतोऽनेकान्त एव।

अथापि स्यात्—यद्यप्युत्तरकालं मनोधीः पूर्वपूर्वबुद्धिप्रभवा भवति, तथापि या प्रथमकालभाविनी तस्या देहोपादानत्वादतो नाऽनादित्वसिद्धिरिति? तदेतदसम्यक्; न ह्यस्याः कल्पनायाः किञ्चित् साधकं प्रमाणमस्तीति प्रतिपादितमेतत्। बाधकमपि नास्तीति चेत्? न; विद्यत एव बाधकम्। तथा हि—यदि देहात् सकृदुत्पन्ना सती मनोधीः पश्चात् सजातिसमुद्भवा स्यात्, तदोत्तरकालं सर्वदैव पूर्वपूर्वमनोविज्ञानसमुद्भवैव स्यात्, न विजातीयचक्षुरादिविज्ञानसमुद्भवा, न हि धूमोऽग्नेः सकृदुद्भूय पश्चादन्यतो विजातीयादुद्भवति। न च मनोमतिरुत्तरकालं मनोविज्ञानसमुद्भवैवानुभूयते, किं तर्हि? अनियतसमनन्तरप्रत्ययप्रसवा। न च प्रथमतः प्रथमतरमुदयमासादयत् समुपलब्धं ततोऽन्यतो भवितुमर्हति; अहेतुकत्वप्रसङ्गात्। [G 530] प्रथमतरं वा नियतचक्षुरादिविज्ञानसमनन्तरमुदयमासादयन्ती मनोधीरनुभूयेत इति, अतोऽप्रतिनियतविज्ञानमात्रप्रभवेनी—इति सिद्धम्।

किञ्च—यदि प्रथमकाल एव मनोमतेरुपादानकारणं देहः, नोत्तरकालम्, तदा देहनिरपेक्षा [illegible] किं न प्रवर्तेत? न ह्यनुपकारिण्यपि देहे तस्याः काचिदपेक्षा

युक्ता । यस्यापि त्वं[1] बुद्ध्यन्तरपूर्विका बुद्धिः, तस्यापि केवला किं न प्रवर्त्तते इति चेत् ? न, प्रवर्त्तत एव । यथा—विरूपे धावो । याऽनुरूपे स्पृहावती सा तदपेक्षा वर्त्तत इत्यनुपालम्भ एव ।

अथोत्तरकाले देहस्याप्युपकारित्वमङ्गीक्रियते ? तदाऽनेकविज्ञानप्रबन्धप्रसव प्रसङ्गः, शरीरस्यापरविज्ञानोपादानभूतस्याविकलस्य तज्जनकत्वेनावस्थितत्वात् । यथा हि—यद्देहोत्पद्यते देहाद्विज्ञानं तत्तदपरं पृथक् पृथग्विज्ञानं सन्तनोतीत्येकस्य प्राणिनः प्रतिक्षणमप्रमेयविज्ञानसन्ताना प्रसूयेरन् । न चैवमनुभवोऽस्ति ।

अथापि स्यात्—उत्तरकाले देहस्य नोपादानकारणत्वेन पृथगुपकारित्वमिष्टम्, किं तर्हि ? प्रबन्धेन स्वोपादानतः प्रवर्त्तमानाया मनोधियः उत्तरोत्तरकार्यप्रसवं प्रति सहकारित्वादुपकारी देहः, इत्यतो न देहनिरपेक्षा सा प्रवर्त्तत इति ? एतदपि मिथ्या, न हि यो यस्य यथा जनकत्वेन प्रसिद्धः, स तं जनयन्नन्यथा जनयति, विशेषाभावात् । तथा हि—आलोकादिरनुपहतचक्षुर्विज्ञानं प्रत्यालम्बनमात्रेण जनकत्वमनुभूय न पुनस्तस्यान्यथा जनको भवति । यदाह—

"माध्यस्थ्यं न खल्वन्यज्जनने ग्राह्यलक्षणे[2] ॥

साक्षान्न ह्यन्यथा बुद्धे रूपादिरुपकारकः"।(प्र वा २ ५२९-३०) इति।

अन्यथा कार्यस्य कारणकृतत्वभावभेदाभेदस्य व्यवस्थानं न स्यात्, तद्गतोपकारानुविधानात् । ततश्चाहेतुकत्वप्रसङ्गः । न च प्रथमकाले देहस्य विज्ञानं प्रति साक्षाज्जनकत्वव्यतिरेकेणान्यदुपादानत्वं त्वया गृहीतम्, किं तर्हि ? साक्षादुपकारित्वमेव । [3]न [3]चोत्तरकालमप्यस्तीति किं नोपादानकारणं स्यात् । अथान्यत् पूर्वमपि मा भूत् पश्चादविशेषात् । न चोत्तरकालमपि पूर्वविज्ञानसहकारी देह एवोत्तरोत्तरबुद्धेरुपादानं भविष्यतीति शक्यं वक्तुम्, पूर्वं विस्तरेणोपादानत्वस्य निषिद्धत्वात्, प्रथमजन्मबुद्धेरपि बुद्ध्यन्तरपूर्वकत्वप्रसङ्गात् । अतः प्रमाणभूतपरेऽप्येतदाचार्यीयं दूषणं युक्तं क्षिप्यति । यदाह—

"देहात् सकृदुत्पन्ना धार्यदि स्वन्ययां निवर्त्यते ।

परत्रश्चेत् समर्थस्य देहस्य निरति कुतः" ॥(प्र वा १ ११५) इति ।

१ दृ—पा० । २ °त्वग्रागम्—मर्वेन । ३-३ तथो°—पा°, गा° ।

तस्मात् सिद्धा मनोबुद्धेरनादिता ।

अथ वा—सर्वैव बुद्धिरविशेषेणानादिः सिद्धा । तथा हि—आदिबुद्धिर्भवन्ती अक्षबुद्धिर्वा भवेत् ? मनोबुद्धिर्वा ? न तावदाद्यः पक्षः, सुप्तमूर्च्छान्यचित्तानां सत्यप्यक्षेऽनुगुणमनस्काराभावादक्षबुद्धेरनुत्पत्तेः । अतो न केवलमिन्द्रियमक्षबुद्धेः कारणम्, [G 551] अपि तु मनस्कारविशेषसापेक्षमिति निश्चीयते । अन्वयव्यतिरेकसमधिगम्यत्वात् कार्यकारणभावस्य । न चापि यतो यत् प्रथमतरमुत्पद्यमानं निश्चितं तत् ततोऽन्यस्मात् प्रथमतरमुदयमासादयति; अहेतुकत्वप्रसङ्गात्, धूम इवाग्नेः । प्रथमतरं चाक्षबुद्धिरुत्पद्यमानाऽनुगुणमनस्कारसापेक्षैवोत्पद्यत इति तस्मान्न केवलमिन्द्रियमस्याः कदाचित् कारणमिति सिद्धम्; अन्यथा निर्हेतुकत्वप्रसङ्गो बाधकं प्रमाणम् ।

नापि मनोबुद्धिरिति पक्षः । न हि साऽक्षैरनुपलब्धेऽर्थे स्वातन्त्र्येण प्रवर्तते; अन्धबधिराद्यभावप्रसङ्गात् । प्रवर्ततां वा, किं सा सविकल्पिका ? आहोस्विदविकल्पिका ? इति वक्तव्यम् । तत्र न तावदाद्यः पक्षः, तथा हि—विकल्पः प्रवर्तमानः सर्व एव बोधकशब्दाकारानुस्यूत एव वर्तते; अन्तर्जल्पाकारतया नित्यमनुभूयमानत्वात् । सा च वाचकशब्दाकारता विकल्पस्य सङ्केतग्रहणवशाद् वा भवेत्, यद्वा वाचकात्मनः शब्दरूपस्य, ज्ञानात्मधर्मरूपत्वाद् बोधरूपवच्छब्दार्थग्रहणाद्वेति विकल्पात् । तत्र न तावत् सङ्केतग्रहणादिति पक्षः; पूर्वं सङ्केतस्याग्रहीतत्वात् । नापि द्वितीयः पक्षः । तथा हि—द्विविधः शब्दात्मा—स्वलक्षणरूपः, सामान्यलक्षणरूपश्च । तत्र यस्तावत् स्वलक्षणरूपः, तस्यावाचकत्वात्[1] तदाकारतया[1] ज्ञानस्य सविकल्पकत्वम् । नाप्यसौ ज्ञानस्यात्मगतो धर्मः; नीलादिवद्बहीरूपेण भासनात् । अन्यथा हि नीलादीनामपि ज्ञानधर्मत्वं स्यात्; अविशेषात् । ततश्च विज्ञानमात्रमेव विश्वं स्यात्, न भूतपरिणामरूपम् ।

ननु साकारज्ञानपक्षे नीलादिप्रकारो ज्ञानस्यात्मगत एव धर्मो बहीरूपेण भासते, तत्किमुच्यते—बहीरूपेण भासनाज्ज्ञानात्मधर्मो न भवतीति ? सत्यमेतत्; किन्तु बाह्यार्थोपरागितया ज्ञानस्य तथा प्रतिभासनात्रात्मगतोऽसौ ज्ञानस्येति

1–1. वाचकत्वानुभवाकारतया—पा०, गा० ।

व्यवस्थाप्यते । किं तर्हि ? बाह्यस्यैवेति, तत्रैव तस्य निजत्वात् । ज्ञाने तु तस्यार्थोपधानकृतत्वेनागन्तुकत्वात् । तस्मान्न स्वलक्षणरूपः शब्दात्मा वाचकः, नाप्यसौ ज्ञानात्मधर्मः । सामान्यलक्षणरूपस्तु यद्यपि वाचकः, तथाप्यसौ ज्ञानात्मधर्मो न भवति, बाह्य एव[1] शब्दस्वलक्षणयोनावसेये[1] तस्य योज्यमानत्वात्, न ज्ञानात्मनि । न ह्यन्यगतं सामान्यमन्यत्र योज्यते, ज्ञानेऽतिप्रसङ्गात् । एवं हि गोत्वमश्वादावपि योज्येत । न चागृहीतशब्दस्वलक्षणे धर्मिणि तद्धर्मो वाचकात्मा योजयितुं शक्यते, धर्माणां धर्मिपरतन्त्रतया स्वातन्त्र्येणाग्रहणात् । नापि विकल्पेन स्वलक्षणात्मा धर्मी ग्रहीतुं शक्यते, तस्य सामान्यलक्षणविषयत्वात् । तस्मादनादिस्वलक्षणानुभवाहितवासनाप्रबोधजन्मानो विकल्पा इति सिद्धम् ।

नापि शब्दार्थस्मरणादिति पक्षः, न ह्यर्थे शब्दाः सन्ति तदात्मानो [G 532] वा, अव्युत्पन्नस्यापि प्रतीतिप्रसङ्गात्, यथेष्टमर्थेषु नियोगाभावप्रसङ्गाच्च । किञ्च—अनित्यादिरूपणार्थस्याविशेषेऽपि न विकल्पः सर्वानाकारान् युगपद् विकल्पयति, आकारान्तरव्यवच्छेदेन प्रतिनियतैकाकारोपग्रहेणैव विकल्पस्योत्पत्तेः । अतश्चैकाकारविकल्पेन कारणं वक्तव्यम् । न चाभ्यासात् तदन्यद्वक्तुं शक्यम्, यथा क्षणभङ्गिविकल्पानाम् । ततश्च पूर्वाभ्यासवशेन विकल्पकस्य प्रवृत्तेरनादिर्विकल्पिका[2] बुद्धिरिति[2] सिद्धम् ।

अथाविकल्पिकेति पक्षः, तदा न कदाचिद्विकल्पिका बुद्धिरुत्पद्यते । प्रोक्त-नीत्या सङ्केतग्रहादुत्तरकालमुत्पद्यत इति चेत् ? न, निर्विकल्पकज्ञाने स्थितस्य पुंसः[3] सङ्केतस्य कर्तुमशक्यत्वात् । तथा हि—न यावच्छब्दसामान्यमर्थसामान्यं च बुद्धावनभासते । न तावत् सङ्केतः शक्यते कर्तुम् । न च विकल्पे विज्ञाने सामान्यं प्रत्यवभासते । यच्च प्रत्यवभासते स्वलक्षणं न तत्र तेन वा सङ्केतः क्रियते, व्यवहारार्थत्वात् तस्य । न च सङ्केतकालदृष्टस्य स्वलक्षणस्य व्यवहारकालेऽस्ति सम्भव इति न स्वलक्षणे सङ्केतकरणात् पूर्वं विकल्पोऽवश्यमभ्युपगन्तव्यः । स चाभ्यासमन्तरेण न सिद्ध्यतीति सिद्धाऽनादिता ।

१-१ ०दर०—पा०, गा० ।  २-२ निर्विकल्प०—पा०, गा० ।
३ श्रद्ध — पा० ।

यदि न्यायानुरागाद् वः स्वपक्षेऽप्यनपेक्षता ।
भूतान्येव न सन्तीति न्यायोऽयं पर इष्यताम् ॥ १८८७ ॥

---

अपि च—यदि पूर्वजन्माभ्यासाहितवासनान्वयात् प्रथमजन्मभाविनी नेष्यते बुद्धिः, तदा सद्योजातस्य सतः शिशोस्तिर्यग्भूतस्यापीदं सुखस्य साधनमिदं दुःखस्येति व्यवसायः कथं भवेत्? येन सुखसाधनं स्तनादिकमन्विच्छति । तथालभमानो रोदनमारभते, प्राप्य च सहसा व्यपगतरुदितोऽभ्यवहारादिक्रियां कुरुते । न ह्यनेन कदाचित् स्तनादेः क्षुत्पीडाद्युपशमनादिहेतुत्वमनुभूतम् । न चापि प्रपातपवनादेरुपहतिकारणत्वं[1], येन सद्योजातोऽपि वानरादिशिशुरवपातपतनप्रभव-दुःखानुस्मरणभीतो[2] मातुरतीव क्रोडमाश्लिष्यति, प्रपातादिस्थानं च परिहरति । न ह्यननुभूतेष्टसाधनफलानि नियमेन जिहासन्त्युपादित्सन्ते वा, अतिप्रसङ्गात् । अयसोऽयस्कान्तोपसर्पणदृष्टान्तोऽप्ययुक्त एव, न हि तन्निर्हेतुकम्, सर्वदा सत्त्वादि-प्रसङ्गात् । सहेतुकत्वे वा यथा तस्य हेतुरयस्कान्तो निर्दिश्यतेऽन्वयव्यतिरेक-सिद्धः, तथापि हानोपादानानुष्ठानस्य हेतुर्वाच्यः[3] । न चासौ निर्देष्टुं शक्यते, अन्यत्राभ्यासात् । तस्मात् पूर्वाभ्यासकृत एवायं बालानामिष्टानिष्टोपादानपरित्याग-लक्षणो व्यवहार इति सिद्धा बुद्धेरनादितेत्यभिप्रायः । तथा च—"स्वतन्त्रा मानसी" ( तत्त्व० १९२९ ) इत्यादिना, "अपि न स्तनपानादः" ( तत्त्व० १९३९ ) इत्यादिना च साधारणं दूषणं वक्ष्यतीत्यलं बहुना ।

किञ्च—तेषाम् = चार्वाकाणां क्षणिकत्वमभ्युपगच्छताम्, स्वोपगमः = स्वसिद्धान्तो बाध्यते = भूतानां नित्यत्वाभ्युपगमो बाध्यते, भूतानां[4] नित्यत्वा-भ्युपगमात्[4] ॥ १८८५-१८८६ ॥

[G 533] अथ युक्त्युपेतत्वात् क्षणिकत्वमभ्युपगम्यते, तदा विज्ञप्तिमात्रतानयस्तर्हि परः उत्कृष्टोऽभ्युपगम्यताम्, तत्रापि युक्त्युपेतत्वस्याभ्युपगमकारणस्य तुल्यत्वात् ॥ १८८७ ॥

---

१. अनुभूतमिति शेषः ।  २. *दुःखान्मरणभीतो—पा०, गा० ।
३. हेतुभाव्य—पा०, गा० ।
४-४. पा०, गा० पुस्तकयोर्नास्ति ।

नावयव्यात्मता तेषां नापि युक्ताऽणुरूपता ।
अयोगात् परमाणूनामित्येतदभिधास्यते ॥ १८८८ ॥
अबहिस्तत्त्वरूपाणि वासनापरिपाकतः ।
विज्ञाने प्रतिभासन्ते स्वप्नादाविव नान्यतः ॥ १८८९ ॥
विज्ञानस्यैव निर्भासं समाश्रित्य प्रकल्प्यते ।
स्वप्नमायोपमं नेदं महाभूतचतुष्टयम् ॥ १८९० ॥
तदन्यस्य तदाभावे हेतुत्वं नोपपद्यते ।
प्राग्भूतं भूतनिर्भासं ज्ञानं तु जनयेत् परम् ॥ १८९१ ॥
सन्तानान्तरविज्ञानं तस्य कारणमिष्यते ।
यदि तत् किमुपादानं सहकार्यथ वाऽस्य किम् ॥ १८९२ ॥

---

कथम् ? इत्याह—नावयव्यात्मतेत्यादि । तेषामिति महाभूतानाम् । अभिधास्यत इति । समनन्तरमेव बहिरर्थपरीक्षायाम् ॥ १८८८ ॥

यदि न सन्त्येव भूतानि, कथं तर्हि प्रतिभासन्ते ? इत्याह—अबहिस्तत्त्वरूपाणीत्यादिना । अन्यत इति । विज्ञानादन्यस्माद् बाह्य इति यावत् ॥१८८९॥

कथं तर्हि पृथिवीत्यादिव्यवहारो लोकशास्त्रयोः ? इत्याह—विज्ञानस्यैवेत्यादि ॥ १८९० ॥

यदि भूतानि न सन्ति, कस्तर्हि ज्ञानहेतुः ? इत्याह—तदन्यस्येत्यादि । तदन्यस्येति तस्माद् विज्ञानादन्यस्य भूतचतुष्टयस्य ॥ १८९१ ॥

एवं भूतमात्रोद्भवं तावन्न चित्तं न भवतीति प्रतिपादितम्, इदानीम् "यद्वाऽन्यज्ञानमात्रजम्[1]" (तत्त्व० १८७९) इत्येतत्पक्षनिराकरणायाह—सन्तानान्तरेत्यादि । [G 531] तत्र = सन्तानान्तरचित्तं मात्रादिसम्बन्धि, उपादानकारणं वा स्यात्, सहकारिकारणं वा ? न तावदुपादानकारणम्, पुत्रज्ञानसन्तानेऽपि मातापितृगुणादिसंस्कारादिविशेषानुत्पत्तिप्रसङ्गात्[2], यथा पित्रोरेव स्वोत्तरबुद्धिषु । यस्मादुत्तरेषु क्षणेषु यत् पूर्वक्षणसंस्कारानुवर्त्तनम्,

---

1 च न भवि०—पा०, गा० । 2 तुरत्वप्र०—गा० ।

उपादानमभीष्टं चेत् तनयज्ञानसन्ततौ ।
पित्रोः श्रुतादिसंस्कारविशेषानुगमो भवेत् ॥ १८९३ ॥
उपादानतदादेयधर्मोऽयं यद्व्यवस्थितः ।
अन्वयव्यतिरेकाभ्यां निश्चितश्च स्वसन्ततौ ॥ १८९४ ॥
स्वोपादानबलोद्भूते सहकारित्वकल्पने ।
सन्तानान्तरचित्तस्य न काचिद् व्याहतिर्भवेत् ॥ १८९५ ॥

---

अयमुपादानोपादेयधर्मो[1] व्यवस्थितः; स्वसन्तानेऽन्वयव्यतिरेकाभ्यां निश्चितत्वात् ।

अथ मतम्—यथैकस्मात् प्रदीपान्तरोत्पत्तौ न पूर्वदीपसंस्कारेण स्थौल्यादिलक्षणेन विशिष्टस्योत्तरस्य दीपस्य सम्भवः, किं तर्हि ? निःसंस्कारस्य प्रदीपमात्रस्योत्पत्तिः, अन्यतस्तु तस्य दीपान्तरस्य स्वेन्धनादेः[2] सकाशाद् विशेषः, तद्वत्तु तद्बुद्धेरिति ? तन्न; यस्मात् प्रदीपादिसंस्कारः स्वाश्रयेऽपि तावत्[3] सन्तानमवबध्नाति, अस्थिरत्वात् तस्य । तथा हि—इन्धनापचये[4] तस्यैव दीपस्य तनुत्वं[5] दृश्यते । न त्वेवमस्थिरः श्रुतादिसंस्कारः[6], तस्य चिरकालमवस्थानात् । अतो न दीपादिवन्निःसंस्कारस्य बुद्धिमात्रस्य सम्भवो युक्तः ।

किञ्च—प्रदीपादौ बहुतराल्पपरमाणुसञ्चयोत्पादादुपकल्पितौ[7] विशेषाविशेषोऽस्ति, अविशेषो वा । इह त्वेकस्मिन्नेव वस्तुल्याणे श्रुतादिसंस्कारेण विशेषो मातृबुद्धिवर्त्तिनि, अविशेषस्तु सुतबुद्धिवर्त्तिनीति किं केन साम्यम् ।

किञ्च—उपादानकारणत्वेऽयं प्रसङ्ग उच्यते, न च दीपान्तरं दीपान्तरस्योपादानकारणम्; भिन्नसन्तानत्वादिति यत्किञ्चिदेतत् ।

अपि च—येषां संस्वेदजातीनां मातैव नास्ति तेषां कथमन्यविज्ञानजा बुद्धिरित्यलं प्रसङ्गेन ।

---

१. एवमुपा०—पा०, गा० । २. स्वेन्धनादेः—गा० ।
३. तावत्—पा०, गा० । ४. इन्धनापचये—पा० ।
५. तत्त्वं—पा०, अतत्त्वं—गा० । ६. श्रुतादि०—जै० ।
७. ०दादुपकल्पितौ—पा०, गा० ।

अतीतजन्मसाधनम्

तस्मात् तत्रादिविज्ञानं स्वोपादानबलोद्भवम् ।
विज्ञानत्वादिहेतुभ्य इदानीन्तनचित्तवत् ॥ १८९६ ॥
अन्यहेतुप्रतिक्षेपादहेतुत्वे च संस्थिते ।
अन्यथा नियतो धर्मो नायं तस्य प्रसज्यते ॥ १८९७ ॥

अनागतजन्मसाधनम्

मरणक्षणविज्ञानं स्वोपादेयोदयक्षमम् ।
रागिणो हीनसङ्गत्वात् पूर्वविज्ञानवत् तथा ॥ १८९८ ॥

---

अथ सहकारिकारणमिति पक्षस्तदा सिद्धसाध्यता ॥ १८९२–१८९५ ॥

तस्मादित्यनादित्वसाधने प्रमाणयति । प्रयोगः — यद्विज्ञानवेदनासंज्ञासंस्कारस्कन्धचतुष्टयस्वभावं वस्तु तत्स्वोपादानबलोद्भूतम्; विज्ञानादित्वात्, यथा यौवनावस्थायां तदेव स्कन्धचतुष्टयम् । विज्ञानादित्वमात्रश्च [G 535] प्रथमजन्मचित्तादिकलाप इति स्वभावहेतुः । तत्रादिविज्ञानमिति विज्ञानग्रहणमुपलक्षणम् । वेदनादयोऽपि गृहीतव्याः ॥ १८९६ ॥

साध्यविपर्यये हेतोर्बाधकं प्रमाणमाह—अन्यहेत्वित्यादि । अन्येषां नित्यमनःकालदिगीशादीनां पूर्वं प्रतिक्षेपात् स्वोपादानस्य चानभ्युपगमेऽहेतुकत्वं स्यात्, तथाचायं विज्ञानादित्वलक्षणो नियतो धर्मो न स्यात्; आकस्मिकस्य स्वभावस्य नियामकाभावेन प्रतिनियमायोगात् । अतो निर्हेतुकत्वे नियतविज्ञानादिधर्मानुपपत्तिर्बाधकं प्रमाणम्, कादाचित्कत्वानुपपत्तिश्च ॥ १८९७ ॥

एवमतीतं जन्म प्रसाध्य, अनागतमपि प्रसाधयितुं प्रमाणयन्नाह—मरणेत्यादि । यत् सरागं चित्तं तत् स्वोपादेयचित्तान्तरोदयसमर्थम्; सरागत्वात् पूर्वावस्थाचित्तवत् । सरागं च मरणचित्तमिति स्वभावहेतुः । न चासिद्धो हेतुः, यतो यद् रागादिप्रतिपक्षनैरात्म्यदर्शनावियुक्तं[1] चित्तं तत्सर्वं सरागमेव; प्रतिपक्षवियुक्तत्वात्, सुरताभोगचित्तवदिति । नाप्यनैकान्तिकः; एतावन्मात्रहेतुकत्वाच्चित्तान्तरोदयस्येत्यविकलकारणानुपपत्तिर्बाधकं प्रमाणम् ॥ १८९८ ॥

---

१. भोया०—पा०, गा० ।

येन रूपेण विज्ञानं जनयत् परिनिश्चितम् ।
प्राक् पश्चादपि तद्विभ्रदखण्डं किं न कारकम् ॥ १८९९ ॥
परपक्षे न[1] नु ज्ञानं[1] कायादेवेति संस्थितिः ।
दृष्टान्तौ तत् कथं सिद्धौ साध्यधर्मसमन्वितौ ॥ १९०० ॥
तत्र[2] कायस्य हेतुत्वं प्रागेव विनिवारितम् ।
चेतसो युगपत् प्राप्तेरभावादतिरेकिणः ॥ १९०१ ॥
आभोगशुभचित्तादिभावित्वेन विनिश्चितम् ।
स्मृतिरागादिविज्ञानं तन्निषेद्धुं न पार्यते ॥ १९०२ ॥

एतदेव दर्शयति—येन रूपेणेत्यादि । तद्बिभ्रदिति रूपम्[3], स्वभावमिति यावत् ॥ १८९९ ॥

परपक्ष इत्यादिना प्रयोगद्वयेऽपि दृष्टान्तयोः साध्यविकलतां चोदयति । [G 536] तथा हि—स्वोपादानोद्भवत्वं स्वोपादेयोदयक्षमत्वं च साध्यधर्मः । यस्य च 'नित्यं कायादेव विज्ञानमुत्पद्यते' इति दर्शनम्, तस्य न क्वचिद् यथोक्तसाध्यधर्मसमन्वितो दृष्टान्तः सिद्ध इति कथम् 'इदानीन्तनचित्तवत्', 'पूर्वविज्ञानवत्'—इत्येतयोर्दृष्टान्तयोरुपन्यास इति ? नैष दोषः; पूर्वमेव कायस्य हेतुत्वं निषिद्धम्—"चेतसो यौगपद्यप्रसङ्गात्" इत्यनेन; अपेक्षणीयस्य सहकारिकारणस्यातिरेकिणोऽभावात्, नित्यस्यापेक्षानुपपत्तेः ।

अनित्यपक्षे [illegible] पूर्वोक्तं वर्तमानं च दूषणम् । [illegible] चाभ्युपगममात्रेण प्रमाणसिद्धस्याप्रसिद्धत्वं युक्तम्; अतिप्रसङ्गात्, तथा न किञ्चित् कस्यचित् साधनं स्यात् । यथाऽऽह—'स्वनिष्टैर्दूषणं सर्वम्' इति ।

किञ्च—यदाऽऽभोगचित्तसमनन्तरं स्मरणमुत्पद्यमानं सुपरिनिश्चितम्, तदा शुभादिचित्ताद्रागः । तथाहि—सा सुन्दरीति तरुणीति तनूदरीति सुमुखीति चेत्यादि शुभं चिन्तयतां रागिणां राग उत्पद्यते; तथा ममानेनापकृतम्, अयमपकरिष्यति[4], अयमपकरोतीत्यादि चिन्तयतश्च द्वेष उत्पद्यमानो निश्चितः, स कथमपह्नोतुं

1–1. न तज्ज्ञानं—पा०, गा० ।
2. ननु—पा०, गा० ।
3. स्वरूपम्—पा०, गा० ।
4. अय वरिष्यति—पा०, गा० ।

### परोद्भाविनीर्विज्ञानसन्तानव्यतिरेकपक्ष-
### प्रसङ्गनिराकरणम्

निह्रासातिशयौ दृष्टौ बुद्धीनां पूर्वभाविनः[1] ।
बुद्ध्यभ्यासविशेषस्य समुत्कर्षापकर्षतः[2] ॥ १९०३ ॥
तत्कार्ये[3] शक्तिविगुणे[3] ज्ञाने[4] वार्यान्तरापहात्[4] ।
ज्ञानस्य ज्ञानहेतुत्वं न याति वचनीयताम् ॥ १९०४ ॥
विभिन्नदेहवृत्तित्वमत[5] एव न सिध्यति[6] ।
धर्मिणश्चेतसो[7] वृत्तिः का वा कायेष्वपातिनः ॥ १९०५ ॥
स्यादाश्रयो जलादीनां पतनप्रतिषेधतः ।
चेतसामगतीनां च किमाधारैः प्रयोजनम् ॥ १९०६ ॥
तादात्म्येन स्थितिर्वृत्तिरिह चेत् परिकल्प्यते ।
साऽप्ययुक्ता न हि ज्ञानं युक्तं कायात्मकं तव ॥ १९०७ ॥

तादात्म्ये हि यथा कायो विस्पष्टं वेद्यते परैः ।
रागद्वेषादिचेतोऽपि तथा किं न प्रवेद्यते ॥ १९०८ ॥
स्वेनैव वेद्यते चेतो देहस्तु स्वपरैरपि ।
यौ चैवं तौ विभिद्येते कुक्षिमूलनटाविव ॥ १९०९ ॥
अद्वयज्ञानपक्षे तु नायं हेतुः प्रसिद्ध्यति ।
स्वस्य स्वस्यावभासस्य वेदनात् तिमिरादिवत् ॥ १९१० ॥
उदयानन्तरध्वंसि नैरन्तर्येण लक्ष्यते ।
चेतो देहस्य तादूप्ये क्षणिकत्वं न किं मतम् ॥ १९११ ॥

देशोत्पादहेतुत्वादाधारो गमनप्रतिबन्धाद् व्यवस्थाप्यते । न त्वमूर्तस्य शक्यं तथा व्यवस्थापयितुम् । अथ तादात्म्यलक्षणा वृत्तिरभिप्रेता ? साऽपि न सिद्धा । न हि तव बहिरर्थाभिनिवेशिनो वक्तुं युक्तम्—कायात्मकं विज्ञानमिति । न तु युक्तं विज्ञानमात्रवादिनः; आलयविज्ञानस्वभावत्वात् कायस्येत्यभिप्रायः ॥ १९०६-१९०७ ॥

कस्मान्न युक्तम् ? इत्याह—तादात्म्ये इत्यादि । तथा हि—देहे गृह्यमाणे परै रागादीनामपि ग्रहणं प्राप्नोति; अव्यतिरेकात् । न च विपक्षवृत्त्याऽनेकान्तः, तस्यास्तदानीमप्रत्यक्षत्वात् । न तु चैतन्यस्याप्रत्यक्षत्वम्; आत्मनाप्यग्रहणप्रसङ्गात् । किञ्च—यावुभयनिश्चितैकनिश्चितौ, तौ भिन्नौ, यथा कुक्षिमूलनुभवनटौ । उभयनिश्चितैकनिश्चिते च देहचैतन्ये इति स्वभावहेतुः । स्वेनैवेति आत्मनैव ॥ १९०८-१९०९ ॥

यद्येवम्, विज्ञानमात्रवादप्रतिक्षेपोऽनेनैव हेतुना क्रियमाणो दुर्वारः स्यात् ? इत्यत आह—नायं हेतुः प्रसिद्ध्यतीति । असिद्धता हेतुदोषो भवतीति यावत्[1] । तथा हि—उभयनिश्चितत्वं विज्ञानवादिनो न सिद्धम्; स्वप्रतिभासस्यैव सर्वदा वेदनात्, तैमिरिकद्वयद्विचन्द्रदर्शनवत् । अपि च—विलक्षणार्थविचिकाले निरन्तरमुत्पादसमनन्तरविनाशि [ G 538 ] चित्तं स्पष्टं लक्ष्यते । ततश्च देहस्य तादूप्येऽभ्युपगम्यमाने क्षणिकत्वप्रसङ्गः ॥ १९१०-१९११ ॥

1. पा०, गा० पुस्तकयोर्नास्ति ।

तदाश्रयेण सम्भूतेस्तेन वाऽव्यभिचारिता ।
तत्र वृत्तिर्यदीष्येत तथापि व्यभिचारिता ॥ १९१२ ॥
प्रागवस्थमपि ज्ञानं प्रतिक्षणविनश्वरे ।
देहवृत्त करोत्येव प्रतिसन्धिं निरन्तरम् ॥ १९१३ ॥
एकसन्तानभावेन न चेत् तत्र विभिन्नता ।
अन्यत्राऽप्येकसन्तानभावात्मा सृद् विभिन्नता ॥ १९१४ ॥
क्षीणास्त्रवस्य विज्ञानमसन्धानं कुतो मतम्[1] ।

---

एवं तावत् तादात्म्यलक्षणवृत्तिर्न सिद्धा। अथ तदुत्पत्तिलक्षणा वृत्तिः, सा च तदुत्पत्तिस्तदाश्रयद्वारेण वा स्यान्मनोविज्ञानस्य, यथा चक्षुरादिविज्ञानस्य चक्षुराद्याश्रयेण। तदव्यभिचाराद्वा, यथा धूमस्याग्न्यव्यभिचारिणः। तदत्र द्विविधाऽपि वृत्तिरसिद्धा। तथा हि— मनोधीर्नेन्द्रियबुद्धिवत् कायाश्रिता, नियमेन साक्षात् तद्विकाराविधानात्। नापि तदविनाभाविनी, विरूपे धातौ कायमन्तरेणापि भावाभ्युपगमात्। तथाप्यभ्युपगम्य सिद्धतां हेतोरनैकान्तिकतामाह— तदाश्रयेण सम्भूतेस्तेन वाऽव्यभिचारत इति। तथा हि— चित्तान्तरप्रतिसन्धानस्य चित्तदेहवृत्तेऽपि विरोधाभावात्, यथा मरणक्षणात् प्राक्तनस्य जीवदवस्थाभावि विज्ञानं प्रतिसन्धिं करोत्येव भिन्नदेहवृत्तमपि देहस्य क्षणिकत्वादित्यनैकान्तिको हेतुः।

अथैकसन्तानत्वेन देहस्याभेदादभिन्नदेहवृत्तित्वं कल्प्यते, तदाऽन्यत्रापि भिन्नदेहेऽपि समानम्। तथा हि— पञ्चायतनलक्षणो देहसन्तानस्यावस्थाभेद एवायमामुष्मिको देहः, बाल्यवृद्धावस्थागतवत्। द्वितीयेऽपि प्रयोगे 'ज्ञानत्वात्' इत्यस्य हेतोः साध्यविपक्षे बाधकप्रमाणानुपदर्शनादनैकान्तिकत्वं स्पष्टमेवेति नोक्तम् ॥ १९१३–१९१४ ॥

"सरागमरणं चित्तम्" (तत्त्व० १८६२) इत्यादिकं तृतीयं प्रयोगमधिकृत्याह— क्षीणास्त्रवस्येत्यादि। न विद्यते चित्तान्तरसन्धानं यस्य तदसन्धानम्। अनेन

---

१ मतम्—पा०, गा०।

परकीयकृतान्ताच्चेन्न प्रामाण्यापरिग्रहात् ॥ १९१५ ॥
ये चेह सुधियः केचिदप्रतिष्ठितनिर्वृतीन् ।
जिनांस्तद्यानतिष्ठत्वं यानयोश्च प्रचक्षते ॥ १९१६ ॥
तान् प्रत्ययमसिद्धश्च साध्यधर्मसमन्वितः ।
दृष्टान्तः प्रतिवादीष्टसिद्धान्ताश्रयणेऽपि ते ॥ १९१७ ॥
बाधकानभिधानाच्च सन्दिग्धव्यतिरेकिणः[1] ।
शङ्क्यमानविजातीयसद्भावाद् व्यभिचारिता ॥ १९१८ ॥

दृष्टान्तस्यान्यतरासिद्धसाध्यधर्मतामाह । तथा हि—चार्वाकस्य कुतः प्रसिद्धम्—'अर्हतां न चित्तान्तरं प्रतिसन्धत्ते [G 539] मरणचित्तम्' इति ।

अथापि स्यात्—परकीये बौद्धे सिद्धान्ते पठ्यते—"क्षीणा मे जातिः, उषितं ब्रह्मचर्यम्, कृतं करणीयम्, नापरमस्माद्भवं प्रजानामि" ( ) इति, अतः सिद्धमसन्धानमिति ? तदेतदयुक्तम्; परकीयस्य सिद्धान्तस्य प्रामाण्येनापरिग्रहाल्लोकायतस्य कथं ततोऽप्रामाण्येन[2] परिगृहीतान्निश्चयः; परलोकस्यापि निश्चयप्रसङ्गात् । अथान्यत एव प्रमाणान्तरात् तदवगतम्, तदेव तर्हि किं न साधनमुक्तम्, किमगमकेन वाक्यसंसूचकेनोपन्यस्तेन ? न ह्यन्यस्य तत्साधनं येन तथाभिधीयते ॥ १९१५ ॥

सिद्धान्ताश्रयणेनापि काँश्चिद् बौद्धान् प्रति साध्यधर्मसमन्वितो न सिद्धो दृष्टान्त इति दर्शयन्नाह—ये चेह सुधिय इत्यादि । इहेति सौगते प्रवचने । सुधियो महायानिकाः । केचिदिति माध्यमिकाः । ते हि बुद्धानामप्रतिष्ठितत्वं निर्वाणमाहुः; 'एकमेवेदं यानं[3] यदुत महायानम्' ( ) इति वचनात् ॥ १९१६-१९१७ ॥

एवं दृष्टान्तदोषमुक्त्वाऽनैकान्तिकत्वं साधनदोषमाह—बाधकानभिधानाच्चेति । बाधकानभिधानादिति सन्दिग्धव्यतिरेकित्वस्य हेतुः । शङ्क्यमाने-त्यादि तु व्यभिचारितायाः । विजातीये सद्भावो विजातीयसद्भावः । कस्य ?

१. ०व्यतिरेकिता—पा०, गा० ।　२. तथा०—पा०, गा० ।
३. मान—पा०, का० ।

कललादिष्वपि विज्ञानसन्तानान्वयसमर्थनम्

कललादिषु विज्ञानमस्तीत्येतन्न साहसम् ।
असञ्जातेन्द्रियत्वेऽपि ज्ञानं तत्र न किं भवेत् ॥ १९१९ ॥
इन्द्रियार्थबलोद्भूतं सर्वं विज्ञानमित्ययः ।
साहसं वेद्यते यस्मात् स्वप्नादावन्यथाऽपि तत् ॥ १९२० ॥
स्वसमर्थगतेरन्यदप्यस्य व्यवसीयते ।
मूर्च्छादावपि तेनास्य सद्भाव उपपद्यते ॥ १९२१ ॥

स्वापादिषु विज्ञानसन्तानान्वयसमर्थनम्

न चापि शक्तिरूपेण तथा धीरवतिष्ठते ।
स्वरूपेणैव बुद्धीनां व्यवस्थानं तदा मतम् ॥ १९२२ ॥

---

हेतोरिति गम्यते । शङ्क्यमानश्चासौ विजातीयसद्भावश्चेति विग्रहः । न वा मरणसमये बाधकं प्रमाणम्; परमार्थतः कस्यचिदालयादिकस्य म्रियमाणस्याभावात् । केवलं विसदृशसन्तानोत्पत्तौ [1]विशिष्टनिकायसभागतास्थानस्याविशेषोपरमाल्लोके शास्त्रे च तथा व्यवहारः ॥ १९१८ ॥

यदुक्तम् "कललादिषु विज्ञानमस्तीत्येतन्न साहसम्" ( तत्त्व० १८६४ ) इत्यत्राह—कललादिष्वित्यादि । [ G. 540 ] यदि सर्वमेव ज्ञानमिन्द्रियार्थबलेनैव जायते[2], तदा साहसं भवेत्, यावता स्वप्नावस्थायां नीलादिप्रतिभासं मनोविज्ञानमुत्पद्यमानं चक्षुरादीन्द्रियविनाऽपि[3] रूपादिनार्थेन संवेद्यते । न चापि तस्य तदानीं चक्षुरिन्द्रियमाश्रय इति शक्यं वक्तुम्; नीलादिप्रतिभासत्वात् । कायविज्ञानस्य च स्प्रष्टव्यविषयत्वात् । तस्मादर्थबलोद्भवं सर्वं विज्ञानमित्ययुक्तम् । तेन मूर्च्छादावपि विज्ञानसद्भावो न विरुध्यते ॥ १९१९–१९२१ ॥

अथापि स्यात्—शक्तिरूपेणावस्थानं विज्ञानस्याविरुद्धम्, स्वरूपेण तु विरुद्धम् ! इत्याह—न चापीति । यदि हि सुप्तमूर्च्छितादिमदाद्यवस्थायां[4] चित्तं

---

1. ०ष्टनास्था०—पा०, गा०, ०सभागतास्था०—जै० पुस्तके पाठा० ।
2. जायते—पा०, गा० ।   3. ०न्द्रियेऽपि—जै० ।
4. ०मूर्च्छादवस्थायां—पा०, गा० ।

सुप्तमूर्च्छाद्यवस्थासु चेतो नेति च ते कुतः ।
निश्चयो वेदनाभावादिति चेत् स कुतो मतः ॥ १९२३ ॥
यदीत्थं भवतस्तासु निश्चयः सम्प्रवर्त्तते ।
न वेद्मि चित्तमित्येवं सति सिद्धा सचित्तता ॥ १९२४ ॥
स्यान्मतम् यदि विज्ञानं दशास्वास्वस्ति तत्कथम् ।
न स्मृतिः प्रतिबुद्धादेस्तदाकारा भवेदिति ? ॥ १९२५ ॥
तत्कारणमत्यर्थं पाटवादेरसम्भवात् ।
स्मरणं न प्रवर्त्तेत सद्योजातादिचित्तवत् ॥ १९२६ ॥
यद्येवम्, कथमस्तित्वमस्यासु व्यवसीयते ।
पूर्वोपवर्णितादेव हेतोरित्यवगम्यते ॥ १९२७ ॥

---

नास्तीति निश्चायकं किञ्चित् प्रमाणं भवेद्, भवेद्विरोधः । स्ववेदनानुपलम्भोऽस्ति निश्चायकं प्रमाणमिति चेत्? न, स्वसंवेदनानुपलम्भः कुतः सिद्धः, न हि तस्यामवस्थायां संवेदनाभावनिश्चयोऽस्ति । यदि च तासु मूर्च्छाद्यवस्थासु[1] 'न वेद्म्यहं चित्तम्' इत्येवं निश्चयः प्रवर्त्तते भवतः, तदा तेनैव तथा प्रवृत्तेन निश्चयेन सचित्तता सिद्धा । अथापि स्याद्—यदि स्वापाद्यवस्थासु चित्तं स्यात्, किमिति [G 541] प्रतिबुद्धादेः पुरुषस्य स्मरणं न भवेत्? आदिशब्देन, विगतमूर्च्छस्य, विगतमदस्येति परिग्रहः । तदेतदस्मरणमकारणमनुभूतासत्त्वसिद्धये । यदि ह्यनुभूतमित्येतावन्मात्रेणैव स्मरणं स्यात्, स्यादेतत्, यावता सत्यप्यनुभवे पाटवाभ्यासार्थित्वादिवैकल्यात् स्मरणं न भवति, यथा सद्योजाताद्यवस्थायामनुभूतस्यापि चित्तस्य ॥ १९२२–१९२६ ॥

अस्तित्वेऽपि भवता तर्हि किं प्रमाणं यत्र स्मरणाप्रवृत्तावपि सन्देहः ?—इति चोदयन्नाह[2]—यद्येवमित्यादि । अस्येति विज्ञानस्य । आस्विति स्वापाद्यवस्थासु । तत्र पूर्वोपवर्णितो हेतुः—प्रबुद्धादेः पुरुषस्यादिविज्ञानं स्वोपादानबलोद्भवं विज्ञानत्वादाभोगाद्यनन्तरभाविस्मार्तादिविज्ञानवत् । न चायमनैकान्तिको हेतुः, पूर्वं कारणान्तरनिषेधेन प्रतिबन्धस्य साधितत्वात् ।

---

1. मूर्च्छाद्यवस्थासु—पा०, गा० । 2. प्रतिचोदयन्नाह—पा०, गा० ।

स्वप्नमूर्च्छाद्यवस्थासु चित्तं च यदि नेष्यते ।
स्मृतिः स्यात् तत्र चोत्पत्तौ मरणाभाव एव वा ॥ १९२८ ॥
स्वतन्त्रा मानसी बुद्धिश्चक्षुराद्यनपेक्षणात् ।
स्वोपादानबलेनैव स्वप्नादाविव वर्त्तते ॥ १९२९ ॥
तथा हि न विकल्पानामिन्द्रियार्थव्यपेक्षिता ।
तदव्यापारभावेऽपि भावाद् व्योमोत्पलादिषु ॥ १९३० ॥
तमोभासेऽपि[1] नीलादिविकल्पो[1] य प्रवर्त्तते ।
सोऽसदर्थोपरागेण[2] तुल्य एवावसीयते ॥ १९३१ ॥

किञ्च—यदि स्वापाद्यवस्थायां चित्तं न भवेत्, तदा मरणमेव स्यात् । अथ तत्र तथाभूते निर्मूलमपगतविज्ञाने देहे पुनरुत्पत्तिरिष्यते विज्ञानस्य, तदा तत्रोत्पद्य विध्यमाणायां मरणाभावं प्राप्नोति, मृतस्यापि पुनर्विज्ञानोत्पत्तिप्रसङ्गात्, सुप्तप्रबुद्धवत् । मनोबुद्धेरेव जन्मान्तरप्रतिसन्धाने सामर्थ्यात् । तथा चोक्तम्—

"छेदसन्धानवैराग्यहानिच्युत्युपपत्तय[3] ।
मनोविज्ञान एवेष्टा" ( अभि० को० ३ ४२ ) इति ।

अतो मनोबुद्धिः पूर्वबुद्धिमात्राश्रयेति प्रतिपादयन्नाह—स्वतन्त्रेत्यादि । स्वातन्त्र्येऽनपेक्षत्वं हेतुः । सर्वदैव मनोबुद्धिः स्वोपादानकारणमात्रभाविनी, स्वोपादानव्यतिरिक्तचक्षुरादिकारणान्तरानपेक्षणात्, स्वप्नावस्थावत् ॥१९२७ २९॥

तथा हीत्यनेन हेतोरसिद्धतां परिहरति । [ G 512 ] तदव्यापारभावेऽपीति । तयोरिन्द्रियार्थयोरव्यापारेऽपीति यावत् । न यदव्यापारेऽपि यस्य भावस्तत्तस्य कारणं युक्तम्, अतिप्रसङ्गात् ॥ १९३० ॥

स्यादेतद्—भवतु व्योमोत्पलादिविकल्प इन्द्रियार्थानपेक्ष, तदभावेऽपि भावात् । यस्तु चक्षुषि प्रणिहिते नीलादौ पुरोवर्त्तिनि विषये नीलमेतदिति विकल्पः प्रवर्त्तते, कथमिन्द्रियार्थानपेक्ष , येन पक्षैकदेशेऽसिद्धो हेतुर्न भवेत् ? इत्याह—

१—१ ०मसिऽप्यतीतादिविकल्पो—पा०, गा० ।
२ असदर्थो०—पा०, गा० ।
३ ०हानिम् ...पत्तय —पा०, गा० ।

शब्दार्थप्रतिभासित्वाद् वस्तुरूपं न भासते ।
विकल्पेष्विति सर्वं हि विस्तरेणोपपादितम् ॥ १९३२ ॥

विज्ञानस्य कायानाश्रितत्वसमर्थनम्

प्रसुप्तिकाद्यवस्थासु शरीरविकृतावपि ।
नान्यथात्वं मनोबुद्धेस्तस्मान्नेयं तदाश्रिता ॥ १९३३ ॥

स्वल्पीयस्यपि नेत्रादेर्विकारे तिमिरादिके ।
चक्षुराद्याश्रिता बुद्धिर्विकृतैव हि जायते ॥ १९३४ ॥

तद्देहस्य विनाशेऽपि मनोधीरतदाश्रया ।
स्वोपादानबलेनैव वर्तमानाऽविरोधिनी ॥ १९३५ ॥

---

तयोरित्यादि । तयोरिति इन्द्रियार्थयोः[1] । असदर्थः = अर्थशून्यः[2], उपरागः = निर्भासो यस्योत्प्रेक्षितार्थादिविकल्पस्य सोऽसदर्थोपरागः—व्योमादिविकल्पः । तेन तुल्योऽयमपि निर्विषय इत्यर्थः । कथम् ? सर्वो हि विकल्पः शब्दोल्लेखेन प्रवृत्तेः शब्दार्थावभासी, यश्च शब्दार्थावभासी[3] न [redacted] वस्तुरूपं भासते; वस्तुरूपे शब्दस्याप्रवृत्तेः, तत्र तस्यासङ्केतितत्वादिति विस्तरेण शब्दार्थपरीक्षायां प्रतिपादितम् । सपक्षे सद्भावान्न विरुद्धो हेतुः । नाप्यनैकान्तिकः, स्वोपादानानुद्भवत्वे निर्हेतुकत्वप्रसङ्गात् ॥ १९३१-१९३२ ॥

कायाश्रितत्वान्न निर्हेतुकत्वमिति चेत् ? इत्याशङ्क्याह—प्रसुप्तिकेत्यादि । प्रसुप्तिप्रतिरोगोपघातेन हि देहविकारेऽपि मनोमतेरविकारादियं मनोमतिर्न देहाश्रिता, यद्विकारेण नियमात् साक्षाद् यन्न विक्रियते न तत्तदाश्रितम्, यथा गोविकारेणाविक्रियमाणोऽश्वः । न च देहस्य विकारेण नियमात् साक्षाद् विक्रियते मनोबुद्धिः प्रसुप्तिकाद्यवस्थायामिति व्यापकानुपलब्धिः ॥ १९३३ ॥

स्वल्पीयसीत्यादिना तदाश्रितत्वं साक्षात् तद्विकारविकारित्वेन व्याप्तमिति दर्शयति । [ C. 543 ] तस्य चात्र व्यापकस्याभाव इति सिद्धा देहानाश्रिता बुद्धिः । तत्तस्माद् देहनिवृत्तावपि न निवर्तयिष्यत इत्यविरोधः । यो हि यदाश्रितो

---

१. इन्द्रियार्थः—जै० । २. शून्यः—पा०, गा० ।
३. शब्दार्थाभासी—जै० ।

देहयोगनैरपेक्ष्येण विज्ञानसन्तानान्वयसमर्थनम्

केवलाऽपि मनोबुद्धिर्यदैवमविरोधिनी ।
नातोऽन्यदेहसद्भावसिद्धये यत्निनो वयम् ॥ १९३६ ॥
न च शक्यनिषेधोऽसावदृष्टावपि संशयात्[1] ।
स्याद्देवा मन्दनेत्रस्य स्वच्छधूमाद्यदृष्टिवत्[2] ॥ १९३७ ॥

---

न भवति तन्निवृत्तौ न[3] नियमेन तस्य निवृत्तिः । तद्यथा गोनिवृत्तौ गवयस्य न नियमेन निवृत्तिः । न च देहो मनोमतेराश्रय इति व्यापकानुपलब्धिः ॥ १९३४-१९३५ ॥

यदुक्तम्—"मरणान्तोद्भूतदेहान्तर" इत्यादिना श्लोकद्वयेन (तत्त्व० १८६८-६९), तत्राह—केवलापीत्यादि । अयमत्राभिप्रायः—परलोकोऽत्र साधयितुमिष्टः, स च कथं सिद्ध्यति, यदि बुद्धिरनाद्यनन्ता सिद्ध्येत् । अस्या एवावस्थाविशेषः परलोकप्रसक्ते[4] । न तु देहे आत्म्ययातो, देहाभावेऽपि परलोकाभ्युपगमात् । सा चेच्चित्तसन्ततिरनाद्यनन्ता सिद्धा, सिद्धो न परलोक इति नान्यदेहसिद्धये यत्नः क्रियतेऽस्माभिः; निष्फलत्वात् । न च तस्याऽदृष्टिमात्रेण निषेधः शक्यते कर्तुम् । तथा हि—एषाऽदृष्टिरतिविप्रकर्षे भावनादिवैकल्यान्मन्दनेत्रस्य भवत सत्यपि तस्मिन् देहे स्यादपि । न[5] च[5] धूमोऽदर्शनवदिति[6] नानुपलब्धिमात्रेण प्रतिषेधः सिद्ध्यति । तथा हि—सजातिशुद्धदिव्याक्षदृश्योत्तराभवो कथ्यते । अत एव साङ्ख्यपरिकल्पितातिवाहिकशरीरस्याप्यप्रतिक्षेपः । पूर्वकालभवस्यापि देशविप्रकर्षान्नोपलम्भः स्यात्; दूरतरदेशोत्पत्तेः, स्वभावविप्रकर्षाद्वा, पिशाचादिदेहवत् । अविप्रकर्षेऽप्यर्वाग्दर्शिना 'सोऽयं प्राणी पतङ्गतयात्मता गतः' इति निश्चेतुमशक्यत्वात्, अचिन्त्यशक्तिभेषज्योपयोगेन परावृत्तदेहवत् ॥ १९३६-१९३७ ॥

---

१. सथयात्—पा०, गा० ।
२. स्वल्पधूमा०—पा० ।
३. नै० पुस्तके नास्ति ।
४ परलोकप्रसक्तौ—पा०, गा० ।
५-५. ननु—पा०, गा० ।
६. धूमोऽननुधूमादर्शन०—गा० ।

### भिन्नदेहसम्बद्धानामपि विज्ञानानाम् एकान्वयतासमर्थनम्

भिन्नदेहाश्रितत्वेऽपि तद्विशेषानुकारतः ।
एकसन्ततिसम्बद्धं प्राच्यज्ञानं प्रबन्धवत् ॥ १९३८ ॥
अपि च स्तनपानादावभिलापः[1] प्रवर्त्तते ।
उद्वेग उपघाते च सद्योजन्मभृतामपि ॥ १९३९ ॥
रुदितस्तनपानादिकार्येणासौ च गम्यते ।
स च सर्वो विकल्पात्मा स च नामानुषङ्गवान् ॥ १९४० ॥

कथं तर्हि भिन्नाश्रयाणि ज्ञानान्येकसन्तानसम्बद्धान्युच्यन्ते ? इत्याह—भिन्नदेहाश्रितत्वेऽपीति । [G. 544] तद्विशेषानुकारत इति । तस्य जन्मान्तरवर्त्तिनो ज्ञानस्य यो विशेषस्तमनुकुर्वन्त्यैहिकानि ज्ञानानि । तथा चोक्तम्—

"अभ्यासयोगेन शुभाशुभानि कर्माणि सात्म्येन भवन्ति पुंसाम् ।
यदप्रयत्नेन विनोपदेशाज्जन्मान्तरे स्वप्न इवाचरन्ति ॥" (जा० मा० १५.१)

तत्र यदुक्तं चार्वाकेण—"इहलोकपरलोकशरीरयोर्भिन्नत्वात्तद्गतयोरपि चित्तयोर्नैकः सन्तानः" (चा० सू० १८) इत्यादि[2]गर्भादौ प्रथमं विज्ञानं विवादगोचरापन्नैकसन्तानिकं न भवति; भिन्नशरीरत्वान्मद्विषयराह्वादिविज्ञानवत् इति, तदनेन प्रतिक्षिप्तं भवति ।

अपि च—इतोऽपि परलोकः सिद्धः । तथा हि—यो यो विकल्पः स शब्दानुभवाभ्यासपूर्वकः; विकल्पत्वात्, यौवनावस्थाभाविविकल्पवत् । विकल्पश्चायं सद्योजातानां स्तनपानाद्यभिलाषादिविकल्प इति स्वभावहेतुः । न चाश्रयासिद्धो हेतुः; यतो रुदितस्तनपानादिकार्येणासौ सद्योजातानां स्तनपानाद्यभिलाषादिर्धर्मी सिद्धः । न हि [3]शक्तिविद्वेषादिरूपेणाविकल्पयतो रुदितस्तनपानादिसम्भवो युक्तः । नापि स्वरूपासिद्ध इति प्रतिपादयति—स च सर्वो विकल्पात्मेति । सः = स्तनपानाभिलाषादिः । सर्वो विकल्पात्मा = विकल्पस्वभावः; प्रार्थनाद्याकारस्तथाऽनुभूयमानत्वात् । नाप्यनैकान्तिक इति दर्शयन्नाह—स च

१. ०वभिलापे—पा०, गा० । २. इत्यादि । गर्भादौ—गा० । ३. रक्ति०—गा० ।

न नामरूपमभ्यस्तमस्मिन् जन्मनि विद्यते ।
तेषां चान्यभवाभावे तदुच्छेदः प्रसज्यते ॥ १९४१ ॥
तन्नामसंस्तवाभ्यासवासनाबलभाव्यसौ ।
तेषां विकल्परूपत्वाद् विकल्प इव सम्प्रति ॥ १९४२ ॥
यन्नामसंस्तवाभ्यासवासनापरिपाकजः ।
विकल्पो वर्तते तेषां तत्प्रसिद्धं भवान्तरम् ॥ १९४३ ॥

---

नामानुषङ्गशालिनि । स इति विकल्पः । यस्मात् सर्वो विकल्पः शब्दोल्लेखेन प्रवृत्तेर्नामानुषक्तः । स च नामानुषङ्गो विकल्पस्य सङ्केताभ्यासमन्तरेण न सम्भवतीति पूर्वं विस्तरेण प्रतिपादितमस्माभिः ॥ १९३८-१९४० ॥

अथापि स्यात्—भवतु नाम नामानुषङ्गोऽभ्यासपूर्वकः, तथाऽप्यसौ नेष्टसाधनः, किं तर्हि? ऐहलौकिकाभ्यासपूर्वकत्वमेव विपरीतं साधयति? इत्याह—न नामरूपमित्यादि । एतदुक्तं भवति—ऐहलौकिकाभ्यासः सद्योजातानां प्रमाणप्रतीतिनिराकृतः । न च साध्यमानप्रतिज्ञार्थस्य हेतोर्विरुद्धत्वं युक्तम्; विरुद्धोऽसति बाधक इति न्यायात् । नामरूपमिति । नाम्नो रूपम् = वाचकः[1] स्वभावः, बुद्धिपरिवर्त्यपि बाह्येषु शब्देष्वभ्यस्तः । तेषां चेति सद्योजातानाम् । तदुच्छेद इति तेषामभिलापादीनामुच्छेदस्तदुच्छेदः ॥ १९४१ ॥

[G. 545] तन्नामेत्यादिना यथोक्तं प्रमाणार्थमुपसंहरति—तदिति । तस्मादर्थे[2] ॥ १९४२ ॥

यन्नामेत्यादिना प्रमाणफलं दर्शयति । नाम्न = शब्दस्य, संस्तवः = परिचयः, अनुभव इति यावत्, तस्याभ्यासः = पुनरुत्पादः । यस्मिन् भवे नामसंस्तवाभ्यासो यन्नामसंस्तवाभ्यास इति । "सप्तमी" ( पा० सू० २.१.४० ) इति योगविभागात् समासः । तेनाहिता या वासना तस्याः परिपाकः = स्वानुरूपकार्योत्पादने प्रवृत्तिक्षमम्, ततो जात इति व्युत्पत्तिक्रमः । तेषामिति सद्योजातानाम् ॥ १९४३ ॥

---

1. वाचक—पा० ।    2. तस्मादित्यर्थ—पा०, गा० ।

नामाभ्यासबलादेव यदि तेषां प्रवर्त्तते ।
तत्किं न विस्फुटा वाचः स्मृतिर्वा वाग्मिनामिव ॥ १९४४ ॥
पटीयसोपघातेन परिपाकाकुलत्वतः ।
न स्याद्वासामियं वृत्तिः सन्निपातदशास्विव ॥ १९४५ ॥
स्वल्पीयानपि येषां तु नोपघातो महात्मनाम् ।
श्रूयन्ते विस्फुटा वाचस्तेषां सा च स्मृतिः स्फुटा ॥ १९४६ ॥

नामाभ्यासेत्यादिना परकीयं प्रसङ्गसाधनमाशङ्कते । यदि पूर्वसंकेताभ्यासाद् विकल्पस्य प्रवृत्तिः, तदा बालदारकस्य पूर्वसंकेतानुस्मरणप्रसङ्गः । न ह्यभ्यासानुवृत्तिः स्मरणमन्तरेण युक्ता, वाग्मिनामिव विस्पष्टवाक्प्रवृत्तिप्रसङ्गश्च । ततश्च संकेतकरणानर्थक्यं स्यात् । न चैवं भवति । तस्मात् स्मरणाभावात्, विस्पष्टवाचोऽप्रवृत्तेश्च पूर्वाभ्यासपूर्वत्वं विरुद्धमिति प्रसङ्गविपर्ययेण धर्मस्वरूपनिराकरणमुखेन प्रतिज्ञादोषमाह ॥ १९४४ ॥

पटीयसेत्यादिना प्रसङ्गविपर्यये च हेतोरनैकान्तिकत्वमाह । न हि पूर्वाभ्यासः सर्वदा स्मरणादिना व्याप्तो येन स्मरणादिकं प्रवर्त्तयेत्, तन्निवृत्तौ वा निवर्त्तेत । यावता पूर्वाभ्यासानुभवश्च[1] भवेत्, न च स्मरणम्, यथा सन्निपातावस्थायाम्; तथा स्वप्नेऽपि पूर्वाभ्यासानुवृत्तिर्भवेत्, न च स्मरणम् । सन्निपातग्रहणमुपलक्षणम् । पटीयसेति गर्भपरिवासात् । परिपाकाकुलत्वत इति । [G. 546] वासनापरिपाकस्याकुलत्वम् । यथानुभूतप्रतिनियतदेशकालस्वभावादिभेदरूपेणाप्रवृत्तिः । तत्र यदुक्तं चार्वाकेण—"जातिस्मरणमसिद्धम्; एकग्रामागतानां सर्वेषां स्मरणात्" ( ) इति तदनेन प्रतिक्षिप्तं भवति । तथा हि—एकग्रामागता अपि सर्वे न स्मरन्ति; यतस्तत्र केचन तेषां मध्ये ये मन्दगतयस्ते मुषितस्मृतयो भवन्त्येव । आसामिति वाचाम् ॥ १९४५ ॥

स्वल्पीयानपीत्यादिना प्रसङ्गविपर्यये हेतोः पक्षैकदेशासिद्धतामाह । महात्मनामिति पुण्यवताम् ॥ १९४६ ॥

---

1. पूर्वाभ्यासानुवृत्तिश्च—पा०, ग०।

परलोकसिद्धावुपपत्त्यन्तरम्

रागद्वेषादयश्चामी पटवोऽभ्यासयोगतः ।
अन्वयव्यतिरेकाभ्यां भवन्तः परिनिश्चिताः ॥ १९४७ ॥
इहत्याभ्यासरहितास्ते ये प्रथमभाविनः ।
को हेतुर्जन्मनस्तेषां यदि न स्याद् भवान्तरम् ॥ १९४८ ॥
न ह्यालम्बनसान्निध्यात् तेषां जन्मोपपद्यते ।
प्रतिसङ्ख्यानसद्भावे तद्भावेऽप्यतदुद्भवात् ॥ १९४९ ॥
प्रतिसङ्ख्यानिवृत्तौ च तेषां प्राबल्यदर्शनात् ।
नष्टाजातेऽपि विषये विपर्यासाभिवृद्धितः[1] ॥ १९५० ॥

पुनरपि परलोकसिद्धावुपपत्त्यन्तरमाह—रागद्वेषादयश्चेत्यादि ।

प्रयोगः—रागद्वेषेर्ष्यामदमानादीनां तथा प्रज्ञाकृपामैत्र्यादीनां च यत् पाटवं तदभ्यासपूर्वकम्, यथेहैव जन्मनि पटुमन्दयथोक्तगुणस्य पुरुषस्याभ्यासवशात् दृष्टम् । अस्ति चाद्यादावेव जन्मनि तेषु तेष्वदृष्टैहलौकिकाभ्यासस्यापि कस्यचित् पुरुषस्य तत्पाटवमिति कार्यहेतुः । अन्वयव्यतिरेकाभ्यां कार्यकारणभावस्य निश्चितत्वादिति नासिद्धो हेतुः । अत एवाह—अन्वयव्यतिरेकाभ्यां भवन्तः परिनिश्चिता इति । [G 547] अपारलौकिकाभ्यासपूर्वत्वसाधनाद्विरुद्धो हेतुरिति चेत् ? न, इहत्याभ्यासरहितास्ते ये प्रथमभाविनः पटवो रागादय इत्ययुक्तम् पारलौकिकाभ्यासपूर्वत्वसाधनम् । न चाहेतुकं युक्तम्, नित्यं सत्त्वादिप्रसङ्गात् । तस्माद् यदि जन्मान्तरं न[2] भवेत् तेषाम् = रागादीनां पटूनाम्, जन्मनः = उत्पत्तेः, को हेतुः स्यात् । तस्माज्जन्मान्तरीय एवाभ्यासो हेतुरिति सिद्धः परलोकः ।

न चालम्बनं कारणम्, आलम्बनस्य भावेऽपि रागादीनां कदाचिदशुभादिप्रतिसङ्ख्यानसद्भावे सत्यनुत्पत्तेः । अशुभाद्यालम्बना रागादिप्रतिपक्षभूता प्रज्ञा प्रतिसङ्ख्यानम् । असत्यप्यालम्बने रागादीनामुत्पत्तिदर्शनाच्च युक्तः आलम्बनवशात् तद्भावः । तथा हि—अतीतानागतेऽपि विषये सङ्कल्पवशादभिवृद्धशुभादिविपर्या-

1 °भिवृद्धितः—गा० । 2 जै०, पा० पुस्तकयोर्नास्ति ।

शुभात्मीयस्थिरादींश्च समारोप्याङ्गनादिषु ।
रागादयः प्रवर्तन्ते तद्रूपा विषया न च ॥ १९५१ ॥
तदनालम्बना एव सदृशाभ्यासशक्तितः ।
इहत्या अपि वर्तन्ते रागादित्वाद् यथोत्तरे ॥ १९५२ ॥
विषयोपनिपाते तु सुखदुःखादिसम्भवाः ।
तस्मात् समानजातीयवासनापरिपाकजाः ॥ १९५३ ॥
रागद्वेषादयः क्लेशाः प्रतिसङ्ख्यानविद्विषाम् ।
अयोनिशोमनस्कारविधेयानां[1] यथाबलम् ॥ १९५४ ॥

तस्य पुंसः प्रतिसङ्ख्याननिवृत्तौ तेषां रागादीनां प्रबलत्वं दृश्यते । न हि यद्भावाभावयोर्यस्य भावाभावाविपर्ययः, तत्तस्य कारणं युक्तम्; अतिप्रसङ्गात् ।

इतोऽपि नालम्बनवशाद् रागादीनां[2] प्रवृत्तिः । तथा हि—यदि यथालम्बनमेव प्रवर्त्तेरन्, एवमालम्बनवशात् प्रवृत्ताः स्युर्यथा नीलादिज्ञानम् । न चैवं प्रवर्तन्ते, किं तर्हि ? आत्मात्मीयानित्यसुखाद्याकारानभूतानेवारोपयन्तोऽङ्गनादिषु[3] प्रवर्त्तन्ते, न च शुभादिरूपा विषयाः । न च यदाकारशून्यं तत्तस्यालम्बनं युक्तम्; अतिप्रसङ्गात् । तत् = तस्मादारोपितविषयत्वेन निरालम्बना रागादयः । ततश्च सिद्धमाद्याः प्रथमभाविनोऽपीह जन्मनि ये रागादयः, ते सजातीयाभ्यासवशात् प्रवर्तन्त इति ॥ १९४७–१९५२ ॥

यदि तर्हि विषया न कारणम्; कथं विषयोपनिपाते रागादय उत्पद्यमाना दृश्यन्ते ? इत्याह—विषयोपनिपात इत्यादि । एष हि क्रमः—विषयोपनिपाते सर्वेन्द्रियजं सुखमुत्पद्यते, तस्माच्च सुखात् प्रतिसङ्ख्यानवैकल्ये सत्यात्मादिविपर्यासलक्षणायोनिशोमनस्कारे स्थितानां [G. 548] पूर्वरागाद्याहितवासनापरिपाको भवति, ततो रागादयः क्लेशाः प्रवर्त्तन्त इति न साक्षाद्विषयाः कारणम् ।

स्यादेतत्—स्वराद्यान्तोपवर्णनमात्रमेव केवलम्, न त्वत्र काचिद्युक्तिः । इत्याह—एक इत्यादि । एक इति एकाकारः । तत्रेति विषये । तस्येति विषयस्य ।

1. अयोनिशोनमस्कार०—पा०, अयोनिसौमनस्कार०—गा० । एवमग्रेऽपि ।
2. मायादीनां—पा०, गा० ।  3. आत्मीय०—पा०, गा० ।

साक्षात् तु विषया नैव रागद्वेषादिहेतवः ।
एकः क्लेशो हि तत्र स्यात् सर्वेषां तस्य बोधवत् ॥ १९५५ ॥
अन्यवृत्त्युपलम्भेन परेभ्यः श्रवणेन वा ।
न च तेषामियं वृत्तिर्व्यभिचारोपलम्भनात् ॥ १९५६ ॥
अदृष्टाश्रुतवृत्तान्ता वराहहरिणादयः ।
सभागगतिसम्पर्कं प्रयान्त्येव हि विक्रियाम् ॥ १९५७ ॥
संसारानुचिता धर्माः प्रज्ञाशीलकृपादयः ।
स्वरसेनैव वर्तन्ते तथैव न मदादिवत् ॥ १९५८ ॥
बलासादिप्रभावेण न च तेषां समुद्भवः ।

बोधरूपवदिति[1], नीलादिग्राहकाकारवत् । न चैकाकारस्तत्र क्लेशः प्रवर्तते । तथा हि—एकस्मिन् स्त्रीरूपे कस्यचिद्राग, कस्यचिद् द्वेषः, कस्यचिदीर्ष्या—इत्यनेकाकारस्य प्रवृत्तिर्दृश्यते ॥ १९५३–१९५५ ॥

स्यादेतत्—न पूर्वाभ्यासादिह जन्मन्यावरागादयः, किं तर्हि ? अन्येषां मैथुनादिसमाचारदर्शनात्, परोपदेशाद्वा ? इत्याह—अन्यवृत्त्युपलम्भेनेत्यादि । अन्येषां वृत्ति = चरितमिति यावत् । १९५६ ॥

अदृष्टेत्यादिना तमेव व्यभिचारं दर्शयति । वृत्तान्तः = मैथुनादिसमुदाचार । सभागा = सदृशी गतिर्यासां वराहप्रभृतीनां तास्तथोच्यन्ते । ताभिः सह सम्पर्कं = समवधानम् । विक्रियेति विप्लुतिः । मैथुनसमुदाचार इति यावत् ॥ १९५७ ॥

अवश्यं चैतदेषितव्यम्—अभ्यासबलादेव रागादीनां स्वरसप्रवृत्तिरिति । तथा हि—ये प्रज्ञाशीलादय संसारानुचिताः = संसारे नाभ्यस्ताः, ते स्वरसेन = अयत्नेन न वर्तन्ते । मदादिवदिति वैधर्म्यदृष्टान्त । मदः = दर्प. । अन्यथा मदादिवत् प्रज्ञादीनामपि स्वरसेनैव[2] प्रवृत्तिः स्यात ॥ १९५८ ॥

येचिदाहु—"श्लेष्मणः सकाशाद्रागः, पित्ताद् द्वेषः, वातान्मोहः" इति, तत्राह—बलासादित्यादि । [G 549] तत्र बलासः = श्लेष्मा । पूर्ववदिति । यथा

1. बोधवदिति—पा॰, गा॰ । 2. स्वरसेन—पा॰, गा॰ ।

पूर्ववद् व्यभिचारस्य सर्वथाऽप्युपलम्भतः ॥ १९५९ ॥
तस्मादेते यदभ्यासपूर्वका आद्यभाविनः ।
स एवान्यभवः सिद्ध इति नास्तिकता[1] हता ॥ १९६० ॥

परकीयं चोद्यम्

इहत्याभ्यासपूर्वत्वे साध्ये दृष्टेष्टबाधनम् ।
भवान्तरीयहेतुत्वे साध्यशून्यं निदर्शनम् ॥ १९६१ ॥
अविशेषेण साध्ये तु हेतोरस्य विरुद्धता ।
तथैवान्यभवाभ्यासहेतुत्वविनिवर्तनात् ॥ १९६२ ॥

विषयेषु व्यभिचार उक्तः—"प्रतिसङ्ख्यानसद्भावे तद्भावेऽप्यतदुद्भवात्" ( तत्त्व० १९४९ ) इत्यादिना । किञ्च—श्लेष्माद्युपचयापचयाभ्यां न रागादीनामुपचयापचयौ भवतः । न च यद्भेदाद् यस्य भेदो न भवति तत्तस्य कार्यं युक्तम्; अतिप्रसङ्गात् । तथा श्लेष्मणोऽपि तीव्रद्वेषो दृष्टो न तु तीव्ररागः, पित्तप्रकृतेरपि तीव्ररागो दृष्टो न तीव्रद्वेषाविरिति साङ्कर्यं दृश्यते । न च यदन्तरेण यस्य भावः स तस्य हेतुर्युक्तः । यदवस्थो रागी दृष्टस्तदवस्थोऽपि द्वेषीत्यतोऽपि व्यभिचारान्न श्लेष्मादिधर्मा रागादयः ।

तस्मादित्युपसंहारः । यदभ्यासपूर्वका इति । यस्मिन्नभ्यासो यदभ्यासः, स पूर्वकं कारणं येषामिति विग्रहः ॥ १९५९–१९६० ॥

इहत्येत्यादिना परकीयं चोद्यमाशङ्कते । तत्रेदं चोद्यम्—ऐहलौकिकाभ्यासपूर्वत्वं वाऽऽद्यभाविना साध्यम्, पारलौकिकाभ्यासपूर्वत्वं वा, अविशेषेण वाऽभ्यासपूर्वत्वमात्रम्, तस्मिन् सिद्धे सामर्थ्यात् पारलौकिकाभ्यासपूर्वत्वमिष्टं सिद्धं भवति—इति पक्षत्रयम् । तत्र प्रथमे पक्षे दृष्टेष्टबाधनम् । न ह्याद्यभाविनां रागादीनामिहत्याभ्यासपूर्वकत्वं दृष्टम्, नापि चेष्टं परलोकवादिनेति दृष्टेष्टयोर्बाधनम् । द्वितीयेऽपि पक्षे साध्यविकलो दृष्टान्तः, न हि कश्चिल्लोकायतस्य पारलौकिकाभ्यासपूर्वत्वसमन्वितो दृष्टान्तोऽस्ति । तृतीयेऽपि पक्षे विरुद्धता हेतोः, तथैव = दृष्टान्तस्यैव; अन्यभवाभ्यासपूर्वत्वस्येष्टस्याभावसाधनात् ॥ १९६१-१९६२ ॥

1. नास्तिकता—पा०, गा० ।

तत्प्रतिविधानम्

सामान्येनैषु साध्यत्वे न च हेतोर्विरुद्धता ।
न हि तेन विरोधोऽस्य येन तद् विनिवर्तयेत् ॥ १९६३ ॥

## बहिरर्थपरीक्षा

'भूतान्येव न सन्ति' इति प्रतिज्ञाया परेण प्रत्यक्षविरोधापादनम्

यदि ज्ञानातिरेकेण नास्ति भूतचतुष्टयम् ।
तत् किमेतत्पृथु विच्छिन्नं विस्पष्टमवभासते ॥ १९६४ ॥

---

सामान्येनैवेत्यादिना प्रतिविधत्ते । [G 550] तृतीय एवात्र पक्षोऽभिप्रेतः । न च हेतोर्विरुद्धता, [1]यस्मात् न हि तेनान्यभवाभ्यासपूर्वत्वेनास्य रागादित्वस्य कश्चिद् विरोधोऽस्ति । येन तत्पारलौकिकाभ्यासपूर्वत्वं निवर्त्तयेत् ।

अपि च—अयं लोकः, परलोकः—इत्यवस्थाभेदकृत[2] व्यवस्थामात्रमेतत्[2], बाल्ययौवनादिभेदवत् । अनादित्वं त्वनेन प्रकारेण साध्यत इति नात्राभिनिवेष्टव्यम्[3] ॥ १९६३ ॥

इति लोकायतपरीक्षा ।

---

"प्रतिबिम्बादिसन्निभम्[4]" (तत्त्व० १) इत्येतत्प्रतीत्यसमुत्पादविशेषणसमर्थनार्थमिदानीं विज्ञानवादमुपक्षिपति[5] । तत्र "विज्ञप्तिमात्रमेवेदं त्रैधातुकम्, तच्च विज्ञानं प्रतिसत्त्वसन्तानमेवानन्तमविशुद्धं चानधिगततत्त्वानां विशुद्धं च प्रहीणावरणानां प्रतिक्षणविशरारु च सर्वप्राणभृतामुपजायते, न त्वेकमेवाविकारि, यथौपनिषदादीनाम्" इति विज्ञानवादिनां बौद्धानां मतम् । ताभ्यां प्रकाराभ्यां विज्ञप्तिमात्रताभीष्टा, बाह्यस्य पृथिव्यादिस्वभावस्य ग्राह्यस्याभावे ग्राहकत्वस्याप्य

---

1 कस्मात्—पा०, गा० । 2–2 ०कृतव्यवस्था०, पा०, गा० ।
3 इतोऽग्रे 'प्रतिबिम्बादिसन्निभमित्येतत्' इति व्यर्थं पाठो पा०, गा०पुस्तकयो ।
4. प्रतिबिम्बादिसन्निभमित्येतत्—पा०, गा० ।
5. विज्ञानवादमुपक्षिपति—पा०, गा० ।

तस्यैवं प्रतिभासेऽपि नास्तितोपगमे सति ।
चित्तस्यापि किमस्तित्वे प्रमाणं भवतां भवेत् ॥ १९६५ ॥

तत्प्रतिविधानम्

भासमानः किमात्माऽयं बाह्योऽर्थः प्रतिभासते ।
परमाणुस्वभावः किं किं वाऽवयविलक्षणः ? ॥ १९६६ ॥
न तावत् परमाणूनामाकारः प्रतिवेद्यते ।
निरंशानेकमूर्त्ताभप्रत्ययाप्रतिवेदनात्[1] ॥ १९६७ ॥

---

भावात् । सत्यपि वा सन्तानान्तरे ग्राह्यग्राहकलक्षणवैधुर्यात् । तत्र प्रयोगः—यद्यज्ज्ञानं तत्तत् ग्राह्यग्राहकत्वद्वयरहितम्; ज्ञानत्वात्, प्रतिबिम्बज्ञानवत् । ज्ञानं चेदं स्वस्यनेत्रादिविज्ञानं विवादास्पदीभूतमिति स्वभावहेतुः ।

न चाव्याप्तिरस्य हेतोर्मन्तव्या । तथा हि—न तावत् पृथिव्यादिर्बाह्योऽर्थोऽस्य ग्राह्यो विद्यते; तस्यैकानेकस्वभावशून्यत्वात् । प्रयोग.—यदेकानेकस्वभावं न भवति न तत्सत्त्वेन ग्राह्यं प्रेक्षावता, यथा व्योमोत्पलम् । एकानेकस्वभावरहिताश्च पराभिमताः पृथिव्यादय इति व्यापकानुपलब्धि. । तृतीयराश्यन्तराभावेनैकत्वानेकत्वाभ्यां सत्त्वस्य व्याप्तत्वाद् व्याप्यव्यापकभावानुपपत्तिर्विपर्यये बाधकं प्रमाणमिति नानैकान्तिकताऽनन्तरस्य हेतो' । नापि विरुद्धता, सपक्षे भावात् । अथास्य हेतोरसिद्धतामुद्भावयन्, यथोक्तम्—'भूतान्येव न सन्तीति न्यायोऽयं पर इष्यताम्' (तत्त्व० १८८७) इति । अस्याश्च प्रतिज्ञायाः प्रत्यक्षादिविरोधमादर्शयन्, प्रथमस्य हेतोरव्याप्तिमेव प्रतिपादयितुं पर आह—यदि ज्ञानातिरेकेणेत्यादि । [G 551] विच्छिन्नमित्यनेन ज्ञानाद् व्यतिरिक्तस्य भावस्य सिद्धिमादर्शयति । विस्पष्टमित्यनेन तु प्रत्यक्षताम् । एतदेव प्रसङ्गेन द्रढयन्नाह—तस्यैवमित्यादिना ॥१९६४-६५॥

भासमान इत्यादिना प्रतिविधत्ते । तत्र प्रत्यक्षसिद्धोऽर्थो बाह्यो भवन्नेको वा परमाणुतोऽभिन्नो भवेत्, एको वा तैरारब्धोऽवयवी, स्थूलोऽनारब्धो वा——इति पक्षा. । तत्र न तावदाद्य.; निरंशानामनेकेषामणूनां मूर्त्तानां ग्राहकस्य प्रत्ययस्याप्रतिवेदनात्, नित्यं स्थूलाकारस्यैव ज्ञानस्यानुभूयमानत्वात् ।

---

[1] ०मूर्त्तानां प्रत्यया०—पा० ।

व्यपेतभागभेदा हि भासेरन् परमाणवः ।
नान्यथाऽध्यक्षता तेषामात्माकारासमर्पणात् ॥ १९६८ ॥
साहित्येनापि जातास्ते स्वरूपेणैव भासिनः ।
त्यजन्त्यनंशरूपत्वं न चेत्[1] तासु[1] दशास्वमी ॥ १९६९ ॥
लब्धापचयपर्यन्त रूपं तेषां समस्ति चेत् ।
कथं नाम न ते मूर्त्ता भवेयुर्वेदनादिवत् ॥ १९७० ॥

[2]प्रद्वा—"प्रत्यये तेषामप्रतिवेदनात्" इति सप्तम्यन्तस्य पाठोऽसमस्त । प्रयोग —य प्रत्यक्षाभिमते प्रत्यये न प्रतिभासते स्वेनाकारेण, न स प्रत्यक्षत्वेन ग्रहीतव्य, यथा गगननलिनम् । न प्रतिभासते च प्रत्यक्षाभिमते प्रत्यये स्थूलाकारोपग्राहिणि परमाणुरनेको मूर्त इति व्यापकानुपलब्धि, आत्माकारप्रतिभासित्वेन प्रत्यक्षस्य व्याप्तत्वात् । तामेव व्याप्तिं प्रतिपादयन्नाह—व्यपेतेत्यादि ॥ १९६६–१९६८ ॥

अथापि स्यात्—'समुदिता एवोत्पद्यन्ते विनश्यन्ति च' इति सिद्धान्तान्नैकैकपरमाणुप्रतिभास " इति, यथोक्त भदन्तशुभगुप्तेन—

"प्रत्येक[3] न चाणूना[3] स्वातन्त्र्येणास्ति सम्भव ।
अतोऽपि परमाणूनामेकैकाप्रतिभासनम् ॥" ( ) इति ।

तदेतदनुत्तरमिति दर्शयन्नाह—साहित्येनापीति । तासु दशास्विति । सहितावस्थासु । किञ्च—यदि निरंशा परमाणव, 'न तर्हि [ C 552 ] मूर्ता इत्यभ्युपगन्तव्यम्' इति स्ववचनविरोध प्रतिज्ञायामाह—लब्धापचयेत्यादि । लब्धोऽपचयपर्यन्तो येन रूपेण = स्वभावेन, तत्तथोक्तम् । एतदुक्त भवति—यदपनीयमानावयवविभागेनापचीयमानस्वभावा न भवन्ति, यदि निरंशा इति यावत्, तदा न मूर्ता वेदनादिवत् सिद्ध्यन्ति, विशेषाभावात् ॥ १९६९-७० ॥

---

१–१ च तासु—गा० ।
२ पा०, गा० पुस्तकयोर्नास्ति ।
३–३. प्रत्येकपरमाणूना—पा०, गा० ।

भदन्तशुभगुप्तमतम्

तुल्यापरक्षणोत्पादाद् यथा नित्यत्वविभ्रमः ।
अविच्छिन्नसजातीयग्रहे चेत् स्थूलविभ्रमः ॥ १९७१ ॥

तत्प्रतिविधानम्

स्वव्यापारबलेनैव प्रत्यक्षं जनयेद् यदि ।
न परामर्शविज्ञानं कथं तेऽध्यक्षगोचरः ॥ १९७२ ॥
क्षणिका इति भावाश्च निश्चीयन्ते प्रमाणतः ।
क्षणवत्स्थिता गम्यन्ते कथं पीतसितादयः ॥ १९७३ ॥
सूक्ष्मप्रचयरूपं हि स्थूलत्वाद् बाह्यचाक्षुषम्[1] ।
पर्वतादिवदत्रापि समस्त्वेषाऽनुमेति चेत् ॥ १९७४ ॥
स्थूलत्वं वस्तुधर्मो हि सिद्धं धर्मिद्वयेऽपि न ।
न ह्यस्त्यवयवी स्थूलो नाणवश्च तथाविधाः ॥ १९७५ ॥

---

तुल्येत्यादिना भदन्तशुभगुप्तस्य परिहारमाशङ्कते । स ह्याह—"यथा सदृशापरापरक्षणोत्पादादविच्छिन्नस्य गृहीतेऽपि प्रत्यक्षेण शब्दादौ नित्यत्वविभ्रमः, तथा परमाणूनामविच्छिन्नदेशानां सजातीयानां युगपद्ग्रहणे स्थूल इति मानसो विभ्रमो भवति । ततश्च 'निरंशानेकमूर्तानां प्रत्ययाप्रतिवेदनात्' (तत्त्व० १९६७) इत्यसिद्धो हेतुः" इति ॥ १९७१ ॥

स्वव्यापारेत्यादिना दूषणमाह—स्वव्यापारबलेनैवेति । [G 553] विकल्पागमव्यापारानपेक्षमित्यवधारणेन[2] दर्शयति । तथा हि—प्रत्यक्षमविशेषेणोत्पन्नमपि सद् यत्रैवांशे यथा परिगृहीताकारपरामर्शं जनयति, स एव प्रत्यक्ष इष्यते व्यवहारयोग्यतया, यत्र तु न जनयति तद्गृहीतमप्यगृहीतप्रख्यम् । ततश्च नासिद्धो हेतुः; यतः प्रत्ययाप्रतिवेदनादित्ययं प्रत्यक्षाभिमते प्रत्यये परामर्शहेत्वप्रतिभासनादित्ययमर्थोऽभिप्रेतः । यच्चोक्तम्—"स्थूल इति मानस एष विभ्रमः" इति, तदप्यसम्यक्; तथा हि—प्रमाणेनाणौ सिद्धे सति स्याद्विभ्रमव्यवस्था । यथा क्षणिकत्वस्य प्रमाणेन सिद्धत्वान्नित्यत्वग्रहो भ्रान्तो व्यवस्थाप्यते, न च तथा

---

१. बाह्यचाक्षुषम्—पा०, पा० ।    २. ०व्यापारेन—पा० ।

अथ देशवितानेन स्थितरूपं तयोदितम् ।
तथापि भ्रान्तविज्ञानभासिरूपेण संशयः ॥ १९७६ ॥
वैतथ्यात् स तथा नो चेद् व्यतिरेकेऽप्रसाधिते ।
तस्मादतिशयः कोऽस्य कार्यसंवादनं यदि ॥ १९७७ ॥
कार्यावभासिविज्ञानसंवादेऽपि [1]न तूच्यते[1] ।

प्रमाणेन परमाणव सिद्धाः; तेषामेव विचार्यमाणत्वात् । न चेयं स्थूलभ्रान्तिर्मानसी, स्पष्टप्रतिभासनात् । न च विकल्पानुबद्धस्य स्पष्टाकारो युक्तः; सामान्याकारस्यास्पष्टत्वात् । न च सामान्याकारमन्तरेण विकल्पो युक्तः ।

स्यादेतत्—अनित्यतादिवदणवोऽपि सिद्धा एव प्रमाणतः । तथा हि—यद्यत् स्थूलं तत्तत् सूक्ष्मप्रचयात्मकम्, यथा पर्वतादयः । स्थूलं च [2]बाह्यचाक्षुषमवयविद्रव्यमिति स्वभावहेतुः । चाक्षुषग्रहणमचाक्षुषस्य द्व्यणुकादेर्व्यवच्छेदाय । तत्र यदि स्थूलत्वादिति पारमार्थिकं स्थूलत्वं च वस्तुधर्ममाश्रित्योच्यते हेतुः, तदा साध्यधर्मिणि दृष्टान्तधर्मिणि च धर्मिद्वयेऽपि प्रतिवादिनो न सिद्धं स्थूलत्वमिति ? तदा हेतुरसिद्धो दृष्टान्तश्च साधनविकलः ।

अथ यदेतद्देशवितानेन प्रतिभासमानमविचाररमणीयमाभोगोपादि प्रसिद्धं रूपं स्थूलत्वादिरुच्यते, तदा भ्रान्तेऽपि स्वप्नादिज्ञाने परमाणुप्रचयमन्तरेणापि तथा प्रतिभासि रूपमस्तीति हेतोरनैकान्तिकता ।

अथ 'अभ्रान्तत्वे सति' इति विशेषणमुपादीयते तदा विज्ञानवादिनं प्रति स्वस्थनेत्रादिज्ञानाकारस्य यावत् स्वप्नादिज्ञानाकाराद् व्यतिरेको विशेषो न प्रसाध्यते, तावन्न क्वचिदभ्रान्तत्वं सिद्धमिति विशेषणमप्यसिद्धम् ।

स्यादेतद्—अस्त्येव स्वस्थनेत्रादिज्ञानस्य स्वप्नादिज्ञानादर्थक्रियासंवादेन विशेष इति ? तत्र कोऽयमर्थक्रियासंवादो नाम ? यदि बाह्यार्थप्राप्तिः, सा न सिद्धा; बाह्यार्थसिद्धेस्तस्यैव साध्यत्वेन प्रस्तुतत्वात् ।

अथाभिमतार्थक्रियावभासि ज्ञानमेवार्थक्रियासंवादः, तदायमन्यथाऽपि बाह्यार्थ-

१-१ ननूच्यते—पा०, गा० ।
२ आयचाक्षुष०—पा०, गा० ।

सामर्थ्यनियमाद्धेतोः स च सम्भाव्यतेऽन्यथा ॥ १९७८ ॥

सुमतिदिगम्बरमतम्

तुल्यं रूपं यदा ग्राह्यमतुल्यं नैव गृह्यते ।
अणूनां द्वयस्त्यत्वे तदा किं नोपपद्यते ॥ १९७९ ॥
तत्सामान्यविशेषात्मरूपत्वात् सर्ववस्तुनः ।
तुल्यातुल्यस्वरूपत्वाद् द्विरूपा अणवः स्मृताः ॥ १९८० ॥
समानं तत्र यद्रूपं तदक्षज्ञानगोचरम् ।
एकाकारमतो ज्ञानमणुष्वेवोपपद्यते ॥ १९८१ ॥
असमानं तु तद्रूपं योगिप्रत्यक्षमिष्यते ।
इति दुर्मतयः केचित् कल्पयन्ति समाकुलम् ॥ १९८२ ॥

तत्प्रतिविधानम्

द्वे हि रूपे कथं नाम युक्ते एकस्य वस्तुनः ।
द्वे तदा वस्तुनी प्राप्ते अपरस्परस्पतः ॥ १९८३ ॥

---

त्स्यनमन्तरेणापि सम्भाव्यत इति तथा हेतोरनैकान्तिकत्वैव । कथमन्यथापि सम्भाव्यते ! इत्याह—सामर्थ्यनियमाद्धेतोरिति । हेतोः समनन्तरप्रत्ययस्य सामर्थ्यमिदंनियमात् । कश्चिदेव हि समनन्तरप्रत्ययः किञ्चिद् विज्ञानं जनयितुं समर्थः, न सर्वः सर्वम्, यथा भवता बाह्योऽर्थ इति तत्र एव नियमः सिद्धः ॥ १९७२–१९७८ ॥

[G 553] तुल्यमित्यादिना सुमतेर्दिगम्बरस्य मतेन 'अप्रतिवेदनात्' इत्यस्य हेतोरसिद्धतामुद्भावयति । स ह्येवमाह—"सामान्यविशेषात्मत्वात् सर्वपदार्थानां तुल्यातुल्यरूपेण द्विरूपाः परमाणवः । तत्र समानं यद्रूपं तदिन्द्रियैर्गृह्यते, नासमानम् । तत्श्चैकाकारं विज्ञानमणुष्वविरुद्धमिति प्रत्यक्षसिद्धाः परमाणवः" इति । समाकुलमिति अप्रतिष्ठम्; एकस्यापि रूपस्य प्रतिनिश्चितस्याभावात् ॥ १९७९–१९८२ ॥

ननु च द्विरूपं वस्त्विति निश्चितरूपमुक्तमेव ! सत्यमुक्तम्, अयुक्तं तूक्तमिति दर्शयन्नाह—द्वे हीत्यादि । तथा हि—द्वाभ्यां रूपाभ्यां वस्तुतोऽन्या-

परस्परात्मतायां तु तद् द्वैरूप्यं विरुध्यते ।
विशेषश्चोपलभ्येत चक्षुरादिभिरिन्द्रियैः ॥ १९८४ ॥
परस्परविरुद्धात्मनेकं[1] रूपं[1] कथं भवेत् ।

कुमारिलमतम्

संवित्तेश्च विरुद्धानामेकस्मिन्नाप्यसम्भवः ॥ १९८५ ॥
एकाकारं भवेदेकमिति नेश्वरभाषितम् ।
तथा हि तदुपेतव्यं यद् यथैवोपलभ्यते ॥ १९८६ ॥

तत्खण्डनम्

तत्रासतोऽपि संवित्तेः कम्बुपीतादिरूपवत् ।

---

न्यत्वाद् द्वे एव वस्तुनी प्राप्ते; रूपद्वयस्यैव केवलस्यापरापरस्य[2] भावात्[2], तत्र नैकस्य द्विरूपत्वमुक्तम् । एकस्माद्वा वस्तुनो रूपद्वयस्याव्यतिरेकादेकवस्तुस्वरूपवद् रूपद्वयस्य परस्परात्मकत्वैवेति कथमेकं द्विरूपं स्यात् ! किञ्च—सामान्यरूपाव्यतिरेकाद् विशेषरूपस्योपलम्भप्रसङ्गः । ततश्चेयमसङ्कीर्णा व्यवस्था न प्राप्नोति—'समानं रूपमक्षज्ञानगोचरोऽसमानं तु योगिप्रत्यक्षमिष्यते' इति ॥१९८३-८४॥

किञ्च—एकं द्विरूपमिति न केवलमेतत् परस्परव्याहतम्, इदं ... व्याहततरं यत् परस्परविरुद्धरूपद्वयात्मकमिति दर्शयति—परस्परेत्यादि [ G, 555 ] तथा हि—तुल्यातुल्ये रूपे परस्परपरिहारस्थितलक्षणे, तत् कथ... तदात्मकमेकं भवेत् !

संवित्तेश्चेत्यादिना कुमारिलमतमाशङ्कते । स ह्याह—"एकस्मिन् वस्तुनि परस्परविरुद्धानामाकाराणामसम्भव इत्येतन्नास्ति । कस्मात् ? संवित्तेः कारणात् । तथा हि—एकाकारेणैवैकेन वस्तुना भवितव्यमिति नेश्वराज्ञा राज्ञाम्, किन्तु यथा यथोपलभ्यते, तथैवाभ्युपगन्तव्यम्; प्रतीतिनिबन्धनत्वाद् वस्तुव्यवस्थायाः । एकानेकाकारा च सत्तारूपादिभेदतः प्रतीतिर्भवन्ती समुपलभ्यते । तस्मात् तथैव व्यवस्थाप्यते" इति ॥ १९८५-१९८६ ॥

तत्रेत्यादिना प्रतिविधत्ते । एवं सति न किञ्चिद् विज्ञानं भ्रान्तं स्याद् ।

---

1-1 °नैकरूप—पा°, गा° । 2-2. ° परस्वभावात्—गा° ।

विरुद्धधर्मसङ्गात् तु नान्यद् भेदस्य लक्षणम् ॥ १९८७ ॥

शङ्का

मा भूत् प्रमाणतः सिद्धिरणूनामस्तु संशयः ।
अभावनिश्चयस्त्वेषां[1] कथं प्रेक्षावतां भवेत् ? ॥ १९८८ ॥

समाधानम्

संयुक्तं[2] दूरदेशस्थं नैरन्तर्यव्यवस्थितम् ।
एकाण्वभिमुखं रूपं यदणोर्मध्यवर्त्तिनः ॥ १९८९ ॥

भेदव्यवहारोच्छेदप्रसङ्गश्च । अथ बाध्यमानत्वात् कस्यचिद् भ्रान्तत्वं स्यात् ? तदैकस्मिन्ननेकविज्ञानं बाध्यमानं कथमभ्रान्तं भवेत् । एवं तावदणूनां न प्रत्यक्षतः, नाप्यनुमानतः[3] सिद्धिरिति[3] न बाह्यार्थापह्नवे प्रत्यक्षविरोधः प्रतिज्ञायाः । नापि हेतोरसिद्धता ॥ १९८७ ॥

इदानीं परः 'एकानेकस्वभावरहितत्वात्' इत्यस्य हेतोः सन्दिग्धासिद्धतामुद्भावयन्नाह—मा भूदित्यादि ॥ १९८८ ॥

संयुक्तमित्यादिना प्रतिविधत्ते । [G 556] प्रयोगः—यदेकानेकस्वभावरहितं तदसद्व्यवहारयोग्यम्, यथा वियदब्जम् । एकानेकस्वभावरहिताश्च पराभिमताः परमाणव इति स्वभावहेतुः । न चासिद्धो हेतुरिति मन्तव्यम् । तथा हि—एकत्वं तावदणूनामसिद्धम्; भूधरादिप्रचितरूपाणां दिग्भागभेदस्य विद्यमानत्वात् । तमेव दिग्भागभेदं भूधराद्युपचयान्यथानुपपत्त्या परमाणूनां प्रसञ्जयन्नेकत्वनिषेधं तावदाह—संयुक्तं दूरदेशस्थमित्यादि ।

तत्र केचिदाहुः—परस्परं संयुज्यन्ते परमाणव इति, सान्तरा एव नित्यं न स्पृशन्तीत्यपरे, निरन्तरत्वे तु स्पृष्टसंज्ञेत्यन्ये । तदेतस्मिन् पक्षत्रयेऽपि मध्यवर्तिनः परमाणोर्बहुभिः परिवारितस्य यदि दिग्भागभेदो न स्यात्, तदा चितचैत्यादिकलापस्येव प्रचयो न स्यात्; अनंशत्वात् । तथा हि—येनैकरूपेणैकाण्वभिमुखो मध्यवर्त्ती परमाणुस्तेनैवापरपरमाण्वभिमुखो यदि स्यात्, तदा परिवारका-

1. अभावस्तेषां—पा० ।    2. पा० पुस्तके नास्ति ।
3-3. नाप्यनुमानसिद्धिरिति—पा० ।

अण्वन्तराभिमुख्येन तदेव यदि कल्प्यते ।
प्रचयो भूधरादीनामेवं सति न युज्यते ॥ १९९० ॥

णामणूनामेकदेशत्वप्रसङ्गात् प्रचयो न स्यात् । प्रयोगः—यदेकरूपपरमाण्वभिमुखस्वभावं[1] भवेत्, तदेकदेशम्, यथा तस्यैव पूर्वदेशस्थितः परमाणुः, एकप्रासादाभिमुखपूर्वप्रासादवद्वा[2] । एकरूपपरमाण्वभिमुखस्वभावाश्च सर्वे परिवार्यविस्थिताः परमाणव इति स्वभावहेतुः । अतः प्रचयो न स्यात् । अथान्येन रूपेणाभिमुखः ? तदा दिग्भागभेदस्य विद्यमानत्वात् घटिकादिवदेकत्वं[3] न प्राप्नोति ।

भदन्तशुभगुप्तस्तु प्राह—"यथैकस्वभावस्यासदद्रव्याविद्यावृतस्यानेकं सामान्यं न तत्त्वेन कल्प्यते, एवमिहापि परमाणूनामनेकवर्त्तित्वादनेकत्वं कल्प्यते, न भूतार्थेन । तथा हि—न दिक्पदार्थो नामास्ति कणादादिकल्पितः, तस्यैकस्वरूपत्वादनेकरूपः पूर्वादिप्रत्ययो न स्यात् । केवलमणव एव पौर्वापर्येणावस्थिता दिक्छब्दवाच्याः, ततश्च दिग्भागभेदवत्त्वादिति केवलं बहुभिः परिवारणमेवोक्तं स्यात्, न सावयवत्वम्" (      ) इति, तदेतदसम्यक्; तथा हि—निरवयवत्वाच्चित्तस्येवाणूनां परमार्थतो नोर्ध्वाधोभागाः सन्तीति बहुभिः परिवारणमेव न स्यात्, चित्तचैतसिकादिवत्[4] । ततश्च परिवारकाणामणूनां परमार्थेनाभावात् कथं तद्द्वारेणानेकमध्यवर्त्तित्वम्, येनानेकत्वं देशकृतं कल्प्येत । अथासत्यपि परमार्थत ऊर्ध्वाधोभागवत्त्वे बहुभिः परिवारणं स्यात्, तर्हि चित्तचैत्तानामपि स्यात् । ततश्च परमाणुवच्चित्तादीनामपि देशस्थत्वं स्यात् । नो चेत्, परमाणूनामपि न स्यात् । ततश्च प्रचयो न स्याच्चित्तादिवदित्यनैकान्तः ।

स्यादेतत्—यथा वर्त्तमानचित्तक्षणस्यातीतानागताभ्यां[5] [G 557] चित्तक्षणाभ्यां[6] कालकृतनैरन्तर्यमस्ति, अथ च न[7] वर्त्तमानचित्तक्षणस्य कलामुहूर्त्तादिवत्[8] सावयवत्वम्; एवमणूनां सत्यपि बहुभिः परिवारणे न देशकृतं

1. ॰स्वरूप—पा॰, गा॰ । 2. ॰प्रासादवच्च—पा॰, गा॰ ।
3. घटादिवत्त्वं—पा॰, गा॰ । 4. चित्तचैत्तादिवत्—पा॰, गा॰ ।
5. ॰चित्तक्षण॰—पा॰, गा॰ । 6. चित्तलक्षणाभ्या—पा॰ गा॰ ।
7. पा॰, गा॰ पुस्तकयोर्नास्ति । 8. न कलादिमुहूर्त्तवत्—गा॰ ।

अण्वन्तराभिमुख्येन रूपं चेदन्यदिष्यते ।
कथं नाम भवेदेकः परमाणुस्तथा सति ॥ १९९१ ॥

---

सावयवत्वं भविष्यति ? तदेतदसम्यक्; न हि वर्त्तमानचित्तक्षणस्य[1] पूर्वोत्तराभ्यां नैरन्तर्यं परमार्थतोऽस्ति; तदानीं तयोरसत्त्वात् । न चासता सह पौर्वापर्यं वास्तविकं युक्तम्; केवलं सहभूतयोर्न कार्यकारणभावोऽस्तीति तद्द्वारेण परिकल्प्य समुत्पादितं पूर्वापरयोः क्षणयोः सत्त्वं प्राक् पश्चादभाववत् । न चैवमणूनां देशकृतं पौर्वापर्यं परिकल्पितम्; प्रचयाभावप्रसङ्गात् । किञ्च—न तावदहेतुकत्वं भावानां युक्तिमत्; नित्यं सत्त्वादिप्रसङ्गादिति योऽपि सांवृतत्वं भावानां प्रतिपन्नः, तेनाप्यवश्यं सर्वभावानां सहेतुकत्वमेष्टव्यम् । सति च सहेतुकत्वे न तावत् समकाले कार्यकारणे युक्ते । नापि प्राक्कार्योत्पत्तेः, कारणस्यासत्त्वेनासामर्थ्यात् । पश्चादपि कार्ये समुत्पन्ने; हेतोरनुपयोगात् । अतः प्राग्भावः सर्वहेतूनामवश्यमङ्गीकर्तव्यः । यथोक्तम् —

"असतः प्रागसामर्थ्यात् पश्चाच्चानुपयोगतः ।
प्राग्भावः सर्वहेतूनां नातोऽर्थः स्वधिया सह" ॥

( प्र० वा० २.२४६ ) इति ।

तदेवं निरंशत्वेऽपि सर्वभावानां न्यायतोऽवस्थितं कालकृतं पौर्वापर्यम्, देशकृतं तु कथं स्याद्यदि सावयवत्वं न स्यात् ?—इति चोच्यते । अथासत्यपि सावयवत्वे देशकृतं पौर्वापर्यं स्यात्, चित्तचैत्तानामपि स्यादविशेषादित्युक्तम् । मूर्त्तत्वकृतोऽस्ति विशेष इति चेत् ? न; तदेवासिद्धमसति सावयवत्वे । केवलं पर्यायेण सावयवत्वमेवोक्तं स्यात्, नान्यो विशेष इति यत्किञ्चिदेतत् । तस्मात् सर्वभावानां न्याय्ये कालकृते पौर्वापर्ये सति यदेतदपरमधिकं कस्यचिद् देशकृतं पौर्वापर्यं तत् सावयवत्वमन्तरेण न सम्भवतीति युक्तमुक्तम्— "दिग्भागभेदो यस्यास्ति तस्यैकत्वं न युज्यते" (       ) इत्यलं विस्तरेण ॥ १९८९-१९९१ ॥

---

१. वर्तमानचित्तक्षणस्य—जै० ।

बाह्यार्थस्यानेकस्वभावरहितत्वम्

अपेतभागभेदश्च यः परैरणुरिष्यते ।
तत्रैवेयं कृता चिन्ता नानिष्टासम्भवस्ततः ॥ १९९२ ॥
भागानां परमाणुत्वमङ्गीकुर्वन्ति ते यदा ।
स्वप्रतिज्ञाच्युतिस्तेषां तदाऽवश्यं प्रसज्यते ॥ १९९३ ॥
प्रसङ्गसाधनत्वेन नाश्रयासिद्धतेह च ।
पराभ्युपेतयोगाद्विफलावैषम्यं ह्यपोह्यते ॥ १९९४ ॥
तदेवं सर्वपक्षेषु नैवैकात्मा स युज्यते ।
एकानिष्पत्तितोऽनेकस्वभावोऽपि न सम्भवी ॥ १९९५ ॥

---

अत्र केचिदाहु—"ते[1] एव[1] तदणीयांसः प्रदेशाः सन्तु परमाणवः, तत्राप्यवयवकल्पनायां पुनरपि प्रदेशानामेवाणुत्वं भविष्यति, यदि परमनवस्थैव, न तु पुनः सावयवत्वप्रसङ्गेन शक्यतेऽणूनां प्रज्ञप्तिसत्त्वमापादयितुम् । अथापि प्रज्ञप्तिसत्त्वम् ? एवमपि नियमेनैव प्रज्ञप्त्युपादानमङ्गीकर्तव्यम् । यच्च प्रज्ञप्त्युपादानं तस्यैव परमाणुत्वं भविष्यति । अथासत्त्वमेवाणूनां साध्यते ? एवमपि दिग्भागभेदादित्यसिद्धत्वं हेतोः । न हि खरविषाणादयोऽत्यन्तासन्तः पूर्वादिदिग्भागभेदवन्तो भवन्ति । नापीदं प्रसङ्गसाधनं दिग्भागभेदस्यानभ्युपगतत्वात्" इति ।

अत्र प्रतिविधानमाह—अपेतेत्यादि । [G 558] अवश्यं हि परिनिष्ठितरूपं किञ्चिद् वस्तु परमाणुत्वेन तद्वादिनाऽङ्गीकर्तव्यम्; अन्यथा ह्यनवस्थायामनवधारितरूपत्वादनुपलभ्यत्वमेव स्वयं प्रतिपादितं स्यात् । ततश्चेष्टसिद्धिरेव परस्य कृता स्यात् । तस्माद् यदेव परिनिष्ठितं त्वया व्यवस्थापितमणुत्वेन, तत्रैवाभ्युपेतानवस्थाविकल्पे यदा चिन्ता क्रियते तदा कथमनवस्था स्याद्, यदि परमनवस्थया स्वाभ्युपगमविरोधः कृतः स्यात् । न तु परस्य किञ्चिदनिष्टमापादितम् । एतावतैव हि[2] परस्येष्टसिद्धेः प्रसङ्गसाधनमेवेदम् । न चासिद्धता हेतोः । तथा हि—परेण परमाणूनां संयुक्तत्वं नैरन्तर्यं तथा बहुभिः सान्तरैः परिवारणं

---

१-१. एव—पा०, गा० ।　　२. पा० गा० पुस्तकयोर्नास्ति ।

असन्निश्चययोगोऽतः परमाणुविपश्चिताम् ।
एकानेकस्वभावेन शून्यत्वाद् वियदब्जवत् ॥ १९९६ ॥

वाह्यार्थस्यैकस्वभावरहितत्वम्

परमाणोरयोगाच्च न सन्त्यवयवी यतः ।
परमाणुभिरारब्धः स परैरुपगम्यते ॥ १९९७ ॥

वैरभ्युपगतम्; अन्यथा कथं प्रचयो[1] भवेत् । तत्र यद्यपि दिग्भागभेदो वाचाऽनभ्युपगतः, तथापि संयुक्तत्वादिधर्माभ्युपगमबलादेवापतति । न ह्यसत्यूर्ध्वाधोभागादिदिग्भागभेदे[2] संयुक्तत्वादिपक्षत्रयं युक्तं चित्यादिवदित्युक्तम् ।

यच्चोक्तम्—"अणुप्रज्ञप्तेरवश्यमुपादानमङ्गीकर्तव्यम्, यदुपादानं स एव परमाणुर्भविष्यति" इति, तदत्राप्यस्त्येव मिथ्याशास्त्रश्रवणचिन्तनाहितवासनापरिपाको धातायनादिरेणुप्रतिभासा बुद्धिरणुभ्रान्तेर्निबन्धनम् । न हि परमाण्वप्राप्त्यां[3] च तदेव कारणं युक्तम्; अणुप्रज्ञप्तिसत्त्वप्रसङ्गात्, अन्यथाऽऽत्मप्रज्ञप्तेरात्मैव कारणं स्यात्, न स्कन्धाः । ततश्चाणुवदात्मप्रतिषेधोऽपि न स्यात् । एवं तावदेकत्वं परमाणूनामसिद्धम् । तदसिद्धौ[4] नाप्यनेकत्वं सिद्धम्[4], तत्सन्दोहात्मकत्वात् तस्येति नासिद्धोऽणूनामभावव्यवहारे साधनो हेतुः ॥ १९९२-१९९६ ॥

एवं तावद् बाह्यार्थस्यानेकस्वभावरहितत्वं प्रसाध्य, इदानीमेकस्वभावरहितत्वं प्रसाधयन्नाह—**परमाणोरयोगाच्चेत्यादि** । [G 559] यैरप्यनारब्धः परमाणुभिस्स्थूल इष्टः, तेषां सोऽपि परमाणुवद्दिग्भागभिन्नत्वादेको न युक्तः; पाण्यादिकम्पादौ सर्वकम्पादिप्रसङ्गात् । स्पष्टत्वाद् बहुशश्चर्चितत्वाच्च पृथक् तस्य दूषणमुक्तम् । तदेवं बाह्यार्थाभावव्यवहारसाधने[5] यदेकानेकस्वभावं न भवतीत्यादौ प्रयोगे नासिद्धो हेतुरिति सिद्धो बाह्यस्य = पृथिव्यादेरर्थस्यासद्व्यवहारः । तदसिद्धौ ग्राहकत्वमपि ज्ञानस्य तदपेक्ष कल्पितं नास्तीति सिद्धा विज्ञप्तिमात्रता ॥१९९७॥

१. च प्रत्ययो—पा०, गा० । २. ०धोभागादिभेदे—पा०, गा० ।
३. तत्प्रकल्प्या—गा० ।
४–४. पा०, गा० पुस्तकयोर्नास्ति ।
५. बाह्यार्थाभावव्यवहार०—पा०, गा० ।

ग्राह्यग्राहकलक्षणवैधुर्यसमर्थनम्

अनिर्भासं सनिर्भासमन्यनिर्भासमेव च ।
विजानाति न च ज्ञानं बाह्यमर्थं कथञ्चन ॥ १९९८ ॥
विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते ।
इयमेवात्मसंवित्तिरस्य याऽजडरूपता ॥ १९९९ ॥
क्रियाकारकभावेन न स्वसंवित्तिरस्य तु ।
एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तितः ॥ २००० ॥
तदस्य बोधरूपत्वाद् युक्तं तावत् स्ववेदनम् ।
परस्य त्वर्थरूपस्य तेन संवेदनं कथम् ॥ २००१ ॥
न हि तद्रूपमन्यस्य येन तद्वेदने परम् ।

---

सहोपलम्भनियमादर्थायोगाद् विज्ञप्तिमात्रता प्रतिपाद्य, सम्प्रति ग्राह्यग्राहकलक्षणवैधुर्यात् प्रतिपादयन्नाह—अनिर्भासमित्यादि । न निराकारेण, नापि साकारेण, नापि विषयाकारादन्याकारेण बाह्यस्य ग्रहणं युक्तम्, अन्यश्च प्रकारो नास्ति, तस्मादात्मसंवेदनमेव सदैव ज्ञानं सत्यपि बाह्ये सन्तानान्तरे इति सिद्धयति विज्ञप्तिमात्रता ।

केचिदन्याकारमपि ज्ञानमन्याकारस्यार्थस्य संवेदकमिच्छन्ति, यथा किल पीताकारमपि ज्ञानं शुक्लशङ्खग्राहीति । यथाह कुमारिलः—

"सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् ।
जन्मन्येकत्र भिन्ने वा सदा कालान्तरेऽपि च ॥" ( श्लो. वा., निरा. १०८ )

इत्यतस्तृतीयः पक्षान्तरमाशङ्कितम् ॥ १९९८ ॥

ननु चात्मसंवेदनेऽप्येतेऽनिर्भासादयो विकल्पाः कस्मान्नावतरन्ति ? इत्याह—विज्ञानमित्यादि । न हि ग्राहकभावेनात्मसंवेदनमभिप्रेतम्, किं तर्हि ? स्वयम् = प्रकृत्या प्रकाशात्मतया, नभस्तलवर्त्यालोकवत् ॥ १९९९ ॥

अथ कस्माद् ग्राह्यग्राहकभावेन नेष्यते ? इत्याह—क्रियाकारकभावेनेत्यादि । [G 560] त्रैरूप्यम्—वेद्यवेदकवित्तिभेदेन ॥ २०००-२००१ ॥

भवतु नामात्मसंवित्तिः, तद्वत् परस्यापि आत्मसंवित्तिवद्वेदनं ग्राह्यग्राहकभावेन संवित्तिर्भविष्यति ? इत्याह—न हि तद्रूपमित्यादि । यथाप्यसदादिव्यावृत्त्या सदादिरूपमेक

संवेद्येत विभिन्नत्वाद् भावानां परमार्थतः ॥ २००२ ॥
बोधरूपतयोत्पत्तेर्ज्ञानं वेद्यं हि युज्यते ।
न त्वर्थो बोध उत्पन्नस्तदसौ वेद्यते कथम् ॥ २००३ ॥
निर्भासिज्ञानपक्षे तु तयोर्भेदेऽपि तत्त्वतः ।
प्रतिबिम्बस्य ताद्रूप्याद् भाक्तं स्यादपि वेदनम् ॥ २००४ ॥
येन त्विष्टं न विज्ञानमर्थाकारोपरागवत् ।
तस्यायमपि नैवास्ति प्रकारो बाह्यवेदने ॥ २००५ ॥
स्यान्मतिः—दन्तिदाह्यादेर्यथाऽसिज्वलनादयः ।
अताद्रूप्येऽपि कुर्वन्ति छेददाहाद्यदस्तथा ? ॥ २००६ ॥
तदिदं विषमं यस्मात् ते तयोत्पत्तिहेतवः ।

---

भावेषु कल्प्यते, तथापि तस्य प्रतिपादनार्थम्, परमार्थतो भेदादेकत्वं नास्त्येव, इत्याह—परमार्थत इति ॥ २००२ ॥

स्यादेतद्—यदि नाम भिन्नो बाह्योऽर्थो ज्ञानात्, तथापि वेद्यो भविष्यति ज्ञानवदित्याह—बोधरूपतयेत्यादि ॥ २००३ ॥

एवं स्वसंवेदनं प्रसाध्य, बाह्यस्येदानीं यथा निराकारेण ज्ञानेन वेदनमयुक्तं तथा[1] प्रतिपादयन्नाह—निर्भासीत्यादि । प्रतिबिम्बस्येति ज्ञानाकारस्य । ताद्रूप्यादिति अर्थसारूप्यात्[2] । भाक्तमिति अमुख्यम् । अयमपीति अमुख्यः, ताद्रूप्यादुपकल्पितः ॥ २००४-२००५ ॥

यथापि स्याद्—यथा खड्गो हस्त्यादिकं छिनत्ति, यथा वा वह्निर्दारुं दहति, न चैते खड्गादयो हस्त्यादिरूपाः, तथा ज्ञानमप्रतिपन्नविषयाकारमपि विषयं परिच्छेत्स्यतीति, एतत् स्यान्मतिरित्यादिना शङ्कते । छेददाहादीत्येतदपेक्ष्य दन्तिदाह्यादेरिति षष्ठी । अद इति तज्ज्ञानम् । आदिशब्देन प्रदीपादयो नीलादीनां यथाप्रकाशका इत्यादि गृह्यते ॥ २००६ ॥

तदिदमित्यादिनोत्तरमाह । [G. 561] खड्गादयो हि हस्त्यादीनामुत्प-

---

1. तथापि—जै० । 2. सारूप्यात्—पा०, गा० ।

सन्तस्तथाविधाः सिद्धा न ज्ञानं जनकं तथा ॥ २००७ ॥

भदन्तशुभगुप्तमतम्

तत्परिच्छेदरूपत्वं विज्ञानस्योपपद्यते ।
ज्ञानरूपः परिच्छेदो यदि ग्राह्यस्य सम्भवेत् ॥ २००८ ॥
अन्यथा तु परिच्छेदरूपं ज्ञानमिति स्फुटम् ।

---

दृष्टा एव सन्तो दाहकादित्वेन प्रसिद्धाः, तथा हि—खड्गादिधाराभिघाते विशिष्ट-सन्ततयो गन्धरससमुपजायन्ते, तथा वह्निसम्पर्कादिन्धनमङ्गारादिरूपम्, एवं घटादयोऽप्यालोकवशाज्ज्ञानजननयोग्या भवन्ति, न त्वेवं ज्ञानेन विषयस्य कश्चिदुपकारः क्रियते, किन्तु विपर्ययेणैव विज्ञानं [1]विशिष्टमुपजन्यत इति कथमकिञ्चित्करं तस्य वेदकं भवेत् । न च तत्कार्यत्वमेव तद्वेदकत्वं विज्ञानस्येति युक्तं कल्पयितुम्, मा भूच्चक्षुरादिवेदकत्वमप्यस्येति ॥ २००७ ॥

भदन्तशुभगुप्तस्त्वाह— "विज्ञानमनापन्नविषयाकारमपि विषयं प्रतिपद्यते, तत्परिच्छेदरूपत्वात्, तस्मान्नाशङ्का कर्तव्या—कथं परिच्छिनत्ति, किंवत् परि-च्छिनत्ति" इति । आह च —

"कथं तद् ग्राहकं तच्चेत्तत्परिच्छेदलक्षणम् ।
विज्ञानं तेन नाशङ्का कथं तत्किंवदित्यपि" ॥ ( ) इति ।

तदत्राह—तत्परिच्छेदेत्यादि । सिद्धे हि व्यतिरिक्तार्थपरिच्छेदात्मकत्वे सति सर्वमेतत् स्यात्, तदेव तु न सिद्धम् । तथा हि—न ज्ञानं सत्तामात्रेण परिच्छिनत्ति, सर्वपरिच्छेदप्रसङ्गात् । नापि तत्कार्यतया, चक्षुरादेरपि परिच्छेदा-पत्तेः । न च साकारतेष्टा, येन तादूप्यात् [2]ग्राहकं भवेत् तत्संवेदकम् । तस्माद् ग्राह्यस्य यः परिच्छेदः स यदि ज्ञानरूपो भवेत्, एवं ज्ञानस्यार्थपरिच्छेदरूपत्वं भवेत्, अन्यथा कथमर्थपरिच्छेदरूपत्वं ज्ञानस्येति स्पष्टमभिधीयते । ततश्चार्थस्य परिच्छेदाद् व्यतिरेकात्तु ज्ञानात्मतैव जातेति सिद्धा विज्ञप्तिमात्रता ।

१ विशिष्ट॰—पा॰, गा॰ ।
२–२. द्विमकत्व—पा॰, गा॰ ।

वक्तव्यं न च निर्दिष्टमित्यमर्थस्य वेदनम् ॥ २००९ ॥
परिच्छेदः स कस्येति न च पर्यनुयोगनात् ।
परिच्छेदः स तस्यात्मा सुखादेः साततादिवत् ॥ २०१० ॥

विज्ञानस्य स्वसंवेदनरूपत्वोपपादनम्

स्वरूपवेदनायान्यद् वेदकं न व्यपेक्षते ।
न चाविदितमस्तीदमित्यर्थोऽयं स्वसंविदः ॥ २०११ ॥

कुमारिलचोद्यम्

व्यापृतं ह्यर्थवित्तौ च नात्मानं ज्ञानमृच्छति ।

---

स्यादेतत्—कोऽप्यस्य विशेषोऽस्ति येनार्थमेव परिच्छिनत्ति स वेदकतया निर्देष्टुं न शक्यते ? इत्याह—न च **निर्दिष्टमित्यमर्थस्य वेदनमिति** । भवतीति शेषः । यद्यप्यसाधारणं वस्तु सर्वमेव निर्देष्टुं न शक्यते, तथाप्युद्भावनासंवृत्त्या कथ्यत एव, अन्यथा हि रूपादीनामपि विशेषो न वक्तव्यः स्यात् । न चेत्थमनवधारितेन रूपेणार्थस्य संवेदनं ज्ञानमिति विषयसंवेदनं निर्दिष्टं भवति; तस्मादनिरूपितेन [G 542] रूपेण भावव्यवस्थाने मुग्धवञ्चिता माया इति यत्किञ्चिदेतत् ॥ २००८–२००९ ॥

स्यादेतत् । परिच्छेदोऽर्थाकारेण कस्मान्नासौ परिच्छेदो भवेत् ? इत्याह—परिच्छेदः स कस्येत्यादि । आत्मैव हि स तस्य प्रकाशात्मतया परिच्छेद इत्युच्यते, यथा सुखादेः साततेति । न हि सुखस्येति व्यतिरेकनिर्देशमात्रेण कोऽप्यन्य आत्मा[1] भवेत् । तस्माद् यद्यपि नीलस्य परिच्छेदः पीतस्येति वा व्यतिरेकीव व्यपदेशः, तथापि स्वात्मैव स तथा नीलादिरूपेण प्रकाशमानत्वात्[2] तथोच्यते[3]; स्वसंवेदनरूपत्वाज्ज्ञानस्य ॥ २०१० ॥

अथ कोऽयं स्वसंविदोऽर्थो यद्बलात्तथोच्यते ? इत्याह—स्वरूपेत्यादि ।२०११॥

व्यापृतमित्यादिना स्वरूपवेदनायान्यद् व्यपेक्षत इत्यत्र कुमारिलचो-द्यमुपन्यस्यते । स ह्याह—यद्यपि ज्ञानं प्रकाशात्मकम्, तथाप्यात्मप्रकाशनाय परसं-

---

1. न—पा० । 2. म तथा—[illegible] ।
3-3. [illegible]—जै०, [illegible]—[illegible] ।

तेन[1] प्रकाशकत्वेऽपि बोधयान्यत् प्रतीक्षते ॥ २०१२ ॥
ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकम् ।
न चात्मानुभवोऽस्त्यस्येत्यात्मनो न प्रकाशकम् ॥ २०१३ ॥
सति प्रकाशकत्वे च व्यवस्था दृश्यते यथा ।
रूपादौ चक्षुरादीनां तथात्रापि भविष्यति ॥ २०१४ ॥
प्रकाशकत्वं बाह्येऽर्थे[2] शक्त्यभावात्तु नात्मनि ।
शक्तिश्च सर्वभावानां नैवं पर्यनुयुज्यते ॥ २०१५ ॥

व्याप्तिविधानम्

ननु चार्थस्य संवित्तिर्ज्ञानमेवाभिधीयते ।
तस्यां तदात्मभूतायां को व्यापारोऽपरो भवेत् ॥ २०१६ ॥

---

क्षते । न तु स्वयमात्मानमृच्छति = प्रतिपद्यते, तस्यार्थप्रकाशन एव व्यापृतत्वात् । न ह्येकत्र व्यापृतस्य तत्परित्यागेनान्यत्र तदैव व्यापारणं युक्तम् ॥ २०१२ ॥

अत्र प्रदीपेन व्यभिचारितामाशङ्क्य पक्षान्तरमाह—ईदृशमित्यादि ॥२०१३॥

ननु चासत्यात्मप्रकाशात्मकत्वे बाह्यप्रकाशकत्वमप्यस्य कथं व्यवस्थाप्यते ? इत्याह—सतीत्यादि । यथा चक्षुरादीनां रूपादौ विषये प्रकाशकत्वव्यवस्थानम-सत्यप्यात्मप्रकाशकत्वे, तथाऽत्रापि ज्ञाने भविष्यति ॥ २०१४ ॥

[ G 563 ] स्यादेतत् । किमित्यात्मानमन्तरङ्गं परित्यज्य बाह्यमेव प्रकाशयति ? इत्याह—प्रकाशकत्वमित्यादि । किमित्यात्मप्रकाशने शक्तिर्नास्ति ? इत्याह—शक्तिश्च सर्वभावानामित्यादि । यथाहु—"अग्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यताम् !" इति ॥ २०१५ ॥

ननु चेत्यादिना प्रतिविधत्ते । यदुक्तम्—"व्यापृतं ह्यर्थवित्तौ" ( तत्त्व० २०१२ ) इति, तदसङ्गतम्; नह्यर्थवित्तिरन्या ज्ञानात् । तथा हि—चित्तिरुपलब्धि-रर्थप्रतीतिर्विज्ञप्तिरिति ज्ञानमेवैतैः पर्यायैरभिधीयते । तस्यां चार्थवित्तौ तदात्म-भूतायाम् कोऽन्योऽपरो ज्ञानस्यार्थसंवेदनात्मको व्यापारो भवेद्यात्मन्यव्यतिरिक्तो येनार्थवित्तौ व्यापृतमिति स्यात्[3] ? न चात्मन्येव व्याप्तिर्युक्ता ॥ २०१६ ॥

---

१. तत —पा०, गा० । २. बाह्येऽर्थे—पा०, गा० । ३. भवेत्—पा०, गा० ।

अर्थस्यानुभवो रूपं तच्च[1] ज्ञानात्मकं[1] यदि ।
तदर्थानुभवात्मत्वं ज्ञाने युक्तं न चास्ति तत् ॥ २०१७ ॥
उपेतार्थपरित्यागप्रसङ्गात् तस्य तु स्वतः ।
जातेऽप्यनुभवात्मत्वे नार्थवित्तिः प्रसिद्ध्यति ॥ २०१८ ॥
न हि तत्र परस्यास्ति प्रत्यासत्तिनिबन्धनम् ।
यथा साकारविज्ञानपक्षेऽर्थप्रतिबिम्बकम् ॥ २०१९ ॥

---

स्यादेतत्—ज्ञानात्मत्वमेवार्थवित्तेः कथं सिद्धम्, येन पर्यायता ज्ञानार्थसंवित्त्योः ? इत्याह—अर्थस्यानुभवो रूपमित्यादि । अर्थस्यानुभवोऽवश्यं रूपम् = स्वभावोऽङ्गीकर्त्तव्यः । अन्यथा कथं तत्र ज्ञानं व्याप्रियेत । न ह्यसति शशविषाणादौ कस्यचिद् व्यापारणं युक्तम् । ततश्च तदर्थानुभवात्मकं रूपम् = स्वभावो यदि ज्ञानाद्व्यतिरिक्तं भवेत्, तदा ज्ञानेऽर्थानुभवात्मकत्वं यत्तदुक्तम्—"ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकम्" ( तत्त्व० २०१३ ) इति, तद्युक्तं स्यात् । फलाभिनिर्वर्त्यमानोऽर्थानुभवाद्व्यतिरिक्तं ज्ञानमभ्युपगच्छेदपि पर इत्याह—न चास्ति तदिति । तत् = ज्ञानादतिरिक्तमनुभवस्य[2] । उपेतोऽर्थः = अभ्युपगतो ज्ञानस्यात्मसंवेदनविरहलक्षणः, तस्य परित्यागप्रसङ्गः; ज्ञानस्यार्थानुभवाव्यतिरेकाभ्युपगमे स्वसंवित्तिप्रसङ्गात् ।

[G 564] स्यादेतत्—नार्थानुभवात्मत्वाज्ज्ञानस्य प्रकाशकत्वमिष्टम्, किं तर्हि ? अनुभवात्मत्वादेव केवलादित्याह—तस्य तु स्वत इत्यादि । तस्य = ज्ञानस्य । यद्यप्यनुभवात्मत्वमेव केवलं जातं नार्थानुभवात्मत्वम्, तथा[3] 'नीलस्येयं संवित्तिर्न पीतस्य' इत्यादिभेदेनार्थसंवित्तिर्न सिद्ध्येत ॥ २०१७–२०१८ ॥

किमिति न सिद्ध्येत् ? इत्याह—न हि तत्रेत्यादि । परस्येति अनाकारज्ञानवादिनः, यस्येदं दर्शनम्—'आकारवान् बाह्योऽर्थो निराकारा बुद्धिः' इति ॥ २०१९ ॥

---

१-१. ..नात्मकं—पा० ।
२. ०रिक्तत्वमनु—पा०, गा० ।
३. तथा च—पा० ।

प्रकृत्या जडरूपत्वाज्ज्ञानस्यात्मानुभवो यदि ।
ज्ञानसंवेदनाभावात् परार्थानुभवस्तदा[1] ॥ २०२० ॥
अर्थस्यानुभवो नाम ज्ञानमेवाभिधीयते ।
तस्याप्रसिद्धरूपत्वे प्रसिद्धिस्तस्य का परा ॥ २०२१ ॥
ज्ञानान्तरेणानुभवे सोऽर्थः स्वानुभवे सति ।
न[2] सिद्धः[2] सिद्ध्यसंसिद्धेः कदा सिद्धो भवेत्पुनः ॥ २०२२ ॥
तज्ज्ञानज्ञानजातौ चेदसिद्धः स्वात्मसंविदि ।
परसंविदि सिद्धस्तु स इत्येतत् सुभाषितम् ॥ २०२३ ॥

इदं वा प्रकाशत्वं तस्यार्थानुभवात्मकमित्यत्राह—प्रकृत्येत्यादि । यदि विज्ञानं जडरूपतयाऽऽत्मानं न संवेदयते, तदा तस्य स्वतोऽप्रत्यक्षत्वेऽर्थानुभवोऽप्यप्रत्यक्षतया नष्ट[3] स्यात् ॥ २०२० ॥

स्यादेतत्—यदि नाम ज्ञानमप्रत्यक्षम्, अर्थानुभवोऽपि किमित्यप्रत्यक्षो भवेत्, न हि रूपस्याप्रत्यक्षत्वे शब्दस्याप्यप्रत्यक्षता स्यात् ? इत्याह—अर्थस्यानुभवो नामेत्यादि । न हि ज्ञानस्यान्यद्रूपं निर्धारयामोऽन्यत्रार्थानुभावात्[4] । अनिर्धारयन्तः स्वभावमन्यार्थं[5] निश्चयं व्यवहरन्त स्वपरान्[6] विप्रलभेमहि । तस्य ज्ञानस्याप्रसिद्धरूपत्वे सति प्रसिद्धिस्तस्यार्थानुभवस्य का परा भवेत्, नैव काचित् ॥ २०२१ ॥

अथापि स्यात्—ज्ञानान्तरेण तस्य सिद्धिर्भविष्यति ? इत्याह—ज्ञानान्तरेणेत्यादि । [G 565] सिद्धेः ज्ञानस्य, असिद्धेः[7] । न ह्यसिद्धव्यक्तिकं[8] व्यक्तमिति युज्यते[9] । तथा हि—न तावदर्थस्य स्वानुभवकालेऽपि सिद्धिः, तद्व्यक्तिस्वभावस्यानुभवस्य तदानीमसिद्धत्वात् कदा तस्य सिद्धिर्भविष्यतीति वक्तव्यम् । तज्ज्ञानज्ञानजातौ = अर्थज्ञानज्ञानोत्पत्तिकाले[10] सिद्धिर्भविष्यतीति चेत् ? एतदपि-

१. ०त्वा—पा० । २–२. प्रसिद्ध०—पा०, असिद्धः—गा० ।
३. इष्टः—पा० । ४. ०नुभवात्—पा०, गा० ।
५. स्वभावमन्यं च—पा० । ६. स्वपरान्तु—पा० ।
७. असिद्धेः—पा०, गा० । ८. प्रसिद्धव्यक्तिक—पा०, असिद्धव्यक्तिक—गा० ।
९. न युज्यते—पा० । १०. काले—पा०, गा० ।

तस्याप्यनुभवेऽसिद्धे[1] प्रथमस्याप्यसिद्धता ।
तत्रान्यसंविदुत्पत्तावनवस्था प्रसज्यते ॥ २०२४ ॥
गोचरान्तरसञ्चारस्तया न स्यात् स चेष्यते ।

---

सुभाषितम् । यो हि नाम स्वानुभवकाले न सिद्ध, स कथमस्त्वानुभवकाले[2] सेत्स्यतीति ॥ २०२२-२०२३ ॥

सिद्ध्यतु नाम यद्यनवस्था न भवेत्, सा तु दुर्वारेति दर्शयन्नाह–तस्याप्यनुभव इत्यादि। तस्येति द्वितीयस्यार्थज्ञानज्ञानस्य । प्रथमस्येति अर्थानुभवस्य । असिद्धतेति[3] । नास्य सिद्धिरस्तीत्यसिद्ध, तद्भावोऽसिद्धता ॥२०२४॥

किञ्च–यदि ज्ञानान्तरेणानुभवोऽङ्गीक्रियते तदा तत्रापि ज्ञानान्तरे स्मृतिरूप एत एव—ज्ञानज्ञान ममोत्पन्नमिति, तस्याप्यपरेणानुभवो वक्तव्य, न ह्यननुभूते स्मृतिर्युक्ता । ततश्चेमा ज्ञानमाला कोऽनन्यकर्मा जनयतीति वक्तव्यम् । न तावदर्थ, तस्य मूलज्ञानविषयत्वात् । नापीन्द्रियालोकौ, तयोश्चक्षुर्ज्ञान एवोपयोगात् । नापि निर्निमित्ता, सदा सत्त्वादिप्रसङ्गात् । सैव पूर्वपूर्वोत्तरोत्तरां बुद्धिं जनयतीति चेत्[4] ? इत्याह[4] –गोचरान्तरेत्यादि । एवं हि विषयान्तरसञ्चारो न प्राप्नोति, तथा हि—पूर्वपूर्वा बुद्धिरुत्तरोत्तरस्य ज्ञानस्य विषयभावेनावस्थिता प्रत्यासन्ना चोपादानकारणतया ता तादृशीमन्तरङ्गिका त्यक्त्वा कथ च बहिरङ्गमर्थं गृह्णीयात् । न ह्यप्यर्थ सन्निहितोऽपि ता प्रतिबोद्धुम्[5] [G 506] समर्थ, तस्य बहिरङ्गत्वात् । अथ बहिरङ्गोऽपि सन् प्रतिबध्नीयात्, तदा न कदाचित् काचिद् बुद्धिमनुभवेत्[6] । तथा हि—न सा[7] काचिदवस्थाऽस्ति यस्यामर्थो न सन्निहित इति । स्मृतिरप्युच्छिन्ना स्याद्, अननुभवाभावात् । किञ्च—येऽतीतादिविकल्पा विषयसन्निधानमन्तरेण भवन्ति, तेषा सञ्चारकारणाभावाद् विकल्पपरम्परायामाससारमवस्थानान्न कस्यचिदर्थचिन्ता स्यात् । भवतु नामार्थान्तरसञ्चारोऽनुपपद्यमानोऽपि, तथापि यत्तदन्त्यज्ञान[8] तत् केनानुभूयेतेति वक्तव्यम् ।

---

१ ०प्यनुभवे ' पा० । २ ०मन्यानुभव०—गा० । ३ सिद्धतेति—पा० ।
४-४ चेदाह—पा०, गा० । ५ प्रतिबोद्धु—पा०, गा० । ६. पूर्वं०—पा० ।
७ पा०, गा० पुस्तकयोर्नास्ति । ८ यदन्यज्ञान—पा०, गा० ।

गोचरान्तरसञ्चारे यदन्त्यं तत् स्वतोऽन्यतः ॥ २०२५ ॥
न[1] सिद्धमस्य चासिद्धौ[1] सर्वेषामप्यसिद्धता ।
अतश्चान्ध्यमशेषस्य जगतः सम्प्रसज्यते ॥ २०२६ ॥
अन्त्यस्य तु स्वतःसिद्धावन्येषामपि सा ध्रुवम् ।
ज्ञानत्वादन्यथा नैषां ज्ञानत्वं ते[2] घटादिवत् ॥ २०२७ ॥

अथापि[3] स्यात्—सैवोत्तरा बुद्धिरर्थान्तरग्राहिणी पूर्वां चिमयर्थं चोभयमपि गृह्णातीति ? तदेतदसम्यक्; तथा हि—यदा शब्दज्ञानादनन्तरं रूपग्राहि ज्ञानं भवति, तदा तस्मिन् रूपग्राहिणि ज्ञाने शब्दज्ञानस्य प्रतिभासात् तद्ग्राहकस्यापि शब्दस्य प्रतिभासः प्राप्नोति । यस्यापि निराकारज्ञानं तस्यापि न शब्दग्रहणमन्तरेण तद्ग्राहकस्य ग्रहणं युक्तम्, न हि दण्डग्रहणमन्तरेण तद्ग्राहकस्य दण्डिनो ग्रहणं न्याय्यमिति रूपग्राहिणि चक्षुर्ज्ञाने शब्दस्यापि प्रतिभासः स्यात् । तथा चिन्ताज्ञानेऽप्याकारादिविषयेऽपि[4] यथोक्तनीत्याऽभिलापद्वयमेकस्मिन्नक्रमेण[5] स्यात् । तथा हि—यदेकारचिन्तासमनन्तरमकारं चिन्तयति तदा तदकारचिन्ताज्ञानमिकारग्राहकमपि चिन्तयतीति स्वज्ञानसमारूढस्येकाराभिलापस्याकाराभिलापिनि ज्ञाने प्रतिभासः प्राप्नोति । किञ्च—सर्वमेव वस्तु यावद्र्थं प्रतिभासेत; स्वज्ञानकालेऽवभासनात् । न चैवं प्रतिभासोऽस्तीत्ययुक्तमुत्तरया बुद्ध्या द्वयोर्ग्रहणम् ।

अथापि स्यात्—एकमन्त्यं ज्ञानमननुभूतमस्मृतं चास्ताम्, को दोषः स्यात् ? इत्याह—गोचरान्तरसञ्चार इत्यादि[6] । स्वसंवित्तेरनभ्युपगमात्र स्वतः सिद्धः[7], नापि[7] परतः; अनवस्थादोषात् । तस्मान्तस्यासिद्धौ सत्यां पूर्वकस्याप्यसिद्धिः; अप्रत्यक्षोपलम्भकत्वात् । ततश्चार्थस्याप्यसिद्धिरिति न कदाचित् किञ्चिदप्युपलभ्येत[8], ततश्चान्ध्यमायातमशेषस्य जगतः । अथान्त्यस्य यथोक्तदोषभयात् स्वसंवित्त्या

१–१. न सि…सिद्धौ—पा०, न सिद्धयेत्तस्य चासिद्धौ—गा० ।
२. स्याद्—पा०, गा० । ३. अथ—पा०, गा० । ४. ०प्याकारादि०—पा०, गा० ।
५. ०मुक्तक्रमेण—गा० । अक्रमेण युगपदित्यर्थः । ६. इति—पा०, गा० ।
७–७. सिद्धतापि—पा०; सिद्धा नापि—गा० ।
८. किञ्चिदुपलभ्येत—पा०, गा० ।

विज्ञानं जनयद् रूपे चक्षुस्तस्य प्रकाशकम् ।
न तु तस्यावबोधत्वात् तज्ज्ञानेनास्य कोपमा ॥ २०२८ ॥

नीलाद्याकारतद्धियोरभेदसाधनम्

यत्संवेदनमेव स्याद् यस्य संवेदनं ध्रुवम् ।
तस्मादव्यतिरिक्तं तत् ततो वा न विभिद्यते ॥ २०२९ ॥
यथा नीलधियः स्वात्मा द्वितीयो वा यथोडुपः ।
नीलधीवेदनं चेदं नीलाकारस्य वेदनम्[1] ॥ २०३० ॥

स्वत एव सिद्धिरभ्युपगम्यते, तदा तद्वदेव सर्वस्य ज्ञानत्वाविशेषात् स्वसंविदस्तु । प्रयोगः—यज्ज्ञानं तदात्मबोधं प्रत्यनपेक्षितान्यव्यापारम्; ज्ञानत्वात् । ज्ञानं च विवादास्पदीभूतं ज्ञानमिति स्वभावहेतुः। अन्यथा हि यत् स्वतो न सिद्धम्, तस्य पदार्थप्रकाशकरूपतया ज्ञानत्वमेव हीयेतेति बाधकं प्रमाणम् ॥२०२५-२०२७॥

"सति प्रकाशकत्वे च व्यवस्था दृश्यते यथा" (तत्त्व०२०१४) इत्याह—विज्ञानं जनयदित्यादि । [G. 567] रूपविषयं विज्ञानं जनयच्चक्षू रूपस्य प्रकाशकमुच्यते । विज्ञानं तु न किञ्चिद्रूपे करोति; विरूपस्यैव ज्ञानकत्वात् । न चाकुर्वत् किञ्चित् प्रकाशकं युज्यते; अतिप्रसङ्गात् । तस्मात् । उपमा = सादृश्यम् ॥ २०२८ ॥

यत्संवेदनमित्यादिना नीलाद्याकारतद्धियोरभेदसाधनाय निराकारज्ञानवादिनं प्रति प्रमाणयति । यस्य संवेदनं यत्संवेदनम्, तदेव [2]यत्र संवेदनं[2] यस्य संवेदनं नियमेन, नान्यत् । तस्मात् = प्रथमयच्छब्दवाच्यात् । अभिन्नमेकान्तेन । तत् = द्वितीयं यच्छब्दवाच्यम् । यद्वा—विपर्ययेणाभेदः साध्यः । एतदुक्तं भवति—[3]यस्मादपृथक्संवेदनमेव तत्तस्मादभिन्नम्; यथा नीलधीः स्वस्वभावात् । यथा वा—तैमिरिकज्ञानप्रतिभासी[4] द्वितीय उडुपः = चन्द्रमाः । नीलधीवेदनं चेदमिति पक्षधर्मोपसंहारः । धर्म्यत्र नीलाकारतद्धियौ । तयोरभिन्नत्वं साध्यधर्मः । यथोक्तः सहोपलम्भनियमो हेतुः । ईदृश एवाचार्यीये "सहोपलम्भनियमात्" (प्र० विनि० परि० १) इत्यादौ प्रयोगे हेत्वर्थोऽभिप्रेतः ।

1. वेदनात्—पा०, गा० ।　　2-2. पा०, गा० पुस्तकयोर्नास्ति ।
3. यत् यस्मा०—पा० ।　　4. ०प्रतिभासी—पा०, गा० ।

तत्र भदन्तशुभगुप्तस्त्वाह—विरुद्धोऽयं हेतुः, यस्मात्—

"सहशब्दश्च लोकेऽन्यस्मिन्नेवानेन[1] विना क्वचित् ।
विरुद्धोऽयं ततो हेतुर्यद्यस्ति सहवेदनम् ॥" इति ।

तदेतदसम्यक्[2], यस्य विपक्ष एव भावः स विरुद्धो हेतुः । न चास्य विपक्ष एव, सपक्षेऽपि भावात् । तथा हि — चन्द्रद्वयस्य सहोपलम्भाभिमानोऽस्ति लोके, न च तयोर्भेदोऽस्ति परमार्थतः । अथ च सह शशिद्वयोपलम्भात् सहेति वक्तारो भवन्ति । एवमिहापि ज्ञानादव्यतिरिक्तमपि बहिरिव भासमानमाकारं द्वितीयं कृत्वा कल्पितभेदनिबन्धनः सहशब्दः प्रयुक्तः । न हि सर्वः शाब्दो व्यवहारो यथावस्तुनिवेशी, येन सहशब्दप्रयोगमात्रेण वस्तुप्रतिबद्धस्य लिङ्गस्यान्यत्वं स्यात्, यतो विरुद्धो हेतुर्भवेत् ।

पुनः स एवाह—"यदि सहशब्द एकार्थः, तदा हेतुरसिद्धः । तथा हि चन्द्रमण्डलप्रेक्षासु न ह्येकेनैवोपलम्भो नीलादेः । नापि नीलतदुपलम्भयोरेकेनैवोपलम्भः । तथा हि—नीलोपलम्भेऽपि तदुपलम्भानामन्यसन्तानगतानामनुपलम्भात् । [G 568] यदा च सर्वप्रमाणभृतां[3] सर्वे विचक्षणाः सर्वज्ञेनावसीयन्ते, तदा कथमेकेनैवोपलम्भः सिद्धः स्यात् । किञ्च—अन्योपलम्भनिषेधे सत्येकोपलम्भनियमः सिद्ध्यति । न चान्योपलम्भप्रतिषेधसम्भवः, स्वभावविप्रकृष्टस्य विधिप्रतिषेधायोगात् । अथ सहशब्दः एककालनिश्चयः, तदा बुद्धविज्ञेयचित्तेन चित्तचैत्तैश्च सर्वथाऽनैकान्तिकता हेतोरेककालविज्ञप्त्या[4] । यथा किल बुद्धस्य भगवतो यद्विषयं सन्तानान्तरचित्तम्, तस्य बुद्धज्ञानस्य च सहोपलम्भनियमोऽप्यस्त्येव[5] च नानात्वम्, तथा चित्तचैत्तानां सत्यपि सहोपलम्भे नैकत्वमित्यतोऽनैकान्तिको हेतुः" इति ।

तदेतत् सर्वमसम्यक्; न ह्येकेनैवोपलम्भ एकोपलम्भ इत्ययमर्थोऽभिप्रेतः, किं तर्हि ? ज्ञानज्ञेययोः परस्परमेक एवोपलम्भः, न पृथगिति । स एव हि

१ ॰न्नैवा॰—गा॰, ॰न्यस्मिन्नेवान्येन—गा॰ ।
२. तदेतदसम्यक्—गा॰ ।
३ सर्वप्रमाण॰—पा॰, गा॰ ।
४. ॰हेतो—पा॰, गा॰ ।
५. ॰नियमोऽस्त्येव—पा॰ ।

ज्ञानोपलम्भः [redacted] एव ज्ञेयस्य, य एव ज्ञेयस्य स एव ज्ञानस्येति यावत्। न च नष्टचन्द्रमसोऽशेषासु कश्चिज्ज्ञानोपलम्भोऽस्ति यो न ज्ञेयोपलम्भकः, ज्ञेयोपलम्भो वा न ज्ञानोपलम्भक इति कुतोऽसिद्धता !

नापि सन्दिग्धासिद्धता। तथाहि—यदेवात्मसंवेदनं ज्ञानस्य, तदेवार्थस्येति परेणापि ग्राह्यार्थवादिनाऽङ्गीकृतम्। एतेन 'एकस्यैवोपलम्भ एकोपलम्भः' इत्येवं विकल्पस्य योऽसिद्धतादोष उक्तः, स तत्पक्षानङ्गीकृतेरेवापास्तो द्रष्टव्यः। न च बुद्धस्य भगवतश्चित्तेन परसन्तानवर्त्तिनश्चित्तक्षणा अवसीयन्ते; तस्य भगवतः सर्वावरणविगमेन ग्राह्यग्राहककलङ्करहितत्वात्। यथोक्तम्—

"ग्राह्यं न तस्य ग्रहणं न तेन ज्ञानान्तरग्राह्यतयापि शून्यम्"

( ) इति।

अक्षुण्णविधानं त्वाधिपत्यमात्रेण। यथोक्तम्—"पूर्वप्रणिधानसहितसततानाभोगवाहि परकार्यम्" इति। "सर्वार्थकारित्वात् सर्वज्ञ इष्यते" ( तत्त्व० ) इति वक्ष्यति। तस्मान्नासिद्धता हेतोरिति।

ननु चाचार्यधर्मकीर्त्तिना—"विषयस्य ज्ञानहेतुतयोपनिधेः प्रागुपलम्भः पश्चात् संवेदनस्येति चेत्" ( ) इत्येव पूर्वपक्षमादर्शयता एककालार्थः सहशब्दोऽत्र दर्शितः, न त्वभेदार्थः। एककाले हि विवक्षिते कालभेदोपदर्शनं परस्य युक्तम्, न त्वभेदे सतीति चेत्? न; कालभेदस्य वस्तुभेदेन व्याप्तत्वात् कालदर्शनमुपलम्भे[1] नानात्वप्रतिपादनार्थमेव सुतरां युक्तम्; व्याप्यस्य व्यापकाव्यभिचारात्। नापि बुद्धविज्ञेयचित्तेनानैकान्तिको हेतुः, न हि तत्रैकोपलम्भनियमोऽस्ति[2]; पृथक् पृथक्संवेदनैरेव चित्तस्य संवेदनात्। अत एव चित्रचैत्तैर्व्यभिचारः[3]; तेषामपि प्रत्येकमात्मन एव संवेदनात्।

अथ वा—भवतु भगवच्चित्तेन परचित्तस्य संवेदनम्, तथापि नानैकान्तिकता; नियमेन व्यावर्त्तितत्वात्। ययोर्हि परस्परमुपलम्भनानात्वमपि सम्भवति तन्नियमेन व्यावर्त्तितम्, न तु पुनरुपलम्भानां सन्तानकाले भेदेन [ G 569 ] स्वलक्षणनाना-

1. कालभेदोपदर्शनं०—पा०। 2. ०लम्भोऽस्ति—पा०।
3. चित्तविपर्ययविचारः—पा०, गा०।

**न ज्ञानात्मा परात्मेति नीलधीवेदने कथम् ।**
**नीलाकारस्य संवित्तिस्तयोर्नो चेदभिन्नता ॥ २०३१ ॥**

त्वम्[1] । तेनायमर्थो भवति—यदुपलम्भ एव यस्योपलम्भः, नान्योऽस्तीति । न च भगवज्ज्ञानोपलम्भ एवान्यसन्तानगतचित्तोपलम्भः, नाप्यन्यसन्तानगतचित्तोपलम्भ एव भगवज्ज्ञानोपलम्भः, अपि त्वन्योऽपि; पृथक्त्वस्य स्वस्यापि चित्तस्य संवेदनात् । अत एव न रूपालोकैर्व्यभिचारः; केवलस्याप्यालोकदर्शनात् । रूपस्याप्यालोकरहितस्य कैश्चित् मणिविशेषैरुपलम्भात् । तस्माद्विपक्षे भावासम्भवान्नानैकान्तिको हेतुः ॥ २०२९-२०३० ॥

स्यादेतत्—यद्यपि विपक्षे सत्त्वं न निश्चितम्, सन्दिग्धं तु; ततश्चानैकान्त[2] एव[2] हेतुः; सन्दिग्धविपक्षव्यावृत्तिकत्वात् । तथा हि—विषयविषयिभावेन नियतत्वादन्यथापि सहोपलम्भनियमः सम्भवत्येव; यतो ज्ञानस्य ग्राहक एव स्वभावः, विषयग्रहणधर्मकत्वात् तस्य । विषयस्यापि तद्ग्राह्य एव स्वभावः, तयोश्चैकसामग्र्यधीनत्वान्नित्यं सह भाविता । न च सहोत्पादाविशेषेऽपि चक्षुरादीनां विषयत्वप्रसङ्गः; तथाविधस्वभावाभावात् । तथा हि—सामग्र्या नीलादिविषयाध्यवसायरूपमेव ज्ञानं जन्यते, न चक्षुराद्यध्यवसायरूपम् । नीलादिरपि तु तदध्यवसीयमानरूपो जनितः, न चक्षुरादिरिति । आह च—

"नान्योऽस्ति ग्राहको ज्ञानाच्चक्षुर्धीविषयैर्विना[3] ।
अतश्च सहसंवित्तिर्नाभेदाद्धीस्तद्विषोः ॥
"पूर्वं चैव तु सामग्री तज्ज्ञानं[4] विषयक्षणम् ।
सालोकरूपवत् कुर्याद् येन स्यात् सहवेदनम् ॥"

अत्राह—न ज्ञानात्मेत्यादि । न हि व्यतिरिक्तस्य प्रतिबन्धनमन्तरेण सहोपलम्भनियमो युक्तः; अतिप्रसङ्गात् । न चात्र व्यतिरिक्तस्य संवेदने कश्चित् प्रतिबन्धोऽस्ति । तथा हि—प्रतिबन्धो भवन्भवेत्तादात्म्यम्, तदुत्पत्तिर्वा । न तावत्ता-

1. स्वभावाना नानात्वम्—पा० । 2-2. ०नैकान्तो—पा०, गा० ।
3. ०च्चक्षुर्धीभिरर्थैर्विना—जै० पुस्तके पाठान्तरम् ।
4. ग्रहणं—पा०, गा० ।

संवेदनमिदं सर्वं न चार्थान्तरगोचरम् ।
संवेदनस्वभावत्वात्[1] स्वात्मसंवेदनं यथा ॥ २०३२ ॥
मुख्यतोऽर्थं न गृह्णाति स्वस्वभावव्यवस्थितेः ।

---

वात्वमत्र परेणेष्टम्, तस्यैव साध्यत्वात् । नापि तदुत्पत्ते सहवेदनम्; सहभूतयोः कार्यकारणभावात् । चक्षुरादीनामप्युपलब्धिप्रसङ्गाच्च । नापि पूर्वसामग्रीवशाद् यौगपद्यमात्रेण विषयविषयिभावः; चित्तचैत्तानां चक्षुरादीनां च परस्परं विषयविषयित्वप्रसङ्गात् । नापि सामग्र्या प्रतिनियतविषयविषयिरूपेण जनितत्वान्नातिप्रसङ्ग इति युक्तं वक्तुम्; विषयविषयित्वस्यैव विचार्यमाणत्वेनासिद्धत्वात् । सिद्धे हि प्रतिबन्धे विषयविषयिभावो युक्तः; यावता स एव विषयविषयिभावव्यवस्थायां प्रतिबन्धो विचार्यते । न च तादात्म्यतदुत्पत्तिव्यतिरेकेणापरः [ G. 570 ] प्रतिबन्धोऽस्ति, यतो विषयविषयिभावः सिद्ध्येत् । नापि तादात्म्यतदुत्पत्तिभ्यां विषयविषयिभावो युक्त इति विचारितम् । अतो न व्यतिरिक्तस्य कथञ्चित् सहोपलम्भोऽस्तीति कुतः सन्दिग्धविपक्षव्यावृत्तिकता हेतोः ॥ २०३१ ॥

द्वितीयमपि साकारतासिद्धये साधनमाह—संवेदनमिदमित्यादि । यद् यत् संवेदनं तत्तत्त्वतो नार्थान्तरविषयम्, यथा आत्मसंवेदनम् । संवेदनं चेदं नीलाद्याकारस्येति विरुद्धव्याप्तोपलब्धिः; अर्थान्तरगोचरत्वविरुद्धेनानर्थान्तरगोचरत्वेन संवेदनस्य व्याप्तत्वात् ॥ २०३२ ॥

तामेव व्याप्तिं साधयन्नाह—मुख्यतोऽर्थमित्यादि । निर्व्यापारत्वात् सर्वधर्माणां न परमार्थतः कस्यचित् केनचिद् ग्रहणम्, केवलं प्रकाशरूपतया तथा प्रथमानं विज्ञानमात्मनो ग्राहकमुच्यते । न चैव मुख्यतोऽर्थस्य ग्राहकं ज्ञानं युक्तम्; सर्वभावानां स्वस्वभावव्यवस्थितेः । न हि तदात्मा यः सोऽपरस्यापि ।

स्यादेतत्—न हि मुख्यतो ग्राह्यं ज्ञानस्यात्मसंवेदनं किं तर्हि ? स्वाभासज्ञानजनकत्वमेवार्थस्य संवेद्यत्वम् । ततश्च हेतुत्वेनोपादीयते तदा हेतोरसिद्धता । तथापि यथाकथञ्चित्

---

१. संवेदनं च''''—पा०; संवेदन च नीलस्य—गा० ।

अर्थाकारोपरागेण वियोगाच्च न भक्तितः ॥ २०३३ ॥
शुद्धस्फटिकसङ्काशमर्थाकारैरनङ्कितम् ।
यैरिष्टं वेदनं कैश्चिदिदं तान् प्रति साधनम् ॥ २०३४ ॥

बाह्याकारस्यालीकतोपपादनम्

अस्तु न' हि' ससारूप्य विज्ञान बाह्यवेदकम् ।
तस्यापि सर्वथाऽयोगान्न युक्ता वेदकस्थितिः ॥ २०३५ ॥
ज्ञानादव्यतिरिक्तत्वान्नाकारबहुता भवेत् ।

---

तासाम्भात्[1] तथापि न तथाविधादिष्टसिद्धिः, न हि गोशब्दसाम्यात् रासभादीना[2] विषाणित्वसिद्धिः । अथ ज्ञानारूढं नीलाद्याकारं धर्मिणमाश्रित्य साकारज्ञानपक्षे द्विविधोऽपि हेतुरभिप्रेतः, तदा सिद्धसाध्यता । यथोक्तम्—

"साकारज्ञानपक्षे च तन्निर्भासस्य वेदना ।
तस्याभेदे च ससाध्ये सिद्धसाधनता भवेत्" ॥ (          ) इति ।

एतत् सर्वं भदन्तशुभगुप्तस्य चोद्यमाशङ्क्याह—अर्थाकारोपरागेणेत्यादि । अर्थाकार = अर्थसदृशश्चासावुपरागो निर्भासश्चेत्यर्थाकारोपरागः । इदमिति । द्विविधमपि साधनं निराकारवादिनं प्रतियत, तेन न सिद्धसाध्यता । नाप्युपचारेणान्यस्य संवेदनमस्ति, उपचारनिबन्धनाभावात् ॥ २०३३-२०३४ ॥

[C 571] एवं तावन्निर्भासं ज्ञानं न बाह्यमर्थं विजानातीति प्रतिपादितम् । नापि तन्निर्भासमिति द्वितीयं पक्षमाश्रित्य प्रतिपादयन्नाह—अस्तु न[3] हीत्यादि[3] । न हि वास्तव आकारो युक्तः, यतस्तद्वशादर्थव्यवस्थानं स्यात् । न चालीकेन साकारेणार्थः संविदितो भवेत्, भ्रान्तेऽपि ज्ञाने तथाविधस्य भावात् ॥ २०३५ ॥

[4]कथमलीकत्वमाकाराणामिति चेत् ? आह—ज्ञानादित्यादि । चित्रास्तरणदर्शने एकस्माज्ज्ञानादव्यतिरिक्तत्वाज्ज्ञानस्वरूपवदाकाराणां बहुता न प्राप्नोति । एवमाकाराव्यतिरिक्तत्वाज्ज्ञानस्याप्यनेकता प्राप्नोति । ये तु मन्यन्ते—"समान-

---

१-१ तर्हि—पा०, गा० । २ रासभादीना—पा०, गा० ।
३-३. तर्हीत्यादि—पा०, गा० । ४. कथमलीकत्व माकाराणा०—पा०, गा० ।

ततश्च तद्वलेनास्ति नार्थसंवेदनस्थितिः ॥ २०३६ ॥[&]
आकाराव्यतिरिक्तत्वात् ज्ञाने वाऽनेकता भवेत् ।
अन्यथा कथमेकत्वमनयोः परिकल्प्यते ॥ २०३७ ॥
सर्वात्मना च सारूप्ये ज्ञानेऽज्ञानादिता भवेत् ।
सारूप्ये केनचिदंशेन सर्वं स्यात् सर्ववेदकम् ॥ २०३८ ॥
अन्याकारमपि ज्ञानं कथमन्यस्य वेदकम् ।
सर्वः स्यात् सर्वसंवेद्यो न हेतुश्च नियामकः ॥ २०३९ ॥

जातीयान्यपि ज्ञानान्याकारसङ्ख्यान्येव बहूनि चित्रास्तरणादिषु युगपद् समुद्भवन्त्येव विजातीयरूपशब्दज्ञानवदिति, ततश्च प्रसङ्गे सिद्धसाध्यता" इति, तेषां चित्रास्तरणे[1] यथा नीलादयो बहव आकाराः संवेद्यन्ते, एवमेकाकारेऽपि सितादावर्वाग्-मध्यपरभागरूपा बहव आकारा इति तदात्मकं तत्रापि ज्ञानमनेकात्मकं प्राप्नोति । इष्यत एवेति चेत् ? किमिदानीमेकं ज्ञानं भवतीति वक्तव्यम्। यदनवयवमणुविषयमिति चेत् ? तदेतदनुभवविरुद्धम् ; न हि कश्चिदनवयवमणुरूपं भासमानमालक्ष्यते ज्ञाने । न चाऽप्यमूर्तानां[2] पौर्वापर्यावस्थानं देशकृतं युक्तम् ; येन तस्य सत्यताप्रसिद्धयेऽनेकज्ञानकल्पना साध्वी स्यात् । देशवितानप्रतिभासस्यालीकत्वे कथमाकाराणां सत्यता स्यात् ! न हि देशवितानावस्थितनीलादिप्रतिभासव्यतिरेकेणान्यो नीलादि-ज्ञानाकारः संवेद्यते । अतोऽनेकज्ञानकल्पनावैयर्थ्यमेव ॥ २०३६-२०३७ ॥

दूषणान्तरमाह—सर्वात्मनेत्यादि । अज्ञानता = जडरूपत्वम् । आदि-शब्देन नश्वरता, नश्यद्रूपतेत्यादि गृह्यते ॥ २०३८ ॥

[G. 572] अन्यनिर्भासमित्येतत् तृतीयं पक्षान्तरमाश्रित्याह—अन्याकारमपीत्यादि । अथापि स्यात्—यज्ज्ञानं येन जनितं तत्तस्यैव संवेदकं भवेत्, तेन न सर्वः सर्वसंवेद्यो भविष्यति ? इत्याह—न हेतुश्च नियामक इति । चक्षुरादीनामपि सर्वसंवेद्यत्वप्रसङ्गादिति भावः ॥ २०३९ ॥

---

[&] श्लोकोऽयं जै० पुस्तके द्विरावृत्तो दृश्यते ।
1. येषां चित्रास्तरणे—जै० पुस्तकेऽधिकः पाठः ।
2. वा०—पा०, गा० ।

भदन्तशुभगुप्तमतम्

यथा हि भवता ज्ञानं निराकारं च तत्त्वतः ।
वेत्ति चामूर्तमाकारं मूर्तमर्थं[1] तथैव चेत् ॥ २०४० ॥

तत्खण्डनम्

असाधारणमेवेदं स्वरूपं चित्तचैत्तयोः ।
संवेदनं ततोऽन्येषां न मुख्यं तत् कथञ्चन ॥ २०४१ ॥
एकसामग्र्यधीनत्व कार्यकारणतादि वा[2] ।
समाश्रित्य भवेन्नाम भाक्तं मूर्तस्य वेदनम् ॥ २०४२ ॥
नीरूपस्य स्वभावस्य[3] नैकसामग्र्यधीनता ।
न चान्यत् तेन नैवास्ति गौणमप्यस्य वेदनम् ॥ २०४३ ॥
अथ वाऽमूर्तमाकारं वेत्तीति व्यपदिश्यते ।

---

यथा हीत्यादिना भदन्तशुभगुप्तस्य परिहारमाशङ्कते । स ह्याह—"यथैव भवता विज्ञानवादिना विज्ञानं परमार्थतो निराकारम् 'अथातुकनकाकाशशुद्धिवद् बुद्धिरिष्यते' (                    ) इति वचनात्, अथ च समाकारं वेत्ति, तथा बाह्यमपि" इति ॥ २०४० ॥

अत्राह—असाधारणमित्यादि । न ह्यमूर्तस्य मुख्यसंवेदनमस्ति । तथा हि—यदेव प्रकाशात्मकमसाधारणमहङ्कारास्पदं सातादिरूपेण प्रथते रूपमात्मा चित्तचैत्तानाम्, तदेव तेषां संवेदनं मुख्यम् । ततो ज्ञानात्मनोऽन्येषाममूर्ताकाराणां न तन्मुख्यं संवेदनं युक्तम्, तेषाममूर्तत्वादेव । नापि गौणम्, उपचारनिमित्ताभावात् । तथा हि—एकसामग्र्यधीनत्वम्, कार्यकारणभावः, आदिशब्देन सारूप्यम्, एतदुपचारनिबन्धनं भवेत् । न चामूर्तस्यैतत् सर्वमस्ति । न चान्यद्वस्तूपचारनिमित्तम् । केवलमविद्यावशादविषयमेवामूर्ताकारोपदर्शकं ज्ञानं भ्रान्तं जायते ॥ २०४१-२०४३ ॥

स एव तर्हि विभ्रमोऽसत्याकारसंवेदने उपचारनिमित्तं भविष्यतीति चेत् । अत्राह—अथ वेत्यादि ।

---

१ मूर्त मर्थं—पा०, गागा०, गा० ।    २ च—पा०, गा० ।
३. नु भावस्य—पा०, गा० ।

विभ्रमात्त हि तत्त्वेन वेत्ति निर्विषयं हि तत् ॥ २०४४ ॥
त्वयाऽपि यदि विज्ञानमेवम्भूतस्य वेदकम् ।
विभ्रमादुच्यते व्याप्तं व्यक्तं निर्विषयं तव ॥ २०४५ ॥
साकारं तन्निराकारं युक्तं नान्यस्य वेदकम् ।
इति बौद्धेऽपि विज्ञाने न तु चिन्ता प्रवर्त्तते ॥ २०४६ ॥
अन्यरागादिसंवित्तौ तत्सारूप्यसमुद्भवात् ।
प्राप्नोत्यावृतिसद्भाव औपलम्भिकदर्शने ॥ २०४७ ॥

---

[ C 5/3 ] तद्विति । अमूर्ताकारविषयत्वेनोक्तज्ञानम् । तथा हि—परमार्थतो नामूर्ताकारोऽस्ति वेद्यः; तस्य हि विधिना वेद्यत्वोपगमे मूर्तत्वप्रसङ्गात् ॥२०४४-४५॥

पुन स एवाह—

"साकारं तन्निराकारं तुल्यकालमतुल्यजम् ।
इति बौद्धेऽपि विज्ञाने तु न चिन्ता प्रवर्त्तते ॥" (        ) इति ।

यथा साकारादिविज्ञानेन नार्थस्य ग्रहणं युक्तमिति चिन्ता क्रियते, तथा, भगवतोऽपि ज्ञानेनार्थस्य ग्रहणं प्रति किं न क्रियते ? इत्यत्राह—साकारमित्यादि । न हि भगवतो ज्ञानं तस्य ग्राहकमिष्यते, येनात्रापि चिन्ता क्रियेत; यावता तस्य सर्वावरणविगमात्त ग्राह्यग्राहकविकल्पोऽस्तीतीष्यम् ॥ २०४६ ॥

ननु च यद्यपि बाह्योऽर्थो नास्ति ग्राह्य, तथापि चित्तान्तरमस्त्येव सन्तानान्तरवर्ति, तद्भगवज्ज्ञानस्य किमिति ग्राह्य न भवेत् ? अत्राह—अन्यरागादीति । अन्यसन्तानवर्ति रागादिसंवेदनं हि यदि, परं सारूप्यादेव युक्तम्, नान्यथा; अतिप्रसङ्गात् । ततश्च यदि सर्वात्मना सारूप्यम्, तदा भगवतोऽपि ज्ञानं रक्तं स्यात् । एवं सति क्लेशावरणमप्रहीणं स्यादित्यावृतिसद्भाव. प्राप्नोति । उपलम्भेन चरन्तीत्यौपलम्भिकाः, तेषा दर्शने = मते । यद्वा—औपलम्भिके भगवतो दर्शने ज्ञानेऽभ्युपगम्यमाने सतीत्ययमर्थः ।

अथैकदेशेन सारूप्यम्, तथापि ग्राह्याकारस्याप्रहीणत्वाज्ज्ञेयावरणसद्भावः प्राप्नोति; ग्राह्यकारकलङ्कितत्वात् । तथाह्येकस्य द्वैरूप्यं माविकमयुक्तमिति तदवश्यं

कल्पपादपवत् सर्वसङ्कल्पपवनैर्मुनिः ।
अकम्प्योऽपि[1] करोत्येव लोकानामर्थसम्पदम् ॥ २०४८ ॥
तेनादर्शनमप्याहुः सर्वं[2] सर्वमिदं जिनम् ।
अनाभोगेन निःशेषसर्ववित्कार्यसम्भवात् ॥ २०४९ ॥

बाह्यार्थसाधकप्रमाणखण्डनम्

धियोऽसितादिरूपत्वे सा तस्यानुभवः ।
धियः सितादिरूपत्वे बाह्योऽर्थः किम्प्रमाणकः ॥ २०५० ॥

---

भ्रान्तं व्यवस्थापनीयम् । ततश्च [3]भ्रान्तिबीजस्यादौ प्रत्युत्पन्नस्याप्रहाणादप्रहीणावरण एव भगवान् स्यात् ॥ २०४७ ॥

यदि न किञ्चिज्जानाति, कथं तर्हि सर्वज्ञः स्यात् ? इत्याह—कल्पपादपवदित्यादि । [G. 574] अदर्शनमिति । नास्य दर्शनमुपलम्भोऽस्तीत्यदर्शनं ।

पूर्वप्रणिधानवशादनाभोगेन [4]कल्पतरुवद् यथाभव्यमशेषजगदर्थसम्पादनात् सर्वज्ञमाहुः, नोपलम्भवशात्, स्वभावान्तरस्य सर्वथाऽप्युपलम्भायोगात् ॥ २०४८-२०४९ ॥

एवं बाह्यार्थनिषेधकं प्रमाणमभिधाय तत्साधकं [5]परप्रणीतमपाकर्तुमाह—धिय इत्यादि । तथाहि—प्रत्यक्षतो बाह्यार्थसिद्धिः स्यात्, अनुमानतो वा, अन्यस्य प्रमाणस्य सतोऽत्रैवान्तर्भावात्। तत्र न तावत् प्रत्यक्षतः, तथा हि—प्रत्यक्षाभिमतेन ज्ञानेन निराकारेण बाह्यस्य ग्रहणं स्यात्, साकारेण वा । न तावन्निराकारेण, प्रत्यासत्तिनिबन्धनाभावात् । धियोऽसितादिरूपत्वे सति सा धीस्तस्यार्थस्यानुभवः कथं भवेत् । नैव भवेदिति प्रागुक्तम्। अथ साकारेण, तदा[6] नीलाद्याकारस्यैवैकस्य ज्ञानगतस्योपलम्भाद् बाह्योऽर्थः परोक्ष एव भवेत्, न प्रत्यक्षः । न हि द्वे नीले कदाचित् संवेद्येते, एकं ज्ञानप्रतिबिम्बकम्, अपरं तदर्पकमित्येवं तावन्न प्रत्यक्षतः सिद्धिः ॥ २०५० ॥

---

१. अकम्प्योऽपि—पा०, गा० । २. सर्वे—पा०, गा० ।
३. ०बीजस्यादावप्रहीणस्याप्र०—पा०, गा० । ४. कल्पतरुभगवान्—पा० ।
५. ०प्रणीतमुपा०—पा०, गा० । ६. यथा—पा०, गा० ।

नीलादिप्रतिभासस्य संवादित्वेन साध्यते ।
ज्ञानाकारतया तुल्यजातीयाज्जन्म बोधवत् ॥ २०५१ ॥
बाह्यार्थप्रापणं यद्वा तत्सामर्थ्यं यदीष्यते ।
संवादित्वमसिद्धं तद् बहिरर्थापलापिनः ॥ २४५२ ॥
अर्थक्रियावसाये चेत् प्रत्यये हेतुतेष्यते ।
संवादित्वं तथाऽप्येतन्निरालम्बेऽपि शङ्क्यते[1] ॥ २०५३ ॥
यथा बाह्यजलादीनां [2]सामर्थ्ये नियमो मतः ।
ज्ञानेष्वपि तथैवेति[3] सन्दिग्धव्यतिरेकता[4] ॥ २०५४ ॥

---

अनुमानतस्तर्हि सिद्धिरस्त्विति चेत् ? अत्र भदन्तशुभगुप्तः प्रमाणयति—यो ज्ञानाकारः, स संवादित्वे सति तथाविधापरपदार्थजनितः, तद्यथा ग्राहकाकारः । ज्ञानाकारश्चायमविप्लुतेन्द्रियस्य नीलादिप्रतिभासविशेषः संवादीति स्वभावहेतुः । तदिदमाशङ्कते—नीलादीत्यादि । संवादित्वेनेति "इत्थम्भूतलक्षणे" (पा० सू० २.३.२१) तृतीया । संवादित्वेनोपलक्षिता या ज्ञानाकारता तया हेतुभूतया ज्ञानाकारस्य तुल्यजातीयाज्जन्म साध्यते । बोधवत्—ग्राहकाकारवदित्यर्थः ॥ २०५१ ॥

[G 575] बाह्यार्थेत्यादिना दूषणमाह । तत्र यदि बाह्यार्थप्रापणं तदव्यमाणशक्तिर्वा संवादित्वं हेतुविशेषणमभिप्रेतम्, तदा बहिरर्थापलापिनो विज्ञप्तिमात्रतावादिनस्तदसिद्धमित्यन्यतरासिद्धो हेतुः । अथाभिमतार्थक्रियावभासिप्रत्ययहेतुत्वं संवादित्वमिष्टम् ? तदा विपर्यये बाधकप्रमाणानुपदर्शनात् सन्दिग्धविपक्षव्यावृत्तिकतेत्यनैकान्तिको हेतुः; निरालम्बेऽपि ज्ञाने तथाविधसंवादित्वाविरोधात् ॥ २०५२-२०५३ ॥

अविरोधमेव समर्थयितुमाह—यथा बाह्यजलादीनामिति । किञ्च—अनु-

---

1. शक्यते—पा०, गा० ।
2. सामर्थ्ये—पा०, गा० ।
3. तथैवेते—पा०, गा० ।
4. सन्दिग्धोऽव्यतिरेकता—पा०; सन्दिग्धोऽव्यतिरेकता नः—गा० ।

अनुमाप्रतिभासेन स्पष्टः साधारणोऽप्ययम् ।
स्पष्टं हुताशनादीनां रूपं तेन समं न हि ॥ २०५५ ॥

उद्द्योतकरमतम्

प्रमेयत्वादिहेतुभ्यः सन्तानान्तरचित्तवत् ।
आन्तरानुभवाद् भिन्नं देशविच्छेदभासि चेत् ॥ २०५६ ॥

तत्खण्डनम्

अत्रापि व्यभिचारित्वं न रूपेणास्य चेतसः ।

---

मानज्ञानप्रतिभासस्य सत्यपि निरालम्बत्वे संवादित्वमस्तीति निश्चितविपक्षसद्भावात् प्रमेयत्वादिवत् स्पष्टा साधारणानैकान्तिकता हेतोः ।

स्यादेतत्—असिद्धा निरालम्बनताऽनुमानविकल्पस्य ? इत्याह—स्पष्टं हुताशनादीनामित्यादि । प्रयोगः—यद्यदाकारशून्यं न तत्तद्विषयम्, यथा रूपज्ञानं न शब्दविषयम्, बाह्याकारशून्यं चानुमानज्ञानमिति[1] व्यापकविरुद्धोपलब्धिः । न चासिद्धो हेतुः । तथा हि—स्पष्टं हुताशनादीनां यत्स्वरूपं न तत्तेन = अनुमानज्ञानाकारेण समम् = तुल्यम्; तस्यास्पष्टत्वात् । अन्यथा हि यथा प्रतिष्ठितेन तार्णपार्णादिभेदतो रूपेण प्रत्यक्षे ज्ञाने प्रत्यक्षमासते, तथैवानुमानज्ञानेऽपि भासेत; यावता प्रतिष्ठितं रूपमुत्सृज्य गमकानुगतसामान्यरूपेणैव भासते परोक्षे बाह्यवह्नावनुमाने । न चैकस्याकारद्वयं सामान्यविशेषात्मकं परस्परविरुद्धं युक्तमिति प्राक् प्रतिपादितम् । नापि विरुद्धो हेतुः; सपक्षे भावात् । नाप्यनैकान्तिकः; अतिप्रसङ्गात् ॥ २०५४-२०५५ ॥

प्रमेयत्वादिहेतुभ्य इत्यादिनोद्द्योतकरस्य प्रमाणान्याशङ्कते । [C 570] स ह्याह—"यदेतद्देशविच्छेदप्रतिभासि नीलादिकं तदान्तरानुभवाद् भिन्नम्; प्रमेयत्वात्, अनित्यत्वात्, कार्यत्वात्, प्रत्ययत्वात्, हेतुमत्त्वात्, यथा सन्तानान्तरचित्तम्" इति ॥ २०५६ ॥

अत्रापीति । सर्वेष्वेव हेतुषु । व्यभिचारित्वम् = अनैकान्तिकत्वम्; आन्तरानुभवेऽपि प्रमेयत्वादीनां सद्भावात् । [2]यथा—तैमिरिकादिज्ञाने प्रतिभा-

1. ˚त्वनुमान˚ पा०, गा० । 2. यथा—गा० ।

तथापि[1] तद् द्विचन्द्राद्यैरस्वस्थनयनेक्षितैः ॥ २०५७ ॥

कुमारिलमतम्

अन्यथा बाह्य एवार्थः संवेद्यश्चेदिहोच्यते ।

तत्खण्डनम्

आकारो भासमानोऽसौ न तदर्थात्मको ननु ॥ २०५८ ॥

स चैवम्भासमानत्वाद् विज्ञानेन प्रवेद्यते ।

बाह्यस्य तु निजं रूपं नैवं तत्रावभासते ॥ २०५९ ॥

अभासमानो वेद्यश्च कथं नामोपपद्यते ।

तं च वेत्त्यन्यथा चेति परस्परविरोधि च ॥ २०६० ॥

अत एव स्ववेद्यत्वं दुःसाधं[2] नैव चेतसाम् ।

आत्मभूतावभासस्य तथा संवित्तिदर्शनात् ॥ २०६१ ॥

---

भिर्द्विचन्द्राद्यैरनैकान्तिकता । प्रमेयत्वं तु द्विचन्द्रादीनां द्विचन्द्रादीति विकल्पकज्ञानविषयतया द्रष्टव्यम् । न च यस्मिन् विज्ञाने ते भासन्ते तदपेक्षया [3]तेषामर्थाधिगमः; अर्थाधिमोक्षाभावात् । यथाह—'केशादिर्नार्थो ऽनर्थाधिमोक्षतः'[4] ( प्र० वा० २.१ ) इति ॥ २०५७ ॥

अन्यथेत्यादिना कुमारिलस्य मतेन व्यभिचारविषयस्यासिद्धिमाशङ्कते । स ह्याह—"इह पीतद्विचन्द्रादिविज्ञाने व्यभिचारविषयत्वेनोपन्यस्तो बाह्य एव शङ्खादिरर्थः पीतादिरूपेणालम्ब्यते, ततो व्यभिचारो न सिद्धः" इति । अत्राह—आकार इत्यादि । अयमत्र संक्षेपार्थः—य एवाकारो यस्मिन् ज्ञाने प्रत्यवभासते स एव तेन संवेद्यत इति युक्तम्, अन्यथा हि सर्वं ज्ञानं सर्वविषयं स्यात् । [5]तस्मात् प्रतिभासमानत्वेन [ G 577 ] संवेद्यत्वं व्याप्तम् । न च पीताकारे ज्ञाने शुक्लाकारः प्रतिभासते, दृश्याभिमतस्यानुपलब्धेरिति व्यापकस्य प्रतिभासमानत्वस्य निवृत्तौ व्याप्यस्य [6]संवेद्यत्वस्य निवृत्तिरिति[6] । प्रयोगः—यो

---

१. तथापी—पा०; तथा हि—गा० । २. दुःसाध्यं—पा०, गा० ।

३. ०नर्थाधिमोक्षा०—पा०, गा० । ४. केशादिना योऽनर्थाधिमोक्षतः—जै०, पा०; केशादिना योऽनायनार्थाधिमोऽक्षतः—गा० ।

५. पा०, गा० पुस्तकयोर्नास्ति । ६–६. संवेद्यनिवृत्तिरिति—पा० ।

तस्माद् बुद्धिरियं भ्रान्ता कल्पयन्त्यर्थमेव न ।
कल्पयत्यन्यथा सन्तं तेनात्मानमवश्यति[1] ॥ २०६२ ॥

कुमारिलाभिमतप्रमाणानि

अथ यद्ग्राहकं रूपे तद्ग्राह्यात् तस्य भिन्नता ।
तत्संवित्तावसंवित्ते रसादिग्राहकं यथा ॥ २०६३ ॥
ग्राह्यं तद्ग्राहकाच्चैव तत्परामृश्यता यतः ।
न परामृश्यतेऽवश्यं रसादिग्राहकादिवत् ॥ २०६४ ॥
द्वयं परस्परेणैव भिन्नं साध्यं रसादिवत् ।
ऐक्यरूपेण चाज्ञानात् सन्तानान्तरबुद्धिवत् ॥ २०६५ ॥

---

यस्मिन्नाकारे न प्रतिभासते न स सत्येव, यथा शब्दज्ञाने न रूपम् । न प्रतिभासते च पीताकारे ज्ञाने शुक्लग्राह्यरूपमिति व्यापकानुपलब्धिः । तं च पैत्रीयनेन स्ववचनविरोधमाह । अत एवेति प्रसङ्गेन स्वसंवित्तिं साधयति । तेन यज्जैमिनीयैरिष्टम्—"अप्रत्यक्षा नो बुद्धिर्निराकारा च" इति तदपास्तं भवति । तस्मादित्यादिनोपसंहारः । कल्पयन्ती सती, अर्थमेवान्यथा सन्तम् = विद्यमानं[2] कल्पयतीत्येवं नेति[2] सम्बन्धः । अनेन च कुमारिलोक्तं प्रतिक्षिपति ॥ २०५८-२०६२ ॥

अथेत्यादिना कुमारिलस्यैव प्रमाणमालामाह । यदेतद्रूपे ग्राहकं ज्ञानं तत् तस्मात् तद्ग्राह्याद्रूपाद् भिन्नम्, तस्य रूपस्य संवित्तौ सत्यां तस्यासंवित्तेः, यथा रसादिग्राहकम् ।

यद्वा—ग्राह्यं रूपादि स्वग्राहकाद् भिन्नं तद्ग्राहकपरामृश्यता यतो यस्मान्न परामृश्यते, यथा रसादिग्राहकात् ।

अथ वा—द्वयम् = रूपादि, तद्ग्राहकं च परस्परविभिन्नम्, एकतरपरामर्शे सत्यपरापरामर्शात्[3], रसरूपादिवत् । एकत्वेनापरिज्ञानाद्वा, सन्तानान्तरचित्तवत् ।

अथ वा—न ग्राह्यग्राहकं ज्ञानम्, ज्ञानादुत्पन्नत्वात् । [4]वासनावच्च ज्ञान-

---

१ ०नवश्यन्ति—गा० । २-२ कल्पयतीत्येव नेति—पा०, गा० ।
३ ०परामर्शात्—पा०, ०परापरामर्शात्—गा० । ४. वासनावत्त्व—गा० ।

ज्ञानं स्वांशं न गृह्णाति ज्ञानोत्पत्तेः स्वशक्तिवत् ।
३, ग्राह्यत्वप्रतिषेधश्च द्वयहीना हि वासना ॥ २०६६ ॥
चैत्रज्ञानं तदुद्भूतज्ञानांशग्राह्यबोधकम् ।
ज्ञानत्वान्न भवेद् यद्वत् तस्य देहान्तरोद्भवम् ॥ २०६७ ॥

तत्खण्डनम्

अपृथग्वेदनात् पूर्वं तदत्र प्रतिपादितात् ।
ऐकरूप्यापरिज्ञानपर्यन्तेषु न सिद्धता ॥ २०६८ ॥

जैमनीयैः सिद्धयुद्भावनम्

'स बहिर्देशसम्बद्धः' इत्यनेन ननूच्यते ।
ग्राह्याकारस्य संवित्तेर्ग्राहकानुभवादृते ॥ २०६९ ॥

---

शक्तिः । एवं ज्ञानस्य ग्राह्यत्वप्रतिषेधोऽपि कर्त्तव्यः, तद्यथा—ज्ञानांशो न ज्ञानग्राह्यः, ज्ञानाद्भुत्पन्नत्वात् । 'तद्वत् = वासनावत्' । कथमस्मिन्ननन्तरे [G 578] प्रयोगद्वयेऽपि साध्यधर्मान्वितो दृष्टान्तः सिद्धः ? इत्याह—द्वयहीना हि वासनेति । द्वयेन ग्राह्यग्राहकत्वेन ।

अथ वा अपरः प्रयोगः— न चैत्रज्ञानं चैत्रज्ञानोद्भूतज्ञानांशस्य बोधकम्; ज्ञानत्वात् । यद्वत् तस्य चैत्रज्ञानोद्भूतज्ञानांशस्य मैत्रादिदेहान्तरोद्भवं ज्ञानम् ॥ २०६६-२०६७ ॥

अपृथग्वेदनादित्यादिना दूषणमाह । अपृथग्वेदनादिति नीलतद्धियोः सहोपलम्भनियमात् । "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति" (          ) इत्यतः स्वसंवित्तिसाधनेन प्रतिपादितात्, अभेदस्य नीलतद्धियोः प्रसाधितत्वात्, ऐकरूप्यापरिज्ञानपर्यन्ता हेतवो न सिद्धाः ॥ २०६८ ॥

स बहिरित्यादिना परः सिद्धिमुद्भावयति । ग्राह्याकारवान् ग्राह्योऽर्थः, "स बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते" ( मी. द. शा. भा. १.१.५ ) इत्यनेन ग्रन्थेन भाष्यकृता शबरेण ग्राह्यसंवित्तिर्ग्राहकानुभवाद्विनापीति प्रतिपादितम् । ततश्च "[1][2]तत्संवित्त्यवसंवित्ते." ( तत्त्व० २०६३ ) इत्येतत् सिद्धम् ॥ २०६९ ॥

---

१-१. पा०, गा० पुस्तकयोर्नास्ति ।   २. सचित्ता०—पा०, गा० ।

न स्मरामि मया कोऽपि गृहीतोऽर्थस्तदेति च ।
स्मरन्ति ग्राहकोत्पादं ग्राह्यरूपविवर्जितम् ॥ २०७० ॥
तस्मादभिन्नतायां च ग्राह्येऽपि स्मरणं भवेत् ।
ग्राहकस्मृतिसद्भावे तत्र स्वैव गृह्यते ॥ २०७१ ॥
अन्वयव्यतिरेकाभ्यां सिद्धैवं भिन्नता तयोः ।
(श्लो० वा०, शू० ७९, ८३-८५)
एवं च हेतवोऽप्येते प्रसिद्धाः साध्यधर्मिणि ॥ २०७२ ॥
तत्प्रतिविधानम्
अप्रसिद्धोपलम्भस्य नार्थवित्तिः प्रसिद्ध्यति ।
नाम ग्राह्यस्य संवित्तिर्ग्राहकानुभवावृते ॥ २०७३ ॥
अस्वस्थलोचनैर्दृष्टं तथा पीताद्यवेक्ष्यते ।
निष्कृष्टं ग्राहकांशाद्य संवेद्यं न तथा परम् ॥ २०७४ ॥

---

द्वितीयादयोऽपि हेतवः कथं सिद्धाः ? इत्यत आह—न स्मरामीत्यादि । ग्राह्यास्मरणेऽपि ग्राहकस्मृतिर्दृष्टा, यदि च तस्माद् ग्राहकादेकान्तेन ग्राह्यस्याभिन्नता स्यात्, तदा ग्राह्येऽपि स्मरणं भवेत्, ग्राहकवत् । न च भवति, तस्माद् भिन्नयोगक्षेमत्वाद् भिन्नौ ग्राह्यग्राहकौ । स्यादेतद्—भवत्येव ग्राह्येऽपि स्मरणम् ? इत्याह—ग्राहकस्मृतिसद्भाव इत्यादि । तत्रेति ग्राहकस्मृतिसद्भावकाले । [redacted] एव = ग्राहक एव गृह्यते, न ग्राह्यमित्येवकारो [G 579] भिन्नक्रमः । अन्वयव्यतिरेकाभ्यामिति । ग्राह्यग्राहकस्मरणयोर्भावाभावाभ्याम् । तथा हि—ग्राहकस्मरणभावेऽपि ग्राह्यस्मृतेरभाव ॥ २०७०-२०७२ ॥

अप्रसिद्धोपलम्भस्येत्यादिना प्रतिविधत्ते । "स बहिर्देशसम्बन्ध प्रत्यक्षमुपलभ्यते" (मी. द., शा. भा. १.१.५) इत्यस्यानैकान्तिकमाह—अस्वस्थेत्यादि । निष्कृष्टमित्यत्र छेदः । तथेति । यथा सत्यामिभ्व पीतादि बहिर्देशसम्बद्धं विस्पष्टमुपलभ्यते, तथा कामलाद्युपहतनयनोपलब्धमपि समीक्ष्येत[1] । यदि नाम समीक्ष्यते, ततः किमित्याह—ग्राहकांशाद्य संवेद्यं नेति छेद । ग्राहकांश-

---

१. समीक्ष्येत—जै० ।

अलक्षितविशेषा च ग्राह्यरूपे च सा स्मृतिः ।
सर्वतो भिन्नरूपे तु न साऽभ्यासाद्यसम्भवात् ॥ २०७५ ॥
गृहीत इति कोऽप्येवं नान्यथा स्मरणं भवेत् ।
शुद्धस्फटिकसंकाशो[1] वेद्यते स्मरणं न च ॥ २०७६ ॥

दिति । निष्कृष्टमित्यध्याहार्यम् । संवेद्यं नेति भवतीति शेषः । तेनायमर्थो भवति—तथ पीतादि तैमिरिकाद्युपलब्धं ग्राहकांशान्निष्कृष्टं पृथक्संवेद्यं न भवति, अथ च बहिर्देशसम्बद्धमुपलभ्यते, तस्मादनैकान्तिकमेतत् । तथा परमिति । सत्याभिमतमपि पीतादि । अनेन विच्छिन्नस्पष्टप्रतिभासमात्रेण द्वयोरपि साम्यं योजयति ॥ २०७२–२०७४ ॥

"न स्मरामि मया कोऽपि" ( तत्त्व० २०७० ) इत्यत्राह—अलक्षितेत्यादि । अनेन ग्राहकस्मरणे ग्राह्यास्मरणस्यासिद्धिमाह । स्यादेतत्—यदि ग्राह्ये सा स्मृतिः, किमित्यलक्षितविशेषा भवति; यावता यथैव तद्ग्राह्यं सर्वतः सजातीयविजातीयाद्भिन्नं तथैव तत् स्मरेत्; एवं हि तद्विषयता तस्याः स्यात्, अन्यथा कथमगृहीततद्भेदं तद्विषया भवेत्, अतिप्रसङ्गात् ? इत्याह—सर्वत इत्यादि । एतदुक्तं भवति—न तावद् विकल्पस्य यथावस्थितवस्तुग्रहणसामर्थ्यम्; तस्यावस्तुविषयत्वात् । केवलं तथाभूतपदार्थानुभवबलाद् यथैवार्थित्वादयो निश्चयहेतवः सन्ति, तत्र तदाकाराध्यवसायी स्मार्तः प्रत्ययो निर्विषय एव । परमार्थतः स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेर्भ्रान्त एव सर्वो जायते । तस्य त्वध्यवसायवशेन विषयव्यवस्था, न परमार्थतः । न च ग्राह्याध्यवसाय स्मृतेरपि विद्यते, केवलं तथाविधाभ्यासपाटवादेरप्रत्यासत्तितारतम्यादिकारणाभावादलक्षितविशेषा [G. 580] भवति, येन स्मरणान्तराद् विशिष्यते ॥ २०७५ ॥

स्यादेतत्—क्रमभावित्वे ग्राह्याध्यवसायोऽस्ति स्मृतेः ? इत्याह—गृहीत इत्यादि । यदि ह्यनुपलक्षितविशेषं ग्राह्यमपि सा स्मृतिर्नाध्यवस्येत्, तदा 'कोऽपि गृहीतः' इत्येवमपि सामान्याकारेण ग्राह्यप्रत्यवमर्शिनी न प्रवर्तेत । न चापि केवलो ग्राहकाकारानङ्कितमूर्त्तितया ग्राहकः शुद्धस्फटिकसंकाशः स्मर्यते । येनोच्यते—

१. ०ष्काशं—पा०, गा० ।

कम्बुपीतादिविज्ञानैर्हेत्वो पश्चिमयोरपि ।
अनैकान्तिकता व्यक्तं दिगेषाऽन्यत्र साधने ॥ २०७७ ॥

---

"स्मरन्ति ग्राहकोत्पाद ग्राह्यरूपविवर्जितम्" इति । तस्मात् तत्स्मरणे तदनुभवनम सिद्धम् ।

यौ च ज्ञानोत्पत्तेर्ज्ञानान्तरादिर्तीयौ पश्चिमौ हेतू, तयो पीतशङ्खादिज्ञाने न[1] व्यभिचार, यथा पीतशङ्खादिज्ञान[1] ज्ञानोत्पन्नमपि सत् स्वात्र पीताद्याकार गृह्णाति, यथा च ज्ञानमपि सन् ज्ञानान्तरस्य पीतादेर्ग्राह्यस्य बोधक भवति, तथाऽन्यदपीति व्यभिचारिता हेत्वो । तथापि च पीतशङ्खादिज्ञानस्य निरालम्बनत्वम् । अत एवात्मगतस्य पीताद्याकारस्य वेदनात् स्वसंवेदन सिद्धमित्येतदपि प्रतिपादितम् । एषा दिगिति । अन्यत्रापि = बहिरर्थसाधने परोपन्यस्ते । एषा = दूषणदिक् । यदुक्त परेण—कथमद्वय साध्यत्वेनेष्टम्, किं भासमानस्य नीलाद्याकारस्य ज्ञानरूपस्य च अनुभवसिद्धस्याभावात् कथञ्चित् नाम योज्यते, तथा सति सर्वाभावप्रसङ्ग स्यात् ? अत्र वक्तव्यम्—न सर्वाभाव, यस्मात् स्वभ्रनिरिक्तस्य ग्राह्यस्य पृथिव्यादे स्वलक्षणतोऽसत्वात् । सन्तानान्तरस्य तु ग्राह्यरूपेणाभावात् ग्राह्याकारशून्यत्वम्, तदपेक्ष्य प्रकल्पित तु यद्विज्ञानस्य कर्तृत्व विजानातीति विज्ञानमिति कृत्वा तथाभावाद् ग्राहकाकारशून्यत्वम्, न तु विज्ञानस्वलक्षणस्यापि, सर्वस्य स्वयँणाभावात् । तथा चोक्तम्—

"नीलपीतादि यज्ज्ञानाद्[2] बहिर्वदवभासते ।
तत्र सत्यमतो नास्ति विज्ञेय तत्त्वतो बहि ॥
तदपेक्षा च संवित्तेर्मता या कर्तृरूपता ।
सा न सत्यमत सविद्रूपेऽपि विभाव्यते" ॥

( ) इति ।

एव च कृत्वा, अयमपि प्रज्ञापारमितापाठ सुनीतो भवति—"विज्ञान विज्ञानस्वभावेन शून्यं लक्षणशून्यतामुपादाय" ( ) इति ॥ २०७६-२०७७ ॥

---

१-१ पा०, गा० पुस्तकयोर्नास्ति । २. य ज्ञाने—पा०, गा० ।

हेतोर्ग्राह्यग्राहकभावसमर्थनम्

विवादास्पदमारूढं विज्ञानत्वादतो मतः।
अद्वयं वेद्यकर्तृत्ववियोगात् प्रतिबिम्बवत् ॥ २०७८ ॥
ननु च प्रतिबिम्बेऽपि ज्ञानं सालम्बनं मतम्।
चक्षूरश्मिनिवृत्तौ हि स्वमुखादेस्तथेक्षणात् ॥ २०७९ ॥
नाभिमुख्येन तद्दृष्टेः स्वमुखादेस्तथेक्षणम्।
प्रमाणदेशभेदादिदृष्टेश्चान्यपदार्थवत् ॥ २०८० ॥

एवं [1]यज्ज्ञानमित्यादौ मौले प्रयोगे हेतोः साध्येन व्याप्तिं प्रसाध्योपसंहरति—विवादास्पदमित्यादि।

[G. 581] विवादास्पदविशेषणेनैतदाह—स्वस्थनेत्रादिविज्ञानमत्र विशेषः साध्यधर्मी; न सर्वः, सामान्यं तु विज्ञानत्वादिति हेतुः; तेन न प्रतिज्ञार्थैकदेशता हेतोरिति। वेद्यकर्तृत्ववियोगादित्यद्वयत्वविशेषणम्। वेद्यकर्तृत्वद्वयविरहेणाद्वयमिष्टम्, न तु सर्वथाऽभावादित्यर्थः। प्रतिबिम्बवदिति। विषयिणि विषयोपचारात् प्रतिबिम्बज्ञानं प्रतिबिम्बशब्देनोक्तम्।

यद्वा—सप्तम्यन्ताद्वतिः कर्तव्यः, तेन ज्ञानमेव सामर्थ्यादाधेयतया लभ्यते। न चासिद्धो हेतुः; भेदान्तरप्रतिक्षेपेण स्वभावस्यैव तथा निर्देशाच्च ज्ञातुत्वम्। नापि विरुद्धः; सपक्षे भावात् ॥ २०७८ ॥

नन्वित्यादिनाऽपरो दृष्टान्तस्य साध्यविकलतामुद्भावयति। यस्माच्चाक्षुषा रश्मयो दर्पणादितलप्रतिहता निवर्तमानाः स्वमुखादिना सम्बध्यन्ते, ततस्ते तथा मुखादिप्रतीतिहेतवो भवन्ति। अतः स्वमुखादेरेव तथा दर्पणाद्यन्तर्गतादिरूपेणेक्षणं भवति। ततश्च न प्रतिबिम्बज्ञानं ग्राह्यग्राहकद्वयरहितं सिद्धम् ॥२०७९॥

नाभिमुख्येनेत्यादिना प्रतिविधत्ते। न स्वमुखादेस्तथेक्षणम्; आभिमुख्येन तस्य स्वमुखादेर्दर्शनात्[2]। तद्देशप्रमाणवर्णादिभेदेन दृष्टेश्च न स्वमुखादेस्तथेक्षणमिति सम्बन्धः। अन्यपदार्थवदिति। शब्दादिपदार्थवत्। एतदुक्तं

१. यज्ज्ञान॰—पा, गा॰।
२. स्वमुखादे॰—पा॰, गा॰।

भदन्तशुभगुप्तमतनिरासः

विज्ञानत्वं प्रकाशत्वं तच्च ग्राह्ये निरास्पदम् ।
अनिर्भासाद्ययोगेन व्याप्तिस्तेनास्य निश्चिता ॥ २०८१ ॥

भवति—यदि[1] मुखादिग्राहकं तज्ज्ञानं स्यात्, तदा यथैव तन्मुखादि व्यवस्थितं तथैव गृह्णीयात् । न ह्यन्याकारस्य ज्ञानस्यान्यत् ग्राह्यं युक्तम्, अतिप्रसङ्गात् । यावता दक्षिणाभिमुखस्थितो दर्पणतलं निभालयन्नुत्तराभिमुखं स्वमुखं पश्यति । यथाऽल्पीयसि दर्पणतले महतोऽपि स्वमुखस्याल्पप्रतिबिम्बकमुपलभ्यते, तथा दर्पणतलसम्बद्धं दूराच्च प्रविष्टमिवेक्ष्यते । न च तावद्दूरं तथाऽऽदर्शतलम्, नापि मुखादि तत्सम्बद्धम् । तथा विमलसलिले सरसि तटान्तस्थितशाखि-शिखरिणा प्रतिबिम्बान्यधोगतशाखादिशिखरशेखराण्युपलभ्यन्ते, न च ते तथा स्थिताः । तस्मात् प्रतिबिम्बज्ञानं न[2] स्वमुखादिग्राहकम्, तद्विलक्षणप्रतिभासित्वात् शब्दज्ञानवत् ॥ २०८० ॥

[ G 582 ] भदन्तशुभगुप्तस्त्वाह—

"धीमात्रत्वेन ससाध्ये यज्ज्ञानत्वादिसाधनम् ।
विजातीयाविरुद्धत्वात् सर्वं शेषवदुच्यते ॥" (                ) इति,

तं प्रत्याह—विज्ञानत्वमित्यादि । पूर्वमेव हि—"अनिर्भासं सनिर्भासं" ( तत्त्व० १९९८ ) इत्यादिना व्याप्तेः प्रसाधितत्वात् नानैकान्तिको हेतुः । आचार्यदिग्नागपादैरालम्बनप्रत्ययव्यवस्थार्थमुक्तम्—

"यदन्तर्ज्ञेयरूपं तु बहिर्वदवभासते ।
सोऽर्थो विज्ञानरूपत्वात् तत्प्रत्ययतयाऽपि च ॥" (                ) इति ।

अनेन हि स्वाकारो विषयव्यवस्था प्रतिपादिता । पुनरप्युक्तम्—"अथ वा शक्त्यर्पणात् क्रमेणापि सोऽर्थावभासः स्वानुरूपकार्योत्पत्तये शक्तिं विज्ञानाधारां करोतीत्यविरोधः" (                ) इति । अनेनानन्तरज्ञाने स्वानुरूपकार्योत्पत्तिनिमित्तशक्तिसमर्पणात् कारणत्वं तस्य प्रतिभासस्य समर्थितम् ।

1. पा० पुस्तके नास्ति ।    2. पा०, गा० पुस्तकयोर्नास्ति ।

शक्तावनन्तरे ज्ञाने ग्राह्यांशे विषयस्थितिः ।
तात्त्विकी नेष्यतेऽस्माभिस्तेन मानं समर्थ्यते ॥ २०८२ ॥
विज्ञप्तिमात्रतासिद्धिर्धीमद्भिर्विमलीकृता ।
अस्माभिस्तद्दिशा यातं[1] परमार्थविनिश्चये ॥ २०८३ ॥

---

अत्र तेनैव भदन्तेन दूषणमुक्तम्—

"यद्यपीन्द्रियविज्ञप्तेर्ग्राह्यांशः करणं भवेत् ।
अतदाभतया तस्या नाक्षवद्विषयः स तु ॥"

( ) इत्यादिना ।

अत्राह—शक्तावित्यादि । शक्तावनन्तरे ज्ञान इति व्यधिकरणसप्तम्यौ । अनन्तरे ज्ञान इति । समनन्तरप्रत्यये आलयाख्ये या शक्तिस्तथाविधार्थप्रतिभासप्रत्ययसमर्पिता ।

तात्त्विकी नेष्यत इति । यतः परमाण्वादेर्व्यतिरिक्तस्यालम्बनत्वं न युज्यत इति विस्तरेण[1] प्रतिपाद्याचार्येण[2]—"मा भूत् सर्वथाऽऽलम्बनप्रतिषेधे प्रतीतिबाधा, तथा—आलम्बनाधिपतिसमनन्तरहेतुप्रत्ययलक्षणाश्चत्वारः[4] प्रत्यया इति सूत्रे वचनादभ्युपेतबाधापि" ( ) इति अविरोधप्रतिपादनाय यथाविध आलम्बनप्रत्ययोऽभिप्रेतः सूत्रे लोके च तथा प्रतिपादितं संवृत्या, न परमार्थतः । परमार्थतस्तु निरालम्बनाः सर्व एव प्रत्यया इति ॥ २०८१–२०८३ ॥

इति बहिरर्थपरीक्षा

---

१ याल—बौ० ।
२. ०प्रतिपादितम्—गा० ।
३. प्रतिपादित चाचार्येण—गा० ।
४. प्रत्ययस्वलक्षण०—गा० ।

# श्रुतिपरीक्षा

## श्रुतेरपौरुषेयत्वसमर्थनमुखेन जैमिनीयमतानुवादः

अन्ये पुनरिहाज्ञानमलीमसधियो जगुः ।
चित्तमात्रनयो[1] नायं युज्यते श्रुतिबाधनात् ॥ २०८४ ॥

[G 583] "स्वतन्त्रश्रुतिनिःसङ्गः" ( तत्त्व० ५ ) इत्येतत्समर्थनार्थमाह—अन्ये इत्यादि । अन्ये इति जैमिनीयाः । त एवमाहुः—"चोदनैव धर्माधर्मादिव्यवस्थानिबन्धनमालोकभूता सर्वप्राणभृतां साधारणं चक्षुरिव व्यवस्थिता । अवश्यं सैव धर्मार्थिभिः पुरुषैः प्रेक्षावद्भिः प्रमाणत्वेनाश्रयणीया, नान्यत्पुरुषप्रणीतवचनादिकम् । तथा हि—पुरुषस्य रागादिभिरविद्यया च परीतचेतसो वचनं नालमतीन्द्रियमर्थमविपरीतमवगमयितुम् । अतस्तद्वचनसमधिगम्यो न धर्मादिः । नाप्यर्वाग्दर्शिनः प्रत्यक्षसमधिगम्यः; तस्यातीन्द्रियत्वेनात्यन्तपरोक्षत्वात् । तथा हि—इष्टानिष्टार्थसाधनयोग्यतालक्षणौ धर्माधर्मौ । यथोक्तं शाबरे भाष्ये—"य एव श्रेयस्करः स एव धर्मशब्देनोच्यते । कथमवगम्यते ? यो हि यागमनुतिष्ठति तं जनाः 'धार्मिक' इति समाचक्षते । यश्च यस्य कर्ता स तेनाख्यायते, यथा—पाचकः, लावक इति । तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स एव धर्मशब्देनोच्यते" ( मी० द०, शा० भा० १.१.२ ) इति । तदनेन द्रव्यादीनामिष्टार्थसाधनयोग्यता धर्म इति प्रतिपादितं भवति । तथा हि—यागशब्देन द्रव्यगुणकर्माणि श्रेयसः साधनानि विशिष्टान्युच्यन्ते । तत्र च धर्मशब्दप्रवृत्तिर्दर्शिता । यद्यपि तानि द्रव्यादीनि प्रत्यक्षाणि स्वरूपतः, न च श्रेयःसाधनत्वेन, तद्रूपेण च तेषां धर्मत्वमिष्यते, न स्वरूपमात्रेण । यथोक्तम्—

"श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता ॥

( श्लो० वा०, चो० सू० १९१ )

---

१. चित्तमात्रतया—पा०, या० ।

एषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ।
श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ॥
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥"

( श्लो० वा०, चो० सू० १३,१४ ) इति ।

ताद्रूप्येण चेति श्रेयःसाधनरूपेण । तस्माद्योग्यता धर्म इति स्थितम् । धर्मवैपरीत्येनाधर्मोऽपि सामर्थ्यादनिष्टार्थसाधनयोग्यतेति स्वयमवसीयते । न च योग्यतामर्वाग्दर्शनः प्रत्यक्षीकर्तुमीश[1]; तस्याः सदैव कार्यानुमेयत्वात् । यदाह—

"शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः[2]"

( श्लो० वा० चो० सू० २०० ) इति ।

अन्यथा धर्मादर्शित्वमेव हीयेत । नापि योगिप्रत्यक्षमतीन्द्रियविषयम्; प्रत्यक्षत्वात्, इतरप्रत्यक्षवत् । नाप्यनुमानं धर्माधर्माधिगमाय युक्तम्; प्रतीतसम्बन्धस्यैव वस्तुनस्तेन परिच्छेदात् । धर्मस्य चातथाभूतत्वात् । नाप्युपमानं समर्थं धर्मप्रत्यायने; तथा हि—उपमानं सादृश्यमसन्निकृष्टे [C. 584] बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य । न च धर्मेण सदृशः कश्चित् प्रतीतः सम्भवति, यत्सादृश्यात् तस्याधकल्पना भवेत् ।

नाप्यर्थापत्तिः क्षमा धर्माधर्मावबोधने । तथा हि—दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यदृष्टार्थकल्पनाऽर्थापत्तिः । न च धर्मेण विना कश्चिदर्थो नोपपद्यते; यतोऽस्य कल्पना भविष्यति । अभावोऽपि 'प्रमाणाभावो नास्ति' इत्यस्यार्थस्य प्रसिद्धये प्रभवति, न विधौ । तस्मात्प्रमाणपञ्चकतो धर्माधर्मौ यदि चोदना न शक्नुयादुद्धर्तुम्, तेनैव प्रलीनौ स्यातामिति चोदनालक्षणोऽर्थो धर्मादिर्नेन्द्रियादिलक्षणः । चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुम्, नान्यत् किञ्चनेन्द्रियम् । अतोऽवश्यं चोदना प्रमाणयितव्या । 'चोदना' इति च क्रियायाः प्रवर्तकं निवर्तकं च वाक्यमाहुः । तथा—"स्वर्गकामोऽग्निष्टोमेन यजेत" (          ) इति प्रवर्तकम्, "न हिंस्याद् भूतानि" (          ) इति निवर्तकम् । उभयाश्च

१. ॰कर्तुमीशाः—चे॰ । २. 'भावान्तरविशेषाः' इति तत्रत्यः पाठः ।

सा हि प्रमाणं सर्वेषां नराकृततया स्थिता।
वैतथ्यं प्रतिपद्यन्ते पौरुषेय्यो गिरो यतः॥ २०८५॥
दोषाः सन्ति न सन्तीति पुंवाच्येव[1] हि शङ्क्यते।

---

प्रामाण्योपायं[2] भवतां विज्ञप्तिमात्रं नैरात्म्यकमिति प्रतिज्ञार्थः, स न युज्यते। कुतः? श्रुतिबाधनात् श्रुत्या = वेदेन बाधनात्। चित्तव्यतिरिक्ताग्निहोत्रादि-प्रकाशनात्, स्वयं च चित्तव्यतिरेकेणावस्थानात्। चित्तमात्रनय[3] इत्युपलक्षणम्। तथा क्षणिकत्वनैरात्म्यसर्वज्ञवैराग्यादिप्रतिज्ञापि बाध्यत एव; तद्विरुद्धार्थ-परिदीपनेनावस्थानात्॥ २०८४॥

स्यादेतत्—बाध्येत सर्वमेतत्, यदि तस्याः प्रामाण्यं सिद्धं भवति? इत्याह—सा हि प्रमाणमिति। अवितथं ज्ञानं प्रमाणम्, तद्धेतुत्वात् सापि प्रमाणमुच्यते। कथम्? इत्याह—नराकृततयेति। अपौरुषेयत्वात्। अनेना-वितथज्ञानहेतुत्वं वैतथ्यकारणरागादिदोषगणाभावेन प्रतिपादयति। प्रयोगः—यन्मिथ्यात्वहेतुदोषसंसर्गरहितं तदवितथज्ञानकारणम्, यथा तिमिरादिदोषानुपप्लुतं चक्षुः, मिथ्यात्वहेतुरागादिदोषसंसर्गरहितश्चापौरुषेयत्वाद् वेद इति स्वभावहेतुः। वैधर्म्यदृष्टान्तेनानैकान्तिकतां परिहरन्नाह—वैतथ्यमिति। अनेन हि साधना-भावेन साध्याभावस्य व्याप्तिमादर्शयति। तथा हि—दोषा मिथ्यात्वहेतवः यत्रैव सन्निदधति तत्रैव स्वकार्यं मिथ्यात्वमुपस्थापयन्ति, नान्यत्र; कारणमन्तरेण कार्यस्यासम्भवात्। सम्भवे वाऽहेतुकत्वप्रसङ्गात्। नापि तदन्तरेण भवतस्तत्का-र्यत्वं युक्तम्; अतिप्रसङ्गादित्यतो मिथ्यात्वदोषयोः कार्यकारणभावानुपपत्तिरहेतुक-त्वप्रसङ्गश्च [G. 585] मिथ्यात्वस्येति विपर्यये बाधकं प्रमाणमिति नानैका-न्तिकता। प्रयोगः—यत्र हि यत्कारणं नास्ति तत्तत्र न भवति, यथा अयस्यवि-द्यमानकारणो[4] धूमः। नास्ति च वैतथ्यहेतुमोहादिदोषगणः श्रुताविति कारणानुपलब्धिः॥ २०८५॥

नाप्यसिद्धतेति प्रतिपादयन्नाह—दोषाः सन्तीत्यादि। दोषा हि पुरुषा-

---

१. पुंवाच्येषु—पा०, गा०। २. प्रामाण्यं योपायं—पा०, गा०।
३. चित्तमात्रतयेति—पा०, गा०। ४. पयस्यवि०—गा०।

श्रुतौ कर्तुरभावात्[1] तु[1] दोषाशङ्कैव नास्ति नः ॥ २०८६ ॥
कर्त्ता तावददृष्टः स कदाप्यासीदितीष्यते ।
अदृष्टपूर्वसम्बन्धः सम्प्रत्यज्ञानहेतुकः ॥ २०८७ ॥
अनुमानविहीनोऽपि सोऽस्तीति परिकल्प्यते ।
आगमोऽपि न तत्सिद्धयै कृतकाकृतकोऽस्ति न ॥ २०८८ ॥
स्वयमेवाप्रमाणत्वात् कृतकोऽस्य न बोधकः ।

श्रिताः; तद्धर्मत्वात्, तत्कथं ते स्वाश्रयमन्तरेण भवेयुः । सम्भवे वाऽनाश्रितत्वप्रसङ्गात् । एष ह्याश्रितधर्मो यदाश्रयानुविधायित्वम् । दोषाश्रयश्च पुरुषः कर्ता, स च निवृत्तो वेद इति कुतो दोषाशङ्का । एतेनेष्ट[2] सन्दिग्धासिद्धतापि स्यात्[3] ॥ २०८६ ॥

स्यादेतत्—दोषाश्रयस्य कर्तुरभावोऽपि कथं सिद्ध इति ? अतस्तदभावम् तद्ग्राहकप्रमाणपञ्चकनिवृत्त्या प्रतिपादयति—कर्त्ता तावदित्यादि । [ G 586 ] न तावत् प्रत्यक्षतः कर्ता वेदस्य सिद्धः । तथा हि—अयमसाविति न शक्यते शृङ्गग्राहिकया प्रतिपादयितुम्; इदानीमनुपलभ्यमानत्वात् । आसीत्कर्त्तेत्येवं तु कल्पनीयम्, स चादृष्टः सन् कदाप्यासीदितीष्यते, यदृच्छमाणकमिति शेषः । नाप्यनुमानतः सिद्ध इत्याह—अदृष्टपूर्वेत्यादि । अदृष्टपूर्वेण कर्त्रा सम्बन्धो जन्यजनकभावलक्षणो यः क्रियते सम्प्रति वेदस्य वेदनिन्दकैः, सोऽज्ञानहेतुकः; ज्ञापकप्रमाणाभावात् । न ह्यदृष्टेन वह्निना सह कश्चिद् धूमस्य सम्बन्धं ग्रहीतुं प्रभुः । तस्मादनुमानविहीनोऽपि स कर्ता कल्प्यते । अपिशब्दान्न केवलं प्रत्यक्षविहीनः ।

शाब्दप्रमाणनिवृत्तिमाह—आगमोऽपीत्यादि । वेदस्य व्यतिरेकेणाकृतकस्यागमस्याभावान्न तावदकृतकोऽपि[4] । नापि कृतकः; तस्य स्वयमेवाप्रमाणत्वात् । तथा हि—कृतको भवन्नागमो वेदसम्बद्धमनुप्रभृतिपुरुषकर्तृको वा[5] भवेत्, तदस-

1–1. ०रभावात्तु—पा०, गा० । 2. ये नष्टाः—पा०; एतेन नष्टाः—गा० । 3. पा०, गा० पुस्तकयोर्नास्ति । 4. ०दकृतकः—पा०, गा० । 5. पा०, गा० पुस्तकयोर्नास्ति ।

मन्वादिवचनस्यापि तत्कृतैव हि सत्यता ॥ २०८९ ॥
असम्बद्धस्तु विहिष्ट सत्यवादी कथं भवेत्।
अतोऽन्यकर्तृकोऽप्यस्ति वेदकारागमो न न ॥ २०९० ॥
वेदकारसदृक् कश्चिद् यदि दृश्येत सम्प्रति।
ततस्तेनोपमानेन कर्तुरप्युपमा भवेत् ॥ २०९१ ॥
वेदकाराद् ऋते किञ्चिन्न सिद्धयेत् प्रमितं यदि।
अर्थापत्त्या प्रतीयेत वेदकारस्ततो ध्रुवम् ॥ २०९२ ॥
ननु तेन विना किञ्चिद् वेदे यन्नोपपद्यते।
अस्मिन् सति हि बह्वेव प्रामाण्यादि न सिद्ध्यति ॥ २०९३ ॥
स पञ्चभिरगम्यत्वादभावेनैव गम्यते।
तेन दुर्लभभावोऽसौ प्रमाणाभावबाधनात् ॥ २०९४ ॥

---

मन्वादिवाक्यस्मुनिप्रभृतिप्रणीतो[1] वा? प्रथमपक्षमधिकृत्याह—मन्वादिवचनस्येत्यादि। तत्कृतैवेति[2] वेदकृतैव। अनेन स्वतः प्रामाण्याभावमाह। द्वितीये पक्षे दोषमाह—असम्बद्धस्त्विति। असम्बद्धो वेदेन, तत्रानधिकृतत्वात्। अन्यकर्तृक इति असम्बद्धपुरुषकर्तृक। वेदकारागम = वेदकारप्रतिपादक।

उपमानाभावमाह—वेदकारसदृगित्यादि।

अर्थापत्तेरभावमाह—वेदकाराद् ऋत इति। प्रमितमिति[3] प्रमितिप्रमाणपदकपरिच्छिन्नम्। तेन विनेति कर्त्रा। किञ्चिदिति प्रमितम्। अस्मिन्निति कर्तरि। प्रामाण्यादीत्यादिशब्देन धर्मादिव्यवस्था।

अभावेनैवेति। अभावेन प्रमाणेन नास्तीत्येव गम्यते, तस्य प्रतिषेधविषयत्वात्। अथ वा—अभावेन रूपेण नास्तीत्येव गम्यत इति यावत्, प्रमाणाभावात्। प्रमाणाभावबाधनादिति। प्रमाणानामभाव = निवृत्ति, अभावप्रमाणमिति यावत्, तेन बाधनात्। नास्ति वेदस्य कर्तेति सिद्धम् ॥२०८७ २०९४॥

---

1 °सम्बद्धवाक्य°—पा°, गा°। 2 तेन कृतौ वेति—जै°।
3 जै° पुस्तके नास्ति।

अप्रामाण्यनिवृत्त्यर्था वेदस्यापौरुषेयता ।
येष्टा साऽपि त्ववस्तुत्वात् साधनीया न साधनैः ॥ २०९५ ॥
यन्नाम सांकिको ब्रूयात् पौरुषेयत्वसाधनम् ।
तन्निराकरणात् सिद्धा वेदस्यापौरुषेयता ॥ २०९६ ॥
वस्तुभूतौ हि यो पक्षौ प्रधानपरमाणुवत् ।
तयोरन्यतरासिद्धचा नेतरः सिद्धचति स्वयम् ॥ २०९७ ॥
प्रधानकारणत्वस्य निराकृत्यापि साधनम् ।
साध्यं हेत्वन्तरेणैव परमाणुकृतं जगत् ॥ २०९८ ॥
भावपक्षप्रसिद्धचर्थमुच्यते यत्तु साधनम् ।

स्यादेतत्—यदि वेदस्यापौरुषेयत्वमेवं प्रसाध्य प्रामाण्यं प्रसाध्यते, हन्त तर्हि परतः प्रामाण्यं प्रयुक्तं वेदस्य ! तथा हि—न तावद् वेदस्य प्रामाण्यं प्रतीयते यावदपौरुषेयता न साध्यते ! इत्याशङ्कयाह—अप्रामाण्येत्यादि । अनेनैतदाह—न ह्यस्माभिरसिद्धं प्रामाण्यं विधिरूपेण प्रसाध्यते, किं तर्हि ? [G. 587] परेण यदप्रामाण्यमासक्तं तन्निवृत्तिः क्रियते । अपवादे च निरस्ते स्वयमेवोत्सर्गोऽनपोदितः सिद्धोऽवतिष्ठते । नाप्यपौरुषेयत्वं प्रसाध्यते; यतस्तत्साधनद्वारेण सामर्थ्यात् परतः प्रामाण्यप्रसङ्गः स्यात् ! किं तर्हि ? तस्यापौरुषेयतानिवृत्तिमात्रलक्षणत्वेनावस्तुत्वात् ॥ २०९५ ॥

यदि [redacted] साध्यते, कथं तर्हि स्वयं सिध्यति ? इत्याह—यन्नामेत्यादि ॥ २०९६ ॥

ननु निराकृतेऽपि परपक्षे स्वपक्षमसाधयन प्रमाणेन कथं कृतिनो, येन कृतार्था वेदवादिनो भवन्ति ! इत्याह—वस्तुभूतावित्यादि ॥ २०९७ ॥

"प्रधानपरमाणुवत्" (तत्त्व० २०९७) इत्येतद्व्याचष्टे—प्रधानकारणत्वस्येत्यादि ॥ २०९८ ॥

वैशेषिकैर्यद्यपि 'सांख्योक्तप्रधानकारणं जगत्साधनं' निराकृतम्,

1-1 ०कारणमत्०—पा०, जा० ।

तस्मिन् निराकृते सम्यगभावः सिद्ध्यति स्वयम् ॥ २०९९ ॥
यत् पूर्वापरयोः कोट्योः परैः साधनमुच्यते ।
तन्निराकरणं कृत्वा कृतार्था वेदवादिनः ॥ २१०० ॥
नित्यत्वं वस्तुरूपं यत् तदसाध्यतामपि ।
स्वयं भवति तत्सिद्धिः पूर्वपक्षद्वये हते ॥ २१०१ ॥
पूर्वा वेदस्य या कोटिः पौरुषेयत्वलक्षणा ।
परा विनाशरूपा च तदभावो हि नित्यता ॥ २१०२ ॥
यत्नादौ क्रियते वेदः पश्चान्नैव विनश्यति ।
तदेव तस्य नित्यत्वं ज्ञेयं तदपि चेन्मतम् ॥ २१०३ ॥

तथापि हेत्वन्तरेणैव परमाणुकृतं जगत् साधनीयम्, इहाप्येवं भविष्यतीति चेत्? इत्याह[1]—भावपक्षेत्यादि। भावपक्षः = पौरुषेयता, तन्निवृत्ति = अभावपक्षः। अन्योऽन्यपरिहारस्थितलक्षणयोश्चैकप्रतिषेधस्यापरविधिनान्तरीयकत्वादित्यभावः स्वयं सिद्ध्यतीति भावः। तथा हि—वेदस्य पूर्वापरयोः कोट्योरुत्पादविनाशलक्षणयोः सिद्धये यद् बौद्धैः साधनमुच्यते, तन्निराकरणमात्रेणैव वेदापौरुषेयत्वस्य कोटिद्वयशून्यतालक्षणस्य सिद्धाविष्टसिद्ध्या कृतार्था वेदवादिनः ॥ २०९९–२१०० ॥

ननु निराकृतेऽपि तव साधने वेदस्य नित्यत्वं विधिरूपं यत्नान्तरेण साधनीयम्, [G 588] तत् कथमसाधयन्तो वेदस्य नित्यत्वं कृतार्था भवेयुर्वेदविदः? इत्याह—नित्यत्वं वस्तुरूपमित्यादि। पूर्वपक्षद्वयम् = पूर्वापरयोः कोट्योः साधनम् ॥ २१०१ ॥

यथा पूर्वपक्षद्वये हते नित्यत्वस्य स्वयं सिद्धिर्भवति, तद्दर्शयति—पूर्वा वेदस्येत्यादि। पूर्वापरकोटिद्वयपरिहारस्थितलक्षणत्वान्नित्यत्वस्य, परस्परपरिहारस्थितलक्षणयोश्चैकनिराकरणस्यापरसद्भावनान्तरीयकत्वादित्युक्तम् ॥ २१०२ ॥

यद्येवम्, यदि तदभावो नित्यता, न तर्हि वस्तुधर्मो नित्यत्वं प्राप्नोति? इत्याह—यत्नादौ क्रियत इति। अनेन वस्तुभूतस्य वेदस्यात्मभूत एवासौ धर्म

1. अत्राह—पा०, गा०।

अकृतत्वाविनाशाभ्यां नित्यत्वं हि विवक्षितम् ।
तौ चाभावात्मकत्वेन नापेक्षेते स्वसाधनम् ॥ २१०४ ॥

वेदाप्रामाण्यसाधननिरसनम्

वेदवाक्यार्थमिथ्यात्वं यो वदत्यनुमानतः ।
तस्य वैदिकविज्ञानबलात् पक्षो निवर्त्तते ॥ २१०५ ॥

---

इति प्रतिपादयति । यद्येवम्, वस्तुभूतत्वात् साध्यं तर्हि नित्यत्वं प्राप्तमिति परवचनावकाशमाशङ्कते—ज्ञेयमित्यादि । ज्ञेयम् = प्रमाणेन ज्ञातव्यम्, साध्यमिति यावत् । तौ चेति । अकृतत्वाविनाशौ । स्वरूपस्य साधनं स्वसाधनम् । अभावस्यापि वस्तुत्वाविरोधात् सत्यप्यकृताविनाशित्वलक्षणत्वे नित्यत्वस्य नावस्तुत्वमिति भावः ॥ २१०३–२१०४ ॥

एवं तावत् प्रमाणपञ्चकनिवृत्त्या वेदे कर्तुरभावसिद्ध्या यन्मिथ्यात्वहेतुदोषसंसर्गरहितमित्यस्य हेतोर्नासिद्धिः । नापि विरुद्धता; सपक्षे भावात् । विपक्षे चाभावान्नाप्यनैकान्तिकत्वमिति सिद्धं वेदस्य प्रामाण्यम् ।

साम्प्रतं परप्रयुक्तस्य वेदाप्रामाण्यसाधनद्वयस्य विस्तरेण दूषणमारभते । तत्रेदं साधनद्वयम्—यदैन्द्रियकं प्रयत्नानन्तरीयकं च, तदनित्यम्; यथा घटः, तथा च शब्दः—इति स्वभावहेतुसामान्येन शब्दस्यानित्यत्वे सिद्धे वेदस्याप्यनित्यत्वसिद्ध्या सामर्थ्यादस्य पुरुषवाक्यवन्मिथ्यात्वं सेत्स्यतीति [G 589] परस्य बौद्धादेरभिप्रायः । अत्र शाब्दानित्यमाणे प्रतिज्ञाबाधां विस्तरेण प्रतिपादयति । तत्र शाब्दप्रमाणबाधां तावदाह—वेदवाक्यार्थमित्यादि ।

वेदस्यागतं वैदिकम्—अग्निहोत्रात् स्वर्गो भवतीत्यादि । तद्बलात् पक्षो निवर्तते; तेन बाध्यमानत्वात् । यथोक्तम्—"न ह्यस्य चोदना स्याद्वा नवेति संशयितं प्रत्ययमुत्पादयति, न च विपरीतमिथ्यैतदितिं[1] कालान्तरे पुरुषान्तरे देशान्तरेऽवस्थान्तरे वा पुनरन्यपदेश्यप्रत्ययो भवति । योऽप्यन्यप्रत्ययविपर्यासं दृष्ट्वाऽपि विपर्ययं सिद्धवतीत्यानुमानिकः प्रत्यय उत्पद्यते, सोऽप्यनेन प्रत्यक्षेण विरुध्यमानो बाध्यते" ( मी० द०, शा० भा० १.१.५ ) इति ॥ २१०५ ॥

---

1. मिथ्यैतदिति—पा०, गा० ।

तच्च प्रत्यक्षतुल्यत्वाद् वैदिकं बलवत्तरम् ।
न शक्यमनुमानेन कथञ्चिदपि बाधितुम् ॥ २१०६ ॥
प्रत्यक्षपक्षनिक्षिप्तं शास्त्रमेव यतः स्थितम् ।
बलवत्तरमित्येतदनुमानस्य बाधकम् ॥ २१०७ ॥
दृष्टान्तनिरपेक्षत्वाद् दोषाभावाच्च लाघवम् ।
आगमस्य प्रमाणत्वे नानुमानस्य तादृशम् ॥ २१०८ ॥
तेनागमानुमानाभ्यां यत्रार्थे संशयो भवेत् ।
तत्रागमबलीयस्त्वात् कार्यस्तेनैव निर्णयः ॥ २१०९ ॥
ममाप्रमाणमित्येव वेदोऽयं बोधयन्नपि ।
वक्तुं न द्वेषमात्रेण शक्यतेऽसत्यवादिना ॥ २११० ॥

ननु च तुल्यबलयोः कथमेकेनेतरस्य बाधा ? अथ तुल्यबलत्वेऽपि बाधा, अनुमानेन तर्हि तस्य किं न बाधा स्यात् ? इत्याह—तच्च प्रत्यक्षतुल्यत्वादिति ॥ २१०६ ॥

अनुमानं कथं तर्हि तेन बाध्यते ? इत्याह—प्रत्यक्षेत्यादि । यथोक्तम्—"प्रत्यक्षस्तु वेदवचनप्रत्ययः, न चानुमानं प्रत्यक्षविरोधि प्रमाणं[1] भवति" इति ॥ २१०७ ॥

कथमनुमानादागमस्य बलीयस्त्वं येन प्रत्यक्षतुल्यत्वं तस्य ? इत्याह—दृष्टान्तनिरपेक्षत्वादिति । प्रमाणत्व इति साधनापेक्षा विषयसप्तमी । नानुमानस्य तादृशमिति । तस्य दृष्टान्तापेक्षत्वाद्, दोषसद्भावाच्च । दोषस्तु प्रत्यक्षतुल्येन वैदिकेन ज्ञानेन बाध्यमानत्वात् ॥ २१०८ २१०९ ॥

[G 590] ननु च यदेवोभयसिद्धं तदेव दूषणं भवति, न च बौद्धस्यागमः प्रमाणम्, 'द्वे एव प्रमाणे' इत्यवधारणात्, तत् कथमसिद्धेनागमप्रामाण्येन बाधा क्रियते बौद्धस्य मतेः ? इत्याशङ्क्याह—ममाप्रमाणमित्यादि ।

एवं मन्यते—न हीच्छामात्रेण वस्तुनः सिद्ध्यसिद्धी भवतः, येनाभ्युपगम

१ न प्रमाण—जे० ।

द्वेषादसम्मतत्वाद्वा न च स्यादप्रमाणता ।
न च श्रोत्यम्यनुज्ञाभ्यां प्रमाणमवकल्प्यते ॥ २१११ ॥
द्विषन्तोऽपि च वेदस्य नैवाप्रामाण्यकारणम् ।
किञ्चिज्जल्पन्ति ये नैते भवेयुः सत्यवादिनः ॥ २११२ ॥
धारणाध्ययनव्याख्याकर्मनित्याभियोगिभिः ।
मिथ्यात्वहेतुरज्ञातो दूरस्थैर्ज्ञायते कथम् ! ॥ २११३ ॥
अभियुक्ता हि ये यत्र तन्निबद्धप्रयोजनाः ।
तत्रत्यगुणदोषाणां ज्ञाने तेऽधिकृता यतः ॥ २११४ ॥
ये तु ब्रह्मद्विषः पापा वेदाद् दूरं बहिष्कृताः ।
ते वेदगुणदोषोक्तीः कथं जल्पन्त्यलज्जिताः ! ॥ २११५ ॥

शब्दनित्यत्वसमर्थनम्

किञ्च शब्दस्य नित्यत्वं श्रोत्रजप्रत्यभिज्ञया ।
विभुत्वं च स्थितं तस्य कोऽध्यवस्येद् विपर्ययम् ॥ २११६ ॥

---

मात्रेण न सिद्धमागमप्रामाण्यं भवेत्, किं तर्हि ? प्रमाणबलेन यत् सिद्धं तद् द्वयोरपि सिद्धम्, इतरथाऽग्निहोत्रादिवाक्यात् प्रत्यय इति प्रतिपादितम्, तत् कथमप्रमाणमिति शक्यं वक्तुम्, केवलं वाङ्मात्रमेतद् भवताम्। निर्युक्तिकमिति सद्भावार्थः। असम्मतत्वादिति। लोकस्याभ्यनुज्ञा = लोकसम्मतत्वम्। दूरस्था इति। शाक्यादयो वेदात्। तद्धारणादिकर्मबहिष्कृतत्वात्। तन्निबद्धप्रयोजना इति। तत्र = वेदे, निबद्धम् = उक्तम्, प्रयोजनम् = पुरुषार्थो यागाविलक्षणो येषां ते तथा[1]। ब्रह्मद्विष इति वेदद्विषः। तदुक्तं वा वार्तं प्रश्न ॥ २११०-२११५ ॥

अथ वा—मा भूदागमतो बाधा, तथापि दुष्ट[2] एव प्रतिज्ञार्थः; प्रतिज्ञादिभिर्निर्बाध्यमानत्वादिति प्रतिपादयन्नाह—किञ्चेत्यादि। [C. 591] अनेन प्रत्यक्षतो बाधामाह। तथा हि—'सर्वकालं स एवायम्' इति प्रत्यभिज्ञायमानत्वा-

---

1. पा०, ग्र० पुस्तकयोर्नास्ति।
2. दृष्ट—चै०।

तस्माद् या[1] सर्वकालेषु सर्वदेशेषु चैकता।
प्रत्यक्षप्रत्यभिज्ञानप्रसिद्धा साऽस्य बाधिका ॥ २११७ ॥
ज्वालादेः क्षणिकत्वेऽपि प्रत्यभिज्ञेति चेन्न तत्।
तत्र हि प्रत्यभिज्ञेयं सामान्यं नित्यमेव नः ॥ २११८ ॥
भेदबुद्धिस्तु यत्रांशे स्यात् केनचिदुपाधिना।
न तत्र प्रत्यभिज्ञानं भेदबुद्ध्यावधारितम् ॥ २११९ ॥
देशकालादिभिन्नाश्च गोशब्दव्यक्तिबुद्धयः।
समानविषयाः सर्वा न या नानार्थगोचराः ॥ २१२० ॥

---

नित्यत्वं प्रत्यभिज्ञाख्यात् प्रत्यक्षात्[2] सिद्धम्[2]। सर्वत्र देशे प्रत्यभिज्ञानाद्विभुत्वं च सिद्धमिति को विपर्ययं नित्यविभुत्वयोरध्यवस्येत, नैव कश्चित्। नित्यत्वव्यापित्वविपर्ययोऽनित्यत्वमविभुत्वं च ॥ २११६ ॥

तस्मादित्युपसंहरति। सर्वकालेष्विति। अतीतानागतवर्त्तमानेषु। अस्येति विपर्ययस्य ॥ २११७ ॥

ज्वालादेरित्यादिना प्रत्यभिज्ञाया व्यभिचारमाशङ्कते। आदिशब्देन लून-पुनर्जातानां केशनखतृणादीनां निर्झरादीनां ग्रहणम्, यतस्तत्रापि प्रत्यभिज्ञाऽस्ति— त एवामी केशाः, तान्येव तृणानि, सैव निर्झरधारा, तदेव सरितो जलमिति। नैतदस्ति, तत्र हि सामान्यं केशत्वादि प्रत्यभिज्ञायते, तच्च नित्यमिष्टमेवेति कुतो व्यभिचारः। यद्यपि व्यक्तिरूपमनित्यं तत्र[3] नैव प्रत्यभिज्ञायत इति। तथापि[4] कुतो व्यभिचारः। यत्रांश इति मन्दतरत्वादौ। केनचिदुपाधिनेति। मन्दत्वोर्ध्वगमनादिना। कथमवगतम्? इत्याह—भेदबुद्ध्यावधारितमिति। भिन्नबुद्धेरेतदवगतमित्यर्थः ॥ २११८–२११९ ॥

अनुमानैर्बाधामाह—देशकालादित्यादि। [G 592] गोशब्दव्यक्तिषु या बुद्धयो देशकालद्रुतमध्यविलम्बितादिप्रतिभासभेदभिन्नास्ता[5] एकार्थविषया,

---

१. ता—पा०, गा०।
२–२. प्रत्यक्षसिद्धम्—पा०, गा०।
३. तत्र—पा०, गा०।
४. पा०, गा० पुस्तकयोर्नास्ति।
५. प्रतिभेदमात्रभिन्ना—पा०।

गौरित्युत्पद्यमानत्वात् सम्प्रत्युत्पन्नबुद्धिवत् ।
गोशब्दबुद्धया ह्यस्तन्या गोशब्दोऽयं प्रकाशितः ॥ २१२१ ॥
गोशब्दविषयत्वेन यथैवाद्य प्रसूतया ।
इयं वा तं विजानाति तद्धेतोः पूर्वबुद्धिवत् ॥ २१२२ ॥
उभे वाऽप्येकविषये भवेतामेकबुद्धिवत् ।
देशकालादिभिन्ना वा समस्ता गोत्वबुद्धयः ॥ २१२३ ॥
एकगोशब्दजन्याः स्युर्गोधीत्वादेकबुद्धिवत् ।
ह्यस्तनोच्चारणो वाऽपि गोशब्दोऽद्यापि विद्यते ॥ २१२४ ॥
गोशब्दज्ञानगम्यत्वादद्योच्चारितशब्दवत्[1] ।

---

नानार्थविषया न वा भवन्ति; गौरित्याकारोपग्रहणोत्पाद्यमानत्वात्, सम्प्रत्युत्पन्नगोबुद्धिवत् ।

अथ वा—या या गोशब्दविषया बुद्धिः साऽद्यतनगोशब्दविषया, गोशब्दविषयत्वात्, अद्य प्रसूतगोशब्दबुद्धिवत् । गोशब्दविषया च ह्यस्तनी गोशब्दबुद्धिरिति स्वभावहेतुः ।

अथ वा—अद्यतनी[2] गोशब्दबुद्धिर्धर्मिणी, ह्यस्तनगोशब्दविषयत्वं साध्यधर्मः; गोशब्दविषयत्वादिति हेतुः, ह्यस्तनी गोशब्दबुद्धिर्दृष्टान्तः । एतदेवाह—इयमित्यादि । इयमित्यद्यतनी । तमिति ह्यस्तनगोशब्दज्ञानोपलब्धं गोशब्दम् । तद्धेतोरिति गोशब्दविषयत्वात् ।

अथ वा—उभे ह्यस्तन्यद्यतन्यौ बुद्धी एकविषये गोशब्दविषयत्वादेकगोशब्दबुद्धिवत् । उभे चेत्येतदेव दर्शयति । हेतुः प्रकृतत्वात् सुज्ञात इति नोक्तः ।

अथ वा—समस्ता गोत्वबुद्धयो देशादिभेदभिन्ना एकगोशब्दजन्याः; गोधीत्वात्, एकगोबुद्धिवत् । पूर्वं गोशब्दविषया बुद्धयो धर्मिण्यः, एकविषयत्वं च साध्यम्; इदानीं च गोत्वजातिविषया बुद्धयो धर्मिण्यः, एकगोशब्दजन्यत्वं साध्यमिति विशेषः । ह्यस्तनमुच्चारणमस्येति ह्यस्तनोच्चारणः । [G. 593] अयं च धर्मि-

---

१. ०दद्योच्चा०—जै० ।     २. अह्यस्तनी—पा०, बा० ।

गोरिति श्रूयमाणोऽद्य कोऽपि शब्दो मया श्रुतः ॥ २१२५ ॥
हेतोः पूर्वोदितादेव ह्य उच्चारितशब्दवत् ।
शब्दो वा वाचको यावान् स्थिरोऽसौ दीर्घकालभाक् ॥२१२६॥
सम्बन्धानुभवापेक्षज्ञेयज्ञानप्रवर्त्तनात् ।
य ईदृक् स स्थिरो दृष्टो धूमसामान्यभागवत् ॥ २१२७ ॥
अस्थिरस्तु न सम्बन्धज्ञानापेक्षोऽवबोधकः ।
तादात्विकनिमित्तत्वाद् दीर्घविद्युत्प्रकाशवत् ॥ २१२८ ॥
शब्दानित्यत्वपक्षोऽतः सर्वैरेभिर्विरुध्यते ।
अनुमानैरिदं सिद्धं नित्याः शब्दास्ततः स्थिताः ॥ २१२९ ॥
घटादेरेकतापत्तौ जात्येष्टं सिद्धसाधनम् ।

---

निर्देशः । अद्यापि वर्त्तन साध्यधर्मः । शेषं सुबोधम्। गौरिति श्रूयमाणोऽद्येति धर्मिनिर्देशः । तस्य सोऽपि श्रवणं साध्यधर्मः । पूर्वोदितादिति गोशब्दज्ञानगम्यत्वात् ।

अथ वा—यावान् वाचकशब्द इत्ययं धर्मिनिर्देशः । तस्य दीर्घकालभाक्त्वं साध्यधर्मः । सम्बन्धानुभवापेक्षज्ञेयज्ञानप्रवर्त्तनादिति हेतुः । सम्बन्धानुभवमपेक्षत इति सम्बन्धानुभवापेक्षम्, तच्च तत् ज्ञेयज्ञानप्रवर्त्तनं चेति तथोक्तम् । तस्मात् स्थिरो ज्ञेयः । स्थिरस्यैव विशेषणं दीर्घकालभागिति । कालस्थैर्येण स्थिरत्वमत्राभिप्रेतम्, न तु देशस्थैर्येण सर्वगतत्वेनेति विशेषणेन दर्शयति । धूमसामान्यभागवदिति दृष्टान्तः । स्वलक्षणस्यानन्वयान्न लिङ्गत्वमिति सामान्यभाग एव दृष्टान्तः ।

अस्थिरस्त्वित्यादि व्यतिरेककथनम् । तादात्विकनिमित्तत्वादिति । तादात्विकम् = तावत्कालिकं व्यवहारकालानुयायि निमित्तं सम्बन्धो यस्य स तथोक्तः, तद्भावस्तत्त्वम् ॥ २१२०-२१२९ ॥

ननु चानया दिशा घटादीनामप्यैक्यं शक्यते वक्तुम् । तथा हि— सर्वा देशकालादिभिन्ना घटादिव्यक्तिबुद्धयः समानविषयाः, न वा नानार्थगोचराः; घटः इत्युपजायमानत्वात् सम्प्रत्युत्पन्नघटबुद्धिवदित्येवमादि । नचैकत्वं घटादीनामिष्टं दृष्टं वा, तस्मादेते सर्व एव हेतवो व्यभिचारिण इत्याशङ्क्याह—घटादेरित्यादि ।

व्यक्तीनामेकतापत्तिं कुर्याच्चैवनया दिशा ॥ २१३० ॥
तथा दृष्टविरुद्धत्वं वाच्यं सर्वप्रमाणकम्[1] ।
यतोऽध्यक्षादिभिर्भानैर्व्यक्तिभेदः सुनिश्चितः ॥ २१३१ ॥
कृत्रिमत्वे च सम्बन्धस्तत्प्रयोगापवर्जनात् ।
तदेकव्यक्तिनिष्ठत्वान्नैव सार्वत्रिको भवेत् ॥ २१३२ ॥
पार्थिवद्रव्यसत्त्वाविलाङ्गुलत्वाविसङ्करात् ।

यदि जात्या = जातिरूपेण, घटादीनामेकत्वं साध्यते प्रसङ्गेन, तदा सिद्धसाधनम् । तदुक्तम्—"अंशो[2] ह्येतस्य जात्याख्यो नित्यो ध्वंसीतरो मत." ( श्लो० वा. श. नि. ३५२ ) इति । अथ—व्यक्तिरूपाणामेकत्वं प्रसङ्गेन साध्यते ; तदापि न व्यभिचारः; प्रत्यक्षादिभिर्बाधितत्वादस्याः प्रतिज्ञायाः, यस्मादबाधितविषयत्वे[3] सतीति सर्वे हेतवः सविशेषणा इहाभिप्रेताः । तत् कुतो व्यभिचार इत्यभिप्रायः । दृष्टविरुद्धत्वमिति । प्रतिज्ञाया इति शेषः । शेषं सुगमम् ॥ २१३०-२१३१ ॥

पुनरपि शब्दानित्यत्वप्रतिज्ञाया अनुमानार्थापत्तिभ्यां बाधामाह । तत्रेदम-नुमानम्—[ G 594 ] ययोरकृत्रिमः सम्बन्धस्तावकृत्रिमौ, यथाऽऽकाश-परमाणू । अकृत्रिमश्च सम्बन्धः शब्दस्य जातिसंज्ञकेनार्थेन वाच्यवाचकभावलक्षण इति स्वभावहेतुः । असिद्धिं परिहरन्नाह—कृत्रिमत्वे चेत्यादि ।

कृत्रिमत्वे च सम्बन्धस्येयमपेक्षणीयम् । यदि सम्बन्धः कृत्रिमो भवेत्, तदा तत्प्रयोगापवर्जनात् = शब्दप्रयोगविनाशात्, शब्दस्यापि विनाश इति सार्वत्रिकः = सर्वप्रयोगानुयायी, न स्यात् । कुतः ? तदेकव्यक्तिनिष्ठत्वात् = एकगोव्यक्तिनिष्ठ-त्वात् । तत्रार्थापत्ति —येयं रागसुसेऽनेकस्मिन्नेकस्यामपि गोव्यक्तौ सामान्यस्थिते सति गोशब्दान्निष्कृष्टस्य गोत्वस्यैव प्रतिपत्तिः, सा शब्दमन्तरेणानुपपन्ना । कथम् ? इत्याह—पार्थिवेत्यादि । शब्दप्रमाणपूर्विकेयमर्थापत्तिः ।

1 शब्दप्रमाणकम्—पा०, गा० । 2 अंशा—पा०, गा० ।
3. ॰विषयत्वेन—पा०, गा० ।

विना प्रयोगभूयस्त्वं न स्याद् गोत्वावधारणात्[1] ॥ २१३३ ॥
तस्मादकृत्रिमः शब्दो न कदाचिद् विनश्यति ।
नित्येन नित्यसम्बन्धादाकाशपरमाणुवत् ॥ २१३४ ॥
सम्मुखानेकसामान्यविषयश्च सकृच्छ्रुतः ।
निष्कृष्टं स्वार्थवाचित्वं गोशब्दो न प्रपद्यते ॥ २१३५ ॥
बहुभिः श्रवणैरेव प्राणित्वादीनि वर्जयेत्[2] ।
शुक्लादिगमनादीनि साक्षाल्लाङ्गूलसादि च ॥ २१३६ ॥
शाबलेयादिखण्डादिव्यक्तीः स्वस्वनिबन्धनाः ।
निष्कृष्टगोत्ववाचित्वं चिरेण प्रतिपद्यते ॥ २१३७ ॥
तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति ।
सम्भाव्यतेऽस्य नाशित्वं न भूयोऽन्येन हेतुना ॥ २१३८ ॥

---

तस्मादकृत्रिमः शब्द इत्यनुमानमुपसंहरति । नित्येनेति । जातिलक्षणेनार्थेन[3] । नित्यम् = सर्वकाल सम्बन्धात् । यथा परमाणूना नित्येनाकाशेनेति ॥ २१३२-२१३४ ॥

अर्थापत्तेरनैकान्तिकत्वं परिहरन्नाह—सम्मुखानेकसामान्येत्यादि । यथोक्त भाष्ये—"नित्ये तु खलु वै[4] शब्दे[4] बहुकृत्व उच्चारित श्रुतपूर्वस्त्वन्यान्यासु गोव्यन्वयव्यतिरेकाभ्यामाकृतिवचनत्वमवगमयिष्यति[5], तस्मादपि नित्य" ( मी० द०, शा० भा० १.१.१९ ) इति । व्यक्तीः स्वस्वनिबन्धना इति । यथास्वं भेदभिन्ना इत्यर्थ । भिन्नत्वं हि तासा भेदप्रतिपत्तिनिबन्धनम् । [ G 595 ] तेन स्वं भिन्नत्वं भेदप्रतिपत्तिनिबन्धनं यासा ता स्वनिबन्धना' । वर्जयन्निति सम्बन्ध ॥ २१३५-२१३७ ॥

स्यादेतत्—यदि नाम चिरेण प्रतिपद्यते, तथापि कथ सर्वकालभावित्वं सिध्यति शब्दस्य ? इत्याह—तावत्कालमित्यादि । तावत्कालम् = निष्कृष्टस्वार्थ-

1. ॰ग्रवधारणा—पा०, गा० । 2 वर्जयन्—पा०, गा० ।
3. जातिशब्दा॰—पा० गा० । ४—४. गोशब्दे—अयमेवः पाठ ।
५ मवगमयेत्—पा०, गा० ।

यथा शस्त्रादिभिश्छेदाज्जरया वा घटादयः ।
नङ्क्ष्यन्तीत्यवगम्यन्ते नैवं शब्देऽस्ति कारणम् ॥ २१३९ ॥
देशकालप्रयोक्तॄणां भेदेऽपि च न भेदवान् ।
गादिवर्णो यतस्तत्र प्रत्यभिज्ञा परिस्फुटा ॥ २१४० ॥
न हि द्रुतादिभेदेऽपि निष्पन्ना सम्प्रतीयते ।

---

प्रतिपादनकारणम् । ननु यथा घटादीनां यावत्कालं स्थिराणामपि मुद्गरादिभ्यः पश्चाद् विनाशः, तथा शब्दस्यापि भविष्यति ? इत्याह—सम्भाव्यतेऽस्येत्यादि । भूय इति । पुनः यथा शस्त्रादिभिश्छेदाद् विनाशं प्रतिपद्यन्ते घटादयो जरया वा, नैवं शब्देऽस्ति कारणम् । कथम् ? अमूर्तत्वात्, घटादीनां च मूर्तत्वादिति भावः ॥ २१३८-२१३९ ॥

यदुक्तम्—

"गवादेरेकतापत्तौ व्यात्येदं सिद्धसाधनम् ।
व्यक्तीनामेकतापत्तिं कुर्याच्चेदन्यया दिशा ।
तदा दृष्टविरुद्धत्वं वाच्यं सर्वप्रमाणकम् ॥"
( श्लो० वा०, श० नि० ४२२, ४२३ ) इति

तदिहापि समानम्—'गादीनामेकतापत्तौ व्यात्येदं सिद्धसाधनम्' इति सर्वं वाच्यम् । तथा हि—देशकालप्रयोक्तृभेदाद् गवादिव्यक्तिवद् गादिवर्णव्यक्तयो भद्यः, तदाधारं च गोत्वादि, तद्वद्[1] गत्वाद्यपि सामान्यमिष्टमिति सर्वं समानम् ? इत्याशङ्क्याह—देशकालप्रयोक्तॄणामित्यादि । प्रत्यभिज्ञास्यात्[2] प्रत्यक्षाद् व्यक्तीनामेकत्वं सिद्धम् । न चानुमानं[3] प्रत्यक्षविरोधे प्रमाणीभवति; प्रत्यक्षस्य सर्वप्रमाणज्येष्ठत्वादित्यभिप्रायः ॥ २१४० ॥

ननु द्रुतमध्यविलम्बितादिप्रतीतिभेदाद् भेदः सिद्ध एव व्यक्तीनाम्, तत् कथमुच्यते प्रत्यभिज्ञा परिस्फुटा ? इत्याह—न हि द्रुतादिभेदेऽपीति । निष्पन्नेति

---

१. तद्—पा० । २. प्रत्यभिज्ञाख्याच्च—पा०, गा० ।
३. नानुमानं—पा०, गा० ।

गव्यक्त्यन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा ॥ २१४१ ॥
गकारोऽत्यन्तनिष्कृष्टगत्वाधारो न विद्यते ।
गान्यबुद्ध्यनिरूप्यत्वात्[1] परकल्पितगत्ववत् ॥ २१४२ ॥
वर्णत्वाच्चापि साध्योऽयं षकारादिवदेव च ।
व्यतिरेकस्य चादृष्टेर्नात्र दृष्टं निवर्तकम् ॥ २१४३ ॥
द्वयसिद्धस्तु वर्णात्मा नित्यत्वादि यथैव च ।
कल्पितस्येष्यते तद्वत् सिद्धस्यैवाभ्युपेयताम् ॥ २१४४ ॥

---

भकल्पिता । विच्छिन्नेति भिन्ना । गव्यक्तिः = गकारव्यक्तिः । प्रत्यभिज्ञयैकी कृतत्वान्न गव्यक्तिरपराऽस्तीति भावः ॥ २१४१ ॥

[G. 596] ननु च गत्वादिजातिरेवात्र प्रत्यभिज्ञायते न व्यक्तिः, तत्कथं व्यक्तेः प्रत्यभिज्ञा ? इत्याह—गकार इत्यादि । गान्यबुद्ध्यनिरूप्यत्वादिति । गकारादन्यो गान्यः, तस्मिन् बुद्धिः, तयाऽनिरूप्यत्वात् = अग्राह्यत्वात् । परकल्पितगत्ववदिति । 'न सामान्यानि सामान्यानि' इति परेषां सिद्धान्तात् ॥ २१४२ ॥

वर्णत्वाच्चापि साध्योऽयमिति । गत्वनिषेध इति शेषः । तत्र प्रयोगः—यो[2] वर्णः सोऽत्यन्तनिष्कृष्टगत्वाधारो न भवति, यथा षकारादिवर्णः । वर्णश्चायं गकार इति विरुद्धव्याप्तोपलब्धिः, गत्वाधारत्वविरुद्धेन किल वर्णत्वस्य व्याप्तत्वात् । न चात्र प्रतिज्ञाया दृष्टविरोध इत्याह—व्यतिरेकस्येत्यादि । व्यतिरेकः = भेदः । दृष्टम् = प्रत्यक्षम् ॥ २१४३ ॥

स्यादेतत्—बौद्धं प्रति सिद्धसाध्यता, तथा हि—एकत्वबुद्धिरन्यापोहनिबन्धनैवेष्टा, न व्यतिरिक्तगत्वनिबन्धना, ततश्च प्रतिषिद्धेऽपि व्यतिरिक्ते गत्वे नैकत्वबुद्धिवशादेकत्वं वर्णस्य सिद्ध्यति, अन्यापोहनिबन्धनत्वात्तस्य ? इत्याशङ्क्याह—द्वयसिद्धस्त्वित्यादि । किमिदमुभयसिद्धं वर्णमात्रं परित्यज्य कल्पितस्यैवान्यापोहस्य नित्यत्वानेकव्यक्तिव्याप्त्यादयो धर्माः वर्ण्यन्ते, 'धर्मिधर्मव्यवस्थिते' इति वचनात् । युक्तं सर्वोपपत्तिसिद्धं तस्यैव कल्पयितुम्, अन्यथा दृष्टान्तासाधनत्वप्रसङ्गः स्यात् ।

[1] ग॰ बुद्धिनिरूप्यत्वात्—पा॰, गा॰ । [2] —नयना —पा॰, गा॰ ।

तेनैकत्वेन वर्णस्य बुद्धिरेकोपजायते ।
विशेषबुद्धिसद्भावो भवेद् व्यञ्जकभेदतः ॥ २१४५ ॥
ननु यस्य द्वयं श्रोत्रं तस्य बुद्धिद्वयं भवेत् ।
भवतोऽतीन्द्रियत्वात् तु कथं नादविशेषधीः ॥ २१४६ ॥
नादेन संस्कृताच्छ्रोत्राद् यदा शब्दः प्रतीयते ।
तदुपश्लेषतस्तस्य बोधं केचित् प्रचक्षते ॥ २१४७ ॥
नैव वा ग्रहणे तेषां शब्दे बुद्धिस्तु तद्वशात् ।

तस्मादेकस्मादेव वर्णस्यैका प्रत्यभिज्ञाबुद्धिरुपजायते । यद्येवम्, द्रुतमध्यविलम्बिता-दिविशेषबुद्धिः कथं भवेत् ? इत्याह—विशेषबुद्धीत्यादि । व्यञ्जकाः = वायवीयाः संयोगविभागाः ॥ २१४४-२१४५ ॥

ननु वायोरश्रोत्रविषयत्वात् तदीया अपि संयोगविभागा अश्रौत्रा एव, तत् कथमगृहीते [ G. 597 ] व्यञ्जके व्यङ्ग्यस्य ग्रहणं भवति, न ह्यालोकाग्रहणे तद्व्यङ्ग्यस्य घटादेर्ग्रहणं युक्तमिति मन्यमानश्चोदयति—नन्वित्यादि । यस्येति । यस्य = वैयाकरणादेर्घोषात्मको ध्वनिर्व्यञ्जकः, न तु वायवीयसंयोगविभागात्मकः, तस्य द्वयम्—व्यङ्ग्यं व्यञ्जकं च श्रोत्रग्राह्यमिति[1] बुद्धिद्वयम्—एकबुद्धिः, विशेषबुद्धिश्च भवति । भवतस्तु मीमांसकस्य कथं नादैर्वायवीयसंयोगविभागात्म-कैर्विशेषधीर्भवेत्, कुतः ? अतीन्द्रियत्वात् । नादानामिति शेषः ॥ २१४६ ॥

नादेनेत्यादिना प्रतिविधत्ते । तदुपश्लेषत इति शब्दोपश्लेषतः । तस्य = नादस्य । बोधम् = ग्रहणम् । केचित् प्रचक्षते—यद्यपि केवलस्य नादस्य श्रोत्रेणा-ग्रहणम्, तथापि शब्दोपश्लिष्टस्य तु ग्रहणमस्त्येव—इति बुद्धिद्वयं भवेदेवेति तेषां भावः ॥ २१४७ ॥

नैव वेत्यनेनाग्रहणपक्षेऽपि बुद्धिद्वयं समर्थ्यते । तेषामिति नादानाम् । वायवीयसंयोगविभागात्मनाम् । कथमगृहीतव्यञ्जके[2] व्यङ्ग्ये बुद्धिर्भवेत् ? इत्याह—शब्दे बुद्धिस्तु तद्वशादिति । नादवशात् । तत्सत्तामात्रेणैवेति यावत् । भवतु

1. श्रोत्रग्राह्यमिति—नै० । 2. ०गृहीतव्यञ्जके—पा०, गा० ।

संस्कारानुकृतेश्चापि[1] महत्त्वाद्यवबुध्यते ॥ २१४८ ॥
मधुरं तिक्तरूपेण श्वेतं पीततया यथा ।
गृह्णन्ति पित्तदोषेण विषयं भ्रान्तचेतसः ॥ २१४९ ॥
तथा[2] वेगेन धावन्तो नावारूढाश्च गच्छतः ।
पर्वतादीन् प्रभाम्यन्ति भ्रमेण भ्रमतश्च तान् ॥ २१५० ॥
मण्डूकवसयाऽक्ताक्षा वंशानुरगबुद्धिभिः ।
व्यक्त्यल्पत्वमहत्त्वाभ्यां सामान्यं च तदाश्रयम् ॥ २१५१ ॥
गृह्णन्ति यद्वदेतानि निमित्तग्रहणाद् विना ।

---

नाम स्वरूपमात्रग्रहणम्, महत्त्वादिविशेषग्रहणं तु कथं भवति ? इत्याह— संस्कारानुकृतेरित्यादि । यदा महद्भिर्नादैर्महान् संस्कार आधीयते श्रोत्रे, तदा महत्त्वं प्रतीयते शब्दे; यदा [3]त्वल्पैरल्प, तदाऽल्पत्वमित्येवं[3] संस्कारानुकारात् तरतमभेदोऽपि योज्य ॥ २१४८ ॥

ननु च यदेतन्महत्त्वादि गृह्यते तद्व्यञ्जकस्यैव भवन्मते, न व्यङ्ग्यस्य; तच्च व्यञ्जकाग्रहणादगृहीतमेवेति तत् कथमगृहीतो व्यञ्जकस्य महत्त्वादि शब्दे समारोप्येत, न ह्यविषयीकृतस्य जरादर्मरीचिकादावारोपो भवेत् ? इत्याह— मधुरं तिक्तरूपेणेत्यादि । [G 598] यथा पित्तदोषेण मधुरादिकं विषयं तिक्तादिरूपेण गृह्णन्त्यगृहीत्वैव पित्तस्वरूपम् ।

यथा वा—आशुगमनयानभ्रमणैराहितविभ्रमा पर्वतादीन् गच्छतो भ्रमतश्च पश्यन्ति । यथा च—मण्डूकवसयाऽक्तचक्षुषो वंशानुरगरूपेण वीक्षन्ते । यथा च व्यक्तेरल्पत्वमहत्त्वाभ्यां सामान्यं तदाश्रयम् = व्यक्त्याश्रयम्[4], अल्पत्वमहत्त्वाभ्यां[5] प्रतिपद्यन्ते, सत्ताख्यं महासामान्यमल्पं तु गोत्वादीति । अन्यथा हि निरवयवसर्वगतत्वेन सर्वस्य तुल्यत्वात् कि[म]ल्प सामान्यस्याल्पत्वं स्यात् । तस्माद् यद्वदेतानि मधुरादीनि तिक्तादिरूपेण गृह्णन्ति निमित्तस्य पित्तादेर्ग्रहणमन्तरेण, तथा

---

१ °कृते श्रोत्र—जै० । २ यथा—गा० ।
३-३. त्वल्पैरल्पमित्यर—पा०, गा० । ४. अल्पत्वाद्याश्रयम्—पा०, गा० ।
५ पा०, गा० पुस्तकयोर्नास्ति ।

व्यञ्जकस्यमवुद्ध्वैवं व्यङ्गये भ्रान्तिर्भविष्यति ॥ २१५२ ॥
स्वतो ह्रस्वादिभेदस्तु नित्यत्वादेर्विरुध्यते ।
सर्वदा यस्य सद्भावः स कथं मात्रिकः स्वयम् ॥ २१५३ ॥
तस्मादुच्चारणं तस्य मात्राकालं प्रतीयताम् ।
द्विमात्रं वा त्रिमात्रं वा न वर्णो मात्रिकः स्वयम् ॥ २१५४ ॥
ननु नादैरभिव्यक्तिर्न शब्दस्योपपद्यते ।
सा हि स्याच्छब्दसंस्कारादिन्द्रियस्योभयस्य वा ॥ २१५५ ॥
तत्र[1] सर्वः प्रतीयेत शब्दः संस्क्रियते यदि ।
निर्भागस्य[2] विभोर्न स्यादेकदेशे हि संस्क्रिया ॥ २१५६ ॥
न चाप्याधारभेदेन संस्कारनियमो भवेत् ।
यतः शब्दो निराधारो व्योमात्मादिवदेव च ॥ २१५७ ॥

व्यञ्जकस्थं महत्त्वादिकमगृहीत्वैव शब्दे महत्त्वादिभ्रान्तिर्भविष्यति । अबुद्ध्वेति । भ्रान्तिक्रियापेक्षया समानकर्तृत्वम्, अन्यथा त्वाप्रत्ययो न स्यात् ॥२१४९-५२॥

अथ कथमवगतम्—येयं ह्रस्वमहत्त्वादिधीः शब्दे भवति सा परोपाधिका, न तु स्वत एव; महत्त्वादिभेदसद्भावात् ? इत्याह—स्वतो ह्रस्वादिभेद इत्यादि । आदिशब्देन दीर्घप्लुतोदात्तस्वरितषड्जादिभेदपरिग्रहः । नित्यत्वादेर्विरुध्यत[3] इति । भावाभिन्नाया नित्यत्वस्य सिद्धत्वादिति भावः ॥ २१५३-२१५४ ॥

नन्वित्यादिना परमतेनाभिव्यक्तेरसिद्धिमाशङ्कते । [G 599] साऽभिव्यक्तिः शब्दस्य भवन्ती वायवीयैः संयोगविभागैः शब्दसंस्काराद्वा भवेत्, इन्द्रियसंस्काराद्वा, उभयस्य वा—शब्दस्येन्द्रियस्य च संस्कारात् । तत्र यदि शब्दः संस्क्रियते, तदा पाटलिपुत्रादावेकत्र देशे संस्कृतः सर्वदेशस्थैर्गृह्येत; युगपत् तस्य सर्वगतत्वात् । अथापि स्याद्—एकांशस्तस्य संस्कृतः, न तु सर्वः ! इत्याह—निर्भागस्येति । निरवयवो हि शब्दः अमूर्तत्वात् । कथं विभुत्वेऽपि निरवयवस्यैकदेशेन संस्कारः स्यात् ॥ २१५५-२१५६ ॥

1. ततः—पा०, गा० । 2. निर्भागस्य—जै० ।
3. नित्यवादे विरु०—जै० ।

अथाप्याकाशमाधारस्तत्रानवयवे सति ।
न स्यात् प्रदेशसंस्कारः कृत्स्नशब्दगतेरपि ॥ २१५८ ॥
न हि सामस्त्यरूपेण यावद् व्योम व्यवस्थितः ।
शक्यते सकलो बोद्धुमेकदेशेन संस्कृतः ॥ २१५९ ॥
आकाशश्रोत्रपक्षे च विभुत्वात् प्राप्तितुल्यता ।
दूरभावेऽपि शब्दानामिति[1] ज्ञानं प्रसज्यते ॥ २१६० ॥
श्रोत्रस्य चैवमेकत्वं सर्वप्राणभृतां भवेत् ।
तेनैकश्रुतिवेलायां शृणुयुः सर्व एव ते ॥ २१६१ ॥
तस्यानवयवत्वाच्च न धर्माधर्मसंस्कृतः ।
नभोदेशो भवेच्छ्रोत्रं व्यवस्थाद्वयसिद्धये ॥ २१६२ ॥

---

अथापि स्याद्—आधारभेदान्निरवयवस्यापि सतो भेदेन संस्कारो भविष्यति ? इत्याह—न चापीति । विभुत्वादाकाशात्मादिवन्निराधारः शब्दः ॥ २१५७ ॥

ननु[2] 'चाकाशगुणत्वाच्छब्दस्य गुणा[3] द्रव्याश्रिता[3]' इत्याकाशमाधारोऽस्ति शब्दस्य ? इत्याह—अथाप्याकाशमित्यादि । तस्याप्याकाशस्यानवयवत्वान्नाधारप्रदेशभेदेन संस्कारभेदोऽस्ति । ननु च यद्यप्याकाशमनवयवम्, तथापि संयोगिभेदात् घटाकाशादिवत् कर्णशष्कुलीपर्यन्तपरिच्छिन्नमाकाशं भिन्नं भविष्यति ? इत्याह—कृत्स्नशब्दगतेरपीति । न स्यात् प्रदेशसंस्कार इति सम्बन्धः । अखण्ड एव हि शब्दः प्रतीयते, सा च प्रतीतिर्व्योमैकदेशसंस्कृतौ न स्यात् ॥२१५८॥

कथमित्येतदेव निगमयन्नाह—न हीत्यादि । न ह्याकाशं व्याप्य व्यवस्थितः शब्दस्तदेकदेशेन संस्कृतः शक्यते सकलो ज्ञातुम् ॥ २१५९ ॥

[G 600] इन्द्रियसंस्कारपक्षे दूषणमाह—आकाशश्रोत्रपक्ष इत्यादि । येषां नभः श्रोत्रमिति पक्षः, तेषामेकत्वाद्विभुत्वाच्च नभसः सर्वशब्दैस्तुल्या प्राप्तिरिति दूरस्थस्यापि शब्दस्य ग्रहणं प्राप्नोति । श्रोत्रस्य च सर्वप्राणभृतामेकत्वं स्यात् ।

१ °मिह—पा० गा० । २-२ °त्वाकाश°—पा०, गा० ।
३-३ द्रव्याश्र गुणि°—पा०, गा० ।

सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रबोधयेत् ।
घटायोन्मीलितं चक्षुः पटं नहि न बुद्ध्यते ॥ २१६३ ॥
एतदेव प्रसक्तव्यं विषयस्यापि संस्कृतौ[1] ।
समानदेशवृत्तित्वात् संस्कारस्याविशेषतः ॥ २१६४ ॥
स्थिरवायूपनीत्या च संस्कारोऽस्य भवन् भवेत् ।

---

ततश्चैको यदा शृणोति तदैव सर्वैरपि श्रूयेत, अभिन्नत्वाच्छ्रोत्रस्य । एकाश्रवणे सर्वेषामश्रवणदोषश्च वक्तव्यः ॥ २१६०-२१६१ ॥

स्यादेतत्—धर्माधर्माभिसंस्कृतया कर्णशष्कुल्या परिच्छिन्नमाकाशं श्रोत्रम्, अतः कर्णशष्कुलिमत्याकाशदेशे श्रोत्रव्यवस्थितेर्दोषद्वयमपीदमनास्पदं यद्विभुत्वाद प्राप्तितुल्यता श्रोत्रस्य चैकत्वं सर्वप्राणभृतां भवेदिति ? अत्राह—तस्यानवयव-त्वादिति । न ह्यनवयवस्य परमार्थत एकदेशाः सन्ति, येन कश्चिदेव नभोदेशः श्रोत्रं भवेत् । व्यवस्थाद्वयम्—प्राप्तेरतुल्यत्वव्यवस्था, श्रोत्रानेकत्वव्यवस्था च । यद्वा—शब्दस्य ग्रहणाग्रहणे व्यवस्थाद्वयम् ॥ २१६२ ॥

किञ्च—सकृच्च = एकवारं संस्कृतं श्रोत्रं सर्वशब्दान् प्रबोधयेत् = ग्राहयेत् । तस्य सर्वशब्दसाधारणत्वात् । तेषां च शब्दानां विभुत्वेनाभिन्नयोग्यदेशत्वात् । स्यादेतत्—प्रतिपत्त्यर्थमेव वक्त्रा श्रोतुः श्रोत्रमभिसंस्कृतम्, तमेव शब्दं तच्छ्रोत्रं ग्राहयेन्नान्यम् ? इत्याह—घटायेत्यादि । न हि न बुध्यते, अपि तु बुध्यत एव; तुल्यत्वाद् देशयोग्यताया इति भावः । सर्वशब्दग्रहणं कथम् ? इत्याह—समानदेश-वृत्तित्वात् संस्कारस्याविशेषत इति । सर्वेऽपि हि शब्दा विभुत्वेन समानाकाश-देशवृत्तयः, ततश्चैषां संस्कारोऽप्यविशिष्ट [G. 601] एवेति सर्वग्रहणप्रसङ्गः । क्वचित् पाठः—'संस्कारो ह्यविशेषतः' इति । तत्र हिशब्दो हेतौ । अविशेषत इति । आद्यादित्वात्तृतीयान्तात् तसिः । ततश्चायमर्थो भवति—अविशेषेण यस्मा-च्छब्दानां संस्कारः कृतः, समानदेशवृत्तित्वात्, ततः सर्वशब्दग्रहः प्राप्नोतीति ॥ २१६३–२१६४ ॥

स्यादेतत्—यद्यप्यविशेषेण संस्कारः, तथापि य एव विघट्टितः श्रोत्रा

---

१ संस्कृतो—पा०, गा० ।

अथाप्याकाशमाधारस्तत्रानवयवे सति ।
न स्यात् प्रदेशसंस्कारः कृत्स्नशब्दगतेरपि ॥ २१५८ ॥
न हि तामस्त्यरूपेण यावद् व्योम व्यवस्थितः ।
शक्यते सकलो बोद्धुमेकदेशेन संस्कृतः ॥ २१५९ ॥
आकाशश्रोत्रपक्षे च विभुत्वात् प्राप्तितुल्यता ।
दूरभावेऽपि शब्दानामिति[1] श्रवणं प्रसज्यते ॥ २१६० ॥
श्रोत्रस्य चैवमेकत्वं सर्वप्राणभृतां भवेत् ।
तेनैकश्रुतिवेलायां शृणुयुः सर्व एव ते ॥ २१६१ ॥
तस्यानवयवत्वाच्च न धर्माधर्मसंस्कृतः ।
नभोदेशो भवेच्छ्रोत्रं व्यवस्थाद्वयसिद्धये ॥ २१६२ ॥

अथापि स्यात्—आधारभेदान्निरवयवस्यापि सतो भेदेन संस्कारो भविष्यति ? इत्याह—न चाप्नोति । विभुत्वादाकाशात्मादिवन्निराधारः शब्दः ॥ २१५७ ॥

ननु[2] [3]चाकाशगुणत्वाच्छब्दस्य गुणाः[3] स्वगुणिनमाश्रिता[3] इत्याकाशमाधारोऽस्ति शब्दस्य ? इत्याह—अथाप्याकाशमित्यादि । तस्याप्याकाशस्यानवयवत्वान्नाधारप्रदेशभेदेन संस्कारभेदोऽस्ति । ननु च यद्यप्याकाशमनवयवम्, तथापि संयोगिभेदात् घटकलशादिना कर्णशष्कुलीपर्यन्तपरिच्छिन्नमाकाशं भिन्नं भविष्यति ? इत्याह—कृत्स्नशब्दगतेरपीति । न स्यात् प्रदेशसंस्कार इति सम्बन्धः । सकल एव हि शब्दः प्रतीयते, सा च प्रतीतिर्नैकदेशसंस्कृतौ न स्यात् ॥२१५८॥

कथमित्येतदेव विभावयन्नाह—न हीत्यादि । न ह्याकाशं व्याप्य व्यवस्थित शब्दस्यैकदेशेन संस्कृतः शक्यते सकलो ज्ञातुम् ॥ २१५९ ॥

[K 600] इन्द्रियसंस्कारपक्षे दूषणमाह—आकाशश्रोत्रपक्षे इत्यादि । येषां मते श्रोत्रमिति पक्षः, तेषामेकस्य विभुत्वान्नभसः सर्वशब्दैस्तुल्या प्राप्तिरिति दूरस्थस्यापि शब्दस्य ग्रहणं प्राप्नोति । श्रोत्रस्य च सर्वप्राणभृतामेकत्वं स्यात् ।

---

1. ०मिति—पा०, गा० । 2-2 नाकाशगुण०—पा०, गा० ।
3-3. गुणाश्च गुणिन०—पा०, गा० ।

सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रबोधयेत् ।
घटाद्योन्मीलितं चक्षुः पटं नहि न बुद्धचते ॥ २१६३ ॥
एतदेव प्रसक्तव्यं विषयस्यापि संस्कृतौ[1] ।
समानदेशवृत्तित्वात् संस्कारस्याविशेषतः ॥ २१६४ ॥
स्थिरवायूपनीत्या च संस्कारोऽस्य भवन् भवेत् ।

---

तत्रैको यदा शृणोति तदैव सर्वैरपि श्रूयेत, अभिन्नत्वाच्छ्रोत्रस्य । एकाश्रवणे सर्वेषामश्रवणदोषश्च वक्तव्यः ॥ २१६०-२१६१ ॥

स्यादेतत्—धर्माधर्माभिसंस्कृतया कर्णशष्कुल्या परिच्छिन्नमाकाशं श्रोत्रम्, अतः कर्णशष्कुलिमत्याकाशदेशे श्रोत्रव्यवस्थितेर्दोषद्वयमपीदमनास्पदं यद्विभुत्वात् माभिन्नरूपता श्रोत्रस्य चैकत्वं सर्वप्राणभृतां भवेदिति ? अत्राह—तस्यानवयवत्वादिति । न ह्यनवयवस्य परमार्थत एकदेशाः सन्ति, येन कश्चिदेव नभोदेशः श्रोत्रं भवेत् । व्यवस्थाद्वयम्—प्राप्तेरतुल्यत्वव्यवस्था, श्रोत्रानेकत्वव्यवस्था च । यद्वा—शब्दस्य ग्रहणाग्रहणे व्यवस्थाद्वयम् ॥ २१६२ ॥

किञ्च—सकृच्च = एकवारं संस्कृतं श्रोत्रं सर्वशब्दान् प्रबोधयेत् = भासयेत् । तस्य सर्वशब्दसाधारणत्वात् । तेषां च शब्दानां विभुत्वेनाभिन्नयोग्यदेशत्वात् । स्यादेतत्—प्रतिपत्तृधर्मेण यस्य श्रोतुः श्रोत्रमभिसंस्कृतम्, तमेव शब्दं तच्छ्रोत्रं ग्राहयेन्नान्यम् ? इत्याह—घटादीत्यादि । न हि न बुध्यते, अपि तु बुध्यत एव; तुल्यत्वात् देशयोग्यताया इति भावः । सर्वशब्दग्रहणं कथम् ? इत्याह—समानदेशवृत्तित्वात् संस्कारस्याविशेषत इति । सर्वेऽपि हि शब्दा विभुत्वेन समानाकाशदेशवृत्तयः, ततश्चैषां संस्कारोऽप्यविशिष्ट [ G. 601 ] एवेति सर्वग्रहणप्रसङ्गः । क्वचित् पाठः—'संस्कारो ह्यविशेषतः' इति । तत्र हिशब्दो हेतौ । अविशेषत इति । आद्यादित्वात् तृतीयान्तात् तसिः । ततश्चायमर्थो भवति—अविशेषेण यस्माच्छब्दानां संस्कारः कृतः, समानदेशवृत्तित्वात्, तत सर्वशब्दग्रहं प्राप्नोतीति ॥ २१६३-२१६४ ॥

स्यादेतत्—यद्यप्यविशेषेण संस्कारः, तथापि य एव नियमितः श्रोत्रा

---

1 संस्कृतौ—पा०, गा० ।

इष्टं[1] चावरणापाये[1] तद्देशान्योपलम्भनम्[2] ॥ २१६५ ॥
संस्कृतासंस्कृतत्वे न शब्दैकत्वेन सिद्धयत ।
एकावस्थाभ्युपेतौ च सर्वज्ञयेत वा न वा ॥ २१६६ ॥

---

शब्द, स एव गृह्यते नान्य इति ? अत्राह—स्थिरवाय्वित्यादि । द्विविधो हि वायु —स्थिर, अस्थिरश्च । तत्र य स्थिर, स[3] घनान्धकारवत्[3] शब्दमावृत्यास्ते । तस्य च वक्तृप्रयत्नसमुत्थेन वायुना संयोगविभागा उत्पद्यन्ते । तैश्च संयोगविभागैस्तस्य स्थिरस्य वायोरपनय क्रियते, स एव च शब्दस्य संस्कार, नान्य स्वलक्षणपुष्ट्यादि, तस्य नित्यत्वेनैकरूपत्वात् । तत किम् ? इत्याह—इष्टमित्यादि[4] । इष्टमिति[4] श्लोकद्वयो । यथा घटादेरन्धकारापगमे सति पुरोऽवस्थितस्यानभीष्टस्याप्युपलब्धिर्भवत्येव, योग्यदेशावस्थानात् ॥ २१६५ ॥

यदुक्तम्—"तत्र सर्वै प्रतीयेत शब्द संस्क्रियते यदि" ( तत्त्व० २१५६ ) इति, तत्र न दोष, यस्मादेकोऽपि शब्द कश्चित् पुरुषं प्रत्यसंस्कृत कञ्चित् प्रति संस्कृत, यथा एका स्त्री व्यपेक्षाभेदान्माता च दुहिता चेत्याह—संस्कृतासंस्कृतत्वे इति । शब्दस्यैकत्वे सति संस्कृतासंस्कृतत्वे द्वे अवस्थे निष्पर्यायेण न प्राप्नुत, अवस्थाया अवस्थातुरभेदात् अवस्थातृस्वरूपवद्द्वयस्यापोऽप्येकत्वमेव प्राप्नोति । यत्पुनरेका स्त्री माता चोच्यते दुहिता चेति ? तत्र शब्द एव केवल भिन्न, न वस्तु । इह तु न व्यपदेशमात्र भिन्नम्, शब्दस्य सर्वपुरुषग्रहणयोग्यत्वाविशेषेणाभ्युपगमात् । ततश्च ग्रहणाग्रहणे न स्याताम् । न हि व्यपदेशान्यथात्वमात्रेणार्थक्रियानियतत्वभावहानिर्युक्ता ।

अथ प्रतिनियतपुरुषग्राह्य एव तस्य स्वभाव, तेन ग्रहणाग्रहणे पुरुषशक्तिभेदादविरुद्धे इति चेत् ? न, येन ह्येकदा न गृहीत पुरुषेण, तेन न कदाचिदपि गृह्यते । न चैवम् । तस्मात्स्थितैकत्वहानिरिति एकैवाऽवस्था संस्कृतासंस्कृतयोरन्यथाऽभ्युपगन्तव्या शब्दस्य । तत किम् ? इत्याह—एकावस्थाभ्युपेतावित्यादि ॥ २१६६ ॥

---

१-१ दृष्टमावरणा०—पा०, गा० । २ तद्देशोऽन्यो०—पा० तद्देशस्योर०—गा० ।
३-३ घनान्धकारवत्—पा० । ४-४ दृष्टमित्यादि, दृष्टमिति—पा०, गा० ।

प्रत्येकाभिहिता दोषाः स्युर्द्वयोरपि संस्कृतौ ।
अतो न व्यञ्जकः शब्दे कथञ्चिदपि युज्यते ॥ २१६७ ॥

तत्प्रतिविधानम्

उत्तरं श्रोत्रसंस्काराद् भाष्यकारेण वर्णितम् ।
तद्भेदाच्छ्रुतिभेदश्च प्रतिश्रोतृव्यवस्थितः ॥ २१६८ ॥
यथा घटादेर्दीपादिरभिव्यञ्जक इष्यते ।
चक्षुषोऽनुग्रहादेव ध्वनिः स्याच्छ्रोत्रसंस्कृतेः ॥ २१६९ ॥
न च पर्यनुयोगोऽत्र केनाकारेण संस्कृतिः ।
उत्पत्तावपि तुल्यत्वाच्छक्तिस्तत्राप्यतीन्द्रिया ॥ २१७० ॥

---

[G 602] उभयसंस्कारपक्षे दोषमाह—प्रत्येकमित्यादि । प्रत्येकं शब्दस्येन्द्रियस्य च संस्कारे येऽभिहिता दोषास्ते द्वयोरपि संस्कारे भवेयुः । अत इत्युपसंहरति ॥ २१६७ ॥

उत्तरमित्यादिना प्रतिविधत्ते । भाष्यकारेणेति । यथोक्तम्—"यस्याप्यभिव्यञ्जन्ति तस्याप्येष न दोषः, दूरे सता कर्णशष्कुल्या अनुपकारकाः संयोगविभागाः, तेन दूरे यच्छ्रोत्रं तन्नोपलभ्यन्ते[1]" (मी. द., शा. भा. १.१.१३) इति । तद्भेदादिति[2] = कर्णशष्कुलीश्रोत्रभेदात् । श्रुतिभेदः = प्रतीतिभेदः ॥ २१६८ ॥

ननु च कथमन्यस्य संस्कारेऽन्यस्याभिव्यक्तिर्भवति ? इत्याह—यथा घटादेरित्यादि । यथा हि दीपादिश्चक्षुषोऽनुग्रहेण घटादेरभिव्यञ्जको भवति, तथा ध्वनिरपि श्रोत्रसंस्कृतेः श्रोत्रसंस्करणात्, शब्दस्याभिव्यञ्जको भविष्यति ॥ २१६९ ॥

ननु च वक्तव्यमेतत्—केन प्रकारेण ध्वनिना श्रोत्रस्य संस्कारः क्रियते निष्फलस्य ? इत्यत आह—न च पर्यनुयोगोऽत्रेति ।

उत्पत्तावपि तुल्यत्वात्, पर्यनुयोगस्येति शेषः । उत्पत्तावपि हि शब्दस्य कारणेभ्यः सत्यां तुल्यः पर्यनुयोगः, तत्रापि शक्यत एवैतद् वक्तुम्—केनाकारेण ध्वनिना वायवीयसंयोगविभागात्मकेनाऽन्येन वा कारणेन कथं शब्दः क्रियत इति; यतः शक्तिस्तत्राप्यतीन्द्रिया । तत्रापि = शब्दानामुत्पत्तौ क्रियमाणा-

---

१. तेन नोपलभ्यन्ते—पा०, गा० । २. तद्भेदादिति—जै० ।

कर्णव्योमनि सम्प्राप्तः शक्तिं श्रोत्रे नियच्छति ।
तद्भावे शब्दबोधाच्च संस्कारोऽदृष्ट इष्यते ॥ २१७८ ॥
उत्पत्तिशक्तिवत् सोऽप्रीत्यधिकं नो न किञ्चन ।
तथैव तद्विशेषोऽपि [1]विशिष्टग्रहणाद् भवेत् ॥ २१७९ ॥
कुड्यादिप्रतिबन्धोऽपि युज्यते मातरिश्वन ।
श्रोत्रदेशाभिघातोऽपि तेन तीव्रप्रवृत्तिना ॥ २१८० ॥
तस्य च क्रमवृत्तित्वात् क्षयिवैगित्वसम्पद ।
संस्कारक्रमतीव्रत्वमन्दतादितिमित्तता ॥ २१८१ ॥

भाष्ये—"अभिघातेन प्रेरिता[2] वायव[2] स्तिमितानि वस्त्वन्तराणि प्रतिबाधमाना[3] सर्वतोदिक्कान् संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्ते, ते च वायोर-प्रत्यक्षत्वात् संयोगविभागा नोपलभ्यन्ते । अनुपरतेष्वेव च तेषु शब्द उपलभ्यते, नोपरतेषु" ( मी० द०, शा० भा० ५ १ १३ ) इति ।

यद्येवम्, नतर्हि संस्कारपक्षस्योत्पत्तिपक्षाद्विशेष कथितो भवति ? इत्याह—तथैवेत्यादि । तद्विशेष = संस्कारविशेष , शब्दग्रहणविशेषादुपपद्यते । तेन दूरसमीपस्थाना ग्रहणाग्रहणे न समे भवत , पुरुषभेदेन संस्कारस्य भिन्नत्वात् ॥ २१७५–२१७९ ॥

कुड्याद्यावरणे कथमग्रहणं शब्दस्य ? इत्याह—कुड्यादीत्यादि । [ G 605 ] यद्यपि शब्दो न प्रतिघाती, तथापि मातरिश्वन = वायो कुड्यस्य च मूर्तत्वे प्रतिघातित्वात् कर्णदेशागमनमिति श्रोत्रसंस्कारो न जायते, तेनावृतस्याश्रवण भवति । येषा त्वमासत्य ग्रहण तेषामेष दोष एव । तीव्रमन्दतरतमश्रुतिभेदस्तर्हि[4] कथ भवति ? इत्याह—श्रोत्रदेशाभिघातोऽपीति। 'युज्यते' इति प्रकृत सर्वत्र योजनीयम् । क्षयिवैगित्वसम्पद इति । क्षयित्वसम्पदो वेगित्वसम्पदो युज्यन्त इति विभक्तिविपरिणामेन सम्बन्ध । अथ वा—क्षयिण्यश्च ता वेगित्वसम्पदश्चेति

---

१ विशेष०—पा०, गा० ।
२–२ प्रेरितावयवा —पा०, गा० ।
३ प्रबाधमाना —पा०, गा० ।
४ तीव्रतरतम०—पा०, गा० ।

नावश्यं श्रोत्रमाकाशमस्माभिश्चाभ्युपेयते ।
न चानवयवं व्योम जैनसाङ्ख्यनिषेधतः ॥ २१८२ ॥
तेनाकाशैकदेशो वा यद्वा वस्त्वन्तरं भवेत् ।
कार्यार्थापत्तिगम्यं तच्छ्रोत्रं प्रतिनरं स्थितम् ॥ २१८३ ॥
यद्यपि व्यापि चैकं च तथापि ध्वनिसंस्कृतिः ।
अधिष्ठाने तु सा यस्य स शब्दं प्रतिपद्यते ॥ २१८४ ॥

विग्रहः । यद्वा—क्षयिणी वेगित्वसम्पद्यस्य वायोरिति बहुव्रीहिः । ततश्च संस्कारक्रमतीव्रमन्दतानिमित्तता युज्यत इति सम्बन्धः । संस्कारक्रमो युज्यते; तस्य वायोः क्रमवृत्तित्वात् । तीव्रता च युज्यते; वेगित्वसम्पद्युक्तत्वात् । मन्दताऽपि च; क्षयित्वात् । आदिशब्देन तरतमादिभेदो योज्यः ॥ २१८०–२१८१ ॥

ननु च—"आकाशश्रोत्रपक्षे च विभुत्वात् पाक्षिदुस्त्वता" (तत्त्व० २१६०) इत्यादिना श्रोत्रसंस्कारे दोषा बहवः पूर्वमुक्ताः, तत्कथमुत्तरं श्रोत्रसंस्काराद् भाष्यकारेण वर्णितम् ? इत्याह—नावश्यं श्रोत्रमाकाशमित्यादि । तेन तत्पक्षभाविनो दोषास्तदनङ्गीकारादेव नापतन्तीत्युक्तं भवति[1] । न चानवयवं व्योमेति । अभ्युपेयत इति सम्बन्धः । कुतः ? जैनसाङ्ख्यनिषेधतः—जैनैः = आर्हतैः, साङ्ख्यैश्च निरवयवस्य व्योम्नो निषिद्धत्वात् । न हि मीमांसकैः परसिद्धान्तपरिग्रहैर्व्यवह्रियते । यदेव हि युक्त्या समायाति तदेव तैरङ्गीक्रियते, अन्यथा मीमांसकत्वमेव हीयेत । ततश्च जैनसाङ्ख्यप्रसिद्धव्योमात्मकश्रोत्राङ्गीकरणान्न दोषः । यद्वा वस्त्वन्तरमिति । कर्णशष्कुलीसञ्ज्ञकम् । कार्यार्थापत्तिगम्यमिति । शब्दग्रहणान्यथानुपपत्तिगम्यम् ॥ २१८२–२१८३ ॥

अथ वा—अनवयवाकाशश्रोत्रपक्षेऽपि न दोष इति प्रतिपादयन्नाह—यद्यपीत्यादि । [G. 606] यद्यपि व्यापि चैकं चेति । श्रोत्रमिति शेषः । तथापि सा ध्वनिभिः संस्कृतिर्यस्य पुरुषस्याधिष्ठाने = कर्णशष्कुल्यां भवति, स एव शब्दं प्रतिपद्यते, नान्यः । अनेनाधिष्ठानसंस्कार एवोक्तः, न श्रोत्रस्य । तस्य चाधिष्ठानस्य प्रतिपुरुषं भिन्नत्वान्न यथोक्तदोषप्रसङ्ग इति भावः ॥ २१८४ ॥

1. पा०, या० पुस्तकयोर्नास्ति ।

अथापीन्द्रियसंस्कारः सोऽप्यधिष्ठानदेशतः ।
शब्दं न श्रोष्यति श्रोत्रं तेनासंस्कृतशष्कुलि ॥ २१८५ ॥
अप्राप्तकर्णदेशत्वाद् ध्वनेर्न श्रोत्रसंस्क्रिया ।
अतोऽधिष्ठानभेदेन संस्कारनियमः स्थितः ॥ २१८६ ॥
नन्वेकस्मिन्नधिष्ठाने लब्धसंस्कारमिन्द्रियम् ।
बोधकं सर्वदेहेषु स्यादेकेन्द्रियवादिनः ॥ २१८७ ॥
पुंसां देहप्रदेशेषु विज्ञानोत्पत्तिरिष्यते ।

---

श्रोत्रसंस्कारेऽपि न दोष इति प्रतिपादयति—अथापीति । अधिष्ठानम् = कर्णशष्कुली । तत्संस्कारद्वारेण श्रोत्रस्य संस्कारः, न केवलस्य । तेनासंस्कृताधिष्ठानत्वाद् विदूरस्थान्यचित्तसुतमूर्च्छितानां श्रोत्रं न शृणोति । असंस्कृता कर्णशष्कुली यस्य तत्तथोक्तम् । अधिष्ठानदेशत इति सप्तम्यर्थे तसि ॥२१८५॥

ननु यदि ध्वनयोऽधिष्ठानं तद्देशं वेन्द्रियं संस्कुर्वन्ति, कस्माद्यत्र क्वचनोपलब्धशब्दाः सकलप्राणिजातेन्द्रियाधिष्ठानसंस्कारकारिणो न भवन्ति ? इत्याह—अप्राप्तकर्णदेशत्वादित्यादि । यद्यप्यधिष्ठानसंस्कारकारिणो नादा, तद्देशेन्द्रियसंस्कारका वा; तथापि प्राप्ता एव सन्तः संस्कारमाविः पदार्थं संस्कारं कुर्वन्ति, नाप्राप्ताः—इत्यतो न सर्वपुरुषाधिष्ठानादिसंस्कारः । श्रोत्रग्रहणमुपलक्षणम् । अधिष्ठानसंस्कारोऽपि न भवत्येव । क्वचित्—अप्राप्तकर्णदेशाद् वा इति पाठः । तत्र पूर्वमधिष्ठानसंस्कारमुखेन श्रोत्रसंस्कारमाश्रित्य परिहार उक्तः । साम्प्रतं मा भूदधिष्ठानसंस्कारद्वारेण श्रोत्रसंस्कारः, तथाप्यदोषः; यतः प्राप्तकर्णशष्कुलीमूला एव वायवः श्रोत्रसंस्कारायालम्, नाप्राप्ता इत्यतः पक्षान्तरमुक्तम् । अत इत्युपसंहारः ॥ २१८६ ॥

नन्वित्यादिना पक्षत्रयेऽप्यनन्तरोदिते परस्य चोद्यमाशङ्कते । [ G. 607 ] एकस्य श्रोत्रस्य संस्कृतासंस्कृतपरस्परविरुद्धधर्मद्वयायोगादेकत्र संस्कारात् सर्वदेहेष्वभिन्नत्वान् संस्कृतमेवेति बधिरादेरपि बोधकं प्राप्नोति श्रोत्रमेकेन्द्रियवादिनः । ततश्च बाधिर्यादिव्यवस्थानं न स्यात् ॥ २१८७ ॥

पुंसामित्यादिना प्रतिविधत्ते । पुंसामात्मनां सर्वगतत्वेऽपि शरीरेष्वेव धर्मा-

तेन प्रधानवैदेश्याद् विगुणा श्रोत्रसंस्कृतिः ॥ २१८८ ॥
निष्प्रदेशोऽपि चात्मा नः कार्त्स्न्यें च विदन्नपि ।
शरीर एव गृह्णातीत्येवमुक्तेे[1] न[1] दुष्यति ॥ २१८९ ॥
बाधिर्यादिव्यवस्थानमेतेनैव च हेतुना ।
तदेवाभोग्यमन्यस्य धर्माधर्मावशीकृतम् ॥ २१९० ॥
यथा तत्र भवन्नेव स्वामित्वादवरोपितः[2] ।
न भोगं लभते तद्वद् बधिरोऽन्यत्र शृण्वति ॥ २१९१ ॥

धर्मपरिगृहीतेषु विज्ञानोत्पत्तिर्मीमांसकादिभिरिष्यते । तेन प्रधानस्य देहस्य वैदेश्यात् = भिन्नदेशत्वात् । श्रोत्रस्यैवं सर्वगतस्यापि संस्कृतिर्विगुणा, तेन यथोक्तदोषानवसरः । क्वचित्—सात्र संस्कृतिरिति पाठः । तत्र सा संस्कृतिः श्रोत्रस्येति सम्बन्धः ॥ २१८८ ॥

ननु च सर्वगतत्वादात्मनः सर्वत्र ग्रहणप्रसङ्गः शब्दस्यानिवारित एव ? इत्याह—निष्प्रदेशोऽपि चेति । एतदुक्तं भवति—यद्यप्येवम्, तथापि धर्मादिवशीकृतशरीरावच्छिन्नमेवात्मनः शब्दग्रहणम्, अतो न दोषः । कथं पुनरभिन्नस्यात्मनः श्रोत्रस्य च[3] ग्रहणाग्रहणसंस्कारासंस्कारविभाग इति चेत् ? न; यथा आकाशस्यानवयवस्यापि संयोगिपदार्थभेदाद्—घटाकाशम्, पिठराकाशमिति भेदो भवति, तथेहापि भविष्यति ।

अत एव च व्यापिनिरवयवस्य श्रोत्रस्य संसर्गिभेदाद् बाधिर्यादिव्यवस्थितिरिति दर्शयति[4]—एतेनैवेत्यादि[5] । संयोगिभेदेन हेतुना । यदि नाम संयोगिनो भिन्नाः, तथापि किमिति कश्चिदेव बधिरो भवति ? इत्याह—तदेवाभोग्यमिति । तदेव श्रोत्रमन्यस्य पुरुषस्य न भोग्यं भवति, कुतः ? धर्माधर्माभ्यामवशीकृतत्वात् ।

एतदेव दृष्टान्ते स्फुटयन्नाह—यथा तत्रेत्यादि । यथा कश्चिद् ग्रामादेः स्वामी तत्र ग्रामादौ भवन्नेव = विद्यमान एव [ G 608 ] राज्ञा स्वामित्वादवरो-

१–१. ॰मुक्तिर्न—पा॰, गा॰ । २. ॰दवरोपनः—जै॰ ।
३. पा॰, गा॰ पुस्तकयोर्नास्ति । ४ ॰बाधिर्यादीति—गा॰ ।
५. एतेनेति—पा॰, गा॰ ।

श्रोत्रशब्दाश्रयाणां च न नामावयवाः स्वयम् ।
न चैकदेशवृत्तित्वं तथाप्येतन्न दुष्यति ॥ २१९२ ॥
व्यञ्जकानां हि वायूनां भिन्नावयवदेशता ।
जातिभेदश्च तेनैवं संस्कारो व्यवतिष्ठते ॥ २१९३ ॥
अन्यार्थं प्रेरितो वायुर्यथा नान्यं करोति वः[1] ।
तथाऽन्यवर्णसंस्कारसक्तो[2] नान्यं करिष्यति ॥ २१९४ ॥

---

वरोधितस्त्स्मिन्नेव[3] भागे भोगं न लभते, तद्वद् बधिरोऽन्यत्रान्यस्मिन् पुरुषे शृण्वत्यपि सति न शृणोति ॥ २१८९–२१९१ ॥

ननु च—श्रोत्रशब्दाकाशानां त्रयाणामपि निरवयवत्वाद् विभुत्वाच्च न[4] प्रदेशवृत्तिरस्ति, तत्कथमेकदेशावृत्तित्वनियतग्रहणादिविभागो[5] लभ्यते ? इत्याह— श्रोत्रशब्दाश्रयाणामित्यादि । श्रोत्रं च शब्दश्चाश्रयश्च शब्दस्याकाशमिति श्रोत्रशब्दाश्रयाः । न नामावयवाः स्वयमिति । संयोगिभेदात् उपचरितास्तु विद्यन्त एवेति स्वयमित्याह । तथाप्येतदिति । प्रदेशवृत्तित्वनियतग्रहणादिकम् ॥ २१९२ ॥

कथम् ? इत्याह– व्यञ्जकानामित्यादि । भिन्ना अवयवदेशाः = कर्णशष्कुल्यधिष्ठानसंज्ञिता येषां ते तथोक्ताः । तद्भाव = भिन्नावयवदेशता । जातिभेदश्चेति । भिन्नताल्वादिकारणसामग्रीभेदात् ॥ २१९३ ॥

ननु चोक्तम्—"सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान्प्रबोधयेत्" इत्यत्रोत्तरमाह— अन्यार्थप्रेरित इत्यादि । अन्यार्थमिति अन्यवर्णनिष्पत्त्यर्थम् । अन्यवर्णसंस्कारसक्त इति । अन्यवर्णप्रतीत्यर्थं संस्कारो यः श्रोत्रस्य सोऽन्यवर्णसंस्कारशब्देनोक्तः । न तु वर्णसंस्कार एव; श्रोत्रसंस्कारस्य प्रकृतत्वात् । नान्यं करिष्यतीति । नान्यं वर्णं श्रोत्रसंस्कारद्वारेण संस्करिष्यतीत्यर्थः ॥ २१९४ ॥

---

१. स—पा०, गा० ।
२. ०सक्तो—पा, गा० ।
३. ०द्वरोऽस्मि०—पा०, गा० ।
४. पा० पुस्तके नास्ति ।
५. ०मेकदेशवृत्ति०—पा०, गा० ।

अन्यैस्ताल्वादिसंयोगैर्वर्णो नान्यो यथैव च ।
तथा ध्वन्यन्तरक्षेपो न ध्वन्यन्तरसारिभिः ॥ २१९५ ॥
तस्मादुत्पत्त्यभिव्यक्त्योः कार्यार्थापत्तितः समः ।
सामर्थ्यभेदः सर्वत्र स्यात् प्रयत्नविवक्षयोः ॥ २१९६ ॥
यद्वा—वेदानुसारेण कार्या दिक्श्रोत्रतामतिः ।
नाकाशाद्यात्मकं ह्युक्तं वेदे श्रोत्रं कथञ्चन ॥ २१९७ ॥
दिशः श्रोत्रमिति ह्येतत् प्रलयेऽभिधीयते ।

---

अथ [1]था—वायूनामेव कस्मादेव प्रतिनियमः ? इत्याह—अन्यैरित्यादि । ताल्वादिसंयोगभेदाद् व्यञ्जका वायवो ध्वनयो भिन्ना इत्यभिप्रायः । वर्णो नान्य [ G, 609 ] इति । क्रियते इत्यध्याहार. । ध्वन्यन्तराणां क्षेपः = प्रेरणम् । ध्वन्यन्तरसारिभिस्ताल्वादिसंयोगैरिति सामानाधिकरण्यम् ॥ २१९५ ॥

तस्मादित्युपसंहरति । उत्पत्त्यभिव्यक्त्योरिति सप्तम्यन्तम् । शब्दस्योत्पत्तावभिव्यक्तौ च प्रयत्नस्य विवक्षायाश्च तुल्यः सामर्थ्यभेदः । कुतः ? कार्यान्यथानुपपत्तिगम्यत्वात् । उभयत्रापि कार्यार्थापत्तेर्व्याभिगमाणत्वादिति यावत् ॥२१९६॥

एवं तावत् सिद्धान्तान्तरप्रतीतं लोकप्रतीतं च यथाक्रममाकाशकर्णशष्कुलीलक्षणं श्रोत्रमभ्युपगम्य तत्संस्कारद्वारेण शब्दाभिव्यक्तौ न दोष इति प्रतिपादितम्[2] । साम्प्रतं वेदप्रसिद्धं दिग्लक्षणं श्रोत्रमाश्रित्य तत्संस्कारभेदाच्छब्दाभिव्यक्त्यवदोषं[3] प्रतिपादयन्नाह—यद्वेत्यादि । दिक्श्रोत्रतामतिरिति । दिगेव श्रोत्रम्—इत्येवं दिशः श्रोत्रत्वनिश्चयः कार्य इत्यर्थः । कथम् ? इत्याह—नाकाशात्मकमिति । यद्येवम्, दिक्श्रोत्रमित्येवमपि वेदे नोक्तम्, तत्कथं लभ्यते ? इत्याह—दिशः श्रोत्रमित्यादि । प्रकृतिषु स्वभवेषु लयाः = प्रलयाः । नाशकाले प्राणिनां चक्षुरादयः स्वस्वां प्रकृतौ लीयन्ते । तत्र च प्रलये पशुमधिकृत्योक्तं वेदे—"सूर्यमस्य चक्षुर्गमयतात्, दिशः श्रोत्रम्" (                ) इति । अत्रापि गमयतादिति सम्बन्धः । गमयतादिति—यद्यत आगतं तत्तत्र गच्छत्वि-

---

1. पा०, गा० पुस्तकयोर्नास्ति ।    २. प्रतिचोदितम्—पा०, गा० ।
३. ननु संस्कार०—जै० ।

तच्च प्रकृतिगामित्ववचनं चक्षुरादिवत् ॥ २१९८ ॥
सूर्यमस्य यथा चक्षुरुक्तं[1] गमयतादिति ।
तेजःप्रकृतिविज्ञानं तथा श्रोत्रं दिशात्मकम् ॥ २१९९ ॥
दिक् च सर्वगतैकैव यावद्व्योम व्यवस्थिता ।
कर्णरन्ध्रपरिच्छिन्ना श्रोत्रमाकाशदेशवत् ॥ २२०० ॥
यथांशा कल्पन न्यायो नभोभागस्य कल्पने ।
दिग्भागेऽपि [2]समस्तोऽसावागमात्तु विशिष्यते ॥ २२०१ ॥
तस्माद् दिग्द्रव्यभागो यः पुण्यापुण्यवशीकृतः ।
कर्णरन्ध्रपरिच्छिन्नः श्रोत्रं संस्क्रियते च सः ॥ २२०२ ॥

---

त्यर्थः । तेन यद्यपि वेदे दिक् श्रोत्रमित्याद्युक्त्या नोक्तम्, तथापि "दिशः श्रोत्रं गमयतात्" इत्यनेन वाक्येन सामर्थ्यादुक्तमेव । कथम् ? इत्याह—तच्चेत्यादि । तच्च दिशः श्रोत्रमिति वचनं श्रोत्रस्य प्रकृतिगामित्वप्रतिपादनपरम् । श्रोत्रं कर्तृ दिशो गच्छतु प्रकृतिभूता इत्यर्थः । कथमिव ? इत्याह—चक्षुरादिवदिति ॥२१९७-९८॥

एतदेव विवृणोति—सूर्यमस्येत्यादि । [ G. 610 ] यथा 'सूर्यमस्य चक्षुर्गमयतात्' इति वाक्येन तेज प्रकृतिविज्ञानमुक्तम्, चक्षुषः इत्यध्याहार, तथा श्रोत्रं दिगात्मकमुक्तम् 'दिशः श्रोत्रम्' इत्यनेन वाक्येन—इत्येव पदानां सम्बन्धः कार्यः । तेजःप्रकृतिविज्ञानं तेजोमयत्वमित्यर्थः ॥ २१९९ ॥

अथ कीदृशी सा दिक् ? इत्याह—दिक्चेत्यादि । सर्वगतस्यैव विवरणम्—यावद्व्योम व्यवस्थितेति । यद्येवम्, बधिरादिव्यवस्था न प्राप्नोति, एकत्वाद्दिशः ? इत्याह—कर्णरन्ध्रेत्यादि । न सर्वात्मना दिक् श्रोत्रम्, किं तर्हि ? कर्णशष्कुलीपर्यन्तपरिच्छिन्ना ॥ २२०० ॥

ननु निरवयवत्वात् तस्य कथमवयवविभागो लभ्यते ? इत्याह—यथांशेति । यथाऽऽकाशस्य संयोगिभेदेनावयवकल्पना, तथा दिशोऽपि भविष्यति । कस्तर्ह्याकाशश्रोत्रपक्षादस्य विशेषः ? इत्याह—आगमादिति ॥ २२०१ ॥

तस्मादित्युपसंहारेण बधिरादिव्यवस्थान सूचयति ॥ २२०२ ॥

---

१. चक्षुर्भक्त—पा० ।  २. समस्ताशा०—पा०, गा० ।

विषयस्यापि संस्कारे तेनैकस्यैव संस्कृतिः ।
नरैः सामर्थ्यभेदाच्च न सर्वैरवगम्यते ॥ २२०३ ॥
यथैवोत्पद्यमानोऽयं न सर्वैरवगम्यते ।
दिग्देशाद्यविभागेन सर्वान् प्रति भवन्नपि ॥ २२०४ ॥
तथैव यत्समीपस्थैर्नरैः स्याद्यस्य[1] संस्कृतिः ।
तेनैव श्रूयते शब्दो न दूरस्थैः कथञ्चन ॥ २२०५ ॥
शब्दोत्पत्तेर्निषिद्धत्वादन्यथाऽनुपपत्तितः ।
विशिष्टसंस्कृतेर्जन्म ध्वनिभ्योऽध्यवसीयते ॥ २२०६ ॥
तद्भावभाविता चात्र शक्त्यस्तित्वावबोधिनी ।
श्रोत्रशक्तिवदेवेष्टा बुद्धिस्तत्र हि संहता ॥ २२०७ ॥

विषयसंस्कारपक्षेऽपि न दोष इति प्रतिपादयन्नाह—विषयस्यापीति । यदुक्तम्—"तत्र सर्वैः प्रतीयेत शब्दः संस्क्रियते यदि" ( तत्त्व० २१५६ ) इति, तत्र न दोषः । कुतः ? नराणां सामर्थ्यभेदात् । वायोः श्रोत्रसंस्कारकस्य सन्निधानासन्निधानाभ्यां श्रोत्रसंस्कारस्य भिन्नत्वात् सामर्थ्यभेदः ॥ २२०३ ॥

ननु च नित्यसर्वगतत्वेन सर्वान् पुरुषान् प्रत्यविशिष्टत्वाच्छब्दस्य कथं ग्रहणाग्रहणे स्याताम् ? इत्याह—यथैवेत्यादि ॥ २२०४-२२०५ ॥

[ G. 611 ] अथ कथमिदमवसीयते—वायुभ्यो विषयस्य संस्कारो भवति, न तु विषय एव ? इत्याह—शब्दोत्पत्तेरित्यादि । प्रत्यभिज्ञया शब्दस्य नित्यत्वैकत्वयोः सिद्धत्वान्न शब्दोत्पत्तिः । तस्मात् सामर्थ्यात् संस्कारोत्पत्तिर्ध्वनिभ्यो भवति, न शब्दस्येति गम्यते ॥ २२०६ ॥

ननु च बीजाङ्कुरादिव[2] तद्भावभावितया ध्वनिकार्यत्वं शब्दानां सिद्धम् । यथा हि—बीजादिभावेऽङ्कुरादीनामुपलम्भात् तत्कार्यत्वं तेषाम्; एवं ध्वनिभावे शब्दानामुपलम्भोऽस्ति, किमिति तत्कार्यत्वं न भवेत्, एतावन्मात्रनिबन्धनत्वात् कार्यव्यवहारस्य ? इत्याह—तद्भावभावितेत्यादि । यथा हि—श्रोत्राभावे शब्दो

1. यद्यस्य—जै० ।
2. बीजाङ्कुरादिव—पा०, गा० ।

### उभयसंस्कारपक्षे दोषनिराकरणम्

सस्कारद्वयपक्षे तु वृथा दोषद्वय हि तत् ।
येनान्यतरवैकल्यात् सर्वं शब्दो न गम्यते ॥ २२०८ ॥

प्रलम्भोऽस्ति, न च तत्सद्भावभावित्वाच्छ्रोत्रस्य शब्दं प्रति जननशक्तिरनुमीयते, किं तर्हि ? ग्रहणशक्तिः, एवमिहापि ध्वनीना शक्तिसद्भावमात्रावबोधिनी भवेत् तद्भावभाविता, न तूत्पादकशक्त्यवबोधिनी । शक्तिमात्रे तस्या प्रतिबन्धो न तु शक्तिविशेष इति यावत् । अत शक्तिविशेषे साध्ये व्यभिचारित्वमस्या इति प्रतिपादित भवति । कथमिदानीं सस्कारशक्तिविशेषावगति ? इत्याह—बुद्धिस्तत्र हि सहृतेति । प्रत्यभिज्ञया नियतत्वस्य सिद्धत्वात् । अन्यथानुपपत्त्या तत्र संस्कारविशेषे तु बुद्धिरुपसंहृता भाष्यकारेण, न तु तद्भावभावितामात्रात संस्कारशक्तिरनुमीयत इत्यर्थ ॥ २२०७ ॥

उभयसंस्कारपक्षे यदुक्तम्—"प्रत्येकाभिहिता दोषा स्युर्द्वयोरपि सस्कृतौ" (तत्त्व० २१९७) इति, अत्राह—सस्कारद्वयपक्षे तु वृथा दोषद्वय हि तदिति [ G 612 ] दोषद्वयमुभयोरपि पक्षयोर्यत् प्रागुक्तम्, तत्तु वृथा = अनर्थकम् । कथम् ? इत्याह—येनेत्यादि । येनेति यस्मात् । अन्यतरस्य = श्रोत्रसंस्कारस्य[1] वा वैकल्यात् । न शब्दो गम्यते । तथा हि—सत्यपि शब्दसंस्कारे बधिरस्य श्रोत्रसंस्कारवैकल्यान्न शब्दग्रहणम् । अबधिरस्याप्यनभिव्यक्ते शब्दग्रहणम्[2] । क्वचित् पाठ—वृथा दोषद्वयं पर इति । स च सुबोध ॥ २२०८ ॥

ननु च यदि सर्वगत शब्द, कथमस्य घटादेरिव देशविच्छेदे नानात्वमुपलभ्यते, यावता सर्वत्र सद्भावादविच्छिन्नरूपेण सर्वत्रागतिर्युक्ता । न च सर्वगतस्य दूरासन्नादिभेदो युक्त । नाप्यागम कुतश्चिद्देशात्, तस्य सर्वत्र स्थितत्वात् । नापि नियमस्य दीर्घह्रस्वमन्दतरत्वादिस्वभावभेदो युक्त । तस्माद्देशकालस्वभावभेदेन वेद्यमानत्वाद् घटादिवद्भिन्नोऽनित्यश्च सिद्ध शब्द इति कश्चिदुच्यते—

"शब्दोत्पत्तेर्नि षिद्धत्वादन्यथाऽनुपपत्तित ।

1 श्रोत्रसंस्कारस्य—गा० ।
2 °शब्दस्याग्रहणम्—गा० ।

जलादिषु यथैकोऽपि नानात्मा सवितेक्ष्यते ।
युगपत्त्र च भेदोऽस्य तथा शब्दोऽपि गम्यताम् ॥ २२०९ ॥
व्यञ्जकध्वन्यधीनत्वात् तद्देशे हि स गृह्यते ।
न च ध्वनीनां सामर्थ्यं व्याप्तुं व्योम निरन्तरम् ॥ २२१० ॥
तेनाविच्छिन्नरूपेण[1] नासौ सर्वत्र गम्यते ।
ध्वनीनां भिन्नदेशत्वाच्छ्रुतिस्तत्रानुरुध्यते[2] ॥ २२११ ॥
अपूरितान्तरालत्वाद् विच्छेदश्चावसीयते ।
तेषां चाल्पकदेशत्वाच्छब्देऽप्यविभुतामतिः ॥ २२१२ ॥
गतिमद्वेगवत्त्वाभ्यां ते चायान्ति यतो यतः ।
श्रोता ततस्ततः शब्दमायान्तमिव मन्यते ॥ २२१३ ॥

---

विशिष्टसंस्कृतेर्जन्म ध्वनिभ्योऽध्यवसीयते" ॥
( श्लो० वा०, श० नि० १२६-१२७ ) इति !

अत्राह—जलादिष्वित्यादि । अनेन देशभेदेन वेद्यमानत्वस्यानैकान्तिकत्व-माह ॥ २२०९ ॥

ननु च[3] जलाद्याधारभेदः सवितर्यनेकत्वव्यामोहकारणमस्ति, इह तु न किञ्चिद् भ्रान्तिकारणं विद्यते, यत विशेषणो हेतुरसति भ्रान्तिकारणे इत्यत्राभिमतः, तत् कथं व्यभिचारिता हेतो ? इत्याह—व्यञ्जकध्वन्यधीनत्वादिति ।

अत्रापि व्यञ्जकध्वनिभेदो भ्रान्तिनिमित्तमस्तीति समानम् । व्यञ्जकध्व-न्यधीनत्वादिति । [C 613] शब्दग्रहणस्येति शेषः । तद्देश इति ध्वनिदेशः । स इति शब्दः । यथा च व्यञ्जको ध्वनिः शब्दस्य विच्छिन्नादि-विभ्रमकारणं भवति, तथा योजयन्नाह—न चेत्यादि । असाविति शब्दः । श्रुतिः, शब्दस्येति शेषः । तत्रेति आकाशदेशे । अपूरितान्तरालत्वम्, ध्वनिभिरित्यपेक्षणीयम् । तेषां चेति ध्वनीनाम् । ते चायान्तीति ध्वनयः ॥ २२१०-२२१३ ॥

---

1. तेन विच्छिन्न०—पा०, मा० ।   2. ०वरुध्यते—गा० ।
3. पा०, गा० पुस्तकयोर्नास्ति ।

आदित्यनिदर्शनमुखेन शङ्का

आह[1]—केन[1] निमित्तेन प्रतिपात्रं पृथक् पृथक् ।
भिन्नानि प्रतिबिम्बानि गृह्यन्ते युगपत्तया ? ॥ २२१४ ॥*

उत्तरम्

अत्र ब्रूमो यदा तावज्जले सौरेण तेजसा ।
स्फुरता चाक्षुषं तेजः प्रतिस्रोतः प्रवर्त्तितम् ॥ २२१५ ॥
स्वदेशमेव गृह्णाति सवितारमनेकधा ।
भिन्नमूर्तिर्यथापात्रं तदाऽस्यानेकता कुतः ॥ २२१६ ॥
ईषत्सम्मीलितेऽङ्गुल्या यथा चक्षुषि दृश्यते[2] ।
पृथगेकोऽपि भिन्नत्वाच्चक्षुर्वृत्तेस्तथैव नः ॥ २२१७ ॥

ननु चादित्यस्याप्येकस्य सतो देशविच्छेदेन ग्रहणमसिद्धम् । तथा हि—चक्षुषा प्रतिपात्रं पृथक्पृथग्भिन्नान्येव सूर्यादिप्रतिबिम्बानि परिच्छिद्यन्ते, न पुनरादित्यः; भवतस्तु प्रतिबिम्बमर्थान्तरमनिच्छतोऽनेकप्रतिबिम्बग्रहणे न किञ्चित् कारणमुत्पश्यामः ?—इत्येवं मन्यमानस्य परस्य प्रत्यवस्थानमाशङ्कमान आह—आहेत्यादि । आहेति परः । युगपत्तयेति यौगपद्येन ॥ २२१४ ॥

अत्रोत्तरमाह—अत्र ब्रूम इत्यादि । जलदेशस्थेन भानवीयेन तेजसा प्रस्पन्दनधर्मणा चाक्षुषं तेजः प्रतिस्रोतः प्रवर्तितम् = प्रत्यावृत्तं सत् सवितारम् = आदित्यं स्वदेशस्थमेव गृह्णाति । यथापात्रम् = यावत्पात्रम् । अतो भिन्नमूर्तिः प्रतिभातीति तदाऽस्यानेकता कुतः ? नैव, भिन्नत्वाच्चक्षुर्वृत्तेरिति भावः ॥ २२१५–२२१६ ॥

चक्षुर्वृत्तिवशादेवाभिन्नोऽपि भिन्न इव गृह्यत इति दर्शयन्नाह—ईषदित्यादि । ईषत् = मनाक् । अङ्गुल्या चक्षुषि निमीलिते = अवष्टब्धे सति यथैकोऽपि

1–1 आहैकेन—इति न्यायरत्नाकरसम्मतः पाठः ।
* इत आरभ्य २२२४कारिकापर्यन्तं प्रायः सर्वा अपि कारिका आचार्येण श्लोकवार्त्तिके शब्दनित्यताधिकरणे उद्धृता —इति ध्येयम् ।
2. दृश्यते—पा०, गा० ।

अन्यथापि प्रत्यवस्थानपूर्वकं निरसनम्

अन्ये तु चोदयन्त्यत्र प्रतिबिम्बोदयैषिणः ।
[illegible] एव चेत् प्रतीयेत कस्मान्नोपरि दृश्यते ॥ २२१८ ॥
कूपादिषु कुतोऽधस्तात् प्रतिबिम्बाद् विनेक्षणम् ।
प्राङ्मुखो दर्पणं पश्यन् स्याच्च प्रत्यङ्मुखः कथम्? ॥ २२१९ ॥
अप्सूर्यदर्शिनां नित्यं द्वेधा चक्षुः प्रवर्त्तते ।
एकमूर्ध्वमधस्ताच्च तत्रोर्ध्वांशुप्रकाशितम् ॥ २२२० ॥
अधिष्ठानान्निकृष्टत्वान्नात्मा सूर्यं प्रपद्यते ।
पारम्पर्यार्पितं सन्तमचाग्वृत्त्यावबुध्यते ॥ २२२१ ॥

पदार्थः पृथक् = नाना दृश्यते । कुतः ? चक्षुर्वृत्तेर्भिन्नत्वात् । तथैव नोः = अस्माकमेकोऽपि शब्दो भिन्नो गृहीष्यत इत्यदोषः ॥ २२१७ ॥

[ G. 614 ] अन्ये त्विति । 'जलादिषु यथैकोऽपि नानात्मा सवितेक्ष्यते' इत्यस्य हेतुर्व्यभिचारविषयत्वेनोक्तस्यासिद्धिं मन्यमानाः प्रतिबिम्बमर्थान्तरमिच्छन्तश्चोदयन्ति । यदि स एवादित्यो दृश्यते न प्रतिबिम्बम्, तत्किमित्युपरिष्टादस्य न दर्शनं भवति ? एवं हि तत्त्वस्य दर्शनं भवेत्, यदि देशावस्थितस्वरूपं गृह्णीयात्, नान्यथा । अन्यथा ह्यतिप्रसङ्गः स्यात् । किञ्च—कूपादिषु च दूराधःसंविष्टस्याक्रादेः कथं ग्रहणं भवेत ? यदि तत्र प्रतिबिम्बं नोत्पन्नं स्यात् । [illegible] हि तत्र तथाऽर्कादिर्व्यवस्थितः । अपि च प्राङ्मुखो दर्पणमवलोकयन् कथमिव प्रत्यङ्मुखो भवति, न हि तस्य तदा पृष्ठाभिमुखं मुखमुपजातं दृश्यते ? ॥ २२१८-२२१९ ॥

अप्सूर्येत्यादिना प्रतिविधत्ते । एवं मन्यते—यदि बहिर्निर्गतमिन्द्रियमादित्यं बोधयेत्, तत्र एतत् स्यात्—उपरिस्थितमेव पश्येन्नाधस्तादिति, यावता धर्माधर्मवशीकृते शरीरे एव तदिन्द्रियं ग्राहकमिष्यते, नोपरिस्थम् । यथोक्तम्—

"तत्रैव बोधयेदर्थं बहिर्यातं यदीन्द्रियम् ।
अत एतद् भवेदेवं शरीरे तत्त्वबोधकम्[2] ॥" इति ।
( श्लो० वा०, श० नि० १८५, १८६ )

---

१. तस्य—पा०, पा० ।   २. तत्त्व बोधकम्—गा० ।

ऊर्ध्ववर्त्ति तदेकत्वादवागिव च मन्यते ।
अधस्तादेव तेनार्कः सान्तरालः प्रतीयते ॥ २२२२ ॥
एवं प्राङ्नतया वृत्त्या प्रत्यग्वृत्तिसमर्पितम् ।
बुद्ध्यमानो मुखं भ्रान्त्या प्रत्यगित्यवगच्छति ॥ २२२३ ॥
अनेकदेशवृत्तौ वा सत्यपि प्रतिबिम्बके ।
समानबुद्धिगम्यत्वान्नानात्वं नैव विद्यते ॥ २२२४ ॥

तथा ह्ययं क्रमः । ये हि जलपात्रे जलं सूर्यं च पश्यन्ति तेषामप्सूर्यदर्शिनामेकमेव चक्षुरूर्ध्वमधश्च द्विधा भागशः प्रवर्त्तते । तत्रोर्ध्वभागप्रकाशितमादित्यमात्मा पुरुषो न गृह्णाति, कुत ? अधिष्ठानानृजुत्वात् = चक्षुरिन्द्रियाधिष्ठानस्यार्जवेन तदाऽनवस्थितत्वात् । पारम्पर्येण तु सौरेण तेजसा [ G 615 ] वृत्तेरर्पितमादित्यमधागवृत्त्या कारणभूतया बुध्यते । तथा हि किल सौरं तेजस्तैजस्विनं वृत्तेरर्पयति, वृत्तिश्चक्षुषः, चक्षुरात्मन—इत्येतत्पारम्पर्यार्पणं सूर्यस्य तेजस्विन इत्यादित्यमूर्ध्ववृत्तिम् = उपरिस्थं च तमादित्यमवागिव = अधःस्थितमिव मन्यते । कः ? आत्मा । न पुनरधस्थादन्यः एवादित्य., कुत. ? तदेकत्वात् तस्यादित्यस्याभिन्नत्वात् । चक्षुष इत्यपरे । तस्मादनन्तरोदितेनैव चक्षुषो वृत्तिवशेन सान्तरालोऽधस्तात् कूपादिषु सूर्यो दृश्यते; जलादिपात्रभेदाच्च । अन्यथा कथमभिन्नस्य[1] भेदेन[1] ग्रहणं स्यात् ॥ २२२०–२२२२ ॥

यदुक्तम्—"प्राङ्मुखो दर्पणं पश्यन्" इत्यादि । तत्राह— एवमित्यादि । प्रथमं किल चक्षूरश्मयो मुखमादाय निर्गच्छन्ति यावदादर्शादिदेशम्, सा प्राङ्नता वृत्तिरुच्यते । ते च तत्रादर्शादौ प्रतिहता निवर्त्तमाना. स्वमुखमेव यथावस्थितमागच्छन्ति, सा च प्रत्यग्वृत्तिः । तत्र प्राङ्नता वृत्तिर्मुखं प्रत्यग्वृत्तेरर्पयति, प्रत्यग्वृत्तिश्चात्मनः, तत आत्मा प्रत्यग्वृत्तिसमर्पितमवगच्छन् मुखं भ्रान्त्या प्रत्यङ्मुखं यास्यामीति[2] मन्यते । चक्षुर्वृत्तेर्वैचित्र्यमेव भ्रान्तेर्बीजमिति भावः ॥ २२२३ ॥

अभ्युपगम्य प्रतिबिम्बोदयम्, परिहारमाह—अनेकदेशवृत्तौ चेत्यादि । सत्यपि प्रतिबिम्बेऽर्थान्तरभूते नैव तेषां प्रतिबिम्बानां नानात्वमस्ति । कुतः ?

१–१. कथमभेदेन—पा०, गा० ।    २. पास्यामीति—पा०, गा० ।

देशभेदादीनामसाधकत्वोपपादनम्

देशभेदेन भिन्नत्वमित्येतच्चानुमानिकम् ।
प्रत्यक्षस्तु स एवेति प्रत्ययस्तेन बाधकः ॥ २२२५ ॥
पर्यायेण यथा चैको भिन्नदेशान् व्रजन्नपि ।
देवदत्तो न भिद्येत तथा शब्दो न भिद्यते ॥ २२२६ ॥
ज्ञातैकत्वो यथा चैको दृश्यमानः पुनः पुनः ।
न भिन्नः[1] कालभेदेन[1] तथा शब्दो न देशतः ॥ २२२७ ॥
पर्यायादविरोधश्चेद्[2] व्यापित्वादपि दृश्यताम् ।

---

समानबुद्धिगम्यत्वात् = एकबुद्धिपरिच्छेद्यत्वात् । तथा शब्दस्याप्येकबुद्धिगम्यत्वादेकत्वं सिद्धम् ॥ २२२४ ॥

ननु कुतो देशभेदेन वेद्यमानस्यापि नानात्वं भविष्यति ? ननु यद्देशभेदेन वेद्यमानत्वाद्भिन्नत्वं सिद्धं तत् कथमेकबुद्ध्या बाध्यते ? इत्याह—देशभेदेनेत्यादि । बाधक इति । प्रत्यक्षस्य सर्वप्रमाणज्येष्ठत्वादिति भावः ॥ २२२५ ॥

देशकालभेदेन वेद्यमानत्वस्य व्यभिचारित्वादप्रामाण्यमेवेति प्रतिपादयन्नाह—पर्यायेणेत्यादि । [G 616] तथा शब्दो न भिद्यत इति । देशतः, कालतश्चेत्यपेक्षणीयम् ॥ २२२६ ॥

एवं देशव्यभिचारमुखेनोभयोरपि व्यभिचार उक्तः । इदानीं कालभेदव्यभिचारद्वारेण चोभयोरपि देशकालभेदेनोपलम्भयोर्व्यभिचारमाह—ज्ञातैकत्व इत्यादि । ज्ञातमेकत्वं प्रत्यभिज्ञानाद् यस्य स तथा । न देशत इत्युपलक्षणम्, तथा कालतोऽपि [illegible] भिन्नः । अविरोधादेकव्यभिचारमुखेनान्यत्रापि व्यभिचारोद्भावनम् ॥ २२२७ ॥

पर्यायादित्यादिना दृष्टान्तस्य वैधर्म्यमाशङ्कते । तथा हि—देवदत्तस्य यद्देशकालभेदेनोपलम्भेऽपि न भेदः, तत्र पर्यायोऽस्त्यविरोधकारणम्, शब्दे तु न किञ्चिदपीत्यतो वैधर्म्यं दृष्टान्तदार्ष्टान्तिकयोः । अत्राप्यविरोधकारणमाह—व्यापित्वादपि दृश्यतामिति । अविरोध इति सम्बन्धः । ध्वनीनां चापूरितान्त-

---

१–१ भिन्नकालभेदेन—पा०, गा० । २. ०दनिरोध०—जै० ।

दृष्टसिद्ध्यर्थ[1] हि यो धर्मः सर्वथा[1] सोऽभ्युपेयते ॥ २२२८ ॥
यथा महत्यां खातायां मृदि व्योम्नि महत्त्वधीः ।
अल्पायां वाऽल्पधीरेवमत्यन्ताकृतके मतिः ॥ २२२९ ॥
तेनात्रैवं परोपाधिशब्दवृत्तौ मतिभ्रमः ।
न च स्थूलत्वसूक्ष्मत्वे लक्ष्येते शब्दवर्तिनी ॥ २२३० ॥
बुद्धितीव्रत्वमन्दत्वे महत्त्वाल्पत्वकल्पना ।
सा च पट्वी भवत्येव महातेजःप्रकाशिते ॥ २२३१ ॥

---

शत्वादित्येतदपिशब्देन पूर्वोक्तं च निर्दिशति । कस्माद् व्यापित्वमङ्गीक्रियते ? इत्याह—दृष्टसिद्ध्यर्थं हीति । भिन्नेषु दिग्देशेष्वभिन्नस्य शब्दस्य ग्रहणसिद्ध्यर्थं यो धर्मो युज्यते स एवान्यथानुपपत्त्याङ्गीक्रियते । अत्र च शब्दस्य नित्यव्यापित्वमन्तरेण सर्वस्मिन् काले देशे च न ग्रहणं सिद्ध्यतीत्यतो नित्यविभुत्वे शब्दस्यान्यथानुपपत्त्या सिद्धे ॥ २२२८ ॥

स्वभावभेदेन वेद्यमानत्वस्यापि व्यभिचारितां प्रतिपादयन्नाह—यथा महत्यामित्यादि । [ G. 617 ] अत्रायमभिप्रायः—यदि शब्दगतास्तीव्रमन्दादयो भेदा हेतुत्वेनोपादीयन्ते, तदा न सिद्धो हेतुः, यो हि नित्यं शब्दमिच्छति स कथमपरोपाधिकांस्तस्य स्वभावभेदान् ब्रूयात् ! अथ तीव्रमन्दाद्याकारे तद्विषया बुद्धिर्हेतुत्वेनोच्यते, सा हि न स्वभावे भेदमन्तरेण सम्भवतीति ? तदाऽनैकान्तिकता हेतोः । यथा हि महत्यां मृदि पृथिव्यां खातायां सत्यां व्योम्नि = आकाशे तदाश्रयं महत्त्वादिज्ञानमुत्पद्यते स्वतो महत्त्वादेरभावेऽपि, तथा शब्देऽप्यत्यन्ताकृत्रिमेऽप्ययं[2] व्यञ्जकध्वनिभेदाद् बुद्धिभेदो भविष्यति तथाविधस्वभावभेदमन्तरेणापि । तदेवाह—तेनात्रैवमित्यादि । अथ परोपाधिरयम्, न तु स्वत एवेति कथमवगतमिति चेत् ? आह—न चेत्यादि । अनेनैतदाह—बुद्धिगते एव तीव्रमन्दत्वे शब्दे समारोप्य आख्याति, न तु पुनः शब्दस्य स्वतः स्थूलादिसम्भवः; तस्य प्रत्यभिज्ञयैकत्वस्य सिद्धत्वात् । अथापि स्याद्—यदि विषयस्य तथा स्वभावभेदो न भवेद्, बुद्धेरपि कुतो भवेत् ? इत्याह—सा च पट्वीत्यादि । यथैव हि

---

1. सर्वेषा—पा०, गा० । 2. ०कृत्रिमेऽप—पा०, गा० ।

मन्दप्रकाशिते मन्दा घटादावपि सर्वदा ।
एवं दीर्घादयः सर्वे ध्वनिधर्मा इति स्थितम् ॥ २२३२ ॥

वाचकसामर्थ्यानुपपत्त्या शब्दनित्यत्वसमर्थनम्

न चादृष्टार्थसम्बन्धः शब्दो भवति वाचकः ।
तथा चेत् स्यादपूर्वोऽपि सर्वः स्वार्थं प्रबोधयेत् ॥ २२३३ ॥
सम्बन्धदर्शनं[1] चास्य नानित्यस्योपपद्यते ।
सम्बन्धज्ञानसिद्धिश्चेद् ध्रुवं कालान्तरस्थितिः ॥ २२३४ ॥

घटादावसत्यपि स्वभावभेदे प्रकाशभेदाद् बुद्धेः पटुमन्दतादिभेदो भवति, तथा शब्देऽपि दीर्घादिभेदो व्यञ्जकध्वनिभेदाद् भविष्यति, असत्यपि स्वतः स्वभावभेद इत्यदोषः ॥ २२२९-२२३२ ॥

पुनरपि शब्दानित्यत्वप्रतिज्ञाया बाधां शब्दस्य वाचकसामर्थ्यान्यथानुपपत्त्या प्रतिपादयन्नाह—न चादृष्टार्थसम्बन्ध इत्यादि । अर्थापत्तिपूर्विकेयमर्थापत्तिः । तथा हि—शब्दस्य वाचकसामर्थ्यं शाब्दज्ञानान्यथानुपपत्त्या सिद्धम्, तदपि सामर्थ्यं शब्दनित्यत्वमन्तरेणानुपपन्नमित्यर्थापत्तिपूर्विकेयमर्थापत्तिः । तामेव विस्तरेण प्रतिपादयति—न हि तावदगृहीतसम्बन्धः शब्दः सत्तामात्रेण वाचको भवति । तथा चेत् स्यादिति । यद्यदृष्टार्थसम्बन्धोऽपि वाचको भवेत्, तदा अपूर्वोऽपि = प्रथममश्रुतोऽपि नालिकेरद्वीपनिवासिना गवादिशब्दः स्वार्थं प्रकाशयेत् ॥ २२३३ ॥

[ G. 618 ] ननु चात्र सर्वेषामविवादात् सिद्धसाध्यता, न हि कश्चिदज्ञातसम्बन्धं शब्दं वाचकमिच्छति । नित्यस्तु स कथमनेन ज्ञातसम्बन्धेन प्रतिपादितो भवति ? इत्याह—सम्बन्धदर्शनमित्यादि । शब्दमर्थं च पुरोऽवस्थाप्य तयोः सम्बन्धः क्रियते, कृतश्चोत्तरकालं ज्ञायेत । उच्चरितप्रध्वंसित्वात् तुशब्दस्यैतदयुक्तम् । तत्राह—नानित्यस्योपपद्यत इति । अथ तत्कालमवतिष्ठेत ? हन्त तर्हि कालान्तरमप्यवस्थानमनिवार्यमेव; अविरोधात् । यथोक्तम्—"तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति" ( तत्त्व० २१३८ ) इति ॥ २२३४ ॥

1. सम्बन्धदर्शनः—जै० ।

अन्यस्मिन् ज्ञानसम्बन्धे[1] न चान्यो बोधको भवेत् ।
गोशब्दे ज्ञानसम्बन्धे[1] नाश्वशब्दो हि वाचक ॥ २२३५ ॥
अथान्योऽपि स्वभावेन कश्चिदेवार्थबोधक ।
तत्रानिबन्धने न स्यात् कोऽसाविति विनिश्चय ॥ २२३६ ॥
यत प्रत्यय इत्येव व्यवहारे प्रकल्पिते ।
श्रोतृणा स्यादपीत्थ तु वक्तृणा नावकल्प्यते[2] ॥ २२३७ ॥
अज्ञात्वा क्रमसो शब्दमादावेव विवक्षतु ।
जानाति चेदयस्य स पूर्वमेवावधारित ॥ २२३८ ॥
तेज० प्रत्यक्षशेषत्वान्नवत्वेऽपि प्रकाशकम् ।

---

अथापि स्यात्—सम्बन्धकाल यावदवतिष्ठेत, पश्चात्स्वयमेव नश्यति ? इत्याह—अन्यस्मिन्नित्यादि । अन्यस्मिन् = सङ्केतकालभाविनि । शेष सुबोधम् ॥२२३५॥

अथेति पराभिप्रायमाशङ्कते । अथान्योऽपीति । प्रयोगकालभावी प्रकृत्यैव सङ्केतकालभाविशब्दवद्वाचक स्यादिति चेत् ? तदसम्यक्, निबन्धनमन्तरेणायमसौ[3] शब्दोऽस्यार्थस्य वाचक इति निश्चयाभावात् ॥ २२३६ ॥

ननु च कथमुच्यते—निश्चयो नास्तीति, यावता यतोऽर्थप्रत्ययो भवति स एव स्वभावतोऽर्थस्य बोधक इति स्पष्टमेव निश्चीयते ? इत्याह—यत इत्यादि । सत्यं श्रोतृणा सम्भवेदयम्—निश्चयोऽयमर्थस्य प्रत्यायक इति, तेषां ततोऽर्थप्रत्ययोत्पत्ते प्रयोक्तृणा त्वय दुर्लभ, नहि ते तत शब्दादर्थं प्रतिपद्यन्ते, परप्रत्याय-नार्थमेव शब्द ते प्रयुञ्जते । अतस्तेषां वक्तृणामनवकल्प्यते[4] निश्चय ॥ २२३७ ॥

[G 619] एतदेव दर्शयति—अज्ञात्वेत्यादि । तदेवमज्ञानपक्षेऽयं दोष, ज्ञानपक्षेऽपि नियतमसौ प्राक् तेन ज्ञात इति स्थिरत्वमस्य बलादापततीति दर्शयन्नाह—जानाति चेदित्यादि ॥ २२३८ ॥

ननु यथा दीपान्तितेजोऽभिनवमपि प्रकाशयत्यर्थम्, तथा शब्दोऽपि प्रतिपादयिष्यति ? इत्याह—तेज प्रत्यक्षशेषत्वादिति । प्रत्यक्षशेषत्वम्—प्रत्य

---

१ ज्ञानसम्बन्धे—पा०, गा० । २ नावकल्प्यते—पा०, गा० ।
३ ०न्तरेणासौ—पा०, गा० । ४. ०मवकल्प्यते—पा०, गा० ।

सदृशत्वाप्रतीतेश्च तद्द्वारेणाप्यवाचकः ॥ २२३९ ॥
कस्य चैकस्य सादृश्यात् कल्प्यतां वाचकोऽपरः ।
अदृष्टसङ्गतित्वेन सर्वेषां[1] तुल्यता तदा ॥ २२४० ॥
अर्थवान् पूर्वदृष्टश्चेत् तस्यैतावान् क्षणः कुतः ।
द्विस्त्रिर्वाऽनुपलब्धो हि नार्थवान् सम्प्रतीयते ॥ २२४१ ॥
अप्रतीतान्यशब्दानां तत्कालेऽसावनर्थकः ।

---

भावः[2] । प्रत्यक्षेऽपरं[3] तद्विषयसंस्कारादिन्द्रियसंस्काराद्वा प्रत्यक्षे ज्ञानेऽज्ञातमुप-गच्छदभिनवमपि प्रकाशकं भवति । शब्दस्य साक्षादतीन्द्रियार्थप्रतिपादकत्वान्न प्रत्यक्षाङ्गम्, अतो वैधर्म्यम् । अथ वा—यत्प्रत्यक्षाङ्गं तत्सम्बन्धपरिज्ञाननिरपेक्षमपि प्रकाशयति, यथा चक्षुस्तेजश्च प्रत्यक्षाङ्गम्, तस्मादभिनवमपि प्रकाशयति । शब्दस्तु परोक्षविषयत्वान्न प्रत्यक्षाङ्गमिति वैधर्म्यम् । ननु चाभिनवमपि शब्दान्तरं पूर्वसादृश्यानुसारेण वाचकं भविष्यति ? इत्याह—सदृशत्वाप्रतीतेरित्यादि । न ह्यप्रतीते सादृश्ये तद्द्वारेण वाचकत्वं युक्तम्; अतिप्रसङ्गात् ॥ २२३९ ॥

किञ्च—आस्तां तावत् सादृश्यप्रतीतिः, सादृश्यमेव न सम्भवतीति प्रति-पादयन्नाह—कस्य चैकस्येत्यादि । एकस्मिन् हि वाचके सिद्धे तत्सादृश्या-दितरस्तथैवेति कल्प्येत, तच्च न सम्भवति; सर्वेषामेव शब्दानामर्थसम्बन्धित्वेन प्रतीतत्वात् । अथापि स्याद्—यः प्राक् सङ्केतकाले दृष्टः सोऽर्थवानेव, सादृश्यमि-तरेषां भविष्यति ? इत्याह—तस्यैतावान् क्षणः कुत इति । तस्य = पूर्वदृष्टस्य शब्दस्य एतावतः क्षणात् कुतोऽवस्थानम्; उच्चरितप्रध्वंसित्वात्तस्य । यदि नामोच्चरित-प्रध्वंसी, तथाऽप्यर्थवान् किं न भवतीति चेत् ? आह—द्विस्त्रिर्वेत्यादि । भूयोदर्शन-भावित्वं[4] हि शब्दार्थसम्बन्धज्ञानम्; सकृदुपलम्भात्[5] ॥ २२४०-२२४१ ॥

[ G. 620 ] अथ सजातीयान्यग्रहणे सति स एव सार्थको भवतीत्युच्यते, तदयुक्तम् ! इत्याह—अप्रतीतान्यशब्दानामित्यादि । येषां हि प्रतिपत्तॄणां शब्दा-

---

१ पूर्वेषां—पा०, गा० । २. प्रत्यक्षे अङ्गभावः—गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति । ४. भूयोदर्शनभावि—पा०, गा० ।
५. पा०, गा० पुस्तकयोर्नास्ति ।

स एवान्यश्रुतीनां स्यादर्थवानिति विस्मयः ॥ २२४२ ॥

सम्बन्धकरणान्यथानुपपत्त्या शब्दनित्यत्वसमर्थनम्

शब्दं तावदनुच्चार्य सम्बन्धकरणं न च ।
न चोच्चारितनष्टस्य सम्बन्धेन प्रयोजनम् ॥ २२४३ ॥
तेनासम्बन्धनष्टत्वात् पूर्वस्तावदनर्थकः ।
उत्तरोऽकृतसम्बन्धो विज्ञायेतार्थवान् कथम् ॥ २२४४ ॥
शब्दोच्चारणसम्बन्धकरणव्यावहारिकी ।
क्रिया क्रमस्वभावत्वात् क कुर्याद्युगपत् क्वचित् ॥ २२४५ ॥
देशकालादिभिन्नानां पुंसां शब्दान्तरश्रुते ।

---

न्तरमप्रतीतम्, तेषां[1] श्रवणकाले सत्तार्थस्य प्रत्यायक, भेदाधिष्ठानस्य सादृश्यस्य तदानीमभावात् । पुन स एव तेषामेव प्रतिपत्तॄणां प्रतीतशब्दान्तराणामर्थस्य प्रत्यायक इत्यलौकिकम् । कथं हि नामैकस्य क्रियाद्वये परस्परविरुद्धे व्यापारः ! अन्यश्रुतीनामिति । अन्या = सम्बन्धशब्दविषया श्रुतिर्येषां प्रतिपत्तॄणां ते तथा ॥ २२४२ ॥

एवं तावद् वाचकत्वव्यवस्थानुपपत्त्या शब्दनित्यत्वं प्रतिषिध्य, इदानीं सम्बन्धकरणान्यथानुपपत्त्या प्रतिषेद्धुमाह—शब्द तावदित्यादि । पूर्वमुच्चारणम्, ततः सम्बन्धकरणम्, ततो व्यवहार —इत्ययं क्रमो व्यवहारे । उच्चारितप्रध्वंसिनोऽक्रमस्य कथं स्यात् । न चैतद् नष्टस्य सम्बन्धोऽशक्यक्रिय, नापि तेन प्रयोजनम्, व्यवहारकालेऽननुयायित्वात् । व्यवहारार्थत्वाच्च सङ्केतस्य ।

तेनेत्यादिना निगमयति । अविद्यमान सम्बन्धो यस्यासावसम्बन्ध, [2]असम्बन्धत्वादेव च पूर्वस्तावत् सङ्केतकालभावी शब्दोऽनर्थक । व्यवहारकालभावी नहि सार्थको भविष्यति इत्याह—उत्तर इत्यादि ॥२२४३-२२४४॥

यदि तर्हि क्रमस्य प्रत्येकोच्चारणस्योऽनुपपत्तिः, युगपत्तर्हि भवन्त्वित्याह—शब्दोच्चारणेत्यादि । शब्दोच्चारणम्, सम्बन्धकरणम्, लोकव्यवहारश्च—इत्येतास्तिस्रः क्रिया स्वभावत एव क्रमवत्य, न युगपत् कर्तुं शक्यन्ते । असति

---

१. तत्र हि—पा०, गा० ।    २ वाक्यप०—पा०, गा० ।

पूर्वं कृत्रिमसम्बन्धोऽप्येकः शब्दो न सिद्धयति ॥ २२४६ ॥

सम्बन्धकथनान्यथानुपपत्त्या शब्दस्य नित्यत्वम्

सम्बन्धकथनेऽप्यस्य स्यादेषैव प्रतिक्रिया ।
नष्टासद्वर्त्तमानेषु नाख्यानस्य हि सम्भवः ॥ २२४७ ॥
अर्थवान् कतरः[1] शब्दः श्रोतुर्वक्त्रा च कथ्यताम् ।
यदा पूर्वश्रुतः शब्दो नासौ शक्नोति भाषितुम् ॥ २२४८ ॥
न तावदर्थवन्तं स ब्रवीति सदृशं वदेत् ।
नार्थवत्सदृशः शब्दः श्रोतुस्तत्रोपपद्यते ॥ २२४९ ॥

---

च यौगपद्ये सम्बन्धकरणानुपपत्तिः । क्रमप्रतीक्षायां कथं[2] कालान्तरस्थायी शब्दोऽभ्युपगतः स्यात् ॥ २२४५ ॥

देशकालादिभिन्नानामिति निगमनम् । [G. 621] आदिशब्देन बालकुमाराद्यवस्थापरिग्रहः । पूर्वमिति । शब्दान्तरश्रुतेरिति सम्बन्धनीयम् । तेनायमर्थो[3] भवति—पूर्वं सङ्केतकाले शब्दान्तरस्यार्थवतोऽश्रुतेः कारणदेशादिभेदभिन्नानां व्यवहर्तॄणां भवन्मतेन नैकोऽपि शब्द कृत्रिमसम्बन्धः सिध्येत् । तस्मादकृत्रिमसम्बन्धोऽभ्युपगन्तव्य इति ॥ २२४६ ॥

साम्प्रतं सम्बन्धकथनान्यथानुपपत्त्या नित्य एव शब्द इति दर्शयन् सम्बन्धकरणे यो दोषः [redacted] एव तत्कथनेऽपीत्यादिशति—सम्बन्धकथनेऽपीत्यादि । कथम् ? इत्यपेक्षायां प्राह[3]—नष्टेत्यादि । नष्टः = अतीतः, असन् = अनागतः, तयोरसत्त्वादेव न सम्बन्धाख्यानसम्भवः । वर्त्तमानोऽप्युच्चार्यमाणस्तस्य समनन्तरध्वंसित्वेन कुतस्तावान् कालः ॥ २२४६-२२४७ ॥

एतदेव दर्शयति—अर्थवानित्यादि । न हि वक्ता पूर्वश्रुतं शब्दं श्रोतुः कथयितुं शक्तः; तस्य पूर्वनिरुद्धत्वात् । यमपि प्रतिपादयति न तमर्थवन्तं शक्नुयात् प्रतिपादयितुम्; तस्य पूर्वमकृतसम्बन्धत्वात् । एतावत् सम्भाव्यते — सदृशं ब्रूयादिति ! तदपि न सम्भवतीत्याह—नार्थवत्सदृश इत्यादि । न ह्यत्र केनचित्

---

१. अर्थवान्क'''पा० । २. पा०, गा० पुस्तकयोर्नास्ति ।
३-३. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति ।

अर्थवद्ग्रहणाभावान्न चासावर्थवान् स्वयम् ।
वक्तुः श्रोतृत्ववेलायामेतदेव प्रसज्यते ॥ २२५० ॥
तस्माच्छब्दार्थसम्बन्धो नित्य एवाभ्युपेयताम् ।

परस्य प्रत्यवस्थानपूर्वकं निरसनम्

न तु सामयिको युक्तः सर्वथा तदसम्भवात् ॥ २२५१ ॥
स्वतो नैवास्ति शक्तत्वं वाच्यवाचकयोर्मिथः ।
प्रतीतिः समयात् पुंसां स्यादक्षिनिकोचवत् ॥ २२५२ ॥
समयः प्रतिमर्त्यं वा प्रत्युच्चारणमेव वा ।
क्रियते जगदादौ वा सकृदेकेन केनचित् ॥ २२५३ ॥

साहचर्यमिष्टम्, किं तर्हि [1] अर्थवता, तच्चानुपपन्नम् । यदि हि श्रोता कश्चिच्छब्दोऽर्थेनानुपलब्धः स्यात्, तदाऽनेन साहचर्यमुपपद्येत, यावता पूर्वसङ्केतकालेऽर्थवतो ग्रहणाभावात् युक्तमेतत् । कथ्यमानो य सोऽर्थवांस्तर्हि भविष्यति' इत्याह—न चासावित्यादि । न चासावुच्चार्यमाणोऽर्थवान्, तस्य पूर्वमहणसम्बन्धत्वादित्युक्तम् । वक्तुरित्यादिना यदा वक्तापि पर्यायेण श्रोता भवति, तदा तस्याप्येतदेव सर्वं दोषजालम्—'न तावदर्थवन्त स ब्रवीति' इत्यादिक्रमापन्नतीति दर्शयति । तदनेन सर्वेषामेव वक्तॄणां न कश्चिदर्थवान् शब्दः सम्भवतीत्युक्तं भवति ॥ २२४८-२२५० ॥

[ G 622 ] तस्मादित्युपसंहरति ॥ २२५१ ॥

स्वत इत्यादिना परस्य च [1] पूर्वपक्षमाशङ्कते । वाच्यवाचकयोः परस्परं नैव स्वाभाविकी यथात्र वाच्यवाचकशक्तिः । कथं तर्हि प्रतीतिः शब्दादुदेति ? इत्याह—प्रतीतिः समयादित्यादि । यस्य यत्र सङ्केतपक्षः कारणभावो न स तस्य स्वाभाविकः, यथा—अक्षिनिकोचस्य प्रतिपत्तौ । सङ्केतापक्षश्च प्रतिपत्तौ कारणभावः शब्दस्येति व्यापकविरुद्धोपलब्धिः । अनेन चानियन्त्र्यमतिज्ञाबाधा विस्तरेणोक्ता निरस्यति ॥ २२५२ ॥

समय इत्यादिना प्रतिविधत्ते । इयमस्य सज्ञेति समयः, सा प्रतिवक्त्रर्थं

१ पा० गा० पुस्तकयोर्ना ।

प्रत्येकं वापि सम्बन्धो भिद्येतैकोऽथ वा भवेत् ।
एकत्वे कृतको न स्याद् भिन्नश्चेद् भेदधीर्भवेत् ॥ २२५४ ॥
वक्तृश्रोतृधियोर्भेदाद् व्यवहारश्च दुष्यति ।
वक्तुरन्यो हि सम्बन्धो बुद्धौ श्रोतुस्तथाऽपरः ॥ २२५५ ॥
श्रोतुः कर्तुं च सम्बन्धं वक्ता कं प्रतिपद्यताम् ।
पूर्वं दृष्टो हि यस्तेन तं श्रोतुर्न करोत्यसौ ॥ २२५६ ॥
यं करोति नवं सोऽपि न दृष्टप्रतिपादकः ।

---

प्रतिपुरुषं वा क्रियेत, प्रतिपुरुषमेव प्रत्युच्चारणम्, प्रतिप्रयोगं वा । अथ वा—जगदादौ = जगतः सृष्टिकाले, केनचित् = ईश्वरादिना धात्रा, सकृत् = एकदैव[1] इष्यते, क्रियेतेति त्रयो विकल्पाः । प्रत्येकं वापीति । सम्बन्धोऽपि शब्दार्थयोः क्रियमाणः कदाचित् प्रतिसत्त्वं भिद्येत, यद्वैक एवेति 'द्वयी कल्पना'[1] । एकत्वपक्षे व्यतिरहितदेशकालभेदानुयायित्वात् कृतको न स्यात् । नित्य एव स्यादिति यावत् । अथ प्रतिसत्त्वं भिन्नस्वभावः, तदा प्रतिसत्त्वं भेदबुद्धिः प्राप्नोति; ज्ञेयभेदनिबन्धनत्वाज्ज्ञानभेदस्य । न च गवादिशब्दानां शतकृत्वोऽपि प्रयोगे व्यवहर्तॄणां भेदबुद्धिर्भवति; अभेदाध्यवसायेनैव व्यवहारात् ॥ २२५३-२२५४ ॥

किञ्च—यदि प्रतिसत्त्वं भिन्नः सम्बन्धः, तदाऽवश्यं भेदधिया भाव्यम्, ततश्च व्यवहारोच्छेदः प्राप्नोतीति दर्शयन्नाह—वक्तृश्रोतृधियोरिति । [G. 623] भेदादिति । विषयस्येत्यध्याहार्यम्[2] । तेनायमर्थो भवति—वक्तृश्रोतृधियोर्योऽर्थो विषयः, तस्य भेदादेकार्थाध्यवसायेन व्यवहारो न स्यात् । कथम् ? इत्याह—वक्तुरन्यो हीति ॥ २२५५ ॥

यदुक्तम्—"समयः प्रतिमर्त्यं वा" ( तत्त्व० २२५३ ) इति । अत्र दूषणमाह—श्रोतुः कर्तुं चेत्यादि विस्तरः[3] । तं श्रोतुर्न करोतीति तस्य नष्टत्वात् । न दृष्टप्रतिपादक इति तस्य पूर्वमदृष्टत्वात् ।

---

१–१. द्वितीयकल्पना—पा०, गा० ।
२. ०यस्येत्यध्याहार्यम्—गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।

घटादावपि तुल्यं चेन्न सामान्यप्रसिद्धितः ॥ २२५७ ॥
यद्यपि ज्ञातसामर्थ्या व्यक्तिः कर्तुं न शक्यते ।
क्रियते या न तस्याश्च शक्तिः कार्येऽवधारिता ॥ २२५८ ॥
तथाऽप्याकृतितः सिद्धा शक्तिरुच्चारणादिषु ।
तस्या न चादिमत्ताऽस्ति सम्बन्धस्त्वादिमांस्तव[1] ॥ २२५९ ॥
यदि तस्यापि सामान्यं नित्यमभ्युपगम्यते ।
तथाऽप्यसम्मतं सिद्धं न तु द्व्याकारसम्भवः ॥ २२६० ॥

---

घटादावपीति । अतिप्रसङ्गोद्भावनया दूषणस्यानैकान्तिकत्वमाशङ्कते । घटादावपि तुल्य प्रसङ्ग, तथा हि—यो घटोऽर्थक्रियासमर्थो दृष्ट, नासौ, कर्तुं शक्य; तस्य निष्पन्नविनष्टत्वात् । यश्चाधुना क्रियते नासावर्थक्रियासमर्थो दृष्ट, तस्यानिष्पन्नत्वात्? उत्तरमाह—न सामान्यप्रसिद्धित इति । नेति पूर्वपक्षप्रतिक्षेप । कुत ? सामान्यस्य प्रसाधितत्वात् । तद्द्वारेण सामर्थ्यसिद्धेरिति भाव ।

एतदेव स्पष्टयन्नाह—यद्यपीत्यादि । यद्यप्युदकाहरणादिषु दृष्टसामर्थ्या घटव्यक्ति कर्तुं न [G 624] पार्यते, निष्पन्नविनष्टत्वात्, याऽप्यधुनातनी, न तस्या अर्थक्रियासामर्थ्यमवधारितम्, तथाप्याकृतिद्वारेणैवार्थक्रियासामर्थ्यं सर्वस्या व्यक्तौ सिद्ध्यति । कथमित्याह—तस्या इत्यादि । तस्या इति आकृते । क्वचित्—न च तस्यादिमत्तेति पाठ । तस्यायमर्थ—न च तस्योदकाहरणादिसामर्थ्यस्यादिमत्ताऽस्ति, आकृतेर्नित्यत्वात् । तस्याश्चाश्रयतोऽत्यन्तमभिन्नत्वात् । यथोक्तम्—"स्थित नैव च जात्यादे परत्व व्यक्तितो हि न" (      ) इति । सम्बन्धोऽपि तर्ह्याकृतिद्वारेणानादिर्भविष्यतीति चेत् ? तदेतदयुक्तमित्याह—सम्बन्धस्त्वित्यादि । किञ्च—यदि भवता तस्यापि शब्दार्थसम्बन्धस्य नित्यं सामान्यमभ्युपगम्यते, तथापि नित्यं नाम वस्त्वस्तीत्यसम्मत सिद्धम् । शब्दस्तु प्रकृत एव न सिद्ध्यतीति चेत्? आह—न तु द्व्याकारसम्भव इति । द्व्याकारौ—सम्बन्ध, तत्सामान्य च । एकस्यैवाकारस्य सम्भव, न तु सामान्यस्य, तस्यानेकव्यक्तिनिष्ठत्वात्, सम्बन्धस्य चैकत्वात् ।

---

१. ०स्तव —पा०, गा० ।    २. तत्—पा०, गा० ।

शक्तिरेव हि सम्बन्धो भेदश्चास्या न दृश्यते ।
सा हि कार्यानुमेयत्वात् तद्भेदमनुवर्तते ॥ २२६१ ॥
अन्यथानुपपत्त्या च शक्तिसद्भावकल्पनम् ।
न चैकयैव सिद्धेऽर्थे बह्वीनां कल्पनेष्यते ॥ २२६२ ॥
सम्बन्धाख्यानकाले च गोशब्दादावुदीरिते ।
केचित् सम्बन्धबुद्धयाऽर्थं बुद्धचन्ते नापरे तथा ॥ २२६३ ॥

कथमेकत्वं सम्बन्धस्य ? इत्याह—शक्तिरेव हीत्यादि । न हि शक्तिव्यतिरिक्तः सम्बन्धोऽस्ति । यदि नामैवम्, ततः किम् ? इत्याह—भेदश्चेत्यादि । भेदः = नैकत्वम् । किमिति न दृश्यत इत्यत्र कारणमाह—सा हीति । सा हि नित्यं कार्यानुमेया । यथोक्तम्—"शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः" ( श्लो० वा०, चो० सू० २०० ) इति । ततोऽसौ कार्यभेदमनुवर्तते = अनुधावति, आत्मगतभेदप्रत्यायने । कार्यभेददर्शनं विना न शक्य. शक्तिभेदो ज्ञातुमिति यावत् । न चात्र कार्यभेदोऽस्ति । तथा हि—कार्यं तस्याः प्रतीतिरेव, सा च शब्दालम्बना वा स्यात्, अर्थालम्बना वा । न तावच्छब्दाया भेदः; शब्दस्य नित्यं प्रत्यभिज्ञायमानत्वात् । नाप्यर्थालम्बनायाः; न हि शतकृत्वोऽप्युच्चार्यमाणे[1] गोशब्दादेरन्यादृशी प्रतीतिरुपजायते ।

उपचयमाह—अन्यथेत्यादि । अर्थप्रतीत्यनुपपत्त्या हि वाच्यवाचकशक्तिः कल्प्यते । एकयैव च शक्त्या विवक्षितार्थस्य सिद्धत्वादपार्थकमनेकशक्तिपरिकल्पनम् । न चान्यथानुपपत्त्या शक्तिभेदोऽनुमातु शक्यः; शक्तिमात्र एव तस्याः सामर्थ्यात् ॥ २२५६–२२६२ ॥

इतश्च सम्बन्धस्य करणमयुक्तमतो नित्य एव सम्बन्ध इति प्रतिपादयन्नाह—सम्बन्धाख्यानेत्यादि । [ G 625 ] तथा हि—'एष गौः पदं न स्मष्टव्यः' इत्युक्ते केचित् पुरुषा वाच्यवाचकसम्बन्धमवधार्य सम्बन्धपुरःसरमेवार्थमवबुध्यन्ते । अन्ये त्वज्ञातसम्बन्धाः स्वरूपमेवावयन्ति, नार्थम् । तत्र यदि वस्तुभूतः सम्बन्धो

१. ०ऽप्युच्चार्यमाणो—पा० ।

तत्र सम्बन्धनास्तित्वे सर्वोऽर्थं नावधारयेत् ।
अस्तित्वे सर्वबोधश्चेन्न कैश्चिदनुपग्रहात् ॥ २२६४ ॥
ज्ञापकत्वाद्धि सम्बन्धः स्वात्मज्ञानमपेक्षते ।
तेनासौ विद्यमानोऽपि नागृहीतः प्रकाशकः ॥ २२६५ ॥
विद्यमानस्य चार्थस्य दृष्टं न ग्रहणं क्वचित् ।
न त्वत्यन्तासतोऽस्तित्वं कश्चित् प्रत्युपपद्यते ॥ २२६६ ॥
विरुद्धौ सदसद्भावौ न स्यातामेकवस्तुनि ।
तत्र[1] तुल्यं विरोधित्वं ज्ञानाज्ञानत्वयोरपि[2] ॥ २२६७ ॥
ज्ञानं हि पुरुषाधारं तद्भेदान्न विरुध्यते ।
पुरुषान्तरसंस्थं च न[3] ज्ञानं[3] तेन वार्यते ॥ २२६८ ॥

---

न स्यात्, तदा सर्व एव पुरुषो व्युत्पन्नव्यवहारो नार्थमवधारयेत् । यथैकस्य सदसत्त्वे परस्परविरुद्धे युक्ते । तस्मान्नित्यावस्थित एव सम्बन्ध इति । ननु यदि नित्यावस्थितः सम्बन्धः, किमिति सर्वदा सर्वेषामर्थप्रतिपत्तिर्न भवेत् ? इत्येतच्चोद्यमाशङ्क्य विस्तरेण परिहरन्नाह—अस्तित्व इत्यादि । नेति प्रसङ्गं निवर्तयति । कुतः ? कैश्चित् तस्याग्रहणात् ॥ २२६३ २२६४ ॥

यदि नाम न गृहीतः, तथापि किमिति स्वकार्यं न जनयेत्, न हि सलिलादयन्तर्गतत्वादात्मकार्यं बीजादयो विजहति ? इत्याह—ज्ञापकत्वाद्धीत्यादि । अन्यो हि ज्ञापकधर्मः, अन्यश्चोत्पादकस्य, शब्दस्तु धूमवदर्थस्य ज्ञापकः, न तु बीजादिवदुत्पादक इत्यदोषः ॥ २२६५ ॥

ननु चैकस्य यथा[4] सदसत्त्वे परस्परविरुद्धत्वादयुक्ते, तथा ग्रहणाग्रहणे अपि । अथानयोरविरोधः, क इदानीं प्रद्वेषः सदसत्त्वयोः ? इत्याह—विद्यमानस्येत्यादि । एकत्र हि धर्मिणि परस्परविरुद्धधर्माध्यासो विरुद्धः, न तु धर्म्यन्तरे । ग्रहणाग्रहणे च पुरुषभेदेन भिन्नधर्म्याधारत्वादविरुद्धे, न तु सदसत्त्वे, तयोरेकधर्म्याधारत्वेनेष्टत्वादिति समासार्थः ॥ २२६६–२२६८ ॥

---

१. न च—पा०, गा० । २. ज्ञानाज्ञानत्व०—पा०, गा० ।
३-३. नाज्ञानं—गा० । ४. पा, गा० पुस्तकयोर्नास्ति ।

अन्धानन्धसमीपस्थः शुक्लोऽन्धैर्नावगम्यते ।
गम्यते चेतरैस्तस्य सदसत्त्वे न तान् प्रति ॥ २२६९ ॥
शक्त्यशक्त्योर्नराणां तु भेदात् तत्राविरोधिता ।
न ह्यन्यो दर्शनस्यास्ति सम्बन्धाद्धेतुरत्र हि ॥ २२७० ॥
एवमेवेन्द्रियैस्तुल्यं व्यवहारोपलम्भनम् ।
येषां स्यान्नैव भोत्स्यन्ते[1] ततोऽयं नेतरेऽन्धवत् ॥ २२७१ ॥

---

ननु च ग्रहणाग्रहणपक्षेऽपि सामर्थ्यादिकाधिकरणे सदसत्त्वे परस्परविरुद्धे तत्रापि[2] [ G. 626 ] समापतत एव । तथा हि— पदार्थसदसत्त्वाभ्यां ग्रहणाग्रहणे व्याप्ते; तन्निबन्धनत्वात् तयोः, अन्यथा तुल्ययोग्यदेशयोः पुरुषयोरेक एव पश्येन्नापर इत्यत्र कारणं वक्तव्यम् ? इत्याशङ्क्याह—अन्धानन्धेत्यादि । यथा अन्धेतरयोः समीपस्थं रूपमविकलचक्षुष एवोपलभन्ते, नेतरे, न च तान् प्रति तस्य शुक्लरूपस्य सदसत्त्वे स्तः; तद्वत् सम्बन्धेऽपीति ॥ २२६९ ॥

किमत्र कारणमित्यपेक्षानिवृत्त्यर्थमुपपत्तिमाह—शक्त्यशक्त्योरित्यादि । एतदाचष्टे—न ह्यर्थसत्तैवोपलम्भकारणम्, किं तर्हि ? पुरुषगता च शक्तिः । तेन सत्यप्यर्थे कस्यचित् पुरुषस्य शक्त्याभावादग्रहणमविरुद्धमिति नाग्रहणमर्थासत्त्वेन व्याप्तम् । यद्येवम्, असत्यपि सम्बन्धे पुरुषाणां शक्त्यशक्तिभेदाच्छब्दादर्थस्य[3] ग्रहणाग्रहणे भविष्यत इति सर्वं समानम् ? इत्याह—न ह्यन्य इत्यादि । सम्बन्धग्रहणपुरस्सरत्वादर्थप्रत्ययस्येति भावः । अन्य इति हेतुः सम्बद्ध्यते । दर्शनस्येति । शब्दार्थप्रतीतेः । हेतुरित्येतदपेक्षा चेयं षष्ठी । [4]सम्बन्धादित्यस्यान्यापेक्षा पञ्चमी । अत्रेति शब्दार्थव्यवहारे । अन्ये तु—'शक्त्यशक्त्योर्नराणां तु भेदात्तत्राविरोधिता' इत्यत्रैवोपपत्तिरूपेण व्यावर्तयन्तो[5] व्याचक्षते—सम्बन्धादिति । पुरुषशक्तेरित्यर्थः । अत्रेति शुक्ले ॥ २२७० ॥

दार्ष्टान्तिकमुपसंहरन्नाह—एवमेवेत्यादि । व्यवह्रियते अस्मादिति व्यव-

---

१. स्यात्तेऽवबुध्यन्ते—पा०, गा० ।
२. तथापि—पा० ।
३. भेदादर्थस्य—पा०, गा० ।
४. सम्बन्धः स्यादित्य०—जै० ।
५. वर्णयन्तो—पा०, गा० ।

सर्वेषामनभिज्ञानां पूर्वपूर्वप्रसिद्धितः ।
सिद्धः सम्बन्ध इत्येवं सम्बन्धादिर्न विद्यते ॥ २२७२ ॥
प्रत्युच्चारणनिर्वृत्तिर्न युक्ता व्यवहारतः ।
सर्गादौ च क्रिया नास्ति तादृक्कालो हि नेष्यते ॥ २२७३ ॥
दृश्यते हि जगत् सर्वं न कदाचिदनीदृशम् ।
न महाप्रलये नाम जायते पारमार्थिकः ॥ २२७४ ॥
रात्रिर्वा प्रलयो नाम लीनत्वात् सर्वकर्मणाम् ।
दिवसः सृष्टिसंज्ञश्च सर्वचेष्टातिसर्जनात् ॥ २२७५ ॥

द्वारः = शब्दार्थसम्बन्धः । तस्योपलम्भनम् = परिज्ञानम् । तदिन्द्रियैस्तुल्यम् । तथा हि—येषामेवेन्द्रियमस्ति, तेऽर्थमुपलभन्ते; येषां तु नास्ति, ते सत्यप्यर्थे नोपलभन्ते । एवं येषां सम्बन्धपरिज्ञानमस्ति, ते शब्दादर्थमवबुध्यन्ते; येषां तु नास्ति, ते सत्यपि सम्बन्धे नोपलभन्त इति सर्वं समानं किल ॥ २२७१ ॥

योऽयं प्रथमं सम्बन्धस्य कर्ता केन तस्मै सम्बन्धः प्रतिपादित इति वक्तव्यम् ! [ C 627 ] स्वयमेवेति चेत् ? न; तथैवान्येषामपि प्रसङ्गात् । अथान्यतः, तस्याप्यन्यत इति चेत्, एवं तर्ह्यनादित्वान्न केनचित् क्रियत इति दर्शयति—सर्वेषामित्यादि । यः[1] शब्दार्थसम्बन्धः स वृद्धव्यवहारपूर्वकः; सम्बन्धत्वात्, इदानीन्तनसम्बन्धवत् । सम्बन्धश्च विवादास्पदीभूत, सम्बन्ध इति स्वभावहेतुः ॥ २२७२ ॥

एवं तावत् प्रतिमर्त्यं न समयः सम्भवतीति प्रतिपादितम्, अधुना "प्रत्युच्चारणमेव" (तत्त्व० २२५३) इति यदुक्तं तमत्युदरश्चाह—प्रत्युच्चारणेत्यादि । व्यवहारत इति व्यवहारप्रवृत्ते । अन्यथा हि पूर्वमकृतसम्बन्धाद्व्यवहारप्रवृत्तिर्न स्यादिति यावत् । साम्प्रतं "जगदादौ च" इति यदुक्तम्, तस्य प्रतिविधानमाह—सर्गादौ चेति । तादृगिति । शब्दार्थसम्बन्धशून्यः सृष्टिसंहारात्मकः ।

अनीदृशमिति । सर्वोच्छेदात्मकम्; तत्र प्रमाणाभावात् । कथं तर्हि लोके प्रलयादिव्यवहारप्रसिद्धिः ? इत्याह—न महाप्रलय इत्यादि । जायत इति लोकेन । पारमार्थिक इति । सर्वोच्छेदात्मकः परिकल्पितस्तु न वार्यत इत्यभिप्रायः ।

१. बै० पा०, पुस्तकयोर्नास्ति ।

देशोत्सादकुलोत्सादरूपो वा प्रलयो भवेत् ।
प्रलये तु प्रमाणं नः सर्वोच्छेदात्मके न हि ॥ २२७६ ॥
न चाल्पप्रस्मृतिः कश्चिद् सृष्टिसंहारकारकः ।
ईश्वरादिः स्थिरो युक्तो यः सम्बन्धं प्रकल्पयेत् ॥ २२७७ ॥

परस्य प्रत्यवस्थानम्

नन्वानुपूर्व्यनित्यत्वादनित्यो वाचको भवेत् ।
पदं वाचकमिष्टं हि क्रमाधीना च तन्मतिः ॥ २२७८ ॥
वर्णाः सर्वगतत्वाद्वो न स्वतः क्रमवृत्तयः ।
अनित्यध्वनिकार्यत्वात् क्रमस्यातो विनाशिता ॥ २२७९ ॥
पुरुषाधीनता चास्य तद्विवक्षावशाद् भवेत् ।
वर्णानां नित्यता तेन भवतां निष्फला भवेत् ॥ २२८० ॥

---

तमेव दर्शयति—रात्रिरित्यादि । अथ पारमार्थिकः कस्मान्नेष्यते ? इत्याह—प्रलये त्वित्यादि ॥ २२७३-२२७६ ॥

भवतु नाम पारमार्थिकः प्रलयः, तथापि तदानीमप्रहस्मृतिमशादिसंस्कारकस्य कस्यचिदीश्वरादेः कर्तुरभावान्न सम्बन्धकरणं युक्तमिति दर्शयन्नाह—न चाल्पेत्यादि । [G. 628] न युक्त इति । तस्य विस्तरेण प्रतिपिद्धत्वात् ॥ २२७७ ॥

नन्वित्यादिना परस्य प्रत्यवस्थानमाशङ्कते । वर्णानुपूर्वी हि पदमिष्टं न स्फोटः, तस्याश्च पुरुषेच्छाधीनत्वादनित्यत्वम् । अतो वर्णानामप्यनित्यत्वं प्राप्नोति; वर्णेभ्योऽनर्थान्तरत्वादानुपूर्व्याः[1] । कथम् ? इत्याह—पदमित्यादि । तथा हि—वर्णात्मकं पदमेव वाचकमिष्यते, यतो वर्णक्रमकृता पदबुद्धिर्न स्फोटकृता, स च क्रमः पौरुषेयः ॥ २२७८ ॥

एतदेव विवृणोति—वर्णाः सर्वगतत्वाद् इति । वः = युष्माकं मीमांसकानां वर्णानां सर्वगतत्वान्न देशकृतः क्रमः । नापि कालकृतः; नित्यत्वादेषाम्, तस्मादभिव्यञ्जकध्वनिकृतः । तस्य चानित्यत्वात् तत्कृतस्याप्यनित्यत्वमिति भावः ।

---

१. ॰दानुपूर्व्यस्य—चै॰ ।

न च क्रमाद्विना वर्णा निर्ज्ञाताः प्रतिपादकाः ।
क्रमस्यैवं पदत्वं च तस्मादेवं[1] प्रसज्यते ॥ २२८१ ॥
पदं वर्णातिरिक्तं तु येषां स्यात् क्रमवर्जितम् ।
तेषामेवार्थवत्येषा शब्दनित्यत्वकल्पना ॥ २२८२ ॥

तत्परिहारः

न तावदानुपूर्व्यस्य पदत्वं नः प्रसज्यते ।
न हि वस्त्वन्तराधारमेतद् दृष्टं प्रकाशकम् ॥ २२८३ ॥

---

प्रयोगः—यदनित्यकृतं तदनित्यं यथा घटादि । अनित्यकृतश्च वर्णक्रम इति स्वभावहेतुः । यत् पुरुषविवक्षावशाद् भवति, तत्पौरुषेयत्वेन प्रेक्षावता अवगन्तव्यम्, यथा पाणिकम्पाक्षिनिकोचादयः, पुरुषेच्छावशाच्च वर्णानां भवति क्रम इति स्वभावहेतुः ॥ २२७९-२२८० ॥

अथापि स्याद्—विनैव क्रमेण वर्णा एव श्रोत्रपरिच्छिन्ना अर्थप्रत्यायका भविष्यन्तीत्यत आह—न चेत्यादि । न हि क्रमं विना वर्णा एवार्थप्रतिपत्तिहेतवो दृष्टाः, तस्मादेषामवश्यं क्रमोऽभ्युपगन्तव्यः । एवं सति क्रमस्यैव पदत्वं वाचकत्वं भवतां मीमांसकानां प्रसज्यते, न तु [G 629] केवलानां वर्णानाम् । तस्य च क्रमस्यानित्यत्वाद् वाचकस्याप्यनित्यत्वं स्यात्; ततश्च व्यर्था शब्दनित्यत्वकल्पना । तथा हि—वाचकस्य शब्दस्य नित्यत्वं साधयितुमिष्टम्, नान्यस्य; ततश्च यत्केवलवर्णनित्यत्वसाधनं भवताम्, तदवस्तुतानुपयोगि; तस्यावाचकत्वात् । यच्च वाचकं[2] क्रमरूपं न तन्नित्यमभ्युपगतमिति सर्वो विफल एव प्रयासः । येषां पुनर्वैयाकरणानां[3] "वर्णव्यतिरिक्तं स्फोटाख्यमनवयवं पदं वाचकम्" इतीष्टम्, तेषामर्थवत्येषा शब्दनित्यत्वकल्पना, तस्य स्फोटाख्यस्य वस्तुनो नित्यत्वात् ॥ २२८१-२२८२ ॥

अत्र परिहारमाह—न तावदित्यादि । [4]अनुपूर्वं क्रमभावः[4] = आनुपूर्व्यम्, तस्यानुपूर्व्यमात्रस्य नास्माकं वाचकत्वं प्रसज्यते; व्यभिचारित्वादिति भावः । तदेव दर्शयन्नाह—न हीत्यादि । वस्त्वन्तराधारमिति । वर्णाद्याश्रयम् ॥ २२८३ ॥

---

१. न तस्मादेवं—जै० ।  २. वाचकं—पा० ।
३. पुनस्त्वयाकरणाना—पा० ।  ४-४. •वर्णाश्चैवा•—पा०, गा० ।

धर्ममात्रमिदं तेषां न वस्त्वन्तरमिष्यते ।
इत्थं प्रतीयमानाः स्युर्वर्णास्तेनावबोधकाः ॥ २२८४ ॥
न च क्रमस्य कार्यत्वं पूर्वसिद्धपरिग्रहात् ।
वक्ता न हि क्रमं कश्चित् स्वातन्त्र्येण प्रपद्यते ॥ २२८५ ॥
यथैवास्य परैरुक्तस्तथैवैनं विवक्षति ।
परोऽप्येवमतश्चास्य सम्बन्धवदनादिता ॥ २२८६ ॥
तेनेयं व्यवहारात् स्यादकौटस्थ्येऽपि नित्यता ।
यत्नतः[1] प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता ॥ २२८७ ॥

---

नापि वर्णाधारमानुपूर्वमेव केवलं वाचकमिष्टम्, कथम् ? इत्याह—धर्ममात्रमिदमिति । न वस्त्वन्तरमिति । स्वतन्त्रवाचकत्वेनेत्यभिप्रायः । अन्यथा हि पारमार्थिको धर्मधर्मिणोर्भेदः स्यात् । स च नाभीष्टः, किं तर्हि ? वाचकम् इत्याह—इत्थमित्यादि । इत्थम् = विशिष्टेन क्रमेण । एतदुक्तं भवति—न क्रममात्रं वाचकम्, नापि वर्णाधारम्, नापि वर्णमात्रम्, किं तर्हि ? वर्णा [illegible] क्रमोपसृष्टा वाचका इति । तेन न क्रमस्य वाचकत्वं प्रति प्राधान्यम्; तस्य तद्रूपतया प्रतीयमानस्य गुणीभूतत्वात् । किं तर्हि ? वर्णानां तेषां धर्मितया प्रतीतेरिति दर्शितं भवति ॥ २२८४ ॥

यदुक्तम् "अनित्यध्वनिकार्यत्वात्" ( तत्त्व० २२७९ ) इति हेतुद्वयम्, तस्यासिद्धतामाह—न च क्रमस्येत्यादि । [G. 630] पूर्वसिद्धपरिग्रहादिति । व्यवस्थितस्यैव क्रमस्योपादानात् । एतदेव स्पष्टयति—वक्ता न हीत्यादि । सम्बन्धवदेव हि क्रमोऽप्यनादिः ॥ २२८५-२२८६ ॥

तेनेत्यादिनोपसंहरति । न इति कृत्यप्रयोगे कर्तरि षष्ठी[2] कृत्वा प्रत्यादेशो[3] विहितः । तस्मादसत्यपि पर्वतादिवदस्य क्रमस्य कूटस्थत्वे वृद्धव्यवहारादेव नित्यत्वमवसेयम् । तदनेन व्यवहारनित्यता कथिता भवति क्रमस्य, न कूटस्थनित्यता, यथा पर्वतादीनामिति ॥ २२८७ ॥

---

1. यत्नेने—गा० ।   2. षष्ठी ।—गा० ।
3. न सा दोषो ( यत्न मेस्वतन्त्रताप्रतिषेधो )—गा० ।

वर्णानामपि न त्वेवमकौटस्थ्येऽपि सेत्स्यति ।
नित्येषु सत्सु वर्णेषु व्यवहारात् क्रमोदय ॥ २२८८ ॥
घटादिरचना यद्वन्नित्येषु परमाणुषु ।
तदभावे हि निर्मूला रचना नावधार्यते ॥ २२८९ ॥
परेणोक्तान् ब्रवीमीति विवक्षा चेदृशी ध्रुवम् ।
तथा च नित्यतापत्तिर्न चान्यच्चिह्नमस्ति व ॥ २२९० ॥

यद्येवम्, वर्णानामपि क्रमस्यैव व्यवहारनित्यत्व कस्मान्नेष्यते ?, इत्याह—वर्णानामपीति । न हि वर्णाना क्रमवत्कौटस्थ्यनित्यत्वेऽपि व्यवहारनित्यतयाऽर्थप्रतिपत्तिव्यवहार सिद्ध्यति । कथ न सिद्ध्यति ? इत्याह—नित्येष्वित्यादि । यदि हि कूटस्थनित्यतया वर्णा नित्या भवेयु, एव सति पुरुषपरम्परया व्यवहार सम्भवात् क्रमोदय = क्रमस्यात्मलाभो भवेत्, यथा घटादिरचना, परमाणुमूलत्वात् । क्वचित् क्रमादय इति पाठ । तत्रादिशब्देन सम्बन्धप्रत्यभिज्ञानादयो गृह्यन्ते । अथोभयोरपि वर्णपरमाण्वोर्नित्यत्वमन्तरेण कस्माद्रचना न सम्भवति ? इत्याह—तदभाव इत्यादि । तदभाव इति वर्णपरमाण्वोर्द्वयोरपि कूटस्थनित्यभावे[1] । ननु च घटाद्यारम्भका इव परमाणवो वर्णानामपि सूक्ष्मभागा सन्ति, यथाहु —"वर्णानामपि वर्णतुरीया भागा" इति, तत् कथ वर्णाना कूटस्थनित्यता वर्ण्यते ? नैष[2] दोष, स्फोटदूषणेन प्रतिपादितमेतत्, यथा—"न वर्णभागा सन्ति" ( ) इति ॥ २२८८ २२८९ ॥

किञ्च—यदि कूटस्थनित्यतया वर्णा नित्या न भवेयु, तदा सर्वेषा प्रयोक्तॄणा 'परमुक्तानेव शब्दानहं ब्रवीमि' इत्येषा विवक्षा न स्यात्, अथ च भवति, तस्मात् सा वर्णनित्यत्वमन्तरेण न युक्तेति दर्शयन्नाह—परेणोक्तानित्यादि । [ C 631 ] ननु च यदि गकारादिक्रम परमार्थतो न नित्य, नापि व्यञ्जका ध्वनय, नापि तेषा प्रेरकास्ताल्वादिसंयोगनिष्पन्ना नित्या[3], तत्कथमेते व्यवहर्तुमिष्यन्ते दर्शयितु शक्या, कालान्तरत्वात्, न चानुपदर्शितैरेभि शब्दार्थव्यवहारप्रतिनियत क्रमवद् कर्तुम्[3],

१ •नित्यभावाभावे—गा• । २ से नैष—जे• ।
३–३ पाटोऽय पा•, गा• पुस्तकयोनास्ति ।

जात्या यथा घटादीनां व्यवहारोपलक्षणम् ।
तथैव चानुपूर्व्यादेर्जातिद्वारेण सेत्स्यति ॥ २२९१ ॥
ताल्वादिजातयस्तावत् सर्वपुंसु व्यवस्थिताः ।
वक्ता तांश्च ध्वनींस्ताभिरुपलक्ष्य निरस्यति ॥ २२९२ ॥
तेषां च जातयो भिन्नाः शब्दाभिव्यक्तिहेतवः ।
यावद्वर्णं प्रवर्तन्ते व्यक्तयो वा तदन्विताः ॥ २२९३ ॥

---

अतिप्रसङ्गात्[1] । ततश्च सम्बन्धस्य कृतकत्वे यो दोषः उक्तः सर्वोऽसावभिव्यक्तिपक्षेऽपि समानः । तथा हि—ये ध्वनयो वर्णानामभिव्यञ्जका दृष्टाः, तांस्तावद्वक्ता न प्रेरयितुमीशः; तेषां नष्टत्वात् । यांश्च निरस्यति न तेऽभिव्यञ्जका दृष्टाः । तथा ये ताल्वादिसंयोगविभागा[1] ध्वनीनां प्रेरकाः, तांश्च शक्नोति कर्तुम्, यांश्चाभिनवान् करोति न ते दृष्टा प्रेरकाः, ततश्च कथं वर्णाः क्रमेणाभिव्यक्ता अर्थमेवप्रतीतिहेतवो भवन्ति ?—इति सर्वमेतदाशङ्क्य परिहरन्नाह—जात्या यथेत्यादि । यथा घटादेः सत्यप्यनित्यत्वे जात्याश्रयेण व्यवहारः सिद्धयति, तथा आनुपूर्व्यादेरनित्यत्वेऽपि सेत्स्यति ॥ २२९१ ॥

व्यवहारोपलक्षणं कथम् ? इत्याह—ताल्वादिजातय इत्यादि । तथा हि—ताल्वादिस्थानजातयः सर्वपुरुषसमवायिताल्वादिसमवायात् सर्वपुरुषेषु व्यवस्थिताः । प्रयोक्ता च ताभिरेव ताल्वादिजातिभिस्ताल्वादीनुपलक्ष्य = अवधार्य पश्चाद् ध्वनीन् = व्यञ्जकान् वायून्निरस्यति = प्रेरयति 'नागृहीतविशेषणा विशेष्ये बुद्धि' इति न्यायात् तेषां ध्वनीनां यद्यप्यनित्यत्वम्, तथापि गवाश्वादिजातिवद् यावद्वर्णं यावन्तो वर्णास्तावत्यो जातयः सन्ति, ता एव व्यक्तिसहायिन्यः शब्दाभिव्यक्तिहेतवो भवन्ति । यद्वा—ध्वनिव्यक्तय एव जातिसहायिन्यो वर्णानुरूपेण व्यञ्जनाय प्रवर्तन्त इति पक्षान्तरम् ॥ २२९२-२२९३ ॥

ननु च यद्यपि ध्वनीनां जातयो भिन्नाः सन्ति, तथापि ते ध्वनयो जात्युपलक्षिता अपि न क्रममन्तरेण वर्णाभिव्यक्तिक्रमं सम्पादयितुमलम् । तथा हि—

---

1—1 पाठोऽयं पा॰ गा॰ पुस्तकयोर्नास्ति ।

तत्र ताल्वादिसंयोगविभागक्रमपूर्वकम् ।
ध्वनीनामानुपूर्व्यं स्यात्तज्जात्या चोभयनित्यता ॥ २२९४ ॥
यथैव भ्रमणादीनां भागजात्यादिलक्षिताः[1] ।
क्रमानुवृत्तिरेवं स्यात् ताल्वादिध्वनिवर्णभाक् ॥ २२९५ ॥

---

तेषां जातिभेदेन भिन्नानामपि न स्वतः क्रमोऽस्ति; निरवयवत्वात् । तत् कथं व्यञ्जकक्रमकृतो वर्णानां क्रमावसायः ? इत्याशङ्क्याह—तत्रेत्यादि । [G 632] यद्यपि ध्वनीनामानुपूर्व्यं न भवेत्[2], तथापि तेषां ताल्वादिसंयोगविभागा एवानुपूर्व्यं सम्पादयन्ति । उभयस्य च ताल्वादिसंयोगादिक्रमस्य, ध्वनिक्रमस्य च स्वाश्रयसमवेतजातिद्वारेण नित्यतेति सर्वमनवद्यम् ॥ २२९४ ॥

कथं पुनर्जात्या क्रमस्यानित्यस्यापि सतो नित्यत्वं कल्पयितुं शक्यम्, येन तयोपलक्षितो व्यवहाराङ्गतां यास्यति ? इत्याह—यथैवेत्यादि । यथा भ्रमणरेचनादीनां क्रियाविशेषाणाम्[3], आदिशब्दात् पिपीलिकादीनां च ग्रहणम्, तेषां क्रमानुवृत्तिर्यथा भागजात्यादिना[4] लक्षिता व्यवहाराङ्गम्, अत्राप्यादिशब्देन पिपीलिकादिजातिपरिग्रहः; तथा ताल्वादिध्वनिवर्णभाक् क्रमानुवृत्तिस्ताल्वादिजातिभिर्लक्षिता व्यवहाराय सम्पद्यत इति सम्बन्धः । ताल्वादिध्वनिवर्णभागिति । ताल्वादयश्च ध्वनयश्च वर्णाश्चेति विगृह्य समासः, तान् भजत इति तथोक्ता । अनेन ताल्वादिसंयोगादिक्रमः स्वजात्युपलक्षितो ध्वनिनिरासहेतुः । ध्वनिक्रमोऽपि ताल्वादिसंयोगविभागपूर्वकः स्वजात्युपलक्षितो वर्णाभिव्यक्तिक्रमो निबन्धनम्, सोऽप्यर्थप्रतीतेरित्युक्तं भवति ।

क्वचिद् भागा इति पाठः । तत्रैवं सम्बन्धः—यथा भ्रमणादीनां कर्मणां भागा अंशाः क्रमवन्तो जात्या तदन्येन वा केनचिद् धर्मेणोपलक्षिता व्यवहारहेतवो भवन्ति, तथा ताल्वादिभाक् क्रमानुवृत्तिर्व्यवहाराङ्गमिति ।

केचित्—क्रमानुस्मृतिरेवं स्यादिति पठन्ति । तत्रैवं योजना—यथा

---

१. भागा°—पा°, गा° । २. भवतः—जै° ।
३. कृत्यादिक्रिया°—जै° ।
४. भागाजात्यादिना—पा°; भागजात्यादिना—गा° ।

व्यक्तीनामेव वा सौक्ष्म्याज्जातिधर्मावधारणम् ।
तद्वशेन च वर्णानां व्यापित्वेऽपि क्रमग्रहः ॥ २२९६ ॥
एवं ध्वनिगुणान् सर्वान् नित्यत्वेन व्यवस्थितान् ।
वर्णा अनुपतन्तः स्युरर्थभेदावबोधिनः ॥ २२९७ ॥
आनुपूर्वी च वर्णानां ह्रस्वदीर्घप्लुताश्च ये ।
कालस्य प्रविभागास्ते ज्ञायन्ते ध्वन्युपाधयः ॥ २२९८ ॥

---

रेचनादीनां[1] भागा ताल्वादिलक्षिताः स्मर्यन्ते, एवं ताल्वादिध्वनिवर्णभाक् ताल्वादिजास्वुपलक्षिता क्रमानुस्मृतिर्भविष्यति ॥ २२९५ ॥

अथ वा—न ध्वनीनां ताल्वादिसंयोगविभागक्रमकृतमानुपूर्व्यम्, अपि तु स्वत एव; सावयवत्वादिति दर्शयन्नाह—"व्यक्तीनामित्यादि । व्यक्तीनामिति[2] ध्वनीनाम् । तेषां हि ये भागा आरम्भकाः क्रमवन्तः, ते सूक्ष्मा न तैर्व्यवहार-सिद्धिः । अतस्तेषु जातिस्वभावा धर्मा नित्यत्वादयः प्रतिनियतशब्दाभिव्यक्ति-हेतवो निरूप्यन्ते । निश्चीयन्त इति यावत् । ततः किं सिद्धं स्यात् ? इत्याह—तद्वशेनेत्यादि । सत्यपि हि व्यापित्वे वर्णाः क्रमवद् ध्वनिवशात् क्रमवन्त इव भासन्ते ॥ २२९६ ॥

[ G. 633 ] एवमित्यादिना प्रकृतमुपसंहरति । ध्वनिगुणाः = क्रमतीव्रत्व-मन्दत्वप्रदेशवृत्तित्वादयः[4] । नित्यत्वेन व्यवस्थितानिति । जातिद्वारेण । अनुपतन्तः = अनुवर्त्तमानाः ॥ २२९७ ॥

एवं यदि नाम नित्यत्वसर्वगतत्वाभ्यां वर्णानां स्वतःक्रमादयो न सम्भवन्ति, तथापि व्यञ्जकध्वनिगता एते वर्णेष्वर्थप्रतिपत्त्यङ्गमिति विस्तरेण प्रतिपादितम् । साम्प्रतम् "यद्वा कालगता एवैते ध्वन्युपाधिकाः प्रविभागा वर्णेषु गृह्यमाणाः प्रतिपत्त्यङ्गम्" इति पक्षान्तरं दर्शयन्नाह—आनुपूर्वीत्यादि । ध्वनयः = व्यञ्जका वायवः, उपाधयः = विशेषणभूता येषां कालप्रविभागानां[5] ते तथोक्ताः ॥२२९८॥

---

१. क्रमवरेचनादीनां—गा० । २. ध्वनीनामिति—पा०, गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति । ४. ०तीव्रमन्दत्व०—जै०, पा० ।
५. कालविभागानां—पा०, गा० ।

कालश्चैको विभुर्नित्यः प्रविभक्तोऽपि गम्यते ।
वर्णवत् सर्वभावेषु व्यज्यते केनचित् क्वचित् ॥ २२९९ ॥
वर्णेषु व्यज्यमानेषु[1] तस्य प्रत्यायनाङ्गता ।
अन्यत्रापि तु सद्भावात् तत्स्वरूपस्य नित्यता ॥ २३०० ॥
तस्मान्न पदधर्मोऽपि विनाशो कश्चिदीदृशः ।
तेन नित्यं पदं सिद्धं वर्णनित्यत्ववादिनाम् ॥ २३०१ ॥
परधर्मोऽपि चाङ्गत्वमुक्तमश्वजवादिवत् ।

ननु च काल एको व्यापी नित्यश्चेतीष्ट कालवादिनाम् । यथोक्तम्—

"व्यापारव्यतिरेकेण परिमाणक्रियावताम् ।
नित्यमेकं विभु द्रव्यं कालमेके प्रचक्षते ॥" (       ) इति,

तत्कथं तस्य प्रविभागो युज्यते ? इत्याह— कालश्चैक इत्यादि । प्रविभक्तोऽपीत्यपिशब्द एकोऽपि नित्योऽपि विभुरपि[2] इत्यत्र[2] सम्बन्धनीयः; भिन्नक्रमत्वात् । कथं प्रविभक्त ? इत्याह— वर्णवत् सर्वभावेष्विति । एतदुक्तं भवति— यथैकोऽपि नित्यो गकारादिवर्णो यदा केनचिद् ध्वनिविशेषेण क्वचित् प्रदेशे वा व्यज्यते, तदा देशादिविभागेन प्रविभक्तो गम्यते, तथा कालोऽपि । यद्यपि चासौ सर्वपदार्थव्यापी, तथापि यदा केनचित् क्रियाविशेषेण क्वचित् पदार्थे व्यज्यते, तदा प्रविभक्तो गृह्यते; यदा तु वर्णेषु व्यज्यते, तदाऽर्थप्रत्ययाङ्गं भवति । यदि तर्हि प्रविभक्त, नित्यविभुत्वं कथं तस्यावगतम् ? इत्याह—अन्यत्रापीत्यादि । अन्यत्रापि त्वाकिसत्वादौ [ C 63 ] सद्भावात् सत्वात् तस्य नित्यत्वं विभुत्वं च सिद्धम् । नित्यताग्रहणमुपलक्षणम् ॥ २२९९ २३०० ॥

तस्मादित्यादिना स्वपक्षसिद्धेरुपसंहारः । कश्चिदीदृश इति क्रमादिरूपः ॥ २३०१ ॥

यदि तर्हि कालधर्मो व्यञ्जकध्वनिधर्मो वा क्रमः, न तु परमार्थतो वर्णधर्मः, तत् कथमस्य प्रत्यायनाङ्गत्वम्, न ह्यन्यधर्मोऽन्यस्य भवति ? इत्याह परधर्मोऽपी-त्यादि । उक्तमिति । "वचस्तदाश्च गच्छन्त" (तत्त्व० २१५०) इत्यादिना । नाना-

1. व्यज्यमानस्य—पा०, गा० । 2-2. विभुरपीति—पा० गा० ।

नित्यतायां च सर्वेषामर्थापत्तिप्रमाणता ॥ २३०२ ॥

शब्दानित्यत्वे बौद्धैः कृतस्य प्रयोगस्य दूषणम्

स्ववाक्यादिविधश्च शब्दानित्यत्वसाधने ।
प्रतिज्ञोच्चार्यते सर्वा साध्यार्थप्रतिपत्तये ॥ २३०३ ॥
न चानित्या ब्रवीत्येषा स्वार्थमित्युपपादितम् ।
तेनार्थप्रत्ययापन्नात् नित्यत्वान्नाशबाधनम् ॥ २३०४ ॥
अर्थाभिधानसामर्थ्यमभ्युपेत्य च साधयन् ।
पूर्वाभ्युपगतेनापि नाशित्वं बाधते नरः ॥ २३०५ ॥

रूढवचनं हि सकलव्यानारूढोपलक्षणम् । अश्वजवादिवदिति । यथा अश्वादिगतो जवस्तदारूढानां पुंसां देशान्तरप्राप्तेर्वृक्षादेश्च गमनप्रतिपत्तेरङ्गं भवति, तथा ध्वनिगतोऽपि क्रमो वर्णस्यार्थप्रत्यायनाङ्गमिति । एवं विस्तरेण शब्दानित्यत्वप्रतिज्ञाया अर्थापत्तिप्रमाणबाधितत्वं समर्थ्य, उपसंहरन्नाह—नित्यतायामित्यादि । तस्मादित्युपसंहारोऽत्र द्रष्टव्य. । सर्वेषामिति । न केवलं वर्णस्यार्थप्रतीत्यन्यथानुपपत्त्या नित्यत्वं सिद्धम्, किं तर्हि ? ताल्वादीनां ध्वनीनां च । यथोक्तं भाष्ये—"उच्चरितमात्रे हि[1] नष्टे[1] शब्दे न चान्योऽन्यानर्थं प्रत्याययितुं शक्नुयात्, अतो न परार्थमुच्चार्येत । अथ न विनष्ट., ततो बहुश उपलब्धत्वादर्थोऽवगम्यते[2] इति युक्तम्" ( मी० द० शा० भा० १.१.१७ ) इति ॥ २३०२ ॥

स्ववचनाभ्युपेतागमप्रतीतिबाधामपि प्रतिज्ञायाः प्रतिपादयन्नाह—स्ववाक्यादीत्यादि[3] । आदिशब्देनाभ्युपेतादिविरोधग्रहणम् । उपपादितमिति । "न चाद्दष्टार्थसम्बन्धः शब्दो भवति वाचकः" ( तत्व० २२३३ ) इत्यादिना । तेनार्थप्रत्ययापन्नादिति । अर्थप्रत्ययात् = अर्थप्रतीतेः, आपन्नम् = सिद्धम्, अर्थप्रत्ययापन्नम् । अर्थप्रतीत्यन्यथानुपपत्तिसिद्धात् नित्यत्वादिति यावत् ॥ २३०३-२३०४ ॥

[ G 635 ] अभ्युपेतबाधामाह—"अर्थाभिधानसामर्थ्यमित्यादि[4] । साध-

१-१ विनष्टे—पा०, गा० ।
२. उपलब्धत्वादर्थागम—पा०, गा० ।
३. ॰विस्तर—जै० ।
४. अर्थाभिधाने—पा०, गा० ।

अर्थप्रतीतिसामर्थ्यैः प्रतिज्ञाऽत्रमुपाश्रिता. ।
आगमेनापि नास्तित्वं बाध्यते सर्ववादिनाम् ॥ २३०६ ॥
सर्वलोकप्रसिद्धया च बाध. पूर्वोक्तया दिशा ।
अनुमानविरोधोऽपि प्रागुक्तेनैव हेतुना ॥ २३०७ ॥
श्रोत्रजप्रत्यभिज्ञानाच्छब्दाभेदावसायत.[1] ।
प्रत्यक्षेण विरुद्धत्वं प्रागेव प्रतिपादितम् ॥ २३०८ ॥

---

यन्ति[1] साधनमभिधानेनेति सामर्थ्यलभ्यम्, अन्यथा परं प्रति साधयितुमशक्यत्वात्[2] ॥ २३०५ ॥

आगमबाधामाह[3]—अर्थप्रतीतिसामर्थ्यैरित्यादि । अर्थप्रतीतौ सामर्थ्यानि यानि शब्दानां तैः । प्रतिज्ञार्थस्य बाधनादित्युपस्कारः ॥ २३०६ ॥

प्रतीतिबाधामाह—सर्वलोकेत्यादि । पूर्वोक्ता दिक् = समनन्तरश्लोकोक्ता । एवं तु पठितव्यम्—

"अर्थप्रतीतिसामर्थ्ये सर्वलोकावधारिते ।
लोकप्रसिद्धया नास्तित्वं बाध्यते सर्ववादिनाम् ॥" इति ।

पूर्वोक्तमनुमानादिविरोधं स्मारयन्नाह[4]—अनुमानविरोधोऽपीत्यादि । प्रागुक्तो हेतुर्नानाप्रकार —

"दशचलादिभिन्नाश्च गोशब्दव्यक्तिबुद्धयः ।
समानविषया सर्वा न वा नानार्थगोचरा ॥
गोरित्युल्लिख्यमानत्वात् सम्प्रत्युत्पन्नबुद्धिवत् ।"
(तत्त्व० २१२०–२१२१) इत्यादिना ।

प्रागेवेति ।

"किञ्च शब्दस्य नियतं श्रोत्रजप्रत्यभिज्ञया ।
विभुत्वं च स्थिरत्वं च कोऽप्यनस्येद्विपर्ययम् ॥" (तत्त्व० २११६)
इत्यनेन ॥ २३०७-२३०८ ॥

अवशिष्टपक्ष-हेतुदोषनिराकरणम्

वक्तव्यं चैव कः शब्दो विनाशित्वेन साध्यते ।
त्रिगुणः पौद्गलो वाऽथमाकाशस्याथ वा गुणः ॥ २३०९ ॥
वर्णादन्योऽथ नादात्मा वायुरूपमवाचकम् ।
पदवाक्यात्मकः स्फोटः सारूप्यान्यनिवर्त्तने ॥ २३१० ॥
एतेषामस्त्वनित्यत्वं नास्माकं तेषु नित्यता ।
अप्रसिद्धविशेषत्वमाश्रयासिद्धहेतुना[1] ॥ २३११ ॥

---

शिष्टानपि पक्षदोषान् हेतुदोषांश्च कांश्चित् प्रतिपिपादयिषुराह—वक्तव्यमित्यादि । सिद्धान्तभेदेन शब्दगतान् विकल्पानाह । तत्र सत्त्वरजस्तमःस्वभावत्वात् त्रिगुणः [G 630] साङ्ख्यैरिष्टः शब्दः । पौद्गलो दिगम्बरैः । पुद्गलाः परमाणव उच्यन्ते, तेषामयं पौद्गलः । तदात्मक इति यावत् । आकाशगुणः काणादैरिष्टः । वर्णव्यतिरिक्तो नादात्मा लौकिकैः । यथोक्तं पातञ्जले भाष्ये—"अथ वा प्रतीतपदार्थको लोके ध्वनिः शब्दः" ( पा० म० भा०, प० आ० ) इति । वायुरूपमवाचकं शिक्षाकारैः । यथाहुः—"वायुरापद्य[2] शब्दवान्[3]" इति । पदस्फोटात्मको वाक्यस्फोटात्मकश्च वैयाकरणैरिष्टः । तथाऽऽहुः—

"नादैराहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥" (वा० प० १.८४) इति ।

सारूप्यम् = सादृश्यम्, विन्ध्यवासीष्टम् । बौद्धैरन्यनिवर्त्तनमन्यापोहो वाचकत्वेन य इष्टः ।

यद्येवं साङ्ख्यादीष्टानामनित्यत्वं साध्यते, तदा सिद्धसाध्यता पक्षदोषः; स्वरूपेणैव निर्दिश्यत इत्यनेन सिद्धरूपस्य निरस्तत्वात् । न च मीमांसकैरीदृशे शब्दे नित्यत्वेन[4] साधयितुमिष्टम् । किञ्च—अस्मान् प्रति त्रिगुणाद्यात्मकस्य शब्दस्य धर्मिणो विशेष्यासिद्धत्वादप्रसिद्धविशेषत्वं पक्षदोषः, हेतोश्चाश्रयासिद्धतादोषः; तथाविधस्य धर्मिणोऽसिद्धत्वात् ॥ २३०९–२३११ ॥

---

१. ०हेतुता—पा०, गा० ।
२. वायुरापद्यते—गा० ।
३. शब्दमान्—पा० ।
४. नित्यत्व—पा०, गा० ।

अथास्मदिष्टः पक्षः स्यात् स्वयमेतद् द्वयं तव ।
शब्दमात्रमथोच्येत शब्दत्वं वस्तथा सति ॥ २३१२ ॥
अनित्यं तच्च सर्वेषां नित्यमिष्टं विरुध्यते ।
यत् किञ्चिदिह सामान्यं नित्यं सर्वेण कल्प्यते ॥ २३१३ ॥
अनित्यत्वं च नाशित्वं यद्यात्यन्तिकमुच्यते ।
ततोऽस्मान् प्रति पक्षः स्यादप्रसिद्धविशेषणः ॥ २३१४ ॥
यथाकथञ्चिदिष्टा चेदनित्यव्यपदेश्यता ।
अनभिव्यक्त्यवस्थाऽत्र सा हि व्यवस्थाऽस्मत्सेव्यते ॥ २३१५ ॥

---

अथेति । यथास्माभिर्मीमांसकैर्योऽभिमत 'वर्णा एव गकारादय शब्दो न व्यतिरिक्त' इत्येष पक्ष स्यात्, तथा सति बौद्धानेरेतद् द्वयम्–अप्रसिद्धविशेषणत्व प्रतिज्ञादोष, आश्रयासिद्धता च हेतुदोष, आपद्यते । शब्दमात्रमथोच्येत, साध्यधर्मित्वेनेति शेष । तत्रश्च शब्दत्वसामान्य च = युष्माकमनित्यम् । भवतोतीत्यध्याहार्यम् । तथा हि—मात्रशब्देन सर्वविशेषत्यागे कृते किमपरमन्यत् सामान्याच्छब्दमात्र भवेत् । तस्मात् सामर्थ्याद्भवद्भि शब्दत्वमेवानित्य प्रतिज्ञात स्यात् । भवत्वेवमिति चेत्[1] नेत्याह—तच्च सर्वेषां नित्यमिष्टमित्यादि । तथा हि—बौद्धैरप्यन्यापोहवादिभिरुक्तम्—"जातिधर्मव्यवस्थिते" । अनेनाभ्युपेतबाधादोष उक्त । तदेव दर्शयति—यत्किञ्चिदिहेत्यादि । यत् किञ्चित् स्वसिद्धान्तानुसारेण सामान्य व्यवस्थापित तत्सर्व सर्ववादिभिर्नित्यमिष्यते, अन्यथा व्यक्तिवदपरापरोत्पत्त्यर्थापन्नतावस्थाभावा[1] तस्य सामान्यरूपतैव हीयते ॥२३१२ २३१३॥

[ G 637 ] एव तावत् साध्यधर्मिविकल्पेन पक्षदोषमुद्भाव्येदानीं साध्यधर्मविकल्पेनोद्भावयितुमाह—अनित्यत्वं चेत्यादि । यद्यात्यन्तिक निरन्वयप्रध्वसलक्षण नाशित्व यत्तदनित्यत्वमिष्ट साध्यत्वेन, तदा अस्मान् = मीमासकान् प्रत्यप्रसिद्धविशेषण पक्षदोष । तथा हि—मीमासकाना कापिलानामिव निरन्वयविनाशित्वविशेषणमसिद्धम्, तिरोभावेऽपि घटादीना शक्तिरूपेणावस्थानात् । प्रदीपादावपि लघवो ह्यवयवा, तदा देशान्तर लघु लघु प्रयान्तीति मतत्वात् ।

1. व्यक्तवन्तर्गतास्थाना —पा०, व्यस्त्यन्तर्गतापावात् —गा० ।

केवलेन्द्रियकत्वे च हेतावत्र प्रकल्पिते ।
जात्या साधितयेदानीं व्यभिचारः प्रतीयते ॥ २३१६ ॥
असिद्धे पक्षधर्मत्वे यथैव प्रतिवादिनः ।
न हेतुर्लभ्यते तद्वदन्वयव्यतिरेकयो ॥ २३१७ ॥
तत्र यद्यप्यसिद्धा स्याज्जातिः साधनवादिन ।
तावत् तथाप्यहेतुत्व यावत् सा न निराकृता ॥ २३१८ ॥

---

अथ यथाकथञ्चिदनित्यव्यपदेशत्व साधयितुमिष्टम्, तदा सिद्धसाध्यता दोष । तथा हि—नित्येष्वप्यभिव्यक्त्यनभिव्यक्त्यवस्थापाश्रयेणानित्यव्यपदेश[1] इष्ट एव ॥ २३१४-२३१५ ॥

एव तावद् 'अनित्य शब्द ' इत्येषा प्रतिज्ञा विस्तरेण दूषिता, इदानीमैन्द्रियकत्वादित्यस्य हेतोर्दोषमुद्भावयन्नाह—केवलेन्द्रियेत्यादि । केवलमैन्द्रियकत्वम् = 'कार्यत्वे सति' इत्यादि विशेषणरहितम् । तस्मिन्निर्विशेषणहेतौ सति, जात्या = सामान्येन प्राक् प्रसाधितया, अनैकान्तिको हेतु, व्यतिरेकासिद्धे ॥ २३१६ ॥

स्यादेतत्—यदि नाम प्रतिवादिनो वा[2] जातेरभ्युपगमाद्व्यतिरेको न सिद्ध, तथापि बौद्धादे स्ववादिनो जातेरनभ्युपगमात् सिद्ध एव, तत् कथमनैकान्तिकता ' इत्याह—असिद्ध इत्यादि । 'य एव तूभयनिश्चितवाची स एव साधन दूषणम्' इति[3] न्यायात् यथा पक्षधर्मस्यान्यतरासिद्धौ हेतुर्दुष्टो[4] भवति, तथाऽन्वयव्यतिरेकयोरन्यतरासिद्धो दुष्ट एव । अन्वयव्यतिरेकयोरसिद्धयोरिति वचनविपरिणामेन सम्बन्ध ॥ २३१७ ॥

[ G 638 ] यद्युभयसिद्धमेव साधन दूषण वा, तत् कथ बौद्ध प्रत्यसिद्धया जात्या व्यभिचारोऽभ्यधायि भवता ? इत्याह— तत्रेत्यादि । यद्यपि बौद्धादे साधनवादिनो न जातिर्विपक्षत्वेन सिद्धा, तथाप्याशङ्का न निवर्त्तते, तस्या प्रतिषेद्धुमशक्यत्वात् । ततश्च सन्दिग्धविपक्षव्यावृत्तिकतेति भाव ॥ २३१८ ॥

---

१ ॰वस्थाश्रयणा॰—पा॰, गा॰ । २ पा॰, गा॰ पुस्तकयोर्नास्ति ।
३ चेति—पा॰, गा॰ ।
४ हेतुर्दोषो—जै॰ ।

कार्या चैन्द्रियकत्वादौ किंवस्त्विति निरूपणा ।
व्यक्तिभ्योऽनन्यनानात्वभेदाभेदेषु च स्फुटा ॥ २३१९ ॥
तत्रासाधारणासिद्धसाध्यहीनसपक्षता ।
विकल्पितानुसारेण वक्तव्या चाद्यपेक्षया ॥ २३२० ॥
प्रयत्नानन्तरं ज्ञानं कृतकानित्यसाधनम् ।
यत् तत्राप्यस्त्यनेकान्तः क्षणिकव्यतिरेकिभिः[1] ॥ २३२१ ॥
प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधव्योमभिस्त्रिभिः ।

---

अपरमपि साध्यसाधनयोर्विकल्पान्तरेण दूषणमाह—कार्या चैन्द्रियकत्वादाविति । आदिशब्देनानित्यत्वपरिग्रहः । तत्र किमात्मकमैन्द्रियकत्वादीति निरूपणा कार्या—किं व्यक्तिभ्योऽनन्यत् ? आहोस्विद् व्यतिरिक्तम् ? तथा व्यतिरेकपक्षे, तदा भेदेषु च विचारणा कार्या—किं [2]तद्व्यतिरिक्तमपि भिन्नम्[2] ? आहोस्विदभिन्नमेकमेव ? इति यावत् । तत्राव्यतिरेकपक्षे ऐन्द्रियकत्वस्य हेतोरसाधारणता, व्यक्तेरव्यतिरेकात्, तत्स्वरूपवत् तस्य व्यक्त्यन्तरानुगमाभावात् । व्यतिरेकपक्षेऽपि मीमांसकस्य व्यतिरेकाभिष्टे प्रतिव्यक्तिभिन्नमभिन्नं वा असिद्धमित्यसिद्धता हेतोः । अत एव भेदाभेदपक्षे दोषो नोक्तः, सिद्धे हि व्यतिरेके तस्यावकाशात् । अनित्यत्वस्यापि व्यतिरेकपक्षे साध्यहीनसपक्षता । दृष्टान्तस्य साध्यविकलतेति यावत् । अव्यतिरेकपक्षेऽपि साध्यहीनतैव दृष्टान्तस्य, व्यक्तेर्व्यक्त्यन्तरानुगमाभावात् ॥ २३१९-२३२० ॥

इदानीं 'प्रयत्नानन्तरीयत्वात्' इत्यस्य हेतोरनैकान्तिकत्वमाह—प्रयत्नानन्तरमित्यादि । [G 639] प्रयत्नानन्तरमुपलभ्यमानत्वं हि प्रयत्नानन्तरीयकमुच्यते[3] । तच्च विपक्षेऽपि हेतोरनैकान्तिकत्वान्न कृतकानित्यत्वसाधनम् । तथा हि—बौद्धैः प्रतिसङ्ख्यानिरोधोऽप्रतिसङ्ख्यानिरोध आकाशं चेति त्रिविधमसंस्कृतं वस्तु क्षणिकव्यतिरिक्तमक्षणिकं नित्यं चेष्टम्, तत्र चास्य हेतोर्वृत्तिरिति दर्शयन्नाह—

---

१. ०व्यतिरेकिण —पा० ।
२–२. तद्व्यतिरिक्तं भिन्नमभिन्नम्—पा०, गा० । ३. प्रयत्नानन्तरीयत्व०—पा०, गा० ।

बुद्धिपूर्वविनाशे हि प्रतिसङ्ख्यानिरोधयोः ॥ २३२२ ॥
अबुद्धिपूर्वकस्तेषा निरोधोऽप्रतिसङ्ख्यया ।
तौ च द्वावप्यनाशित्वादिष्टावकृतकावपि ॥ २३२३ ॥
आहुः स्वभावसिद्धं हि ते विनाशमहेतुकम् ।
भवति ह्यग्निसम्बन्धाद् काष्ठावङ्गारसन्ततिः ॥ २३२४ ॥
स्वाभाविको विनाशस्तु जातिमात्रप्रतिष्ठितः ।
सूक्ष्मः सदृशसन्तानवृत्तेरनुपलक्षितः ॥ २३२५ ॥
यदा विलक्षणो हेतुः पतेद् सदृशसन्ततौ ।
विलक्षणेन कार्येण स्थूलोऽभिव्यज्यते तदा ॥ २३२६ ॥
तेनासदृशसन्तानो हेतोः सञ्जायते यतः ।

बुद्धिपूर्वेत्यादि । यो बुद्धिपूर्वो घटादीना विनाश स प्रतिसङ्ख्यानिरोध, यस्त्वबुद्धिपूर्व सोऽप्रतिसङ्ख्यानिरोध—इत्येषा किल बौद्धप्रक्रिया । तेषामिति । घटादीनाम् । तौ चेति । प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधौ । अकृतकावपीति । अपिशब्दान्नित्यावपि ॥ २३२१-२३२३ ॥

यथा चानयोरकृतकत्वनित्यत्वे, यथा च तत्र हेतौ वृत्ति, तथा परमतेनैवोपपादयन्नाह—आहुरित्यादि । त इति बौद्धा । ननु च अग्निना[1] काष्ठम्, दण्डेन घट इति नाशहेतवो दृश्यन्ते, तत्कथमहेतुकत्वमस्य ? इत्याह—भवति हीत्यादि । वह्न्यादयो हि तत्राङ्गारादिपदार्थान्तरहेतुत्वेनान्वयव्यतिरेकाभ्या निश्चिता, न विनाशस्य, तस्य निसर्गसिद्धत्वात् । यदि तर्हि स्वाभाविको नाश, किमिति वह्न्यादि सम्पातात् प्रागपि नोपलक्ष्यते ? इत्याह—सूक्ष्म इत्यादि । सदृशापरापरोत्पत्तेविप्रलब्धा हि मन्दा नावस्यन्ति[2], सदृशसन्तानोत्पत्त्या तूत्प्रेक्षन्ते[3]—विलक्षणो हेतुर्मुद्गरादि, विलक्षण कार्यं कपालादि । अस्या किलावस्थाया विनाशस्य स्थूलत्व व्यक्तीभवति । तेनेत्यादिनोपसंहार । असदृशसन्तान इति । विल-

१ नाश्यते अग्निना—गा० ।
२. नावस्यन्ति सूक्ष्म नाशम्—गा० ।
३. तूत्प्रेक्षन्ते अग्निनष्टमेव—गा० ।

तेनैवाक्रियमाणोऽपि नाशोऽभिव्यज्यते[1] स्फुटः ॥ २२२७ ॥
स　　मुद्गरप्रहारादिप्रयत्नानन्तरीयकः ।
यस्मादकृतको दृष्टो हेतुः स्याद् व्यभिचार्यतः ॥ २२२८ ॥
आकाशमपि नित्य सद् यदा भूमिजलावृतम् ।
व्यज्यते तदपोहेन खननोत्सेचनादिभिः[2] ॥ २२२९ ॥
प्रयत्नानन्तर ज्ञान यदा तत्रापि दृश्यते ।
तेनानैकान्तिको हेतुर्यदुक्त तत्र दर्शनम् । २२३० ॥
सपक्षोऽपि विकल्पोऽत्र जात्यर्थे[3] साध्यहीनता ।
व्यक्तिलक्षणपक्षेऽपि　　जात्यन्यानन्यकल्पना ॥ २२३१ ॥

क्षण । [ ( 610 ] हेतोर्यत इति सामानाधिकरण्यम् । तेनैवेति हेतुना । यत इति यो निर्दिष्ट, तस्याभिव्यज्यत इति परेणाभिसम्बन्ध ॥२२२४-२७॥

विपक्षवृत्तिता हेतोरुपदर्शयन्नाह—स मुद्गरेत्यादि । स इति द्विविधोऽपि निरोध । मुद्गरप्रहारादिप्रयत्नानन्तरभावी मुद्गरप्रहारादिप्रयत्नानन्तरीयक उच्यते ॥ २२२८ ॥

त्रिभिरित्युक्तम्, तत्र द्वाभ्या व्यभिचारमुपदर्श्य तृतीयेनाप्याकाशेन व्यभिचारमुपदर्शयन्नाह—आकाशमपीत्यादि । तदपोहेनेति । तस्य भूम्यादे खननादिकरणभूतैरपनयेन । तत्रेति शब्दे । दर्शनम् = प्रयत्नानन्तरज्ञानम् ॥ २२२९-२२३० ॥

एव हेतुदोषानभिधाय दृष्टान्तदोषान् वक्तुकाम आह—सपक्षोऽपीत्यादि । सपक्ष = दृष्टान्त । स किं श्रुत्यर्थोऽभिप्रेत ? आहोस्विद्व्यक्ति ? यदि श्रुत्यर्थ, तदा साध्यविकलता दृष्टान्तदोष । तथा हि—श्रुति शब्द, तस्यार्थोऽभिधेय, स पुन सामान्यं घटत्वादि । न[4] च[5] सर्ववादिना नित्यमेवेष्टमिति न तत्रानित्यत्वस्य साध्यधर्मस्यानुगम । क्वचित्—जात्यर्थ इति पाठ । तत्र कर्मधारयस्य समास कार्य । अर्थस्तुल्य एव ।

1　भिव्यज्यते—पा० ।　　२ खननोच्छेदनादिभि—गा० ।
३. श्रुत्यर्थे—पा०, गा० ।　　४-५. तच्च—गा० ।

अन्यत्वे धर्म्यसिद्धेर्नोऽनन्यत्वेऽपि परान् प्रति ।
अविशेषेऽपि नानित्यं न नित्यं वस्तु तन्मम ॥ २३३२ ॥
अंशो ह्यत्र तस्य जात्याख्यो नित्यो ध्वंसीतरो मतः ।
शबलाकारमेकं हि वस्तु प्राक् प्रतिपादितम् ॥ २३३३ ॥
अनित्यता विकल्प्यैवं नाशश्चेत् साध्यहीनता ।
ममान्यस्यां तु भवतामित्येषा दूषणोक्तिदिक् ॥ २३३४ ॥

---

अथ द्वितीयः पक्षः, तदापि तस्या व्यक्तेर्दृष्टान्तत्वेनेष्टाया [ G. 611 ] जात्यन्यानन्यकल्पना कार्या—किं सा व्यक्तिर्जातिरन्या, आहोस्विदनन्या ? यदान्या[1], तदा दृष्टान्तधर्मिणो मीमांसकं प्रत्यसिद्धिः । न हि मीमांसको वैशेषिकादिवदेकान्तेन[2] व्यक्तेरन्यां जातिमिच्छति । यथोक्तम्—"स्थितं नैव तु जात्यादेः परत्वं व्यक्तितो हि नः" ( श्लो० वा०, प्र० सू० १४१ ) इति ।

अथानन्यपक्षः, तदा परान् बौद्धादीन् प्रति दृष्टान्तधर्म्यसिद्धिः[3] । न हि परे व्यक्तेरनन्यां जातिं मन्यन्ते ।

अथ भेदाभेदविकल्पमवधूय घटो निदर्शनत्वेनोपादीयते, तदाप्यस्मान् प्रति साध्यविकलता दृष्टान्तस्य—इति निदर्शयन्नाह—अविशेषेऽपीत्यादि । तदिति घटवस्तु । कथम् ? इत्याह—अंश इत्यादि । एतस्य हि घटवस्तुनो जातिसंज्ञको भागो नित्यः, इतरस्तु व्यक्तिसंज्ञको ध्वंसी = विनाशी । स्यादेतत् । कथमेकस्य परस्परविरुद्धं स्वभावद्वयं युक्तम् ? इत्याह—शबलाकारमित्यादि ॥२३३१-३२॥

पुनरपि साध्यधर्मविकल्पमुखेन दृष्टान्तदोषान् वक्तुकाम आह—अनित्यतेत्यादि । यद्यनित्यता[4] निरन्वयविनाशलक्षणा साध्यत्वेनेष्टा, तदा मम = मीमांसकस्य दृष्टान्ते साध्यविकलता । न ह्यस्माभिरत्यन्तसमुच्छेदो भावानामिष्टः; शक्तिरूपेणावस्थानात् । यद्यपि नाश इति सामान्यशब्दः, तथापि प्रकरणान्निरन्वयविनाशात्मकेऽर्थविशेषेऽस्य वृत्तिर्विज्ञायते; अन्यथा कथं साध्यविकलताप्रसङ्गो दृष्टान्तस्य योक्ष्यते । ननु चानित्यत्वं नाशित्वम्, 'यद्यात्यन्तिकमुच्येत' इत्यादिना अनित्यता

---

1. पा० पुस्तके नास्ति ।
2. वैशेषिकादिवैकान्तेन—पा० ।
3. दृष्टान्तधर्मसिद्धिः—पा० ।
4. यद्यप्यनित्यता—जै० ।

परस्य चोद्यम्

पदार्थपदसम्बन्धनित्यत्वे साधितेऽपि च[1]।
नैव चेह प्रमाणत्वं वाक्यार्थं प्रति सिध्यति ॥ २३३५ ॥
समयात् पुरुषाणां हि गुणवृद्ध्यादिवन्मतिः।
निष्कारणोऽपि समयो याज्ञिकैः परिकल्पितः ॥ २३३६ ॥
अपि चास्य कथावत् तु सङ्घातात् पौरुषेयता।

---

विकल्पितैव, तत्किमिति भूयोऽपि विकल्प्यते ? सत्यम्, सा हि पक्षस्य दोषोद्भावनार्थम्, इदानीं तु दृष्टान्तस्येति विशेषः। अथ न निरन्वयविनाशलक्षणाऽनित्यताभिप्रेता, किं त्वन्यैवाविर्भावतिरोभावलक्षणा ? अत्राह—अन्यस्यामिति। अनित्यतायामिति सम्बन्धः। भवतामिति। साध्यहीनतेति योजनीयम्। तत्रापि दृष्टान्तस्येति शेषः। न हि भवद्भिर्बौद्धैः साङ्ख्यैरिव सान्वयो विनाश इष्यते। तस्माद् दृष्टान्तस्य साध्यविकलता भवत्पक्षे स्यादित्येष शब्दानित्यत्वसाधनदूषणमार्गो विदुषामाख्यातः, अन्यदपि मार्गे स्वयमभ्यूह्य कर्त्तव्यम् ॥ २३३४ ॥

पदार्थेत्यादिना परस्य चोद्यमाशङ्कते। [G 612] विशिष्टसाधनावच्छिन्नक्रियाविशेषविधिप्रतिषेधलक्षणो हि वाक्यार्थः, तत्रैव चोदनायाः प्रामाण्यम्, न पदार्थे। ततश्च वेदस्य प्रामाण्ये साध्ये यत् पदपदार्थतत्सम्बन्धानां त्रयाणामपि नित्यत्वप्रतिपादनम्, तत् प्रकृतानुपयोगि। किञ्च—या या वाक्यार्थप्रतिपत्तिः सा सङ्केतप्रभवा, यथा—"आद्गुणः" (पा सू ६ १.८७) इत्यादेर्वाक्यात् गुणवृद्ध्यादिमतिः, वाक्यार्थप्रतिपत्तिश्च चोदनावाक्यसमुद्भवेति स्वभावहेतुः। एतदेव दर्शयति—समयादित्यादि। गुणवृद्ध्यादिवदिति। सप्तम्यर्थे वतिः। अस्यैव समर्थनमाह—निष्कारणोऽपीत्यादि। निष्कारणोऽपि = निर्निबन्धनोऽपि सन् स्वोत्प्रेक्षया निरङ्कुशया याज्ञिकैराचार्यैर्विकल्पयैव 'अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिवेदवाक्यार्थः परिकल्पित इति सम्बन्धः। किञ्च—यत्सङ्घातरूपं तत्पौरुषेयम्, यथा नाटकाख्यायिकादिकथा। पदसङ्घातश्च वेद इति स्वभावहेतुः। ततश्च पौरुषेयत्वाद् रथ्यापुरुषवाक्यवदप्रमाणं वेदः स्यात्। आप्तप्रणीतत्वात् पौरुषेयोऽपि प्रमाण

---

१ पा—प०, गा०।

न चाप्तः पुरुषोऽत्रास्ति तेन वेदाप्रमाणता ॥ २३३७ ॥

तत्प्रतिविधानम्

सम्बन्धाकरणन्यायाद् वक्तव्या वाक्यनित्यता ।
दृष्टार्थव्यवहारत्वाद् वृद्धवादौ सम्भवेदपि ॥ २३३८ ॥
मतिः सामयिकी वेदे न त्वेषा युज्यते यतः ।
स्वर्गयागादिसम्बन्धः केन दृष्टो ह्यतीन्द्रियः ॥ २३३९ ॥
न चानर्थकता तस्य तदर्थप्रत्ययोदयात् ।
सङ्घातत्वस्य वक्तव्यमीदृशं प्रतिसाधनम् ॥ २३४० ॥
वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथा ॥ २३४१ ॥
भारते[1] तु[1] भवेदेवं कर्तृस्मृत्या तु बाध्यते ।

भविष्यतीति चेद् ? आह—न चाप्त इत्यादि ॥ २३३५-२३३७ ॥

सम्बन्धेत्यादिना प्रतिविधत्ते । पदपदार्थयोः सम्बन्धाकरणे यो न्याय उक्तः—"श्रोतुः कर्तुश्च सम्बन्धं वक्ता कं प्रतिपद्यताम्" ( तत्त्व० २२५६ ) इत्यादिना, तत एव वैदिकवाक्यस्यापि नित्यता वक्तव्या । 'समयात्पुरुषाणां हि गुणवृद्ध्यादिवन्मतिः' ( तत्त्व० २३३६ ) इत्यत्रानैकान्तिकतामाह—दृष्टार्थव्यवहारत्वादित्यादि । "अदेङ्" (पा० सू० १.१.२) आदौ दृष्टेऽर्थे गुणादिव्यवहारात् समयात्तत्र सम्भाव्यत एव प्रतीतिः, न तु वेदे; स्वर्गादेरतीन्द्रियत्वेन समयस्य कर्तुमशक्यत्वात् ॥ २३३८-२३३९ ॥

यद्येवम्, आनर्थक्यं तर्हि प्राप्तमस्य ? इत्याह—न चानर्थकता तस्येति । [G. 643] तस्येति वेदस्य । 'सङ्घातत्वात्' इत्यत्रापि साधने प्रतिसाधनेनानैकान्तिकतामेव दर्शयन्नाह—सङ्घातत्वस्येत्यादि ॥ २३४०-२३४१ ॥

ननु च भारताध्ययनेऽपि शक्यमेवं वक्तुम्, यद्भारताध्ययनं तत्सर्वं गुर्वध्ययनपूर्वकम्, यथेदानीन्तनमिति । न चैवं शक्यते कर्तुम् । तस्मात् तद्वदनैकान्तिकता प्रतिसाधनस्य ? इत्याशङ्क्याह—भारते त्वित्यादि[2] । भारतेऽपि भवेदेवं

1-1. ०ऽपि—पा०, गा० । 2. ऽपीत्यादि—पा०, गा० ।

वेदे तु[1] न स्मृतिर्यापि साऽर्थवादनिबन्धना ॥ २३४२ ॥
अतीतानागतौ कालौ वेदकारवियोगिनौ[2] ।
कालत्वात् तद्यथा लोके[3] वर्तमानः समीक्ष्यते ॥ २३४३ ॥
ब्रह्मादयो न वेदानां[4] कर्तार इति गम्यताम् ।
पुरुषत्वादिहेतुभ्यस्तद्यथा प्राकृता नराः ॥ २३४४ ॥
अतश्च[5] गम्यतां व्यक्तममृषा वैदिकं वचः ।
स्वार्थे वक्त्रनपेक्षत्वात् पदार्थे पदबुद्धिवत् ॥ २३४५ ॥

प्रसञ्जनम्, किन्तु[6] [illegible] कर्ता व्यासः स्मर्यते इति तथा कर्तृस्मृत्या प्रतिज्ञार्थस्य बाधितत्वादप्रसङ्गः । वेदे तु न स्मृतिः । कर्तुरिति शेषः । ननु च वेदेऽपि कर्ता स्मर्यत एव, यथा—"अग्निरावश्चक्रु सामानि सामगिरौ भगवति कपोतके मथर्वानाङ्गिरसः" इत्यत आह—यापि साऽर्थवादनिबन्धनेति । यापि वेदे कर्तुः स्मृतिः साऽर्थवादनिबन्धना = अर्थपरं वचनम्—अर्थवादः, तन्निबन्धनं यस्याः सा तथोक्ता । तथा हि—चक्रुरिति न करणार्थपरः करोतिः, किं तर्हि ? स्मरणार्थः । चक्रुः—स्मृतवन्त इत्यर्थः ॥ २३४२ ॥

कथमयमर्थोऽवसितः ? इत्याह—अतीतानागतावित्यादि । प्रमाणद्वयं सुगमम् ॥ २३४३–२३४४ ॥

अतश्चेत्यादिना प्रकृतं सकलमुपसंहृत्य प्रमाणयति । [ ७ 61+ ] यद्यत्र कर्तृभूतवक्त्रनपेक्षं ज्ञानमुत्पादयति, तत्तत्र मृषा न भवति, यथा पदार्थे पदम् । कर्तृभूतपुरुषवक्त्रनपेक्षं स्वार्थे प्रत्ययमुत्पादयति वेदवाक्यमिति व्यापकविरुद्धोपलब्धिः; कर्तृभूतपुरुषसापेक्षज्ञानोत्पादकत्वेन मृषात्वस्य व्याप्तत्वात् । तद्विरुद्धं च स्वार्थे वक्त्रनपेक्षत्वम् । पदबुद्धिवदिति । पदानामविसंवादिप्रत्ययनिमित्तत्वप्रदर्शनपरमेतत् । न तु पदबुद्धिर्दृष्टान्तत्वेनाभिप्रेता, किं तर्हि ? पदान्येव । तथा हि—अत्र शब्दात्मकः साध्यधर्मी, तस्य चाविसंवादिज्ञानोत्पत्तिनिमित्तत्वेनामृषात्वे साध्ये तथाभूत एव

१. अपि—जै॰ पुस्तके पाठः । २. ॰विवर्जितौ—पाठा॰ ।
३. कालौ—गा॰ । ४. विज्ञाना—पा॰, गा॰ ।
५. ततश्च—पा॰, गा॰ । ६. पा॰, गा॰ पुस्तकयोर्नास्ति ।

तत्कृतः प्रत्ययः [1]सम्यङ् नित्यवाक्योद्भवत्वतः ।
वाक्यबुद्धिवदेतच्च सिद्धं नित्यत्वसिद्धितः ॥ २३४६ ॥
चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।
कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥ २३४७ ॥
तथानाप्तप्रणीतोक्तिजन्यत्वाद् बाधवर्जनात् ।
देशकालादिभेदाद्वाप्तोक्तिप्रत्ययो यथा[1] ॥ २३४८ ॥
प्रमाणेऽवस्थिते[2] वेदे शिष्याचार्यपरम्परा ।
अनादिः[3] कल्प्यमानाऽपि[3] न दोषत्वाय कल्पते ॥ २३४९ ॥

---

दृष्टान्तधर्मी न्याय्यः; अन्यथा साध्यविकलता दृष्टान्तस्य स्यात् । तथाऽपरः प्रयोगः—यो नित्यवाक्यजनितः प्रत्ययः स यथार्थत्वेन सम्यक्, यथा वाक्यस्वरूपविषयः । नित्यवाक्यजनितश्चाग्निहोत्रादेः स्वर्गादिसंसिद्धिनिश्चय इति स्वभावहेतुः । पूर्वं विस्तरेण नित्यत्वस्य प्रतिपादितत्वान्नासिद्धो हेतुः ।

चोदनेत्यादि पूर्वमेव व्याख्यातम् । तथाऽपरौ प्रयोगौ—योऽनाप्तप्रणीतवाक्यजनितः प्रत्ययः[4], यश्च[4] देशकालनरावस्थाभेदादौ विसंवादरहितः स प्रमाणम्, यथा आप्तवाक्यजनितः प्रत्ययः । तथा चायं चोदनावाक्यजनितः प्रत्यय इति स्वभावहेतुः । प्रथमस्य हेतोर्नासिद्धिः; विस्तरेणापौरुषेयत्वस्य प्रसाधितत्वात् । नापि द्वितीयस्य । यथोक्तम्—"न च स्वर्गकामो यजेतेत्यतो वचनात् सन्दिग्धमवगम्यते—भवति वा स्वर्गो न वा भवतीति । न चासन्दिग्धमवगम्यमानमिदं मिथ्या स्यात् । यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्ययः । न चैष कालान्तरे अवस्थान्तरे पुरुषान्तरे वा विपर्येति तस्मादवितथः" (मी० द०, शा० भा० १.१.२) इति । तस्मात् सिद्धमालोकवत् सर्वलोकसाधारणो धर्मादिव्यवस्थाहेतुः स्वत एव प्रमाणं वेद इति । ततश्च चित्तमात्रतादिनयो यो बौद्धादिभिर्वर्ण्यते सोऽयुक्त इति स्थितम् ॥ २३४५-२३४९ ॥

[G. 645] ननु यदि स्वत एव प्रमाणमालोकवत् सर्वसाधारणो वेदः,

---

1-1. पा० पुस्तके नास्ति । 2. प्रमाणे च स्थिते—पा० ।
3-3. पा० पुस्तके नास्ति । 4-4. प्रत्ययश्च—पा० ।

तस्मादालोकवद् वेदे सर्वलोकैकचक्षुषि ।
उलूकवत् प्रतीघातः किलान्येषामधर्मजः ॥ २३५० ॥

( उत्तरपक्षः )
वेदस्य पौरुषेयत्वसमर्थनम्

सर्वमेतद् द्विजातीनां मिथ्याज्ञानविजृम्भितम् ।
घुणाक्षरवदप्यत्र[2] सूक्तं नैषां हि किञ्चन ॥ २३५१ ॥
कर्तर्यसत्यपि ह्येषा नैव सत्यार्थतां व्रजेत् ।
तद्धेतुगुणवैकल्याद् दोषाभावे मृषार्थवत् ॥ २३५२ ॥
गुणाः सन्ति न सन्तीति पौरुषेयेषु शङ्क्यते ।

किमिति येऽपि तत्र बौद्धादयो विप्रतिपद्यन्ते, नहि तान् प्रति तस्याप्रामाण्यं युक्तम्' इत्याशङ्क्याह— तस्मादित्यादि । यथा किल पटुतरकिरणनिकरप्रोत्सारितसकलतिमिरप्रसरे सवितरि सकलजनसाधारणचक्षुषि च समन्ताद्भासत्यपि 'स्वकर्मापराध[1]गुरूपसंहतपटुतरलोचनप्रयोगोऽलूकादेर्न रूपमवतरति दर्शनपथम्, एवमधर्मतिमिरोपहतबुद्धिलोचना मन्दिमिनः प्रसादयन्ति स्थितेऽपि सकललोकैकचक्षुषि वेदे शाक्यादय इति । निगदव्याख्यातोऽयं श्लोकः ॥ २३५० ॥

तामेतामित्यनक्ति— सर्वमेतदित्यादि । घुणाक्षरवदिति । काकतालीयन्यायेनापीत्यर्थः ॥ २३५१ ॥

तत्र यदुक्तम्— 'यस्मिन्[3] मिथ्यात्वहेतुदोषसम्भवरहितं तद्वितथज्ञानकारणम्' इत्यादि, तत्र हेतोरस्मान् प्रति सिद्धत्वमभ्युपगम्यानैकान्तिकतामुद्भावयन्नाह— कर्तर्यसत्यपीत्यादि । एषेति श्रुतिः । यथा रागादियुक्तो मृषावादी दृष्ट इत्यन्वयव्यतिरेकाभ्यां गिरां मिथ्यात्वहेतवो दोषा निश्चिताः, तथा कृपादिगुणयुक्तः सत्यवाग् दृष्ट इति कृपादयो गुणाः सत्यत्वहेतव इति । ततश्च कारणनिवृत्त्या मिथ्यात्ववत् सत्यत्वमपि निवर्तते । अतोऽप्यपौरुषेयत्वे सत्यत्वं न सिद्ध्यति[4], अनैकान्तिकता हेतोः ॥ २३५२ ॥

अथ गुणनिवृत्तिः कथं निश्चिता ? इत्याह— गुणाः सन्तीत्यादि । यदत्र दोषा-

१ स्वकर्मापराधानु०—पा० । २ ०वदप्यत्र—पा०, गा० ।
३ यद्—पा०, गा० । ४ ०भावेऽपौ०—गा० ।

आनर्थक्यमतः प्राप्तं गुणाशङ्कैव नास्ति नः ॥ २३५३ ॥
अतः सत्यत्वमिथ्यात्वहेतूनां न च संश्रयात् ।
प्रज्ञादयाऽकृपादीनामभावान्नास्ति तद् द्वयम् ॥ २३५४ ॥
आनर्थक्यमतः प्राप्तं षडपूपादिवाक्यवत् ।
अर्थाश्चेत् सम्प्रतीयन्ते क्रियाकारकयोगिनः ॥ २३५५ ॥
एषा स्यात् पुरुषाख्यानादुर्वशीचरितादिवत् ।
प्रतिपत्तिरतादर्थ्येऽप्यस्य प्रकृतितस्तव ॥ २३५६ ॥

भावे कारणं भवताम्यपायि, तदेव सत्यत्वहेतुगुणाभावेपीति[1] दर्शयति ॥२३५३॥

[G. 610] अत इत्यादिनोपसंहृत्य, कारणानुपलब्ध्या सत्यत्वमिथ्यात्वयोरभावप्रसङ्गं दर्शयति । तत्र प्रज्ञादयः सत्यत्वहेतवः, मिथ्यात्वहेतवस्त्वकृपादय इति यथाक्रमं सम्बन्धः । द्वयमिति सत्यत्वमिथ्यात्वे ॥ २३५४ ॥

द्वयाभावे सति यत् प्रसज्यते तद्दर्शयति—आनर्थक्यमित्यादि । 'षडपूपा दश दाडिमानि' इत्याद्युन्मत्तकवाक्यवदानर्थक्यं वेदस्य प्राप्तम् ।

ननु चानर्थक्यं वेदस्य साधयतो बौद्धस्य दृष्टबाधा प्रतिज्ञाया भवेत् । तथा हि—अग्निहोत्रात् स्वर्गो भवतीत्यतो वाक्यार्थप्रतीति प्रत्यक्षमनुभूयते । सा कथमपोह्यते ? इत्याशङ्क्य परस्य वचनावकाशं परिहरति—एषेत्यादि । एवं मन्यते—यदि हि स्वातन्त्र्येणानर्थक्यं वेदस्य साध्येत, तदा स्यात् प्रतिज्ञाबाधा, यावता प्रसङ्गापादनमेतत् क्रियते । न च तत्र प्रसङ्गेन प्रतिज्ञाबाधासम्भवः; तत्र प्रतिज्ञायमानस्याभावात् । केवलं परस्यैकव्यापकधर्मनिवृत्त्यापि[2] व्याप्यनिवृत्तिमनिच्छतोऽनिष्टापत्त्या वचनव्याघातः प्रतिपाद्यते । नापि चेह[3] दृष्टबाधा । तथा हि—पुरुषव्याख्यानवशादेषा प्रतीतिर्भवेदनर्थकादपि वेदात् । यथा केनचिद् 'अग्निहोत्राद् स्वर्गो भवति' इत्यादिवेदवाक्यस्य 'भरतोर्वश्यादिचरितमनेनाभिधीयते' इत्यस्मिन्नर्थेऽनभिज्ञाय व्याख्याते पश्चात् तस्य ततो वाक्यात् तदर्थप्रतीतिर्भवत्येव । न च तत्रैनार्थेनार्थवत् । तद्वदियमर्थप्रतीति प्रकृत्या निरर्थकादपि वेदाद् भवेदिति कुतो

१. •हेतुगुणा०—जै० । २. परस्यैव व्यापक०—पा०, गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।

दोषाभावेऽपि सत्यत्वं न सिद्ध्यत्यन्यभावतः ।
आनर्थक्याख्यमप्यस्ति तस्माद् राश्यन्तरं परम् ॥ २३५७ ॥
अथ सत्यार्थविज्ञानजन्मशक्तः स्वतः स्थितः ।
वेदो नारो[1] निराशंसः सत्यार्थोऽयमतो मतः ॥ २३५८ ॥
यद्येवं सर्वदा ज्ञानं नैरन्तर्येण तद्भवेत् ।
सदावस्थितहेतुत्वात् तद्यथाभिमते क्षणे ॥ २३५९ ॥
एकविज्ञानकाले वा तज्जन्यं सकलं भवेत् ।
शक्तं हेतुतया यद्वत् तद्विज्ञानं विवक्षितम् ॥ २३६० ॥

---

दृष्टबाधा प्रतिज्ञायाः ] ॥ २३५५-२३५६ ॥

किञ्च—भवतु नाम मिथ्यात्वहेतोर्दोषस्यैव निवृत्तिः, न गुणस्य, तथापि हेतोरनैकान्तिकत्वमनिवार्यमेवेति दर्शयन्नाह—दोषाभावेऽपीत्यादि । [G. 647] यदि हि सत्यत्वमिथ्यात्वव्यतिरेकेण वचसां राश्यन्तरं न स्यात्, तदैकराश्यभावे द्वितीयराशिसद्भावो नान्तरीयकः स्यात् । यदा त्वानर्थक्यमपि तृतीयं राश्यन्तरमस्ति, तदा न मिथ्यात्वनिवृत्त्या सत्यत्वनिश्चयः; परस्यापि तृतीयस्यानार्थक्यस्याविनिवृत्तेः ॥ २३५७ ॥

स्यादेतत्—यदि वेदे कृतादिगुणाहेतुकं सत्यत्वमभ्युपगतं स्यात्, तदा गुणानां पुरुषाश्रितत्वेन पुरुषनिवृत्त्या निवृत्तौ सत्यां मिथ्यात्ववत् सत्यत्वमपि निवर्तेत; यावता स्वतःप्रामाण्याद्वेदस्य प्रकृत्यैव सत्यार्थज्ञानहेतुत्वं न तु पुनर्गुणकृतम्, तेन नानैकान्तिकता हेतोः । नाप्यानर्थक्यप्रसङ्गो वेदस्येत्येतत् परस्योत्तरमाशङ्क्य परिहरन्नाह—यद्येवमित्यादि । यथैव हि प्रकृत्याऽर्थवत्त्वमस्य वेदस्य, तथा मिथ्यात्वमपि सम्भाव्यत इत्यनैकान्तिकत्वमेव हेतोरित्यभिप्रायः । एतच्च पश्चादभिधास्यति । प्रकृत्या च ज्ञानहेतुत्वे सर्वदा युगपच्च तद्वाविज्ञानं प्राप्नोत्यविकलकारणत्वादिति कथमानर्थक्यप्रसङ्गः । प्रयोगः—यदविकलकारणं तत्तद्भवत्येव, यथा अभिमतक्षणसम्भवमग्निहोत्रादिवाक्यसम्भूतं ज्ञानम् । अविकलकारणं च वेदवाक्यहेतुकं अर्थज्ञानं सर्वस्यामवस्थायामिति स्वभावहेतुः ॥ २३५८–२३६० ॥

---

१. न ना—मा० ।

ततः परमतो ज्ञानजन्मशक्तिपरिक्षयात् ।
न नित्यः स्यादयं वेदः शक्तौ वा धीः पुनर्भवेत् ॥ २३६१ ॥
अथापि सहकारीणि व्याख्यादीनि व्यपेक्षते ।
तेषां च क्रमसद्भावात् तद्विज्ञानं क्रमीष्यते ॥ २३६२ ॥
नैवं तस्य हि शक्तस्य व्यपेक्षा कीदृशी भवेत् ।
तद्योगात् स समर्थश्चेन्नित्यताशेह का तव ! ॥ २३६३ ॥
प्रागशक्तः समर्थश्च यदि तैः क्रियते पुनः ।
प्रसक्तः पौरुषेयोऽयं ज्ञानाङ्गं हि नराश्रयात् ॥ २३६४ ॥

---

युगपज्ज्ञानप्रसङ्गपक्षे च दोषान्तरमाह—ततः परमित्यादि । तथा हि—यदि युगपदशेषज्ञानान्युत्पाद्योत्तरकालं ततो ज्ञानोत्पादनशक्तेः परिहीयते वेदः, तदा शक्तेरात्मभूतायाः परिक्षयात् क्षयी प्राप्नोति । अथ न परिहीयते, तदोत्तरकालं पुनरपि ज्ञानोत्पत्तिप्रसङ्ग इति न कथञ्चिन्नित्यस्यार्थक्रियासामर्थ्यम् ॥ २३६१ ॥

[ G. 618 ] अथापीत्यादिना यदविकलकारणमित्यस्य हेतोरसिद्धतामाशङ्कते । व्याख्यादीनीत्यादिशब्देन सङ्केतादिपरिग्रहः । तेषां चेति व्याख्यादीनाम् ॥ २३६२ ॥

नैवमित्यादिना परिहरति । असमर्थो हि परमपेक्षेत ततः समर्थस्वभावोत्पादलिप्सायाम् । यस्तु समर्थस्तस्य न किञ्चित् स्वभाववैकल्यमस्तीति कीदृशी तस्य व्यपेक्षा । अथ प्रागसमर्थः सहकारिकारणयोगात् पश्चात् समर्थो भवतीत्यभ्युपेयते । तदा जहतु भवन्तो वेदे नित्यताशाम् ॥ २३६३ ॥

कथम् ? इत्याह—प्रागशक्त इत्यादि । शक्तेरव्यतिरेकादिति भावः । व्यतिरेकेऽपि[1] सम्बन्धासिद्धेर्वेदस्य[2] चाकारकत्वप्रसङ्गः[2], शक्तेरेव कार्योत्पत्तेरिति वाच्यम् । ज्ञानाङ्गमिति । ज्ञानस्याङ्गं यो भवति वेदः स नराश्रयाज्जातः, वेदस्वरूपं च[3] नराश्रयानुबात[4]; तच्च वेदाव्यतिरेकात्, सोऽपि जात एव ॥२३६४॥

---

1. ०रेके तु—पा०, गा० ।
2—2. वेदस्याकारक०—पा०, गा० ।
3. च—जै० पुस्तके पाठा० ।
4. ०याज्जातम्—पा०, गा० ।

न हि तावत् स्थितोऽप्येष ज्ञानं वेदः करोति नः ।
यावन्न पुरुषैरेष[1] दीपभूतैः प्रकाशितः ॥ २३६५ ॥
ततश्चापौरुषेयत्वं भूतार्थज्ञानकारणम् ।
न कल्प्यं ज्ञानमेतद्धि पुंव्याख्यानात् प्रवर्त्तते ॥ २३६६ ॥
सत्यप्येषा निरर्थाऽतो वेदस्यापौरुषेयता ।
यदिष्टं फलमस्या हि ज्ञानं तत् पुरुषाश्रितम् ॥ २३६७ ॥
शक्तश्चेत् सर्वदैवाय तत् किमन्यदपेक्षते ।
शक्त्यैकहेतुभावे तु ज्ञानं स्यादेव तेन वः ॥ २३६८ ॥
स्वतन्त्राः पुरुषाश्चेह वेदे व्याख्यां यथारुचि ।
कुर्वाणाः प्रतिबद्धुं ते शक्यन्ते नैव केनचित् ॥ २३६९ ॥
मोहमानादिभिर्दोषैरतोऽमी विप्लुताः श्रुतेः ।
विपरीतामपि व्याख्यां कुर्युरित्यभिशङ्क्यते ॥ २३७० ॥

---

किञ्च—न केवलं परापेक्षायामनिष्टप्रसङ्गः, अपौरुषेयत्वकल्पना च व्यर्था प्राप्नोतीति दर्शयन्नाह—न हीत्यादि। [G 649] यथार्थज्ञानार्थमस्यापौरुषेयता कल्प्यते। सा च कल्पनाऽपि न पुरुषनिरपेक्षा तज्ज्ञानोत्पादने समर्थेति व्यर्था तत्कल्पना। पुरुषा एव प्रमाणभूताः प्रणेतारो यथार्थज्ञानकारणं सन्तु, किमिदानीमपौरुषेयतया सिद्धोपस्थायिन्या। ॥ २३६५-२३६७ ॥

अथ मा भूदनित्यत्वप्रसङ्गोऽपौरुषेयत्वकल्पनायाश्च व्यर्थतेति सर्वदैव शक्तो वेदोऽभ्युपगम्यते, तदा पूर्ववद्दोषप्रसङ्ग इति दर्शयति—शक्तश्चेदित्यादि ॥२३६८॥

स्यादेतत्—पुरुषापेक्षायां नापौरुषेयता व्यर्था, [2]यतो[2] यथावस्थित एवार्थः पुरुषैः प्रकाश्यते, नापूर्वः क्रियते। अपूर्वकरणे हि स्वातन्त्र्यमेषामभ्युपगतं स्यात्। ततश्च रागादिभिरुपप्लुता विपरीतार्थां श्रुतिमारचयन्तः केन प्रतिषिध्येरन्। तद-तद् व्याख्यायामपि पुरुषैः क्रियमाणायां दोषजातं समानमिति दर्शयन्नाह—स्वतन्त्रा इत्यादि ॥ २३६९-२३७० ॥

१ पुरुषैरेव—पा०, गा०। २-२ यथावस्थित—पा०, गा०।

न चातीन्द्रियदृक् तेषामिष्ट एकोऽपि मानवः ।
स्वर्गयागादिसम्बन्धज्ञानं नैव ह्यचोदनम् ॥ २३७१ ॥
यस्मादतीन्द्रियार्थानां द्रष्टा साक्षान्न चास्ति वः ।
वचनेन हि नित्येन यः पश्यति स पश्यति ॥ २३७२ ॥
वेदो नरं निराशंसो ब्रूतेऽर्थं न सदा स्वतः ।
अन्धात्तयष्टितुल्यां तु पुंव्याख्यां समपेक्षते ॥ २३७३ ॥
स तया कृष्यमाणश्च कुवर्त्मन्यपि सम्पतेत् ।
ततो नालोकवद् वेदश्चक्षुर्भूतश्च युज्यते ॥ २३७४ ॥

अपि च—न वेदार्थस्यातीन्द्रियार्थस्य कश्चित् स्वातन्त्र्येण विज्ञाता नरोऽभ्युपगतो यो वेदार्थमाख्यास्यति । तथा हि—वेदार्थपरिज्ञानद्वारेणातीन्द्रियार्थदर्शित्वमस्य, न स्वातन्त्र्येण, वेदार्थपरिज्ञानं न च नातीन्द्रियार्थदर्शित्वमन्तरेण—इति व्यक्तमवतरति नितरामितरेतराश्रयत्वमिति दर्शयन्नाह—न चातीन्द्रियदृगित्यादि । अविद्यमाना चोदना अस्येत्यचोदनं ज्ञानम् । चोदनानिरपेक्षमिति यावत् । अत्र कारणमाह—यस्मादिति । एतदपि कथम् ? इत्याह—वचनेनेत्यादि । तदुक्तम्—[ G. 650 ]

"तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टा न विद्यते ।
वचनेन तु नित्येन यः पश्यति स पश्यति ॥" ( तत्त्व० ३१७४ )

इति ॥ २३७२–२३७१ ॥

स्यादेतत्—वेद एव स्वयं पुरुषव्यापारमनपेक्ष्यास्मै पुरुषाय [1]स्वमर्थमावेदयिष्यते, तेनेतरेतराश्रयप्रसङ्गो नावतरति ? इत्याह—वेद इत्यादि । न हि प्रथमे[2] श्रुतोऽसमयज्ञस्य[2] स्वयं स्वमर्थमावेदयते वेदः । किन्नाम कुरुते ? इत्याह—अन्धात्तेत्यादि । अन्धैरात्ता = गृहीता, यष्टिः[3] तया तुल्येति विग्रहः ॥२३७३॥

अपेक्षताम्; को दोषः ? इत्याह—स तयेत्यादि । स इति वेदः । तयेति पुंव्याख्यया । कुवर्त्मन्यपि सम्पतेदिति । विपरीतार्थप्रकाशनात् ।

१. समर्थं०—जै०, पा० । २–२ प्रथमश्रुतो०—पा०, गा० ।
३. पा० पुस्तके नास्ति ।

स्वतन्त्रस्य च विज्ञानजनकत्वे सति स्फुटम् ।
प्रामाण्यमपि नैवास्य सम्भाव्यं पुंव्यपेक्षणात् ॥ २३७५ ॥
यथार्थबोधहेतुत्वात् प्रामाण्यं ह्यवकल्पते ।
पुंव्याख्यापेक्षणे चास्य न साध्वी मानकल्पना ॥ २३७६ ॥
इत्थं मानेऽस्थिते वेदे शिष्याचार्यपरम्परा ।
अनादिः कल्प्यमानाऽपि नादोषत्वाय युज्यते ॥ २३७७ ॥

---

ततश्च यदुक्तम्—

"तस्मादालोकवद्वेदे सर्वलोकैकचक्षुषि ।
नैव विप्रतिपत्तव्यम्" (श्लो० वा०, चो० सू० ९५-९६) इति,
तदनुपपन्नम् ॥ २३७४ ॥

स्वतन्त्रस्येत्यादिना प्रकृतमुपसंहरति । शक्तस्य हि न पुरुषापेक्षया ज्ञानजनकत्वं युक्तमिति प्रतिपादितम् । भवतु नाम पुरुषापेक्षया शक्तस्यापि ज्ञानजनकत्वम्, तथापि पुरुषापेक्षणाज्ज्ञानजनकत्वेऽपि[1], प्रामाण्यमस्य स्फुटं न सम्भाव्यमिति पदार्थयोजना । अपिशब्दो भिन्नक्रमः ज्ञानजनकत्वेऽपीत्यस्यानन्तरं[2] द्रष्टव्यः ॥ २३७५ ॥

अस्यैवार्थं व्यक्तीकुर्वन्नाह – यथार्थबोधेत्यादि । न साध्वी मानकल्पनेति । "स तथा क्रियमाणश्च कुर्वन्नन्यपि सम्भवेत्" ( तत्त्व० २३७४ ) इत्यनेन पूर्वमसाधुत्वस्य प्रतिपादितत्वात् ॥ २३७६ ॥

[ D 651 ] ततश्च, यदुक्तम्—

"प्रमाणेऽव्यवस्थिते वेदे शिष्याचार्यपरम्परा ।
अनादिः कल्प्यमानापि न[3] दोषत्वाय[3] कल्पते" ॥ (तत्त्व० २३४९) इति,
तदयुक्तमिति दर्शयन्नाह—इत्थमित्यादि । अस्थित इत्यकारप्रश्लेषोऽनुद्रष्टव्यः[4] ॥ २३७७ ॥

---

१. पुरुषापेक्षया ज्ञान०—पा०, गा० । २. ज्ञानजनकत्वे पती०—पा०, गा० ।
३-३. निर्दोषत्वाय—पा०, गा० । ४. ०प्रश्लेषो०—गा० ।

यस्मादेकोऽपि तन्मध्ये नैवातीन्द्रियदृङ् मतः ।
अनादिः कल्पिताऽप्येषा तस्मादन्धपरम्परा ॥ २३७८ ॥
अन्धेनान्धः समाकृष्टः सम्यग्वर्त्म प्रपद्यते ।
ध्रुवं नैव तथाप्यस्या विफलाऽनादि कल्पना ॥ २३७९ ॥
परतो वेदतत्त्वज्ञा मनुव्यासादयोऽपि च ।
तैरेवार्थवितो नायमर्थ इत्यत्र न प्रमा ॥ २३८० ॥
सत्यार्थनित्यसम्बन्धमात्रात् प्रामाण्यमस्तु वा ।
अतीन्द्रियं तु तं योगं नैव कश्चिद् व्यवस्यति ॥ २३८१ ॥

---

कथं न युज्यते ? इत्याह—यस्मादेकोऽपीति ॥ २३७८ ॥

यदि नामान्धपरम्परा जाता, ततः किम् ? इत्याह—अन्धेनान्ध इत्यादि । यथोक्तं शाबरे भाष्ये—"नैवञ्जातीयकेष्वर्थेषु पुरुषवचनं प्रामाण्यमुपैति, जात्यन्धानामिव वचनं रूपविशेषेषु" (मी० द०, शा० भा० १.१.२) इति ॥ २३७९ ॥

एवमनादित्वं शिष्यपरम्परया सिद्धमभ्युपगम्य दोषः उक्तः, तदपि न सिद्धमिति दर्शयन्नाह—परत इत्यादि । न प्रमेति अत्यन्तपरोक्षत्वात् ॥ २३८० ॥

स्यादेतत्—नानित्यज्ञानहेतुत्वादपौरुषेयत्वेन प्रामाण्यमिष्टम्, किं तर्हि ? सत्यार्थनित्याच्छब्दार्थसम्बन्धमात्रात् । स[1] चापौरुषेयतायां[1] सत्यां भवतीति तत्राप्यनैकान्तिकमेव । को यत्र नियमे हेतुर्यदपौरुषेयेण सत्यार्थेन भवितव्यमिति ! भवतु नाम, तथापि दोष एवेति दर्शयन्नाह—सत्यार्थेत्यादि[2] । सत्यार्थश्चासौ नित्यसम्बन्धश्चेति विग्रहः । कल्पितो हि नित्यः सम्बन्धः, [G 652] स्वभावार्थप्रतीतिहेतुर्न भवेत् तदा व्यर्थकल्पना[3] । न चान्यत् तस्य रूपम्; अन्यत्रार्थप्रतीतिजनकत्वात् । इयानेव हि सम्बन्धस्य व्यापारो यदर्थप्रतीतिजननम्, तदकुर्वाणः कथं सम्बन्धः स्यात् ! नाप्यसौ सत्यभावेनार्थप्रतीतिहेतुः, किं तर्हि ? ज्ञातः सन्, अन्यथा व्युत्पत्तिरहितस्यापि ततः प्रतीतिः स्यात् । न चासौ ज्ञातुं शक्यते; सम्बन्धिनः स्वर्गादेरतीन्द्रियत्वेन तस्याप्यतीन्द्रियत्वात् । अती-

1-1. न चापौरुषेयतया—पा०, गा० । 2. पा०, गा० पुरुषार्थेति ।
3. स्यार्थं न कल्पना—पा०, गा० ।

अतीन्द्रिया यतस्तेऽर्थास्तत्स्थो योगोऽप्यतीन्द्रियः ।
अनत्यक्षदृशः सर्वे नराश्चैते स्वतस्सदा ॥ २३८२ ॥
'अयं ममार्थसम्बन्धः' इत्याह च न सा श्रुतिः ।
नरक्लृप्तोऽर्थयोगस्तु पौरुषेयान्न भिद्यते ॥ २३८३ ॥
तद्यथा पौरुषेयस्य शङ्क्यते विपरीतता ।
नरैरुत्प्रेक्षितस्यापि सा शङ्क्यं व न किं भवेत् ॥ २३८४ ॥
माने स्थितेऽपि वेदेऽतः शिष्याचार्यपरम्परा ।
अनादिः कल्पिताऽप्येषा सज्ञाताऽन्धपरम्परा ॥ २३८५ ॥

---

मार्थदर्शिनस्तर्हि तं ज्ञास्यन्तीति चेत् ? इत्याह—अनत्यक्षदृश इत्यादि । तदुक्तम्—

"तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टा न विद्यते ।
वचनेन तु नित्येन य. पश्यति स पश्यति ॥" (तत्त्व० ३१७४) इति । अनत्यक्षदृशः = अनतीन्द्रियार्थदर्शिन.[1] ॥ २३८१-२३८२ ॥

श्रुतिरेव स्वयमावेदयिष्यतीति चेद् ? आह—अयं ममेत्यादि । न ह्येते भवन्तो ब्राह्मणा 'ममायमर्थो गृह्यताम्' इत्याहूय प्रवृद्धतरकारुण्य पुण्यैकश्रवणचेता. परहितनिरत. सन् कश्चिदन्य इव ब्राह्मणेभ्य. स्वयं स्वार्थमर्पयति वेदपुरुष. । तर्हि स्वयमेवोत्प्रेक्षिष्यन्ते ? इत्याह—नरक्लृप्त इत्यादि ॥ २३८३ ॥

तमेवामेदं दर्शयति—तद्यथेत्यादि । अपि नाम सङ्कीर्णमर्थं जानीयामिति सङ्कहेतु पुरुषोऽपाकीर्णे.[2] यथा पुरुषै. स्वयं प्रयुक्ताः शब्दा सङ्कीर्यन्ते तथा वैरुत्कल्पितार्था अपीति कोऽत्र विशेष । सेति विपरीतता । शङ्क्येति शङ्कनीया ॥ २३८४ ॥

पूर्वमप्रामाण्याद् वेदस्य शिष्याचार्यपरम्पराकल्पना व्यर्थेति प्रतिपादितम् । इदानीं भवतु नाम नित्यसम्बन्धद्वारेण प्रामाण्यम् , उभयथा शिष्याचार्यपरम्परोपकल्पना व्यर्थेत्युपदर्शयति—माने स्थितेऽपीत्यादि ॥ २३८५ ॥

---

1. अनतीन्द्रिया०—गा०, गा० ।
2. ०ऽपाकीर्णे—पा०, गा० ।

नन्वारेकादिनिर्मुक्ता स्वर्गादौ जायते मतिः ।
अग्निहोत्रादिवचसो निष्कम्प्याध्यक्षबुद्धिवत् ॥ २३८६ ॥
नावलम्बेत तां कुर्वन् कथं वेदः प्रमाणताम् ।
न ह्यतो वचनादर्थं सन्दिग्धं वेत्ति कश्चन ? ॥ २३८७ ॥
नैवं संशयसञ्जातेर्विपरीतान्यवाक्यवत् ।
प्रेक्षावन्तो हि नैतेषां भेदं पश्यन्ति कश्चन ॥ २३८८ ॥
नातीन्द्रिये हि युज्येते सदसत्ताविनिश्चयौ ।

---

यदुक्तम्—'नैरुत्प्रेक्षितस्यापि सा शङ्कैव न किं भवेत्' (तत्त्व० २३८४) इति, अत्र परोऽसम्भवमाशङ्कमानो दर्शयति—नन्वित्यादि । [G 653] आरेकः = संशयः । आदिशब्देन विपर्यासो गृह्यते । यथोक्तं भाष्ये शाबरे—"न च स्वर्गकामो यजेतेत्यतो वचनात् सन्दिग्धमवगम्यते—भवति वा स्वर्गो न वा भवतीति । न च विनिश्चितमवगम्यमानमिदं मिथ्या स्यात् । यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्ययः । न चैष देशान्तरे पुरुषान्तरेऽवस्थान्तरे कालान्तरे विपर्येति । तस्मादवितथः।" (मी० द०, शा० भा० १.१.२) इति । अन्यथा हि प्रत्यक्षं स्फुटत्स्फुलिङ्गप्रकरप्रसरोपरुद्धान्तरालमकृत्यकृशानुराशिमनुभवतोऽपि भक्तः किमिति संशयदोलाविलोलं मनो न भवेत् । ततश्च न किञ्चिदपि ते प्रमाणं स्यादिति परस्याभिप्रायः । प्रयोगः—यः संशयविपर्यासरहितः प्रत्ययः स प्रेक्षावतां प्रमाणव्यवहारविषयः, यथा—वह्न्यभ्रान्तचेतसो दाहपाकाद्यर्थिनस्तन्निश्चयहेतुः प्रत्ययः । संशयविपर्यासरहितश्चाग्निहोत्रादिवाक्योद्भवः प्रत्यय इति स्वभावहेतुः । नावलम्बेतेति । प्रमाणतामित्यनेन सम्बन्धः । तां कुर्वन्निति । मतिम् ॥ २३८६–२३८७ ॥

नैवमित्यादिना प्रतिविधत्ते । यदि तावत् प्रेक्षावतां संशयादिरहितः प्रत्ययो वेदवाक्याद्भवतीति हेत्वर्थः, तदा हेतोरसिद्धता । तथा हि—प्रेक्षावताम् 'अग्निहोत्रात्स्वर्गो न भवति' इत्यतो विपरीतान्यवाक्यादिवाग्निहोत्रात्स्वर्गो भवतीत्यतोऽपि संशयः समान एव; अतीन्द्रियेऽर्थे सदसत्तानिश्चयकारणाभावादर्थसंवादस्योभयत्राप्यनुपलम्भात् । विपरीतान्यवाक्यवदिति । सप्तम्यन्ताद्वतिः । अथापि स्यात्—वेदवाक्यादेव निश्चयो

निश्चयो वेदवाक्याच्चेदन्यादृग् न किमन्यतः ॥ २३८९ ॥
श्रोत्रियाणां तु निष्कम्प्या बुद्धिरेषोपजायते ।
श्रद्धाविवशबुद्धीनां साऽन्येषामन्यतः समा ॥ २३९० ॥
तथा हि सौगतादीनां धीरकम्प्योपजायते ।
अपायदुःखसम्भूतिर्यागात् प्राणिवधान्वितात् ॥ २३९१ ॥
अस्याश्च न धियः काचिद् बाधा सम्प्रति दृश्यते ।
क्वचित् कदाचिच्छङ्का चेद्वेदवाक्येऽपि सा समा ॥ २३९२ ॥
नरेच्छाधीनसंकेतनिरपेक्षो यदि स्वयम्[1] ।
वेदः प्रकाशयेत् स्वार्थं प्रमाणं युज्यते तदा ॥ २३९३ ॥
तदा हि मोहमानादिदोषोपप्लुतबुद्धिभिः ।

---

भवति, तत्किमन्येन कारणेन पर्येषितेन ? इत्यत आह—अन्यादृगित्यादि । वेदार्थविपरीतार्थाध्यवसायी निश्चयः । अन्यत इति पौरुषेयात् । किं न भवति ! भवत्येवेति यावत् । ततश्च सापि प्रमाणं स्यात्; उभयोरपि तदानीं बाधाऽनुपलम्भेनाविशेषात् ॥ २३८८-२३८९ ॥

[ G. 654 ] अथ प्रेक्षावतां श्रोत्रियाणामकम्प्यो जायते प्रत्यय इत्यतो नासिद्धता हेतोरिति चेत् ? जायताम्; तथापि यदि नामासिद्धता न भवेत्, अनैकान्तिकता तु दुर्वारेति दर्शयति—श्रोत्रियाणामित्यादि । सेति अकम्प्या[2] बुद्धिः । अन्येषामिति बौद्धादीनाम् । अन्यत इति "यागात् प्राणिवधाभिलापायदुःखसम्भूतिः" इत्यतो वाक्यात् ।

एतदेव दर्शयति—तथा हीत्यादि । सुबोधम् ॥ २३९०-२३९२ ॥

भूयोऽप्यनैकान्तिकतामपौरुषेयत्वस्य दर्शयति—नरेच्छेत्यादि । इच्छायाः स्वातन्त्र्यात् तदधीनसङ्केतसापेक्षस्य वेदस्य स्वार्थप्रकाशने नेष्टार्थप्रकाशनं स्यात्; नियमाभावात् । यदा तु तन्निरपेक्षो वेदोऽर्थं बोधयेत्, तदा प्रमाणं युज्येत; पुरुषव्याख्यामनादृत्य क्षिप्रतरं स्वार्थप्रतीतिजननात् । अन्यथा व्याख्यायमानस्यापि चक्षुरा-

---

1. स्वयम्—पा०, गा० ।
2. अकम्प्या—पा०, गा० ।

अन्यथाऽऽख्यायमानोऽपि[1] निजमर्थं न मुञ्चति ॥ २३९४ ॥
यस्मात् तद्विषयामेव धियमुत्पादयत्यरम् ।
न त्विष्टं पुरुषैरर्थमपरं द्योतयत्ययम् ॥ २३९५ ॥
नरेच्छायां[2] त्वपेक्षायां[2] पौरुषेयान्न भिद्यते ।
द्योतनं हि तदायत्तं विपर्यस्तापि सा भवेत् ॥ २३९६ ॥
अपि चापौरुषेयस्य यथा प्राकृतमिष्यते ।
सत्यार्थत्वमसत्यत्वमेवमाशङ्कयते न किम् ॥ २३९७ ॥
स्वतः सत्यार्थबोधस्य हेतुत्वात् सत्यतास्य हि ।
एवं मिथ्यात्वबोधेऽपि हेतुत्वं शङ्कयते स्वतः ॥ २३९८ ॥
किञ्च वेदप्रमाणत्वे निर्बन्धो यदि वो ध्रुवम् ।
निर्दोषकर्तृकत्वाद्यो तदा यत्नो विधीयताम् ॥ २३९९ ॥
निर्दोषेण हि कर्त्राऽयं कृतोऽदोषैः प्रकाशकैः ।
द्योत्यमानश्च[3] लोकेऽस्मिन् भूतार्थज्ञानसाधनः ॥ २४०० ॥

---

दिवत् प्रकृत्यैव स्वार्थप्रकाशनापरित्यागादिति समुदायार्थः । आख्यायमान इति । व्याख्यायमानः । अरमिति क्षिप्रम् । झगितीति यावत् । विपर्यस्तापि सेति नरेच्छा ॥ २३९३–२३९६ ॥

[ G. 655 ] भवतु नाम स्वाभाविकोऽर्थसम्बन्धोऽपौरुषेयत्वेन वेदस्य, तथापि नेष्टसिद्धिरित्यनैकान्तिकतामेव समर्थयमान आह—अपि चेत्यादि । प्रकृतौ भवं प्राकृतम् = स्वाभाविकमित्यर्थः ॥ २३९७–२३९८ ॥

प्रमाणभूतपुरुषकृतत्वमेव प्रामाण्यकारणमास्थीयतां वेदस्य, किं नास्य-संसूचकेनाकृतकत्वेनेति दर्शयन्नाह—किञ्चेत्यादि । निर्दोषकर्तृकत्वादावित्यादिशब्देन व्याख्यातृत्वं गृह्यते ॥ २३९९–२४०० ॥

---

१. ०मानो हि—पा० ।
२–२. नरेच्छायास्त्व०—पा०, गा० ।
३. द्योतमानश्च—पा०, गा० ।

एवं हि नैव धूमोऽग्नेर्यथावद्योतके[1] भवेत् ॥ २४०४ ॥
एवं चापौरुषेयोऽपि तत्त्वज्ञाननिबन्धनम्[2] ।
वेदः सन्तिष्ठते नैव तद् वृथैवास्य कल्पना ॥ २४०५ ॥

तदा न कश्चिदनैकान्तिको हेतुः स्यात्, इच्छाप्रतिबद्धत्वेन सर्वत्र विशेषणस्य सौकर्यात् । न चाकृतकत्वं विशेषणं वेदस्य मिथ्याज्ञानहेतुतां निवर्तयति । तथा हि—यदि कृतकता मिथ्याज्ञानहेतुत्वेन सिद्धा स्यात्, तदा सा निवर्त्त-माना तामपि निवर्त्तयेत् ।

कदाचित् परो ब्रूयात्—सिद्धैवेति ? आह—एवं हीत्यादि । यदि कृतकता मिथ्याज्ञाननिबन्धनम्, तदा सम्यग्ज्ञानस्याकृतकता हेतुरिति प्राप्तम्[3], सम्यग् मिथ्याज्ञानयोः परस्परविरुद्धयोरेककारणानुपपत्तेः । न हि वह्नेरुष्णस्पर्शहेतोः शीतहेतुता युक्ता । ततश्च कृतकत्वाद् धूमो वह्नौ यथावत्[4] प्रतीतिहेतुर्न स्यात् ॥ २४०४ ॥

अथापि स्यात्, नैवमवधारितम्—मिथ्याज्ञानस्यैव कृतकता हेतुर्नान्यस्येति, किं तर्हि ? मिथ्याज्ञाने कृतकतैव निबन्धनं नान्यस्त्वियन्यहेतुकताऽस्य निषिध्यते । न तु सम्यक् ज्ञानस्य कृतकहेतुकत्वनिषेध । न च सर्वस्य कृतकस्याविशेषेण मिथ्याज्ञानहेतुत्वमिष्टम् । येन परस्परविरुद्धत्वात्सम्यङ्मिथ्याज्ञानयोः सामर्थ्यात् कृतकविपरीतस्य सम्यग्ज्ञानहेतुत्वं स्यात् । किन्तु कृतकस्य बहुभिन्नत्वात् किञ्चिदेव मिथ्याज्ञानकारणम्, यथा—कामलादि । किञ्चित् सम्यग्ज्ञानकारणम्, यथा—अनुपहते-न्द्रियादिकलापः । अन्यथा हि शीतस्पर्शं प्रति हिमादेः कृतकस्य कस्यचित् कारण-स्योपलम्भात् सामर्थ्याच्छीतविरुद्धोष्णस्पर्शं प्रत्यकृतको हेतुः कल्पनीयः स्यात् । न चैवम् । तस्मात् कृतकस्य सम्यग्ज्ञानं प्रति हेतुत्वानिषेधाद्भवत्येव धूमः सम्यग्-ज्ञाननिबन्धनमित्येतदाशङ्क्याह—एवं चापौरुषेयोऽपीत्यादि । [G 657]

१. द्योतक—पा०, गा० ।
२.……निबन्धनम्—पा०, सम्यग्ज्ञाने निबन्धनम्—गा० ।
३. प्राप्त —पा०, गा० ।
४. यथा चेत्—चै० ।

[1]अनश्चापौरुषेयत्वव्यक्तिनित्यत्वसाधनम् ।

यदि हि सम्यङ्मिथ्यात्वयोरुभयोरपि कृतकता निबन्धनम्, सा निवर्तमाना मिथ्यात्वमिव सम्यग्ज्ञाने निवर्त्तयतीति न वेदस्याकृतकत्वेन सम्यग्ज्ञानहेतुत्वमवतिष्ठेत, तस्य तन्निबन्धनत्वात् । ततश्च व्यर्थं विशेषणमित्यनैकान्तिकत्वैव हेतो ।

अथापि स्यात्—नाकृतकत्वेनेत्यनेन नान्वयव्यतिरेकी यथोक्तो हेतुः समुचितः, किं तर्हि ? व्यतिरेकी प्रयोग एवायम् । [2]तथा हि—हेतुविपरीतेन कृतकत्वेन साध्यविपरीतं मिथ्यात्वं व्याप्तम्, पौरुषेयेष्वेव मिथ्यात्वस्य दर्शनात् । ततश्च यत्र मिथ्यात्वव्यापकविरुद्धमकृतकत्वं सन्निपीयते, तत्र विरोधेनाकृतकत्वस्य मिथ्यात्वव्यापकस्य निवृत्तौ व्याप्यस्यापि मिथ्यात्वस्य सामर्थ्यान्निवृत्तिसिद्धिरित्यकृतकं सत्यार्थमिति सामर्थ्याद् भवेत् विनाप्यन्वयेनेति व्यर्थमन्वयप्रदर्शनम् । सत्यमेवमेतत्, यदि विपर्ययस्य यो व्याप्यव्यापकभावः सिद्ध्येत् । स तु न सिद्धः । तथा हि— साध्यविपक्षे हेतौ यदि बाधकं प्रमाणं स्यात्, तदा भवेद् विपक्षयोर्व्याप्तिः, तच्च नास्ति । न चानुपलम्भमात्रात्सम्भावसिद्धिः, व्यभिचारात् ।

स्यादेतत्—अकृतकविरुद्धे कृतके मिथ्यात्वस्य दर्शनात् सामर्थ्यादकृतके तस्याभावः सिद्ध्यतीति । तदेतदसम्यक्, न ह्येकत्र दृष्टावन्यत्राभावनिश्चयः शक्यते कर्तुम्, एकस्यापि हि विरुद्धव्यापकदर्शनात् । तथा हि— एकमनित्यत्वं विरुद्धौ प्रयत्नानन्तरीयकेतरौ व्याप्नुवद् दृश्यते । न ह्यनित्यत्वं प्रयत्नानन्तरीयके दृष्टमित्यप्रयत्नानन्तरीयके तस्याभावः स्यात् । किञ्च—तत्र दृष्टमित्येतावन्मात्रेण यदि मिथ्यात्वं कृतकत्वेन व्याप्येत, सत्यत्वमपि पौरुषेये क्वचिद् दृष्टमिति तदपि तेन व्याप्येत, ततश्च कृतकत्वनिवृत्तौ मिथ्यात्ववत् सत्यत्वस्यापि निवृत्तेरपौरुषेयत्वात् सत्यार्थं न सिद्ध्येदित्यलम् ॥ २८०५ ॥

एवं तावन्मिथ्यात्वहेतुदोषसंसर्गरहितमिति यस्य हेतो 'नवाऽस्तवया' इत्यनेना सिद्धस्याकृतकत्वस्य वा, तदुपलक्षितस्यापौरुषेयत्वस्य वा स्वशब्देनोपात्तस्य विस्तरेणानैकान्तिकता प्रतिपाद्य असिद्धता[3] प्रतिपिपादयिषुरुपसंहरन्नाह—अतश्चेत्यादि[4] ।

1 ततश्चा०—पा०, गा० ।　　2 यथा—गा० ।

3 प्रसिद्धता—गा० ।　　4. ततश्चेत्यादि—पा०, गा० ।

नित्यशब्दार्थयोगश्च व्यर्थ[1] एवोपवर्णितः[1] ॥ २४०६ ॥
तस्मिन् सत्यपि नैवास्य यथार्थज्ञानहेतुता ।
उपगम्यत इत्युक्तं व्यासतः समनन्तरम् ॥ २४०७ ॥
तेनैवैतत्प्रतिक्षेपे नास्माकं गुरुरादरः[2] ।
अप्रस्तुतोपयोगस्य[3] को हि कुर्यान्निवेदनम् ! ॥ २४०८ ॥
यथार्थज्ञानहेतुत्वं श्रुतेः प्रकृतमत्र हि ।
न निराकरणेऽप्येतत्सिद्धयतीति[4] च साधितम् ॥ २४०९ ॥
आहोपुरुषिकयाऽप्यत्र[5] संक्षिप्तं किञ्चिदुच्यते ।
विसरन्ति यथाऽनेन मतयः[6] सूक्ष्मधीदृशाम् ॥ २४१० ॥
प्रमाणानां निवृत्त्याऽपि न प्रमेयं निवर्त्तते ।

[G 658] अपौरुषेयत्वं च व्यक्तिश्च नित्यत्वं चेत्यपौरुषेयत्वव्यक्तिनित्यत्वानि, तेषां साधनमिति समासः । साध्यतेऽनेनेति साधनम् = हेतुः । तच्च नानाविधं पूर्वमुक्तम् । तस्मिन्निति अपौरुषेयत्वादौ । अस्येति वेदस्य । उपगम्यत इति उपपद्यते । व्यासत इति विस्तरेण । एतत्प्रतिक्षेप इति अपौरुषेयत्वादिदूषणे । सत्यपि तस्मिन्नाभिमतार्थसिद्धिरिति प्रतिपादितत्वात् क्रियमाणे तद्दूषणे प्रकृतानुपयोगित्वं स्यात् ॥ २४०६-२४०८ ॥

एतदेव दर्शयति—यथार्थेत्यादि ॥ २४०९ ॥

आहोपुरुषिकयेति । अहोपुरुष इति यस्याभिमानोऽस्ति सोऽहोपुरुषस्तद्भाव आहोपुरुषिका, मनोज्ञादित्वाद् (पा० सू० ५.१.१३३) वुञ्, अभिमान एवोच्यते । धीरेव दृक्साधर्म्याद् दृक् सा सूक्ष्मा धीदृक् येषां ते तथोक्ता ॥२४१०॥

यदुक्तम्—"स पञ्चभिरगम्यत्वात्" (तत्त्व० २०९४) इत्यादि, तत्राह–प्रमाणानामित्यादि । अनेनासिद्धता मौले हेतौ प्रतिपादयति । व्यापको

१-१. व्यर्थ एत०—पा०, गा० । २. गुरु……—पा० ।
३. प्रस्तुतो०—पा० । ४ नराकरणे०—पा०, गा० ।
५. आ…िका यात्र–पा०, आहोपुरुषिका यात्र—गा० ।
६. गतयः—पा०, गा० ।

यस्माद् व्यापकहेतुत्वं तेषां तत्र न विद्यते ॥ २४११ ॥
तत् पञ्चभिरगम्योऽपि नाभावो[1] नैव गम्यते[1] ।
कर्त्ता श्रुतेरविज्ञातकर्तृकाख्यायिकादिवत् ॥ २४१२ ॥
अथापि सार्थकत्वेन विभक्तार्थतयाऽपि वा ।
तेषां कर्त्ताऽनुमीयेत, श्रुतेरपि तथा न किम् ? ॥ २४१३ ॥

हि स्वभावं कारणं वा निवर्त्तमानं व्याप्यं कार्यं वा निवर्त्तयति, तादात्म्यतदुत्पत्तिभ्यां तयोस्तत्र प्रतिबद्धत्वात् । तदभावेऽपि भवतः कार्यव्याप्यत्वानुपपत्तेः । न तु तेषां प्रमाणानां तत्र सर्वस्मिन् वस्तुनि व्यापकहेतुत्वं सम्भवतः । तथा हि—देशकालस्वभावात्[2] विप्रकृष्टस्य वस्तुनो विनापि प्रमाणेन सम्भवान्न तेन व्याप्तिः । नापि कारणं प्रमाणमतः एव, प्रमाणस्यैव च प्रमेयकार्यत्वात् । न च कार्यं निवर्त्तमानं कारणमात्रं निवर्त्तयति, व्यभिचारदर्शनात् । न चाहेत्वव्यापकयोर्निवर्त्तकत्वं[3] युक्तम्, अतिप्रसङ्गात् । तस्मात् प्रमाणमात्राभावो व्यभिचारी प्रमेयमात्राभावे साध्य इति स्थितम् ॥ २४११ ॥

[ G 639 ] तामेव व्यभिचारितां विपक्षे सम्भवोपदर्शनेन व्यक्तीकुर्वन्नाह—तत् पञ्चभिरित्यादि । तदिति तस्मात् । पञ्चभिरगम्योऽपीति कर्त्ता श्रुतेरिति व्यवहितेन सम्बन्धः । अविज्ञातः कर्त्ता येषामाख्यायिकादीनां ते तथोक्ताः । पश्चादाख्यायिकादिशब्देन कर्मधारयः, ततः षष्ठ्यन्तात् वतिः कार्यः ॥ २४१२ ॥

अथापीत्यादिना हेतोर्व्यभिचारविपर्यासिद्धिमाशङ्कते । तेषामिति आख्यायिकादीनाम् । श्रुतेरपि तथा न किमिति । वेदस्यापि तथैव सार्थकत्वविभक्तार्थत्वाभ्यां किं न कर्त्ताऽनुमीयते, विशेषाभावात् । ततश्च प्रमाणाभावोऽसिद्धः ॥ २४१३ ॥

किञ्च—सर्वसत्त्वप्रमाणनिवृत्तिः, [4]स्वस्य[5] प्रमाणनिवृत्तिर्वा—इति पक्षद्वयम् । तत्राद्ये पक्षे सन्दिग्धासिद्धता हेतोः, द्वितीयेऽप्यनैकान्तिकतेति दर्शयन्नाह—

1 नाभावो॰—पा॰, नाभावोऽवगा॰—गा॰ ।
2 देशकालस्वभावा—पा॰ । 3 ॰निवर्त्तकत्व—गा॰ ।
4–5. ॰सत्त्वप्रमाणनिवृत्तिरिति—दे॰, पा॰ ।

सर्वसत्त्वैरगम्यत्वं सन्दिग्धं तु कदाचन ।
केनचित् कोऽपि मानेन वेत्तीत्यपि हि शङ्क्यते ॥ २४१४ ॥
येन[1] त्रिभुवनान्तस्थाः सर्वे प्राणभृतः स्फुटम् ।
सर्वात्मनाऽपरिच्छिन्नाः सुनिश्चेतुमिमं[2] क्षमाः[2]॥ २४१५ ॥
स्वयं स्वगम्यमानत्वं व्यभिचारि तथा हि ये[3] ।
पुरुषान्तरसङ्कल्पास्तत्भावो[4] न निश्चितः ॥ २४१६ ॥
अध्येतारश्च वेदानां कर्तारोऽध्यक्षतो गताः[5] ।
न हि ते व्यञ्जका युक्ता नित्यानां व्यत्ययसम्भवात् ॥ २४१७ ॥

सर्वसत्त्वैरित्यादि । इममिति । सर्वसत्त्वैर्न[6] वेदस्य[6] कर्ता क्षमत इत्येवम् । तथा हीत्यादिना पुरुषान्तरभाविभिरश्वमादिसङ्कल्पैर्व्यभिचारितामेव समर्थयते ॥ २४१४–२४१६ ॥

यदुक्तम्—"कर्ता तावददृष्टः" (तत्त्व० २०८७) इति, अस्यासिद्धतां प्रतिपादयन्नाह—अध्येतारश्चेत्यादि । [G 660] यदि यः कश्चित् कर्ता न दृष्ट इत्यभ्युपगम्यते, तदाऽध्येतृणा दृष्टत्वात् स्फुटतरमवतरत्यसिद्धता । अथादिकर्ता न दृष्ट इतीष्टम्, तदापि सन्दिग्धासिद्धतैव, कदाचित् केनचिद् दृष्टोऽभूदिति सम्भाव्यमानत्वात् । अथापि स्यादध्येतारो न कर्तारः सिद्धाः, किं तर्हि? व्यञ्जकाः! इत्याह—न हीत्यादि । त इति अध्येतारः । यथा च नित्यानां व्यक्तेरसम्भवः, तथा पश्चात् प्रतिपादयिष्यति । अनित्यस्यापि घटादेः कथं व्यञ्जक इति चेत्? सत्यम्; तत्रापि न कश्चिद्व्यञ्जकः सम्भवति । कथं तर्हि दीपादयो व्यञ्जकत्वेन प्रतीता इति चेत्? न, यो हि विज्ञानजनने योग्यं घटं जनयन् प्रदीपादिर्जनक एव । विशिष्टजनकस्वभावस्यापनाय लोके व्यञ्जक इति प्रतीतः[7] । न तु तथा वेदस्य कश्चिद् व्यञ्जकः सम्भवति, अव्यक्तानुत्पन्नपूर्वापरस्वभावत्वात् तस्य ॥ २४१७ ॥

१ यत—गा० । २–२. स्वनिश्चेतुमिमं क्षम —जै० ।
३. ते—पा०, गा० । ४ ०सङ्कल्पास्त०—जै० ।
५. मता.—पा०, गा० । ६–६. ०र्निवेदकस्य—जै० ।
७. प्रतीयते—पा०, गा० ।

उपलम्भस्वभावानां तद्व्यापारे समुद्भवः ।
तेषां प्रागपि सद्भावे उपलब्धिः प्रसज्यते ॥ २४१८ ॥
तत्कार्यव्यवहारादियोग्यो वेदोऽवसीयते ।
तद्व्यापारेऽस्य सद्भावाद् बीजादेरङ्कुरादिवत् ॥ २४१९ ॥
व्यञ्जनक्रमवत्त्वाच्च नाटकाख्यायिकादिवत् ।
वेदानां पौरुषेयत्वमनुमाऽप्यवगच्छति ॥ २४२० ॥
अन्यथा क्रमवत्वं नित्यत्वाद् व्यापितश्च न ।
नाभिव्यक्तिक्रमश्चास्ति नित्यत्वे व्यक्त्ययोगतः ॥ २४२१ ॥

---

भवतु नाम नित्यस्य व्यञ्जकः, तथाप्यसौ कारकान्न विशिष्यत इति दर्शयन्नाह—उपलम्भेत्यादि । न ह्यकिञ्चित्करो व्यञ्जको युक्तः; अतिप्रसङ्गात् । किञ्चित्करत्वे जनकत्वमेवास्याभ्युपगतं स्यात्; जन्यमानस्य विशेषस्य स्वभावान्तरोत्पत्तिलक्षणत्वात् । उपलम्भस्वभावानामिति वेदानाम् । अथापि स्यात्—प्रागप्युपलम्भस्वभावा वेदाः स्थिता एव, तत् कथं तद्व्यापारेण सम्भवस्तेषाम् ? इत्याह—तेषामित्यादि । तेषामिति उपलम्भस्वभावानां वेदानाम् ॥ २४१८ ॥

तत्कार्येत्यादिना प्रमाणयति । प्रयोगः—यो यद्व्यापारे सति भवति स तत्कार्यव्यवहारादियोग्यः, यथा बीजादिव्यापारे सति भवन्नङ्कुरादिस्तत्कार्यम् । अध्येतृव्यापारे सति भवन्नुपलम्भस्वभावो वेद इति स्वभावहेतुः । हानोपादानलक्षणमनुष्ठानम् = व्यवहारः । आदिशब्देन ज्ञानाभिधानपरिग्रहः । नासिद्धो हेतुः; प्रागप्युपलब्धिप्रसङ्गात् । नाप्यनैकान्तिकः; कार्यव्यवहारस्य निमित्तान्तराभावात् ॥ २४१९ ॥

[G. 661] यदुक्तम् "अदृष्टपूर्वसम्बन्ध" (तत्त्व० २०८७) इत्यादि, तत्राह—व्यञ्जनेत्यादि । प्रयोगः—यद्व्यञ्जनक्रमवत् तत् पौरुषेयम्, यथा नाटकाख्यायिकादि । व्यञ्जनक्रमवांश्च वेद इति स्वभावहेतुः । नासिद्धो हेतुः; क्रमेणैव वर्णानां प्रतिभासनात् ॥ २४२० ॥

नाप्यनैकान्तिक इति दर्शयन्नाह—अन्यथेत्यादि । अन्यथेति । यदि पौरुषेयत्वं न स्यात्, अपि तु नित्यत्वं स्थितं च स्यात्, तदा क्रमो न स्यात् ।

आगमस्योपमायाश्च सार्थापत्तेः प्रमाणता ।
निषिद्धा[1] प्राक् ततस्तासामुपन्यासो न युज्यते ॥ २४२२ ॥
अप्रामाण्यनिवृत्त्यर्था वेदस्यापौरुषेयता ।
येष्टा सापि च वस्तुत्वात् साधनीयैव साधनैः ॥ २४२३ ॥
श्रुतेः स्वतन्त्रता[2] हि[2] पुंव्यापारानपेक्षणात् ।
सा च वस्तुगतो धर्मो वस्त्वात्मा वा तथाविधः ॥ २४२४ ॥

तथा हि—न तावद् बीजाङ्कुरलतादिवत् कालकृतः क्रमो युज्यते; नित्यत्वेन सर्वेषां समकालत्वात् । नापि पिपीलिकादिपङ्क्तिवद् देशकृतः; व्याप्तित्वेन सर्वेषामेकत्रमो-देशावस्थानात् । नाप्यभिव्यक्तिकृतः; अनाधेयातिशयत्वेन नित्यस्य व्यक्तेर-योगात् ॥ २४२१ ॥

यदुक्तम्—"आगमोऽपि न तत्सिद्ध्यै कृतकाकृतकोऽस्ति नः" ( तत्त्व० २०८८ ) इत्यादि, अत्राह—आगमस्येत्यादि । निषिद्धेति प्रमाणपरीक्षायाम् । तासामिति आगमोपमानार्थापत्तीनाम् ॥ २४२२ ॥

यदुक्तम्—"अप्रामाण्यनिवृत्त्यर्था" (तत्त्व० २०९५) इत्यादि, अत्राह—अप्रामाण्येत्यादि ॥ २४२३ ॥

कथं वस्तुत्वं तस्याः ? इत्याह—श्रुतेरित्यादि । अपौरुषेयतेत्यनेन श्रुतेः स्वतन्त्रताऽभिधीयते पुरुषव्यापारनिरपेक्षा; तत एव [ G 662 ] श्रुतिः प्रमाण-मित्यभिसम्बन्धेन प्रयोगात् । अन्यथा हि कोऽतिशयः पौरुषेयत्वनिवृत्तिमात्रे प्रति-पादिते प्रतिपादितः स्यात् ? सा चापौरुषेयता वस्तुधर्मो येषां च[3] धर्मधर्मिभेदः पारमार्थिकः । परमार्थतस्तु स्वभाव एव वस्तुनो भेदान्तरप्रतिक्षेपजिज्ञासायां तथो-च्यत इति दर्शयति—वस्त्वात्मा वेति । तथाविध इति स्वतन्त्रः ॥२४२४॥

यदुक्तम्—"भावपक्षप्रसिद्ध्यर्थम्" (तत्त्व० २०९९) इत्यादि, तत्राह—

१-१. निषिद्धा०—पा०, गा० । प्रतिषिद्धा तत०—पाठा० । एवमेव पञ्जिकायामपि ।
२-२. स्वतन्त्रतेत्यादि—पा०; स्वतन्त्रतेष्टा हि—गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।

भावपक्षप्रसिद्धचर्थमुच्यते यच्च साधनम् ।
निराकृतेऽपि ते तस्मिन्नाभाव सिद्धचति स्वयम् ॥ २४२५ ॥
तद्भावसाधनेऽप्यस्ते न स्यात् तद्भावनिश्चय ।
तद्भावविनिवृत्तेस्तु तन्मानान्नास्ति निश्चय ॥ २४२६ ॥
निवृत्तावपि मानानामर्थाभावाप्रसिद्धित ।
तेनैतावद् भवेन्नास्ति पक्षसिद्धिर्द्वयोरपि ॥ २४२७ ॥
नामूर्त्तत्वाद् यथा शब्द सुखादौ[1] व्यभिचारत ।
इत्युक्तेऽपि न शब्दस्य विनाशित्व प्रसिद्धयति ॥ २४२८ ॥
तत् पूर्वापरयोः कोऽन्योर्यदुक्त साधन परं ।

---

भावपक्षेत्यादि । यस्य हि वस्तुनो निश्चयाय यत्[2] साधनमुपादीयते तस्मिन्निराकृते तत्र वस्तुनि ततो निश्चयो न भवतीत्येतावन्मात्र स्यात्, न वस्तुनोऽपि निवृत्ति । यत प्रमाणनिवृत्तावपि प्रमेयस्य न निवृत्तिरिति प्रतिपादितम्, तस्य हेतुत्व व्यापकत्वविरहात् । अस्त इति क्षिप्ते । एतावत् तु भवतु युक्तम्—द्वयोरपि पक्षसिद्धिर्नास्तीति । इतिशब्दोऽध्याहार्य, च नास्तीत्यस्यानन्तर द्रष्टव्य ॥ २४२५–२४२७ ॥

एतदेवोदाहरणेन द्रढयन्नाह—नामूर्त्तत्वादिति । यथा हि नित्यत्वादिना शब्दस्य वस्तुभूत नित्यत्व सिसाधयिषता—'नित्य शब्द, अमूर्त्तत्वादाकाशवत्' इति प्रयोगे कृते, प्रतिवादिना—'नामूर्त्तत्वान्नित्य शब्दो युक्त सुखादिभिरनैकान्तात्' इत्येव वस्तुगतनित्यत्वे साधने निराकृतेऽपि न हि शब्दस्यानित्यत्व सिद्धयति, तथेहापीति शेष । यथेति भिन्नक्रम उक्तेऽपीत्यस्यानन्तर द्रष्टव्य । शब्द इत्यस्यानन्तरम् 'नित्य सिद्धयति' इत्येतदध्याहार्यम् । एतद्द्वयप्रयोगो भीमादिवद् द्रष्टव्य ॥ २४२८ ॥

"यत्[3] पूर्वापरयो" ( तत्त्व० २१०० ) इत्यादावाह—तत् पूर्वापरयो-

---

१ सुखात्—जै० । २ पा०, गा० पुस्तकयोर्नास्ति ।
३ यत्—पा०, गा० ।

तन्निराकरणेऽप्येतेऽकृतार्था वेदवादिनः ॥ २४२९ ॥
अकृतत्वाविनाशाभ्यां नित्यत्वं चेद् विवक्षितम् ।
निषेधमात्ररूपाभ्यां निरुपाख्येऽपि तत्समम् ॥ २४३० ॥
अतो गगनराजीवनित्यताऽस्ति न वास्तवी ।
यथा तथैव वेदेऽपि तत्प्रामाण्यं न सिद्धयति ॥ २४३१ ॥
कृतकत्वविनाशित्वनिषेधोऽपि न सिद्धयति ।
साधनेऽस्त इति प्रोक्तं तन्नित्यत्वं न सिद्धयति ॥ २४३२ ॥*
पर्युदासात्मकाभ्यां चेत्ताभ्यां नित्यत्वमिष्यते ।
तौ यद्भावात्मकत्वेन व्यपेक्षेते स्वसाधनम् ॥ २४३३ ॥
नित्यस्यं वस्तुरूपं यत्तदसाधयतां न तत् ।
स्वयं भवति तत्सिद्धिः पूर्वपक्षद्वये हते ॥ २४३४ ॥

---

रित्यादि। [ G. 663 ] तदिति तस्मात्। अकृतार्था इति स्वपक्षासिद्धेः ॥ २४२९ ॥

यदुक्तम्—"अकृतत्वाविनाशाभ्या[1] नित्यत्वं हि विवक्षितम्" ( तत्त्व० २१०४ ) इत्यादि, तत्राह—अकृतत्वेत्यादि[2]। अत्र द्वयी कल्पना- किं प्रसज्य-प्रतिषेधरूपाभ्यामकृतकत्वाविनाशाभ्यां नित्यत्वमिष्टम्, पर्युदासरूपाभ्यां वा। तत्राद्ये पक्षे गगनपद्मादिनाऽनैकान्ताद् वेदस्य न वस्तुभूतनित्यत्वसिद्धिः। यथा हि आकाशकुशेशयस्य कृतकत्वविनाशित्वनिषेधेऽपि न वस्तुभूतनित्यत्वसिद्धिः, तथा वेदेऽपीत्यनैकान्तिकता हेतोः। ततश्चाकाशकुसुमवदेव प्रामाण्यमपि[3] न स्यात् ॥ २४३०-२४३१ ॥

असिद्धतामपि दर्शयन्नाह—कृतकत्वेत्यादि। अस्त इति दूषिते। तदिति तस्मात् ॥ २४३२ ॥

अथ द्वितीयः पक्षः, न तर्हि वक्तव्यमेतत्—"तौ चाभावात्मकत्वेन नापेक्षेते स्वसाधनम्" ( तत्त्व० २१०४ ) इति। उद्दर्शयति—पर्युदासात्मकाभ्या-

---

* जै० पुस्तके द्विरावृत्तेयं कारिकेति ध्येयम्। १. अकृतकत्वा०—जै०।
२. अकृतकत्वेत्यादि—जै०। ३. प्रामाण्यमिति—जै०।

### वेदप्रामाण्यसाधननिरसनम्

विनिश्चितत्रिरूपं च साधनं यत् प्रकाशितम् ।
निषेधः शक्यते तस्य त्वत्पित्रापि न जातुचित् ॥ २४३५ ॥
न हि शीर्यत इत्युक्तो वेदे यः पुरुषोऽस्य च ।
बाधाऽनुमानतः स्पष्टा नैरात्म्ये प्रतिपादिता ॥ २४३६ ॥
जात्याद्यस्यदपि प्रोक्तं बाधितं तत्र साधितम् ।
ज्ञापितप्रतिबन्धा च साऽनुमा प्राक् प्रबाधिका ॥ २४३७ ॥

---

मित्यादि । सुबोधम् ॥ २२३३-२४३४ ॥

यदुक्तम्—"वेदवाक्यार्थमिथ्यात्वं यो वदत्यनुमानतः" (तत्त्व० २१०५) इत्यादि, तत्राह—विनिश्चितत्रिरूपमित्यादि । [ G 66+ ] प्रकाशितमिति । अनुमानपरीक्षायां स्वभावकार्यानुपलम्भलिङ्गलक्षणम् । तत्र शक्यते प्रतिषेद्धुम्; वस्तुप्रतिबद्धत्वादस्य । न च वस्तुन स्वभावान्यथात्वं केनचित् क्रियेत; स्वभावान्तरोत्पत्तिलक्षणत्वात् तस्य । न च स्वभावान्तरकरणे तस्य किञ्चित् कृतं भवति; अतिप्रसङ्गात् । तस्माद् यत् प्रमाणसिद्धवस्तु, न तस्य केनचिद् बाधा; अन्यथा हि प्रमाणलक्षणोपपन्नस्य बाधाया तल्लक्षणमेव दूषितं स्यादिति सर्वत्रानाश्वासात् क्वचिद् तत् प्रमाणं स्यात् ॥ २४३५ ॥

एतदेव दर्शयति—न हि शीर्यत इत्यादि । यथोक्तं वेदे "स एवायमात्मा" इति प्रकृत्यामनन्ति—"अशीर्यो न हि शीर्यते" (बृ० उ० ४.५.१५) इति । पुनश्चोक्तम्—"अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा" (बृ० उ० ४.५.१५) इति । न शीर्यत इत्यशीर्यो नित्य इत्यर्थः । अरे इत्यामन्त्रणपदम् । जात्यादीत्यादिशब्देन गुणद्रव्यकर्मादिपरिग्रहः । तच्च जात्यादि यथा प्रमाणबाधितम्, तथा[1] षट्पदार्थपरीक्षायां साधितम् । या चात्मनो बाधिकाऽनुमा, साऽपि ज्ञापितप्रतिबन्धा नैरात्म्याधिकारे ॥ २४३६-२४३७ ॥

ननु च वेदे प्रमीयमाण[2] वक्त्रमनुमया[3] बाध्यते, अथ प्रमाणमपि बाध्येत,

---

१ तथ—पा०, गा० । २. प्रमियमाण—जै० ।
३. वक्त्रमनु मया—गा० ।

तस्या वस्तुनिबद्धायाः को बाधां मंस्यते जडः ।
शब्दमात्रेण तुच्छेन तद्भाविन्याऽथ वा धिया ॥ २४३८ ॥
पुंवाक्यादपि विज्ञानं यत् प्रवृत्तमतीन्द्रिये ।
तस्याप्यध्यक्षतुल्यत्वं कस्मादभिमतं न वः ॥ २४३९ ॥
दृष्टान्तनिरपेक्षत्वाद् दोषाभावोऽप्यदृष्टितः ।
तस्याप्यस्त्येव बाधा चेच्छङ्कयतेऽस्य नराश्रयात् ॥ २४४० ॥
यद्येवं वैदिकेऽप्येषा न शङ्का विनिवर्त्तते ।
मिथ्यावबोधहेतुत्वं तस्य हि प्राकृतं भवेत् ॥ २४४१ ॥
ममाप्रमाणमित्येवं शब्दोऽर्थं बोधयन्नपि ।
नारोऽसौ द्वेषमात्रेण शक्यो वक्तुं न साधुना ॥ २४४२ ॥

---

अनुमाऽपि कस्मात् तेन न बाध्यते ? इत्याशङ्कयाह— तस्या इत्यादि । तस्या इति अनुमायाः । शब्दस्येच्छामात्रनिबन्धनत्वान्न प्रमेये वस्तुनि प्रतिबन्धोऽस्तीति न स तत्र प्रमाणम् । अनुमा तु तादात्म्यतदुत्पत्तिप्रतिबद्धलिङ्गबलेनोत्पद्यमाना [redacted] वस्तुनि प्रतिबद्धेति सैव प्रमाणम्, अतो बाधिका । तद्भाविन्येति शब्दभाविन्या ॥ २४३८ ॥

अथाप्रतिबद्धोऽपि वस्तुनि शब्दः प्रमाणं स्यात्, तदाऽतिप्रसङ्गः स्यादित्यादर्शयति—पुंवाक्यादपीति । [ G 665 ] 'अग्निहोत्रात् स्वर्गो न भवति' इत्यस्यापि वाक्यस्य किं [redacted] प्रामाण्यं स्यात्; उभयत्राप्रतिबद्धत्वेनाविशेषात् ॥ २४३९ ॥

तमेवाविशेषं दर्शयन्नाह—दृष्टान्तेत्यादि । अथापि स्यात्— यदि नाम तदानीं दोषो नोपलभ्येत, तथापि पुरुषाश्रयत्वेन सम्भाव्यत इति ? एतद् वेदेऽपि समानम् । यथा हि तस्य प्राकृतं सत्यार्थत्वम्, तथा मिथ्यार्थत्वमपि सम्भाव्येतेति न कश्चिद्विशेषः ॥ २४४०-२४४१ ॥

यदुक्तम्—"ममाप्रमाणम्" ( तत्त्व० २११० ) इत्यादि, तदेतत्पौरुषेयेऽपि 'अग्निहोत्रात्स्वर्गो न भवति' इत्यादौ वाक्ये शक्यमेव वक्तुमित्यादर्शयति— ममाप्रमाणमित्यादि । 'अग्निहोत्रात् स्वर्गो न भवति'—इत्ययं नारः = पौरुषेयशब्दोऽर्थं बोधयन्नपि मम मीमांसकस्याप्रमाणमित्येवं न साधुना द्वेषमात्रेण शक्यं

इत्यत्यक्षेषु सर्वोऽपि शब्दस्तुल्यबलाबलः ।
एकत्रैवानुरागोऽयं तद् वः केनेह हेतुना ॥ २४४३ ॥
अनन्तरोदितं न्यायं वेदाप्रामाण्यकारणम् ।
प्राज्ञा जल्पन्ति तेनामी भवेयुः सत्यवादिनः ॥ २४४४ ॥
मिथ्यानुरागसञ्जातवेदाध्यानजडीकृतैः ।
मिथ्यात्वहेतुरज्ञात इति चित्रं न किञ्चन ॥ २४४५ ॥

वक्तुमिति यावदर्थः । अनेन पौरुषेयापौरुषेययोरत्यन्तपरोक्षेऽर्थे[1] तुल्यं प्रतीतिनिबन्धनत्वमाह । तथा च तुल्ये प्रतीतिनिबन्धनत्वे यदपौरुषेयस्यैव प्रामाण्यं तदन्येषाम्[2] निर्युक्तिकमेतत् । न च दोषाणां पुरुषाश्रयत्वात् तत्र मिथ्यात्वं शङ्क्यते नापौरुषेयेष्विति शक्यं वक्तुम्, अपौरुषेयेष्वपि प्रकृत्या[3] मिथ्यार्थप्रत्ययहेतुत्वस्य सम्भाव्यमानत्वात् ॥ २४४२ ॥

एतमेवार्थं दर्शयति—इत्यत्यक्षेष्विति । सर्व इति पौरुषेयापौरुषेय[4] । एकत्रैवेति अपौरुषेये ॥ २४४३ ॥

यदुक्तम्—"द्विजन्मोऽपि" (तत्त्व० २११२) इत्यादि, तत्राह—अनन्तरोदितमित्यादि । [G 601] अनन्तरोदितमिति । शब्दस्येच्छामात्रवृत्तित्वेन वस्तुनि प्रतिबन्धाभावादित्यादि । प्राज्ञा इति सौगताः । यथोक्तं[5] भाष्यकारेण—"प्रत्यक्षस्तु वेदवचने प्रत्ययो न चानुमानं प्रत्यक्षविशेषेण प्रमाणीभवति" इति, यच्चेदमुक्तम्—"चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुं नान्यत्किञ्चनेन्द्रियम्" (मी० द०, शा० भा० १.१.२) इत्येवमादि, तत्सर्वमनेन[6] प्रत्युक्तं भवति, पौरुषेयेऽपि वाक्ये सर्वस्यैतस्य समानत्वात् ॥ २४४४ ॥

यदुक्तम्—"धारणाध्ययनव्याख्या" (तत्त्व० २११३) इत्यादि, तत्राह—मिथ्यानुरागेत्यादि । मिथ्यानुरागेण सञ्जातं च तद्वेदाध्यानं चेति समस्य

१. पौरुषपरो०—जै०, पा० ।  २. नेष्यतां—पा०, गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।  ४. पौरुष—शा०, पा० ।
५. यथोक्तं—गा० ।  ६. सर्वमनेनैव—गा० ।

न हि मातृविवाहादौ दोषः कश्चिदपीक्ष्यते ।
पारसीकादिभिर्मूढैस्तदाचारपरैः[1] सदा ॥ २४४६ ॥

शब्दनित्यत्वखण्डनम्

प्रत्यक्षप्रत्यभिज्ञा तु प्रागेव विनिवारिता ।
भ्रान्तेः सकल्पनत्वाच्च नातो नित्यत्वनिश्चयः ॥ २२४७ ॥
व्यावर्त्तमानरूपश्च भूयसा प्रत्ययो ध्वनौ ।
शुकस्य व्याहृतं चेदं शारिकाया इतीक्षणात् ॥ २४४८ ॥

तेन जडीकृता इति पश्चात् तृतीयासमासः । आध्यानं च = आनुपूर्व्येण चिन्ता; मिथ्यानुरागेण हि विद्यमानस्यापि दोषस्यादर्शनात् । यथा पारसीकादिभिर्मातृविवाहादेरिति न किञ्चिदाश्चर्यम् ॥ २४४५-२४४६ ॥

यदुक्तम्—"किञ्च शब्दस्य नित्यत्वम्" ( तत्त्व० २११६ ) इत्यादि, तत्राह—प्रत्यक्षेत्यादि । "कल्पनापोढमभ्रान्तम्" ( तत्त्व० १२१३ ) इति हि प्रत्यक्षलक्षणम् । न च प्रत्यभिज्ञानं कल्पनापोढम्; स एवायमिति शब्दाकारोल्लेखेन प्रवृत्तेः । नाप्यभ्रान्तम्; पूर्वदृष्टप्रत्युत्पन्नयोरैक्यानुसन्धानात । न च यदेव पूर्वदृष्टं तदेव पश्चाद् दृश्यते; अक्रमिणः सकाशात् क्रमिज्ञानानुत्पत्तेः । कार्थं हि कुतश्चिद् भवनधर्मि, यत् कदाचिन्न भवति तत्तस्यावैकल्यादविकलं[2] चेत् कारणं किमिति कार्याणि परिलम्बन्ते । न चापि नित्यस्यानुपकार्यतया काचिदपेक्षा सम्भविनी । तस्मात् तद्भावीनि ज्ञानानि युगपद् भवेयुः । प्रयोगः—यद्यदाऽविकलकारणं तत्तदा भवत्येव, यथा समवहितसकलचक्षुरादिकारणकलापं चक्षुर्ज्ञानम् । अविकलकारणानि [ G. 667 ] च सर्वस्यामवस्थायां गवादिशब्दभावीनि विज्ञानानीति स्वभावहेतुः । तस्माद् भ्रान्तेः सविकल्पकत्वाच्च प्रत्यभिज्ञा न प्रत्यक्षत्वेन सिद्धेति प्रागेव स्थिरभावपरीक्षायां प्रतिपादितम् ॥ २४४७ ॥

न चापि स्वरूपतः सर्वत्र प्रत्यभिज्ञानं सिद्धमित्यादर्शयन्नाह—व्यावर्त्तमानेत्यादि । यदा हि—शुकसारिकादिभिर्व्याह्रियते शब्दः, तदा 'इदं सारिकाया

१. ०धूर्तैस्तदा०—पा०, गा० ।
२. तस्याविकलं—पा०, गा० ।

सोऽयं व्यञ्जकभेदाच्चेद् वक्ष्यामो व्यवस्थापाक्रियाम् ।
अस्मादेव च ते न्यायात् सर्वमेकमिदं भवेत् ॥२४४९॥
ततो न व्यञ्जकं किञ्चिद् व्यङ्ग्यं[1] वा भवता भवेत्[1] ।
एकस्मिन्नविभक्ते हि व्याहता भेदकल्पना ॥२४५०॥
पौरुषेया इमे शब्दा एते चानरकर्तृका. ।
व्यवस्थैवाऽपि यो न स्यात् प्रत्यभिज्ञोपजीविनाम्[2] ॥२४५१॥
केचित्[3] स्थितक्रमा[3] एव व्यञ्जकक्रमसंस्थिते. ।
इष्टा अपौरुषेयास्ते नियतक्रमयोगिन. ॥२४५२॥

---

व्याहृतम्', 'इद शुकस्य' इति परस्परभिन्नविषयाध्यवसायाद् व्यावर्तमान प्रत्ययो भवतीति न सर्वत्र सिद्धा प्रत्यभिज्ञा ।

अथापि स्याद्—व्यञ्जकभेदादयं शुकादिव्याहारे परस्परव्यावृत्त प्रत्ययो जायत इति । एतदपि वार्त्तम्, व्यञ्जकस्य निराकरिष्यमाणत्वात् । एतदेवाह—सोऽयमित्यादि । सोऽयमिति व्यावर्तमानरूप प्रत्यय । किञ्च—यदि सिद्धोऽपि भेद शब्दाना व्यञ्जककृतो व्यवस्थाप्यते, न स्वत, तदा सर्वत्रानाश्वास —इत्यतिप्रसङ्गमापादयन्नाह—अस्मादेव चेत्यादि । सर्वमिति विश्वम् ।

भवत्वेवमिति चेत् ? आह—ततो नेत्यादि । 'इद व्यञ्जकम्', 'अयं व्यङ्ग्य' इति भेदनिबन्धनो व्यवहारो न स्यात्[4], अभेदात्[4] । तथा—'इमे पौरुषेया', 'एते च श नो देवीरित्यादयोऽपौरुषेया'—इति व्यवस्था प्रत्यभिज्ञानपरायणाना भवता नैव भवेत्, विशेषाभावात् ॥ २४४८-२४५१ ॥

केचिदित्यादिना परो वैदिकलौकिकभेदव्यवस्था दर्शयति । व्यञ्जकक्रमस्य सन्निधिनियमत्वात् केचित 'श नो देवी' इत्यादयो नियतक्रमा एव प्रतीयन्ते, [G 678] अनन्ते नियतक्रमयोगिनोऽपौरुषेया इष्टा, तद्विपरीता सामर्थ्यात् पौरुषेया इति सिद्धम् ॥ २४५२ ॥

---

१-१. पा० [illegible] ।
२. ०[illegible]—पा०, जा० ।
३-३ [illegible]—पा० । ४-४ [illegible]—पा० ।

नन्वयं पौरुषो धर्मस्ताल्वादिव्यञ्जकक्रमः[1] ।
तस्येच्छापरतन्त्रत्वात्[2] सम्भाव्येत[2] विपर्ययः ॥ २४५३ ॥
तेजस्त्वादि च सामान्यं विस्तरेण निराकृतम् ।
तत्रातः प्रत्यभिज्ञेयं सामान्यं नित्यमेव न[3] ॥ २४५४ ॥
वर्णेषु च[3] तेष्वेव प्रतिक्षणविनाशिषु[3] ।
सामान्यं प्रत्यभिज्ञेयं मत्वाद्येव[4] विशेषतः ॥ २४५५ ॥
भेदबुद्धिस्तु यत्रांशे द्रुतमन्दादिके भवेत् ।
तत्र न प्रत्यभिज्ञानं भेदबुद्ध्यावधारितम्[5] ॥ २४५६ ॥
शब्दैकत्वप्रसिद्ध्यर्थं प्रयुक्तेषु तु हेतुषु ।
विजातीयाविरोधित्वात् प्रतिबन्धो न सिद्ध्यति ॥ २४५७ ॥

---

नन्वयमित्यादिना दूषयति । नियतक्रमयोगित्वमसिद्धम् । तथा हि— व्यञ्जकक्रमनियमात्पदिष्टम्, स च व्यञ्जकानां ताल्वादीनां क्रमः पुरुषेच्छामपवृत्तिन्वा- वन्नियत', पुरुषेच्छायाः स्वातन्त्र्यात् । यदाह—'यत्र स्वातन्त्र्यमिच्छाया नियमो नाम तत्र कः?' (        ) इति । ततश्च "शं नो देवी" (        ) इत्यादेः 'सर्वकालमयमेव क्रमोऽभूद्, भविष्यति' इत्यत्र नियामकप्रमाणाभावात् कदा- चिदन्यथापि सम्भाव्येत क्रमः ॥ २४५३ ॥

यदुक्तम्—"ज्वालादेः क्षणिकत्वेऽपि प्रत्यभिज्ञा" (तत्त्व० २११८) इत्यादि, तत्राह—तेजस्त्वादीत्यादि ॥ २४५४ ॥

सर्वमेतद् वर्णेष्वपि कल्पयितुं शक्यत इति दर्शयन्नाह—वर्णेष्वित्यादि । सामान्यमिति । अन्यव्यावृत्तिलक्षणम् ॥ २४५५–२४५६ ॥

"देशकालादिभिन्नाश्च गोत्वव्यक्तिबुद्धय." (तत्त्व० २१२०) इत्याद्य- वाह—शब्दैकत्वेत्यादि । शब्दैकत्वप्रतिपादनाय ये अनुमानप्रयोगा उक्ता', तेषु

---

१. धर्मस्ताल्वा०···—पा० । 
२–२. पा० पुस्तके नास्ति, तस्मात्कदाचित्स्यादि—गा० । ३. नः—पा० ।
३–३ क्षयने विनाशिषु—पा०; क्षयने चेदं प्रत्यभिज्ञा०—गा० ।
४–४. मत्वा ये वा—पा०; ■ येत्रा—गा० । ५. भवे "—पा०, गा०

धूमसामान्यमात्रोऽपि नैवं सिद्धः[1] स्थिरो मम ।
अतद्रूपपरावृत्तं वस्तुमात्रं हि[1] साधनम्[2] ॥ २४५८ ॥
गादेरप्येकतापत्तौ जात्येष्टं सिद्धसाधनम् ।
अतद्रूपपरावृत्तिरभिन्ना कल्पितैव हि ॥ २४५९ ॥
व्यक्तीनामेकतापत्तौ[3] बुद्धेः सर्वप्रमाणकम्[3] ।
प्रतिप्रयोगमाक्षादिवर्णभेदविनिश्चयात् ॥ २४६० ॥
यन्मनोज्ञामनोज्ञादिभेदः प्रत्यक्षतो गतः ।
बुद्धीनां क्रमभावित्वाद् भेदः सिद्धोऽङ्कुरादिवत्[4] ॥ २४६१ ॥

---

सिद्धे विपर्यये हेतोर्बाधकप्रमाणानुपदर्शनात् सर्वथैवानैकान्तिकता ॥ २४५७ ॥

यदुक्तम्—"य ईदृक् स स्थिरो दृष्टो धूमसामान्यमात्रवत्" (तत्त्व० २१२७) इत्यस्य दृष्टान्तस्य साध्यविकलतामादर्शयन्नाह—धूमसामान्येत्यादि । [G 669] वस्त्वेव विजातीयपरावृत्तं सामान्यं लिङ्गमुच्यते, नान्यत्, तच्चानित्यमेवेति साध्यविकलो दृष्टान्तः ॥ २४५८ ॥

यदुक्तम्—"गवादेरेकतापत्तौ" (तत्त्व० २१३०) इत्यादि, तदयं वर्णेष्वपि परिहारः समान इत्यादर्शयति—गादेरित्यादि । "देशकालादिभिन्नाश्च" इत्यादिना 'प्रयोगभेदेन यदन्यापोहलक्षणस्य सामान्यस्यैकत्वं साध्यते, तदा सिद्धसाध्यता; सर्वत्रातद्रूपव्यावृत्तिलक्षणस्य सामान्यस्यैकबुद्ध्यध्यवसायतोऽनेकत्वस्येष्टत्वात् । अथ व्यक्तीनां स्वलक्षणानामेव साध्यते, तदा प्रत्यक्षानुमानाभ्यां व्याप्तेर्विरुद्धानैकान्तिकता हेतूनाम् । आक्षादीति । अक्षम् = इन्द्रियम्, तत्र भवमाक्षम्, प्रत्यक्षमिति यावत् । आदिशब्देनानुमानपरिग्रहः । बहुवचनं व्यक्तिभेदापेक्षया ॥ २४५९–२४६० ॥

कथं प्रत्यक्षतो भेदोऽवगत ? इत्याह—यन्मनोज्ञेत्यादि । अनुकूलो मनोज्ञः । विपर्ययाद् विपर्ययः । अनुमानतोऽपि दर्शयन्नाह—बुद्धीनामित्यादि ।

---

१–१. सामान्यमात्रोऽपि पा०, गा० पुस्तकयोर्नास्ति । २. सिद्धसाधनम्—पा०, गा० ।
३–३. व्यक्तीना॰ —पा०, ॰पत्तावनैकान्तिकता भवेत्—गा० ।
४. सिद्धः॰ —पा०, ॰द्धः कुमारिकवत्—गा० ।

देशकालादिभिन्ना[1] हि गोशब्दव्यक्तिबुद्धयः ।
नैकार्था भिन्ननिर्भासाद् रसरूपादिबुद्धिवत् ॥ २४६२ ॥
षड्जादिभेदनिर्भासः प्रत्यक्षेण हि निश्चितः ।
न च व्यञ्जकवर्णानामित्येतदभिधास्यते[2] ॥ २४६३ ॥
ह्यस्तनाद्यतनाः सर्वे गोशब्दप्रत्यया इमे ।
नैकार्थाः क्रमसम्भूते रूपगन्धादिबुद्धिवत् ॥ २४६४ ॥
अन्यथा सर्वबुद्धीनामेकालम्बनता[3] भवेत्[3] ।
क्रमभावविरोधश्च शक्तकारणसन्निधेः ॥ २४६५ ॥
प्रकृत्यैव पदार्थानामेकप्रत्यवमर्शने ।
भेदेऽपि शक्तिनियमः पुरस्तात् प्रतिपादितः ॥ २४६६ ॥

---

अस्यार्थः "ह्यस्तनाद्यतनाः" ( तत्त्व० २४६४ ) इत्यादिना स्पष्टीकरिष्यते । प्रयोगः—या या भिन्नावभासा बुद्धयस्ताः सर्वा नैकविषयाः, यथा रसरूपादिविषयाः। भिन्ननिर्भासाश्च देशकालादिभिन्ना गोशब्दव्यक्तिबुद्धय इति व्यापकविरुद्धोपलब्धिः । असिद्धतामस्य परिहरन्नाह—षड्जादीत्यादि ॥२४६१—२४६३॥

"बुद्धीनां क्रमभावाच्च भेदः सिद्धोऽङ्कुरादिवत्" (तत्त्व० २४६१) इत्यस्यार्थं[2] प्रमाणयन्नाह—ह्यस्तना इत्यादि । [ G 670 ] प्रयोग.—ये ये क्रमिणः प्रत्ययास्ते नैकविषयाः, तद्यथा रसरूपादिप्रत्ययाः क्रमिणः । क्रमभाविनश्चेमे ह्यस्तनाद्यतना गोशब्दविषयाः प्रत्यया इति व्यापकविरुद्धोपलब्धिः ॥ २४६४ ॥

अन्यथेत्यादिना द्वयोरपि हेत्वोरनैकान्तिकतां परिहरति । सर्वबुद्धीनामिति । रसरूपादिबुद्धीनाम् । परस्परमभिन्नालम्बनत्वप्रसङ्गो भिन्ननिर्भासादित्येतस्य हेतोर्बाधकं प्रमाणम् । क्रमभावविरोधश्चेत्येतत्तु क्रमसंभूतेरित्येतस्य ॥२४६५॥

यदुक्तम्—"कृत्रिमत्वे च सम्बन्धः" ( तत्त्व० २१३२ ) इत्यादि, तत्राह—

---

१. ···दादिभिन्नाः—पा० ।
२. व्यञ्जक···तदभिध्यस्यते—पा०, गा० ।
३–३. मेकालम्ब···त्—पा० ।

हेतो[1] प्रत्ययमर्याच्च शब्दैकत्वादयोऽपि न ।
लोकः प्रयोगभूयस्त्व शब्दस्यैकस्य मन्यते ॥ २४६७ ॥
अनेकव्यक्तिनिष्ठत्वात् सम्बन्ध उपपद्यते ।
तस्मात्सार्वत्रिको लोके[2] व्यक्तीना ह्येकता गत ॥ २४६८ ॥
वस्तुतस्तु न सम्बन्ध शब्दस्यार्थेन विद्यते ।
भेदात् तस्मादनुत्पत्तेर्भ्रान्तैरारोपितस्तत ॥ २४६९ ॥
तथा हि विस्तरेणैषा प्रागेव प्रतिपादिता ।
शब्दार्थसस्थिति सर्वा विप्लुता व्याप्त्यसम्भवात् ॥ २४७० ॥
गोत्व नित्यमपास्त च सम्बन्धोऽपि च कल्पित ।
अण्वाकाशाद्यपि क्षिप्त[3] हेतूदाहरणे न तत् ॥ २४७१ ॥

प्रकृत्यैनेत्यादि । सुगमम् ॥ २४६६ २४६८ ॥

अथ कस्माल्लोक इत्युच्यते ? इत्याह—वस्तुतस्त्वित्यादि । भेदादित्यनेन तादात्म्यलक्षण सम्बन्ध निषेधति । तस्मादनुत्पत्तेरित्यनेन तदुत्पत्तिलक्षणम् । न चाभ्यामन्य सम्बन्धोऽस्ति, न च प्रतिबन्धमन्तरेण शब्दस्यार्थप्रतिपादकत्वनियमो युक्त , अतिप्रसङ्गात् । तस्माद् 'आरोपित शब्दार्थयो सम्बन्ध ' इति प्रागेवान्यापोहचिन्ताया प्रतिपादितम् ॥ २४६९ २४७० ॥

[ G 671 ] "तस्मादकृत्रिम शब्द" ( तत्त्व० २१३४ ) इत्यादि प्रयोगे हेतुदृष्टान्तयोरसिद्धत्वमुद्भावयन्नाह—गोत्व नित्यमित्यादि । 'गोत्व नित्यमपास्तम्' इत्यनेन नित्यस्यासिद्धतामाह । 'सम्बन्धोऽपि च कल्पित ' इत्यनेनापि सम्बन्धानित्यस्य, 'अण्वाकाशाद्यपि च क्षिप्तम्' इत्यनेनाकाशपरिमाणुवन्नित्यस्यासिद्धतामाह[4] । अपास्तमिति प्रतिक्षिप्तम्, पट्पदार्थपरीक्षायाम् । नेति प्रतिषेधे । तदिति तस्मादर्थे ॥ २४७१ ॥

१ पा०, गा० पुस्तकयोनास्ति ।
२ नाय—पा०, नैरो—गा० ।
३ च क्षिप्त—पा०, गा० ।
४ ०नित्यमित्यस्या०—गा० ।

निष्कृष्टगोत्ववाचित्वं चिरेण प्रतिपद्यताम् ।
एकरूपतया भ्रान्तैर्जनैरघ्यवसायत. ॥ २४७२ ॥
भावतः क्षणिकत्वात् तु तावत्कालमपि स्थिरः ।
नैवायमिति किं तस्य स्थितिः पश्चादपीष्यते ॥ २४७३ ॥
घटादावपि नैवास्ति किञ्चिन्नाशस्य कारणम् ।
इतीदमपि निर्दिष्टं तत् किं[1] शब्दे भविष्यति ! ॥ २४७४ ॥
विश्रुते प्रत्यभिज्ञायाः पुरस्तादुपपादितः ।
देशकालप्रयोक्तॄणां भेदाद् [2]वर्णो विभिद्यते ॥ २४७५ ॥
षड्ज-ऋषभ-गान्धार-पञ्चमादिप्रभेदवत् ।
प्रत्यक्षतो हि विज्ञाता गव्यक्तिरपरा स्फुटा ॥ २४७६ ॥
न च व्यञ्जकभेदेन युक्तैषा भेदसंस्थितिः ।
व्यक्तिर्नित्येषु नास्तीति पुरस्तादभिधास्यते ॥ २४७७ ॥
गकारव्यतिरिक्त च सामान्यं गत्वमिष्यते ।

"सम्मुखानेकसामान्य०" ( तत्त्व० २१३५ ) इत्यादावाह—निष्कृष्टेत्यादि ॥ २४७२ ॥

भ्रान्तत्वमस्य कथं सिद्धम् ? इत्याह—भावत इत्यादि ॥ २४७३ ॥

"यथा शब्दादिभिरुच्छेद" ( तत्त्व० २१३९ ) इत्यादावाह—घटादापीत्यादि । इतीदमपि निर्दिष्टमिति । स्थिरभावपरीक्षायाम्, विनाशस्याहेतुत्वप्रतिपादनेन । यदा घटादावपि नैव नाशकारणमस्तीति क शब्दे भविष्यतीति । नाशकारणमिति व्यवहितेन सम्बन्ध । अनेन च सिद्धसाध्यता, वैधर्म्यदृष्टान्तस्य चासिद्धतोक्ता भवति ॥ २४७४ ॥

"देशकालप्रयोक्तॄणाम्" ( तत्त्व० २१४० ) इत्यादावाह—विश्रुत इत्यादि । [ G 672 ] सुगमम् ॥ २४७५–२४७७ ॥

"गकारोऽत्यन्त०" ( तत्त्व० २१४२ ) इत्यादिके प्रयोगे सिद्धसाध्यतादोषमाह—गकारव्यतिरिक्त चेत्यादि । इष्यत इति । नेति वक्ष्यमाणेन

१. क—पा०, गा० । २. धर्मो—पा०, गा० ।

वास्तवं न प्रयोगेऽतो दुर्वारा सिद्धसाध्यता ॥ २४७८ ॥
अन्यापोहात्मकस्यापि न गत्वस्य समाश्रयः ।
इत्ययमेवेति चेन्नैवमाश्रयासिद्धतापितः ॥ २४७९ ॥
अगकारपरावृत्तगवर्णाभावतो भवेत् ।
गान्यबुद्ध्यनिरूप्यत्वं कस्य धर्मो हि धर्मिणः ॥ २४८० ॥
वास्तवी चानुमा सर्वा द्वयसिद्धमपेक्षते ।
दृष्टान्तादि ततस्तेन दृष्टान्तो धर्म्यसिद्धिभाक् ॥ २४८१ ॥
सर्वश्चायं प्रयत्नस्ते गकारैकत्वसिद्धये ।

सम्बन्ध ॥ २४७८ ॥

अथापि स्यात्—अन्यापोहात्मकस्यापि गत्वस्याश्रयो न भवतीति ? इत्ययम् = अनेन प्रकारेण साध्यते, तेन सिद्धसाध्यता न भवति, न ह्यन्यापोहाधारो गकारादिर्भवतो नेष्ट इति पूर्वपक्षं प्रतिक्षिपति । एवं हि साध्यमाने हेतोरसिद्धिता प्राप्नोति । तथा हि—न ह्यन्यापोहो नामान्य एव कश्चिदन्यत्र व्यावृत्ताद् पदार्थात्, किं तर्हि ? तदेव गकारादिव्यक्तिरूपं विजातीयव्यावृत्तिभेदान्तरप्रतिक्षेपेण तन्मात्रजिज्ञासायामन्यव्यावृत्ति, अन्यापोह—इत्यादिभि पर्यायैः कथ्यते । तस्य तु धर्मिस्वरूपस्याभावे साध्ये 'गान्यबुद्ध्यनिरूप्यत्वात्' ( तत्त्व० २१४२ ) इत्ययं हेतु कस्य धर्मिणो धर्मो भवेत् ! नैव कस्यचित् ॥ २४७९-२४८० ॥

यश्च "परकल्पितगन्धवत्" ( तत्त्व० २१४२ ) इति दृष्टान्त, सोऽपि धर्म्यसिद्ध इति दर्शयन्नाह—वास्तवीत्यादि । दृष्टान्तादीत्यादिशब्देन हेत्वादिपरिग्रह. ॥ २४८१ ॥

किञ्च—अनुक्तोऽपि वादिना य एवेच्छया विषयीकृत स एव[1] साध्य इष्यते । न चापि भवता गत्वमात्रं सिसाधयिषितम्, किं तर्हि ? अनेनोपायेन गकारस्यैकत्वं प्रतिपादयितुमिष्टम् । अन्यथा च प्रतिज्ञाया प्रत्यक्षादिबाधा पूर्वमुक्तेति दर्शयन्नाह—सर्वश्चायमिति । [ C. 673 ] अयमिति व्यतिरिक्तगत्वापार-

1. पदार्थ—पा० गा० ।

तत्र प्रत्यक्षबाधा च दुर्निवारोदिता तव[1] ॥ २४८२ ॥
ह्यस्तनाद्यतनाद्यश्च गवर्णप्रत्यया इमे ।
क्रमभावेन नैकार्था रसरूपादिबुद्धिवत् ॥ २४८३ ॥
अतो न द्वयसिद्धोऽप्येको वर्णः सदा स्थितः ।
अबोध[2] कल्पितस्यैव नित्यत्वं त्वस्य कल्पितम् ॥ २४८४ ॥
शब्दोपलम्भवेलायां कर्णपर्यन्तवर्तिनः ।
न वायवोऽवगम्यन्ते श्रोत्रसंस्कारकारिणः ॥ २४८५ ॥
नादेन संस्कृताच्छ्रोत्राद् यदा शब्दः प्रतीयते ।
तदुपश्लेषतस्तस्य बोधोऽध्यक्षेण बाध्यते ॥ २४८६ ॥
तिक्तपीतादिरूपेण प्रवृत्तं मधुरादिषु ।

---

निषेध । प्रत्यक्षबाधा चेति । चशब्दादनुमानबाधापरिग्रह । उदितेति । "यन्मनोज्ञामनोज्ञादि०" ( तत्त्व० २४६१ ) इत्यादिनोक्ता ॥ २४८२ ॥

यदुक्तम्—"द्वयसिद्धस्तु" ( तत्त्व० २१४४ ) इत्यादि, तत्राह—ह्यस्तनेत्यादि । 'उदिता' इत्यत्रापि लिङ्गविभक्तिपरिणामेन सम्बध्यते । तत प्रत्यक्षानुमानाभ्या शब्दभेदस्य प्रतिसिद्धत्वान्नैको द्वयसिद्धो वर्णोऽस्तीति कल्पितस्यैवान्यापोहस्य नित्यत्व कल्पितम्, तुल्यप्रत्ययवमर्शप्रत्ययेनैकत्वाध्यवसायात् ॥ २४८३–२४८४ ॥

यदुक्तम्—"नादेन संस्कृतात्" ( तत्त्व० २१४७ ) इत्यादि, तत्राह—शब्दोपलम्भवेलायामित्यादि । यदि हि श्रोत्रसंस्कारकारिणो वायव केनचित् प्रमाणेन सिद्धा स्यु, तदैव स्याद् वक्तुम्—'नादेन श्रोत्र संस्क्रियते' इति, न चैते सिद्धा, तस्मात् तदुपश्लेषत = शब्दोपश्लेषत तस्य नादस्य बोधोऽध्यक्षमिति कल्पनामात्रमेतत् ॥ २४८५–२४८६ ॥

यदुक्तम्—"मधुर तिक्तरूपेण" ( तत्त्व० २१४९ ) इत्यादि, तत्राह—तिक्तपीतादिरूपेणेत्यादि । एतेन यदुक्तम्—"शब्दे बुद्धिस्तु तद्ग्रहात्"

---

1 तव—कॅ० पुस्तके पाठः । 2. अबोध—गा० ।

ज्ञानं निर्विषयं यद्वच्छब्दज्ञानं तथा[1] भवेत् ॥ २४८७ ॥

भ्रान्तज्ञानस्य निर्विषयत्वसिद्धिः

द्रुतमध्यादिभेदाद्धि नान्यः शब्दोऽवभासते ।
अतद्रूपे च ताद्रूप्यज्ञानं नाविषयं कथम् ॥ २४८८ ॥
अन्यथा च तमेवार्थं वेत्तीति व्याहतं वचः ।
अन्याकारस्य संवित्तौ स ह्यर्थो विदितः कथम् ॥ २४८९ ॥
निराकारे हि विज्ञाने बाह्याकारः स ते ध्रुवम् ।
बाह्यश्च न तदात्मेति किमसौ विद्यते तथा ॥ २४९० ॥

---

(तत्त्व० २१४८) इति, तदपास्तम् । न ह्यनाकारस्य ज्ञानस्यान्यो विषयो युक्तः; अतिप्रसङ्गात् ॥ २४८७ ॥

स्यादपि स्यात्—यदि नाम शब्दो न तस्य ज्ञानस्य विषयः, निर्विषयत्वं तु तस्य कथम् ? इत्याह—द्रुतमध्यादीत्यादि । [G 674] द्रुतमध्यविलम्बिताऽऽकारेण हि ज्ञानमुपजायते, न च शब्दस्य द्रुताद्याकारः समस्ति; तस्य नित्यव्यापित्वेनैकरूपत्वात् । न चान्यो द्रुताद्याकारवानर्थः सम्भवति यः प्रत्ययमासेत । तस्मात्तदाकारानुरूपस्यार्थस्याभावान्निर्विषयत्वमेवास्य ॥ २४८८ ॥

स्यादेतत्—स एव शब्दो द्रुतादिरूपेणान्यथा च भासमानस्तस्यालम्बनं भविष्यति, यथोक्तम्—"सर्वत्रालम्बनं बाह्यं देशकालान्यथाऽऽत्मकम्" (श्लो० वा०, नि० १०८) इति ? अत्राह—अन्यथा चेति । व्याहतमिति । तत्त्वान्यथाकारयोः परस्परपरिहारस्थितलक्षणत्वेनैकत्र धर्मिण्ययोगात् । किञ्च—सर्वमेव भ्रान्तं निराकारपक्षे साकारपक्षे च निर्विषयमेवेदं[2] ज्ञानमिति[3] प्रतिपादयन्नाह—निराकारे हीत्यादि । निराकारज्ञानवादिना हि पीताद्याकारोऽर्थगत एवानुभूयते । न च यथा भ्रान्तज्ञानप्रतिभासी पीतादिः, तथा शङ्खादिरर्थोऽवस्थित इति स्फुटतरमेवाविषयत्वमस्य ।

ननु च पीताद्याकारो यदि नार्थगतः, तदावश्यं तेन ज्ञानगतेन भवितव्यम्; अन्यथोभयत्राभावे कथमनुभूयेत, ततश्च ज्ञानगतत्वे कथं निराकारता विज्ञानस्येति वक्तव्यम् ? सत्यमेतत्; किन्तु अभ्युपगम्य निराकारज्ञानवादिपक्षमेतद् विज्ञानस्य

---

१. यथा—गा० । २. ०दाकारम् स्प०—पा० । ३–३. ०मेवेदमि—पा०, गा० ।

साकारज्ञानपक्षेऽपि बाह्याकारानुरूपतः ।
ज्ञाने निर्भाससम्भूतावर्थो विदित उच्यते ॥ २४९१ ॥
इह बाह्यानुरूपेण न तु ज्ञानं प्रवर्त्तते ।
तस्मान्निर्विषयं सर्वं भ्रान्तं चित्तमिति स्थितम् ॥ २४९२ ॥
न च व्यञ्जकसद्भावो युक्तो नित्ये विशेषतः ।
तत्संस्कारानुकारेण[1] नातो भिन्ना धियो ध्वनौ ॥ २४९३ ॥

नादैः शब्दाभिव्यक्तिसाधनम्

घटादिग्रहणार्थं हि यथा शक्ति[2] नियच्छति ।
न प्रदीपस्तथा श्रोत्रे ध्वनिः शब्दोपलब्धये ॥ २४९४ ॥

---

निर्विषयत्वमुच्यते । यस्तु निराकारं ज्ञानमिच्छति तेनैवात्र परिहारो वाच्यः । साकारज्ञानपक्षेऽप्यर्थसदृशात्माकारानुभवादर्थानुभवो व्यवस्थाप्यते । न च भ्रान्ते ज्ञानेऽर्थसदृशात्माकारानुभूतिरस्तीत्यविषयमेव । न च साकारनिराकाराभ्यामन्यः प्रकारोऽस्ति विषयग्रहणं प्रति[3] । तस्मात् सर्वमेव भ्रान्तं ज्ञानं निर्विषयमिति सिद्धम् ॥ २४८९–२४९२ ॥

[G 675] न चाप्यत्र भ्रान्तिनिमित्तं सम्भवतीति दर्शयन्नाह—न च व्यञ्जकसद्भाव[4] इत्यादि । व्यञ्जकभेदो हि ध्वनौ = शब्दे भेदविभ्रमनिमित्तमुपवर्ण्यते । न च नित्यस्य कस्यचिद् व्यञ्जकोऽस्ति; तस्य तत्राकिञ्चित्करत्वात् । न चाकुर्वन् कञ्चिद् विशेषं तस्य व्यञ्जको युक्तः; अतिप्रसङ्गात् । एवं हि यत्किञ्चिद्यस्य कस्यचिद् व्यञ्जकं स्यात् । तस्मान्न "व्यञ्जकसंस्कारानुकाराद् ध्वनौ = शब्दे भिन्ना बुद्धयो युक्ताः ॥ २४९३ ॥

यदुक्तम्—"यथा घटादेर्दीपादिरभिव्यञ्जक इष्यते" (तत्त्व० २१६९) इत्यादि, तत्रेदं प्रथमं श्लोकार्थमुपक्षिप्यैकेन श्लोकेन, द्वितीयादिश्लोकैर्दूषयन्नाह—घटादिग्रहणार्थं हीत्यादि । संस्कृतयत्नाम श्रोत्रम्, इदं तु वक्तव्यम्—किं[5]

---

१. ०सस्कारानुरूपेण—पा०, गा० । २. व्यक्ति—पा०, गा० ।
३ प्रतीति—पा०, गा० । ४. व्यञ्जकमुद्भाव—जै० ।
५. ०संस्काराद्—पा०, गा० । ६. किन्तु—पा०, गा० ।

श्रोत्रोपलब्धौ योग्यश्चेच्छब्दः प्रकृतिसंस्थितः ।
असंस्कृतेऽपि तच्छ्रोत्रे किमर्थं नोपलभ्यते ॥ २४९५ ॥
योग्यकारणसद्भावाद् भवेदेवोपलम्भनम् ।
संस्कृतश्रोत्रसद्भाववेलायामिव तस्य, तत् ॥ २४९६ ॥
नोपलब्धौ स योग्यश्चेत् पश्चादपि कथं भवेत् ।
भावे च योग्यतायोगी[1] शब्दो जातोऽपरो भवेत् ॥ २४९७ ॥
अथ पश्चादपि ज्ञानं नैव तद्बलभावि तत् ।
संस्कृतश्रवणादिभ्यस्तस्योत्पादस्तु वर्ण्यते ॥ २४९८ ॥
शब्दस्याज्ञेयतैव[2] स्यात् तस्मिन्ननुपयोगतः ।
तस्य नैव रसादिभ्यो विशेषः कश्चनास्ति हि ॥ २४९९ ॥

प्रकृत्या शब्दः स्वविषयज्ञानोत्पत्तौ समर्थः ? आहोस्विदसमर्थ इति ? आद्ये पक्षे श्रोत्रसंस्कारात् प्रागप्युपलब्धिप्रसङ्गः । एतदेवाह—असंस्कृतेऽपीत्यादि । तस्येति शब्दस्य । तदिति तस्मात् । प्रयोगस्तु 'यदि विकल्पकारणम्' इत्यादिकः पूर्ववद् वाच्यः, श्रोत्रसंस्कारवैयर्थ्यप्रसङ्गश्च ।

अथ द्वितीयपक्षः, तदा श्रोत्रसंस्कारेऽपि शब्दोपलब्धौ न प्राप्नोति, सर्वदैव शब्दस्यायोग्यत्वात् । ततश्चास्मिन्नपि पक्षे श्रोत्रसंस्कारवैयर्थ्यमेव । प्रयोगः — यो यदुत्पादनायोग्यावस्थातो न विशिष्यते न स तत् करोति, यथा कोद्रवः शाल्यङ्कुरम्; [G 676] न विशिष्यते च संस्कृतेऽपि श्रोत्रे शब्दो ज्ञानोत्पादनायोग्यावस्थात इति व्यापकानुपलब्धिः । न चायमसिद्धो हेतुरित्यादर्शयति—भावे इति । योग्यतया सम्बन्धो यस्यास्ति स योग्यतायोगी ॥ २४९४-२४९८ ॥

ननु च यदि हि शब्दो ज्ञानोत्पत्तौ कारणमिष्टः स्यात्, तदा तत्र तस्य योग्यायोग्यविकल्पोऽवतारं लभेत, यावता श्रोत्रमेव संस्कृतं शब्दोपलब्धौ कारणमिष्यते, न शब्दः, तेन न भवति यथोक्तदोषप्रसङ्गः ?—इत्येतदाशङ्क्य परिहरन्नाह—शब्दस्येत्यादि । एवं हि रसादिवच्छब्दस्यानुपयोगाद् तज्ज्ञानज्ञेयता

१. चायोग्यता०—जै० ।
२. ०स्याप्राह्यतैव—पा०, गा० ।

शब्दबोधस्वभावं वा जनितं नाम तैरिदम् ।
ज्ञानं शब्दनिराशंसैः संस्कृतश्रवणादिभिः ॥ २५०० ॥
तज्ज्ञानज्ञेयरूपो यं तथापि[1] त्वनुवर्तते ।
शब्द इत्यनुवृत्तिः स्याद् विज्ञानस्यापि तस्य ते ॥ २५०१ ॥
अन्यथा ह्यनुवृत्तान्नाज्ञानं[2] स त्वनुवर्तते ।
तज्ज्ञेयः शब्द इत्येवं परा स्याद् व्याहतिस्तव ॥ २५०२ ॥

---

न प्राप्नोति । प्रयोगः—यो यत्र ज्ञाने नोपयोगं प्रतिपद्यते न स तज्ज्ञानज्ञेयः, यथा रसादिः श्रोत्रज्ञाने । नोपयुज्यते च शब्दः श्रोत्रज्ञान इति व्यापकविरुद्धोपलब्धिः । नायमनैकान्तिकः; अनुपकारस्य ज्ञेयत्वे सति नियमाभावाद् रसादेरपि श्रोत्रविज्ञानविज्ञेयत्वप्रसङ्गात् ॥ २४९९ ॥

ननु च स्वकारणस्य नियमकत्वान्नातिप्रसङ्गो भविष्यति, तथा हि—संस्कृतश्रोत्रसमनन्तरप्रत्ययादिभ्यः समुत्पद्यमानं शब्दबोधात्मकमेवोत्पद्यते, न रसादिबोधात्मकम्; कारणशक्तिप्रतिनियमात्। अवश्यं च शब्दस्य हेतुत्वाङ्गीकरणेऽपि कारणशक्तिप्रतिनियमोऽङ्गीकर्त्तव्यः । तथा हि—तुल्येऽपि सर्वेषां हेतुत्वे कस्माच्छब्दबोधात्मकमेव भवति शब्दज्ञानं न श्रोत्रादिबोधात्मकमिति चोद्ये हेतुशक्तिप्रतिनियमैरेवोत्तरं वाच्यमित्येतत् सर्वमालोच्यानैकान्तिकता परिहरन्नाह—शब्दबोधस्वभावं वेत्यादि । नामेत्यभ्युपगमे । यथा चायं पक्षो न युज्यते तथा पश्चात्—"को वा ज्ञानस्य" ( तत्त्व० २५०६ ) इत्यादिना प्रतिपादयिष्यति । संस्कृतश्रवणादिभिरिति । आदिशब्देन समनन्तरप्रत्ययादिपरिग्रहः ॥ २५०० ॥

यदि नाम शब्दो न कारणम्, तथापि दोष एव, तथा हि—किमसौ शब्दः प्रकृत्या तज्ज्ञानज्ञेयस्वभावः ? उत नेति ?—पक्षद्वयम् । प्रथमे पक्षे दोषमाह—तज्ज्ञानज्ञेयेत्यादि । [ G 677 ] यदि तज्ज्ञानज्ञेयस्वभावः शब्दः स्यात्, तदा सर्वकालं शब्दरूपवत् तद्विज्ञानस्यापि नित्यत्वं स्यात्; तद्विज्ञेयस्वभावानुवृत्तेः। न हि

---

1. यथापि—पा०, गा० ।
2. ०वृत्त न ज्ञान—पा०, गा० ।

ज्ञानज्ञेयस्वभावौ तौ बद्धौ शृङ्खलयेव हि ।
एकभावे द्वितीयस्य प्राप्तिरव्यभिचारतः ॥ २५०३ ॥
संस्कृतश्रवणोत्पाद्यज्ञानसम्बद्ध एव हि ।
श्रोत्रासंस्करणेऽपीति ज्ञानमाक्षिप्यते स्फुटम् ॥ २५०४ ॥
तज्ज्ञेयात्मा न शब्दश्चेदतदात्मरसादिवत् ।
न तद्बोधस्वभाव स्याच्छ्रोत्रज्ञानं तथा सति ॥ २५०५ ॥
को वा ज्ञानस्य सम्बन्ध. शब्देन यत इष्यते ।
तच्छब्दबोधरूपं हि न तादात्म्यं विभेदतः ॥ २५०६ ॥

---

देवदत्तस्य दण्डसम्बन्धस्वभावानुवृत्तौ न दण्डस्यानुवृत्तिर्भवेत् । बद्धौ शृङ्खलयेव हीति । हिशब्दो यस्मादर्थे । यस्माज्ज्ञेयज्ञानयो स्वभावौ शृङ्खलयेव बद्धौ, तस्मादेकस्वभावसद्भावे द्वितीयस्य प्राप्तिसद्भाव प्राप्नोत्यव्यभिचारादिति सिद्धम् ॥ २५०१–२५०२ ॥

भवत्वेवम्, को दोष ? इत्याह—संस्कृतेत्यादि । संस्कृतश्रवणोत्पाद्यज्ञानसम्बद्ध एव हीति । शब्दोऽनुवर्तत एव[1] इत्यध्याहार । यस्मात् संस्कृतश्रवणोत्पाद्येन ज्ञानेन सम्बद्ध शब्द सर्वदानुवर्तते, तस्मादसंस्कृतश्रोत्रस्यापि तज्ज्ञान[2] प्राप्नोतीति व्यर्थं श्रोत्रसंस्करणम् ॥ २५०४ ॥

द्वितीयेऽपि पक्षे दोषमाह—तज्ज्ञेयेत्यादि । सुबोधम् ॥ २५०५ ॥

एतच्च सर्वं तदनुपकार्यस्यापि ज्ञानस्य तद्बोधस्वभावत्वमभ्युपगम्योक्तम्, इदानीं तद्बोधस्वभावत्वमेवासति सम्बन्धे ज्ञानस्यायुक्तमिति प्रतिपादयन्नाह—को वेति । [G 678] द्विविध एव हि वस्तूना प्रतिबन्ध—तादात्म्यम्, तदुत्पत्तिश्च, अन्यत्रोपकाराभावात् । न चानुपकार्योपकारकयो सम्बन्धो युक्त ; अतिप्रसङ्गात् । स च द्विविधोऽपि प्रतिबन्धो नास्ति शब्दज्ञानयोरिति कथं तद्बोधस्वभावज्ञानमसति प्रतिबन्धे भवेत् । अन्यथा ह्यतिप्रसङ्ग स्यात् ।

---

१. यस्त्रोत्र०—पा०, गा० ।
२. पा०, गा० पुस्तकयोर्नास्ति ।
३ तद्दिशनं—पा०, गा० ।

**न च तस्य तदुत्पत्तिः शब्दस्याजनकत्वतः[1] ।**
**तदुत्पत्तौ तु नियमात् सा सदाभाविनी भवेत् ॥ २५०७ ॥**
**एवं तद्विषयं ज्ञानं सदोत्पद्येत वा न वा ।**

---

अथापि स्यात्—तदाकारोत्पत्त्या तद्बोधस्वरूपं तज्ज्ञानं व्यवस्थाप्यते विनापि प्रतिबन्धेनेति ? तदेतदसम्यक्; निराकारज्ञानाभ्युपगमात् । न हि मीमांसकैः साकारं ज्ञानमभ्युपगम्यते । भवतु वा, तथाप्ययुक्तम्; शब्दस्य परोक्षत्वप्रसङ्गात् । एवं हि शब्दपरोक्षत्वमेव स्यान्न प्रत्यक्षत्वम्, ततश्च तत्साधकप्रमाणाभावात् तदाकारं तद्विज्ञानमित्येतदेव न सिद्ध्येत् । नापि कार्यव्यतिरेकात् तत्सिद्धिः; तस्य जनकत्वानभ्युपगमात् ।

स्यादेतत्—यस्यापि साकारवादिनो जनक एव विषयः, तस्यापि सर्वदैवार्थस्य परोक्षत्वात् कथमर्थाकारत्वं ज्ञानस्यावगतमिति ? सत्यम्; किन्त्वयं तस्योपायो यत् तत्कार्यव्यतिरेकात् कारणान्तरं निश्चितम्, तद्विज्ञानस्य नीलाद्याकारभेदकत्वेन निश्चितमन्वयव्यतिरेकाभ्याम् । तथा हि—चक्षुरालोकमनस्काराणां सर्वविज्ञानेषु तुल्यत्वान्न तत्कृतो ज्ञानस्य नीलादिभेद इति सामर्थ्यादेतत् कारणान्तरं व्यतिरेकतोऽनुमितम्, तत्कृतोऽयं भेद इति निश्चीयते । तेन तत्कृतकत्वात्[2] तस्यासावाकारो ज्ञानेन गृहीत इति व्यवस्थाप्यते । न त्वयमपि भवतोऽस्त्युपायः; तस्य कारणत्वानभ्युपगमात् ।

स्यादेतत्—चक्षुरादीनामपि सर्वदा परोक्षत्वात् सर्वविज्ञानेष्वविशिष्टत्वं कथमवसितमिति ? सत्यमेवमेतद् विज्ञानवादचिन्तायाम् । [illegible] हि विज्ञानवादी स्वप्नादाविव समनन्तरप्रत्ययकृतमेव विज्ञानस्य विशेषं वर्णयति, न बाह्यकृतम्; किन्तु सति बाह्येऽर्थे सर्वमेतदुच्यते, अन्यथा हीदमेव चोदनीयम्—कार्यव्यतिरेकतोऽपि कथं बाह्यसिद्धिः स्यादिति कारणमात्रास्तित्वं सिद्ध्येत्, न तु बाह्यम् । तत्तु कारणं स्वप्नादाविवान्तरमपि सम्भाव्यमित्यलं प्रसङ्गेन ।

अथापि जनकत्वमभ्युपगम्यते शब्दस्य, तथापि दोष इति दर्शयन्नाह—**तदुत्पत्तावित्यादि** । सेति तदुत्पत्तिः । एवमित्यादिनोपसंहरति । न चेति अजन-

---

१. ॰जनकत्व ''—पा॰ ।  २. तत्कृतत्वात्—पा॰, गा॰ ।

इत्येकान्ते स्थिते व्यर्था श्रोत्रसंस्कारकल्पना ॥ २५०८ ॥
कादाचित्के हि संस्कारे सत्येव ज्ञानसम्भवः ।
कदाचिदिति शोभेत संस्कारपरिकल्पना ॥ २५०९ ॥
ज्ञानकार्यावसेयश्च संस्कारः शक्तिलक्षणः ।
तच्च ज्ञानं सदाभावि यदि वा भावि सर्वदा ॥ २५१० ॥
कादाचित्कं कथं नाम संस्कारं तस्य सूचयेत् ।
उत्तरं¹ श्रोत्रसंस्कारान्नात¹ साधु प्रकाशितम् ॥ २५११ ॥
शक्तिराधीयते श्रोत्रे यदि वाऽव्यतिरेकिणी ।
व्योम्नो दिशो वा नित्यत्वं ततो हीयेत जन्मतः ॥ २५१२ ॥

त्वपक्षे । इत्येकान्त इति । नित्यं ज्ञानस्य सदसत्त्वलक्षणे ॥२५०६ २५०८॥

एवं तावच्छ्रोत्रस्य संस्कारमभ्युपगम्य विषयस्य जनकाजनकस्वभावचिन्तया [ G 679 ] श्रोत्रसंस्कारवैयर्थ्यमुक्तम्, इदानीं श्रोत्रसंस्कार एव न सम्भवतीति प्रतिपादयन्नाह—कादाचित्के हीत्यादि । एवं हि संस्कारकार्यं विज्ञानं कादाचित्कं युज्यते, यदि संस्कारः कादाचित्को भवेत् । अन्यथा कारणे नियमविकले स्थिते तत्कार्यं किमिति कदाचिद् भवेत् । न च संस्कारः कादाचित्को नित्यस्य श्रोत्रस्य युज्यते इति दर्शयन्नाह—ज्ञानकार्यावसेयश्चेत्यादि । तथा हि श्रोत्रादेः संस्कारो ज्ञानकार्यगम्यमानः शक्त्यात्मक एव संस्कारो भवेत्, शक्तेरेव कार्यावसेयत्वात् । सा च शक्तिः श्रोत्रस्यात्मभूतैव, न व्यतिरेकिणी², तत एव² कार्योत्पत्तेः श्रोत्रस्य कारणत्वप्रसङ्गात् । सा च यदि सिद्धैव शक्तिसद्भावे तद्विज्ञानं सदा भवेत् । अथासद्भावः तदा न कदाचित् तद्विज्ञानं भवेत् । अतश्च कादाचित्कत्वं ज्ञानस्य न स्यात् । तस्मात् कादाचित्कं विज्ञानं कथं श्रोत्रस्य शक्तिलक्षणं संस्कारं सूचयेत् । नैव ॥ २५०९–२५११ ॥

अथापि स्यात् – नैव स्वाभाविकी शक्तिर्ज्ञानकार्यानुमेया, तेन कादाचित्कं विज्ञानं शक्तेः सूचकमुपपन्नमेव । इत्याह—शक्तिराधीयत इत्यादि । आत्मभूता

1–1 उत्तरश्रोत्र०—जै० पुस्तक पाठः ।
2–2 तद्व्यतिरेकिणी तत —पा० ग्रा० ।

भावाच्चाव्यतिरिक्तत्वान्नित्यत्वं संस्कृतेरपि ।
भाववत्त्वेन[1] तज्जन्यं विज्ञानं सर्वदा भवेत्[1] ॥ २५१३ ॥
व्यतिरेके तु तस्येति सम्बन्धो नोपपद्यते ।
श्रोत्रस्याकारकत्वं च शक्तेर्ज्ञानसमुद्भवात् ॥ २५१४ ॥

---

वा शक्तिराधीयेत, व्यतिरिक्ता वा, व्यतिरिक्ताव्यतिरिक्ता वा—इति पक्षत्रयम् । प्रथमे पक्षे शक्तिस्वरूपवदनित्यत्वं श्रोत्रस्योभयात्मकस्यापि प्राप्नोति । कुतः ? जन्मतः = उत्पत्तेः । अथापि स्यात्—न श्रोत्रस्य शक्तितोऽनन्यत्वमभ्युपगतम्, किं तर्हि ? शक्तेरेव श्रोत्रादिति, तदेतत्पश्यत महतो ग्रन्थ्यान्ध्यस्य[2] विलसितम् । कथं हि नाम्नैकस्य स्वभावस्य संश्लेषे तदैवापरो दूरीभवेत्; परस्परस्वभावानुप्रवेशलक्षणत्वादभेदस्य । [G 680] न हि सलिलं पयसो दवीयसि गोचरे वर्तमानमनुभवति तत्संश्लेषमिति यत्किञ्चिदेतत् ॥ २५१२ ॥

भवतु चायं पक्षः, तथापि दोष एवेति दर्शयन्नाह—भावाच्चेत्यादि । भावस्वरूपवत् संस्कारस्यापि नित्यत्वं प्राप्नोति; अव्यतिरेकात् । ततश्चायमपरो दोष इत्याह—तेनेत्यादि ॥ २५१३ ॥

द्वितीयेऽपि पक्षे दोषमाह—व्यतिरेके त्वित्यादि । शक्तेर्भावाद् व्यतिरेकेऽभ्युपगम्यमाने तस्यासौ शक्तिरिति सम्बन्धो न स्यात्; अनुपकार्यस्य पारतन्त्र्यायोगात् । अथ[3] श्रोत्रं शक्तिमुपकरोति; व्यञ्जकस्यैव नादादेरुपकारकत्वेनेष्टत्वात् । अथ श्रोत्रस्याप्युपकारकत्वम्; तदा शक्त्युपकारिण्या अपि शक्तेः श्रोत्राद् व्यतिरेक इत्यनवस्था स्यात् । ततश्च शक्तीनामेव परम्परया घटनाच्छक्तेरेव कार्योत्पत्तेः श्रोत्रस्याकारकत्वं स्यात् । ततश्चावस्तुत्वप्रसङ्गः । अथ शक्त्युपकारिण्याः शक्तेरव्यतिरेकोऽभ्युपगम्यते ? क्व इदानीमाद्यायां शक्तावव्यतिरेके प्रद्वेषः ? किञ्च—नित्यं ज्ञानस्योत्पत्तिप्रसङ्गः; तद्धेतो श्रोत्रस्य नित्यत्वात् । न चानुपकार्यस्य सहकार्यपेक्षा काचित् ॥ २५१४ ॥

---

१–१ पा० पुस्तके नास्ति; प्राप्नोति तेन वस्तुना०—गा० ।
२. ग्रान्ध्यस्य—पा०, गा० । ३. न च—गा० ।

भेदाभेदविनिर्मुक्तं व्यस्तं पक्षान्तरं ततः ।
उत्तरं श्रोत्रसंस्कारादसंस्कृतधियोच्यते[1] ॥ २५१५ ॥
एतेनैव निषेद्धव्या विषयोभयसंस्कृतिः ।
तस्मान्नित्येष्वभिव्यक्तिः सर्वथापि निरास्पदा ॥ २५१६ ॥
ततश्च व्यक्तिमाश्रित्य दीर्घह्रस्वक्रमादयः ।
ये केचित् प्रविभज्यन्ते तेऽपि सर्वे निरास्पदाः ॥ २५१७ ॥

शब्दनादयोर्व्यङ्ग्यव्यञ्जकभावनिरसनम्

अप्राप्तिमात्रसाम्येऽपि न सर्वस्य ग्रहो यथा ।
अयस्कान्तेन लोहस्य सामर्थ्यनियमस्थितेः ॥ २५१८ ॥

शङ्करस्वामिमतखण्डनम्

अयस्कान्तप्रभाप्राप्त्या तत्प्राप्त्याकर्षणं यदि ।

---

तृतीयं पक्षमाह—भेदाभेदेत्यादि । व्यस्तमिति । पुद्गलादिपरीक्षायाम् । एकस्यैकदा विधिप्रतिषेधायोगात् । तथा हि [G 681] भेदाभेदौ परस्परपरिहारस्थितलक्षणौ, तयोरेकस्याभावव्यवच्छेदेनैवापरस्य परिच्छेदात् । यस्य हि यदात्मव्यवच्छेदमन्तरेण न स्वभावः परिच्छिद्यते, स तत्परिहारेण स्थितः, यथा भावाभावयोरन्यतरः । यौ च परस्परपरिहारस्थितलक्षणौ, तयोरेकस्वभावप्रतिषेधोऽपरविधिनान्तरीयकः इत्यन्यत्वनिषेधे सामर्थ्यात् तादात्म्यविधिरिति तदानीमेव तस्यापि प्रतिषेधो न युक्तः, अन्यथान्यस्याप्यप्रतिषेधप्रसङ्गादित्येवमुभयपक्षे दोषो वाच्यः । एतेनैवेति । प्रकृत्या ज्ञानोत्पादनयोग्यायोग्यस्वभावविकल्पद्वारेण । तस्मादित्यादिनोपसंहरति । क्रमादय इत्यादिशब्देन प्लुतोदात्तादिपरिग्रहः ॥ २५१५–२५१७ ॥

'येषां त्वप्राप्तजातोऽयं शब्दः श्रोत्रेण गृह्यते' (तत्त्व० २१७३) इत्याद्याह—अप्राप्तिमात्रसाम्येऽपीत्यादि । यद्यपि सर्वोऽप्राप्तः, तथापि पदार्थानां शक्तिप्रतिनियमान्न सर्वस्य विषयस्य ग्रहः = ग्रहणं प्राप्नोति । यथा—अयस्कान्तो नामोपलोऽप्राप्तमयः कर्षन्नपि न सर्वमप्राप्तं कर्षति ॥ २५१८ ॥

अयस्कान्तप्रभेत्यादिना शङ्करस्वामिमतेन दृष्टान्तासिद्धिमाशङ्कते । स

---

[1] ०संस्कृतधी०—पा०, गा० ।

ननु प्रभा न दृश्येयं कथमस्तीति गम्यते । ॥ २५१९ ॥
कस्मादाप्तं न काष्ठादि सा समाकर्षति प्रभा ।
तच्छक्तिनियतत्वाच्चेदप्राप्तावपि तत्समम् ॥ २५२० ॥
दूरमध्यसमीपस्थैरक्रमेणैव गम्यते ।
प्रयोगानन्तरं तत्र सर्वेषां ज्ञानजातितः ॥ २५२१ ॥

उद्द्योतकरमतखण्डनम्

दूरासन्नादिभेदेन स्पष्टास्पष्टं यथेक्ष्यते ।

हि प्राह—"तत्राप्ययस्कान्तमणिप्रभावेधवशादेवाकर्षणमयसः, अन्यथा सर्वदेशाव-स्थितानामयसामाकर्षणं स्यात् । यद्यपि तस्य प्रभा प्रदीपप्रभावान्नोपलभ्यते, तथा-प्यनुमेयाः व्यवधाने[1] दूरे[1] [2]चाकर्षणदर्शनात्" ( ) इति । नन्वित्यादिना प्रतिविधत्ते । न दृश्यते[3] इत्यनुपलम्भेन सद्व्यवहारनिषेधं करोति ॥ २५१९ ॥

यदपि प्रसङ्गसाधनमुक्तम्—"सर्वदेशावस्थितानामयसामाकर्षणप्रसङ्गात्" इति, तत्परिहरन्नाह—कस्मादाप्तमित्यादि । प्राप्तिपक्षेऽपि तुल्यः प्रसङ्गः—कस्मात् साऽयस्कान्तप्रभा सर्वं प्राप्तं काष्ठादिकं [ G 642 ] नाकर्षतीति । पदार्थस्वभाव-प्रतिनियमान्नातिप्रसङ्ग इति चेत् ? अप्राप्तिपक्षेऽपि पदार्थस्वभावस्य नियामकत्वं केनापहृतम्, येन तत्र नेष्यते । तस्माददृष्टप्रभाकल्पनं व्यर्थमेव ॥ २५२० ॥

यदुक्तम्—"तत्र दूरसमीपस्थग्रहणाग्रहणे सतो । स्यातां न च क्रमः" ( तत्त्व० २१७४ ) इति, तत्राह—दूरेत्यादि । क्रमग्रहणमसिद्धम्; शब्द-प्रयोगानन्तरं युगपद्विज्ञानोत्पत्तेः ॥ २५२१ ॥

यच्चोक्तम्—"नापि तीव्रमन्दादिसम्भवः" ( तत्त्व० २१७४ ) इति, तत्राह—दूरासन्नादीत्यादि । यथा रूपमप्राप्य गृह्यमाणमल्पापि[4] च स्पष्टमी-क्ष्यते, तथा शब्देऽप्यव्यापिन्यप्राप्य[5] गृह्यमाणे च तीव्रमन्दादिवेदना भविष्यति । ननु च [6]परं प्रति[6] रूपस्याप्यप्राप्य ग्रहणमसिद्धम्, तत् कथं दृष्टान्तत्वेनोच्यत

1-1. व्यवधाने—पा० ।
2. चाकर्षणा०—पा०, गा० ।
3. दृश्येयम्—पा०, गा० ।
4. मध्यापि—पा० ।
5. ०प्यव्यापि०—पा० ।
6-6. परम्—पा०, गा० ।

रूपं तथैव शब्देऽपि तीव्रमन्दादिविद् भवेत् ॥ २५२२ ॥

इति ? नैष दोषः; यद्यपि परस्य वचनमात्रान्न सिद्धम्, तथापि यत् प्रमाणसिद्धं तदुभयोरपि सिद्धम् । किं पुनरत्र प्रमाणम् ? सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात्[1] । यो हि गतिमान् स सन्निकृष्टमाशु प्राप्नोति, विप्रकृष्टं चिरेण; यथा देवदत्तो प्रासाद् ग्रामान्तरं गच्छन् । शाखाचन्द्रमसोस्तु तुल्यकालमुन्मेषसमनन्तरमेव ग्रहणं दृष्टम् । तस्मादप्राप्यकारि चक्षुरिति गम्यते ।

अत्रोद्द्योतकरः प्राह—"ज्ञानानामाशूत्पत्तेः कालभेदस्याग्रहणान्मिथ्याप्रत्यय एष उत्पलपत्रशतव्यधवत्" (                ) इति, तदेतदसम्यक्; एवं हि सरो रस इत्यादावपि क्रमव्यवसायो न स्यात्; आशूत्पत्तेस्तुल्यत्वात् । ततश्च प्रतीतिभेदो न स्यात्, सर्वासां च बुद्धीनामाशूत्पत्तिरस्तीति न कदाचित् क्रमग्रहणं स्यादिति प्राग्[2] निर्लोठितमेतद् विस्तरेण ।

पुनः स एवाह—"यद्यप्राप्यकारि चक्षुर्भवेत्, तदा न कुड्यादेरावरणस्य सामर्थ्यमस्तीत्यावरणानुपपत्तिः । यच्च दूरीभूतस्याग्रहणं अन्तिके च ग्रहणं तत्र[3] स्यादविशेषात् । स्यादेतत्—य एव हि चक्षुषो विषयीभवत्यर्थः स उपलभ्यते यश्च न भवति नासावुपलभ्यत इति ? तच्च नैवम्; सम्बन्धव्यतिरेकेण विषयीभावानुपपत्तेः । कोऽयं सम्बन्धव्यतिरेकेण विषयीभावो नाम ? केवलं मयोच्यते [ G. 683 ] सम्बन्ध इति, भवताऽभिधीयते विषयीभाव—इति न कश्चिद्विशेषः" (        ) इति, तदेतदसम्यक्; कारणीभावो हि विषयीभाव उच्यतेऽस्माभिः, न सम्बन्धः । तथा हि—रूपादिर्विषयश्चक्षुषो विज्ञानोत्पत्तौ सहकारितां प्रतिपद्यमानो विषयीभवतीत्युच्यते, न ■ तेन सहाश्लिष्यन् । द्विविधश्च सहकारार्थः— परस्परोपकारो वा, यथा—प्रमावस्था दूरादपत्रसकप्रतिष्ठस्य[4]; एकार्थक्रिया वा, यथोन्मिषत्मात्रेण रूपं गृह्णतः । उभयथापि विज्ञानस्य कारणविशेष एव विषय उच्यते, न तु सम्बन्धी ।

1. ॰ग्रहणम्—पा॰, गा॰ ।
2. निर्लोठित॰—गा॰ ।
3. तत्र—गा॰ ।
4. ॰प्रतिष्ठस्य—गा॰ ।

परस्य चोद्यम्

भिन्नाभानां मतीनां चेदेकालम्बनता कथम्? ।

तन्निरसनम्

तुल्यं रूपधियामेतच्चोद्यं बाह्यार्थवादिनाम् ॥ २५२३ ॥

स एव कारणविशेषप्रतिनियमोऽसति सम्बन्धे न स्यादिति चेत्? न; स्वकारणशक्तितः प्रतिनियमसिद्धेस्तथाभूत एवासौ स्वकारणादुत्पद्यमान [1]उत्पद्यते। येन कश्चिदेव ज्ञानजनको भवति नान्यः; कारणभेदेन भिन्नस्वभावत्वात् सर्वभावानाम्। यथा च भवतस्तुल्येऽपि सम्बन्धे किमिति चक्षू रूपमेवोपलभते, न रसम्। तेनासम्बन्धान्नोपलभत इति चेत्? स एव हि सम्बन्धः किमिति न स्यात्? देशस्याभिन्नत्वात्। न ह्यत्र नियामकं किञ्चिदस्ति कारणम्, येनाभिन्नदेशत्वेऽपि रूपमेवानुसरति चक्षु, न रसं तद्देशवर्त्तिनमपि, नाप्यतिदूरदेशवर्त्ति रूपमिति। स्वहेतुर्नियामक इति चेत्? तदेतदस्मत्पक्षेऽपि समानमित्यलं विस्तरेण ॥ २५२२ ॥

भिन्नाभानामित्यादिना परस्य चोद्यमाशङ्कते। कथं भिन्नाभानां मतीनामेको विषयो भवेत्, एवं हि रसरूपादिबुद्धीनामेकालम्बनता स्यादिति परस्याभिप्रायः। परिहारमाह—तुल्यमित्यादि। रूपधियाम् = रूपविषयाणामपि बुद्धीनाम् एतच्चोद्यं समानम्—कथमेकविषयता भवेद् दूरासन्नादिभेदेन स्पष्टादिप्रतिभासानामिति। एतच्च बाह्यार्थवादिना चोद्यम्, ये विषयगतमेवाकारं वर्णयन्ति न विज्ञानगतम्। ये[2] पुनर्विज्ञानवादिन, तेषां सर्वमेव विज्ञानं निर्विषयमात्मसंवेदनं स्पष्टाद्याकारभेदवद्भिन्नमेवोपजायत इति न तेषां चोद्यम्। येषामपि बाह्यार्थवादिनाम् 'साकारं ज्ञानम्' इति पक्षः, तेषां सर्वात्मना विषयसारूप्यानभ्युपगमात् केनचिदंशेन सारूप्याद् भिन्नाभानामपि मतीनामेकविषयत्वमविरुद्धमेवेति चोद्यम् ॥ २५२३ ॥

---

1. उपपद्यते—गा०।
2. ते—पा०, गा०।

प्राप्तिग्रहणपक्षे तु कर्णाभ्यन्तरपक्षवत् ।
न विच्छिन्न इति ज्ञानं मेघशब्दादिके भवेत् ॥ २५२४ ॥
तद्विच्छिन्न इति ज्ञानजनकत्वाद् यथा मनः ।
श्रोत्रमप्राप्यकारि स्यान्नान्यथैव त्वगादिवत् ॥ २५२५ ॥
मनोऽपि प्राप्यकारीति ये प्राहुः क्षणमात्रतः ।
विदूरतरदेशस्थं चेतस्तेषां न युज्यते ॥ २५२६ ॥

उद्द्योतकर-कुमारिलमतखण्डनम्

यत्तु बाह्येन्द्रियत्वादि प्राप्यकारित्वसाधनम् ।

---

शब्दस्य तर्हि प्राप्तिग्रहणे किं बाधकं प्रमाणम्, अप्राप्तिग्रहणे च किं साधकम् । इति प्रश्ने सत्याह—प्राप्तीत्यादि। [ ८ ७४० ] कर्णाभ्यन्तरपक्षवदिति वैधर्म्यदृष्टान्तः । पञ्चम्यन्ताद् वतिः । यथा कर्णकण्डूविनोदनकारिणः पतत्रिपक्षस्याविच्छिन्नः[1] शब्द उपलभ्यते, तथा मेघादिशब्दस्यापि कदम्बगोलकन्यायेन प्रविसर्पतः कर्णदेशसमागतस्यैव ग्रहणात् तुल्यं ग्रहणं प्राप्नोति । न च स्वकारणसंयोगसमवायिदेशवशादयं विच्छेदविभ्रम इति शक्यं वक्तुम्; तेषां श्रोत्रेणाग्रहणात् । न ह्यविषयीभूतपदार्थाकारसमारोपवदुत्पद्यते क्वचिद् विज्ञानम् । न हि चक्षुर्विज्ञानं रससारूप्यं समारोपयतीति ॥ २५२४ ॥

तदेवं प्राप्तिग्रहणे बाधकं प्रमाणमभिधाय, अप्राप्तिग्रहणे साधकमाह—तद्विच्छिन्न इत्यादि । तदिति तस्मात् । नान्यथैव त्वगादिवदिति वैधर्म्यदृष्टान्तः । यथा त्वगादेरिन्द्रियस्य विच्छेदेन ग्रहणं न भवति, तथात्रापि स्यादिति भावः ॥ २५२५ ॥

मनोऽपीत्यादिना दृष्टान्तस्य साध्यविकलतामाशङ्क्य परिहरति ॥२५२६॥

अत्रोद्द्योतकर-कुमारिलादयः प्रमाणयन्ति—"प्राप्यकारिणी चक्षुःश्रोत्रे, बाह्येन्द्रियत्वात्, घ्राणादिवत् । बाह्यग्रहणमन्तःकरणेन मनसा व्यभिचारपरिहारार्थम् । तथा—करणत्वे सति व्यवहितार्थानुपलम्भकत्वात् प्रदीपादिवत् । विषयनिवृत्त्यर्थं

---

१. ॰विच्छिन्नं—पा०, भा०।

साध्यधर्मविजातीयाद्[1] विरोधाद् व्यभिचारि तत् ॥२५२७॥
व्यस्ताः पूर्वं च संयोगविभागव्यतिरेकिणः ।
वायोरक्षणिकत्वाच्च[2] युक्ता नाव्यतिरेकिणः ॥ २५२८ ॥
अत एवाविशेषत्वाद् गतिर्नास्योपपद्यते ।
वेगाभावादतो नासौ यावद्वेगं प्रतिष्ठते ॥ २५२९ ॥
कर्णव्योमनि सम्प्राप्तः शक्तिं श्रोत्रे करोति चेत् ।
तत्कशाघातवत् कस्माच्छब्दवित्तौ न तद्गतिः ॥ २५३० ॥
शब्दावधानमेतस्य प्रतिबध्नाति वेदनाम् ।
इत्ययुक्तं कशाघातवातान्तरविदस्तथा ॥ २५३१ ॥

---

करणत्वे सतीति विशेषणम् । तथा रूपशब्दौ प्राप्यकारिबाह्येन्द्रियग्राह्यौ; बाह्येन्द्रियकरणत्वे सतीति विशेषणम् । तथा रूपशब्दविज्ञाने प्राप्यकारिबाह्येन्द्रियग्राह्यविषयालम्बने, बाह्येन्द्रियार्थालम्बनत्वात्, गन्धरससंवत् । तथा रूपशब्दविज्ञाने प्राप्यकारिबाह्येन्द्रियग्राह्यविषयालम्बने, बाह्येन्द्रियार्थालम्बनत्वात्, गन्धरसज्ञानवत्" इति । अत्र दूषणमाह—यस्त्वित्यादि । सुबोधम् ॥ २५२७ ॥

[ G. 685 ] "तस्माच्छ्रोत्रियदस्यापि" ( तत्त्व० २१७५ ) इत्यादावाह—व्यस्ता इत्यादि । पूर्वमिति षट्पदार्थपरीक्षायाम् । अव्यतिरिक्तास्तर्हि भविष्यन्ति ? इत्याह—वायोरित्यादि । वायव एव हि संयुक्ता वियुक्ताश्चोत्पद्यमाना अव्यतिरिक्ता संयोगविभागा उच्यन्ते । न चाक्षणिका क्रमेणापि संयुक्तस्वभावा युज्यन्ते; तेषामेकरूपत्वात् ॥ २५२८–२५२९ ॥

यदुक्तम्—"कर्णव्योमनि सम्प्राप्त" ( तत्त्व० २१७८ ) इत्यादि, तत्राह—कर्णेत्यादि । अत्र पक्षद्वयम्—कदाचिदसौ वायुरुपलभ्यस्वभावो वा भवेत्, अनुपलभ्यस्वभावो वा । प्रथमे पक्षे शब्दवित्तिकाले कशाघातस्येव वायोरपि गति = उपलब्धि प्राप्नोति । अथापि स्याद्—युगपद्विज्ञानद्वयानुत्पत्ते, शब्दावधानम् = शब्दोपलम्भ, एतस्य = वायोर्वेदनाम् = उपलब्धि प्रतिबध्नातीति ? तदेतदयुक्तम्; शब्दोपलब्धिकाले कशाघातवातान्तरविदो वक्तुम् । यथा हि

---

१. अन्यधर्म०—पा०, गा० । २. ०रक्षणिकत्वाच्च—पा० ।

लाघवात् क्रमभावेऽपि युगपद्भ्रान्तिरित्यद ।
न किञ्चित् सर्वथाप्यस्मिन् वायोरनुपलम्भनात् ॥ २५३२ ॥
अथाप्यतीन्द्रियो वायु काणादैरिव वर्ण्यते ।
युष्माभिरपि तद्व्याप्ये[1] स्पृष्ट्याप्तिस्तस्य[2] किंकृता ॥२५३३॥

---

वातान्तरस्य व्यजनादिप्रेरितस्य कशाघातस्य च शब्दोपलम्भवेलायामनुभवो भवेत्, तथा कर्णदेशप्राप्तस्यापि वायो स्पर्शोऽपि स्यात् । एतेन युगपद्विज्ञानानुत्पत्ति प्रतिज्ञाया प्रत्यक्षविरोधमाह ॥ २५३०-२५३१ ॥

न चाशूत्पत्तिनलात् युगपद्ग्रहणभ्रान्तिरतिप्रसङ्गादिति प्रतिपादितम् । भवतु नाम क्रमभावेऽपि लाघवकृतो यौगपद्यविभ्रम, तथाप्येतदुत्तरमत्र प्रकृतानुपयोगित्वान्न किञ्चिदिति प्रतिपादयन्नि—लाघवादित्यादि । यदि नाम विज्ञानस्योत्पत्तिलाघवाद् यौगपद्यविभ्रमो भवतीति । स्यात्, न तु [G 786] पुनरुपलब्धिलक्षणप्राप्तस्य सर्वथानुपलम्भ एव भवति । तथा हि—यत्र सर्वथैव क्रमेण यौगपद्येन वा वायो कर्णदेशप्राप्तस्यानुपलम्भ एव । तस्माल्लाघवकृतोऽयं विज्ञाने यौगपद्य विभ्रम इति, अद[3] = एतदुत्तर न किञ्चित् । तुच्छमित्यर्थ ॥२५३२॥

अथापीत्यादिना द्वितीयपक्षमाह । काणादा = वैशेषिका । तेषा शब्द लिङ्गो वायु । भाष्यकृताऽपि शबरेणोक्तम्— "वायवीया संयोगविभागा अप्रत्यक्षस्य वायो कर्णशष्कुलीप्रदेशात् प्रादुर्भवन्तो नोपलभ्यन्ते" ( मी० द०, शा० भा० १ १ १५) इति । अत्र दूषणमाह—स्पृष्ट्याप्तिस्तस्य किंकृतेति । स्पृष्टि = स्पर्श, तस्याप्ति = प्राप्ति, प्रसङ्ग इति यावत् । एतदुक्त भवति—तस्य वायो स्पर्शप्रसङ्गो योऽयं भाष्यकारेण दत्त, स कथम्, तथा हि—"वायुरापद्यते शब्दताम्" इत्येववादिन शिक्षाकारान् प्रति भाष्यकृतोक्तम्—"वायवीयश्चेच्छब्दो[4] भवेत्, वायो सन्निवेशविशेष[5] स्यात् । न च वायवीयानवयवान् शब्दे सत प्रत्यभिजानीम, यथा पयस्य तन्तुमयान् । न चैव भवति । स्पर्शश्चेद्व स्पर्श

---

1 तद्व्य—पा० ।
2 ०स्तत्र—पा०, भा० ।
3 पा०, भा० पुस्तकयोर्नास्ति ।
4 वायवीयश्च० (?)—पा०, भा० ।
5 ०देशस्तत्वन्निविष्ट—जै० ।

अस्तु वाऽतीन्द्रियो वायुस्तत्तद्योगिगतस्य तु ।
उष्णशीतेतरस्य स्यात् स्प्रष्टव्यस्य विदन्यवत् ॥ २५३४ ॥
अथापि कर्णशष्कुल्या तस्यायोगान्न [1]विन्मतिः ।
कर्णव्योम न सम्प्राप्त इत्येतन्नु कथं [2]गतम् ॥ २५३५ ॥
तस्माच्छ्रोत्रियदृष्टेयं कल्पना निर्निबन्धना ।
विदुषां प्रीतये नेति श्रोत्रियेष्वेव राजते ॥ २५३६ ॥
ये[3] निरंशं[3] नभः प्राहुस्तान् प्रति प्रागुदीरिताः ।

---

नेनोपलभेमहि । न च वायवीयानवयवान् शब्दगतान् स्पृशामः।" ( मी० द०, शा० भा० १.१.२२ ) इति ॥ २५३३ ॥

अभ्युपगम्याप्यतीन्द्रियत्वम्, दोषान्तरमाह—अस्तु वेत्यादि । तेन तेन वायुना योगस्तद्योग, स यस्यास्ति जलस्तेजोजगतीसञ्ज्ञकस्य भूतत्रयस्य तद्योक्तम् । तद्गतम् = तत्मात्र तदाश्रितमिति यावत । "द्वितीयाश्रित" ( पा० सू० २.१.२४ ) इत्यादिना द्वितीयासमास । एतच्च स्प्रष्टव्यस्येत्यनेन समानाधिकरणम् । तस्य स्प्रष्टव्यस्य = शीतोष्णेतरस्वभावस्य वित् = वेदना प्राप्नोति । अन्यवदिति । शब्दव्यञ्जकाभिमतकोष्ठवायुगतादन्यस्येव । षष्ठ्यन्ताद् वतिः । यथा शिशिरसमये हिमनिचयव्यासङ्गवाहिन पवनस्य, यथा वा तरुणतरणिकरनिकरमसङ्गावरुद्धाशेषदिग्विभागे[4] वहतो निदाघसमये समीरणस्य, तथा शीतेतरविरहितकारवर्तिनो मातरिश्वन. स्प्रष्टव्यस्य शीतादे. संविद् भवति, तथेहापि स्यात ॥ २५३४ ॥

अथापीत्यादिना परस्योत्तरमाशङ्कते । [ G 687 ] तस्येति वायोः । अयोग इति असंसर्गः । कर्णशष्कुल्येति सम्बन्धः । शेषं सुबोधम् ॥ २५३५-२५३६ ॥

यदुक्तम्—"यद्वा वेदानुसारेण" ( तत्त्व० २१९७ ) इत्यादि, तत्र समानत्वाद् दूषणस्येत्यत्रैवातिदेशं कुर्वन्नाह—ये निरंशमित्यादि । निरंशाकाशा-

---

1. चेन्मति —पा०, गा० ।
2. मतम्—गा० ।
3-3. निरंश ये—जै० ।
4. ०करप्रसङ्गा०—पा०, गा० ।

दोषा ज्ञेया निरंशैकदिक्छ्रोत्रत्वेऽपि ते समाः ॥ २५३७ ॥
एकव्यापिनभःपक्षे विनाशो न प्रकल्प्यते ।
संस्कृताश्रयमन्यच्चेत्येकमेव हि तन्नभः ॥ २५३८ ॥
एकव्योमात्मकं श्रोत्रं नास्त्यसंस्कृतशष्कुलि ।
ततोऽधिष्ठानभेदेन संस्कारनियमोऽस्थितः ॥ २५३९ ॥
तेनैकस्मिन्नधिष्ठाने लब्धसंस्कारमिन्द्रियम् ।
बोधकं सर्वदेहेषु स्यादेकेन्द्रियवादिनः ॥ २५४० ॥
पुंसां देहप्रदेशेषु विज्ञानोत्पत्तिरिष्यताम् ।
किन्तु प्रधानदेशत्वमेकत्वान्नभसो न ते ॥ २५४१ ॥
निष्प्रदेशोऽपि चात्मा न कार्त्स्न्येन च विदन्नपि ।
शरीर एव गृह्णातीत्येवमुक्तेऽपि दुष्यति ॥ २५४२ ॥
बाधिर्याद्यव्यवस्थानमेतेनैव च हेतुना ।

---

एकश्रोत्रपक्षे ये प्रागुक्ता दोषाः — संस्कारवैयर्थ्यम्, संस्कारानुपपत्तिश्चेत्यादयः, ते दिक्छ्रोत्रपक्षेऽपि समाना इति न पृथक् दूषणं वाच्यम् ॥ २५३७ ॥

यदुक्तम्—"यद्यपि व्यापि चैकं च" ( तत्त्व० २१८४ ) इत्यादि, तत्राह—एकव्यापिनभःपक्ष इत्यादि । अन्यच्चेति । असंस्कृताश्रयम् । न ह्यनवयवस्याय विभागो युक्तः, सावयवत्वप्रसङ्गात् । [ G 688 ] कार्त्स्न्येन तु विभागेऽर्थक्रियानुरूपा वृत्तिविशेषा[1], न चारोपितार्थानुविधायिन्योऽर्थक्रिया भवन्ति, तासां वस्तुप्रतिबद्धत्वात् । ततश्चैकस्मिन्नधिष्ठाने यदि संस्कृतमिन्द्रियं तच्च बोधकत्वमापन्नम्, तदाधिष्ठानान्तरे तदेव तत्त्वमार्थत इति सर्वत्रैव तत्संस्कृतं बोधकं च प्राप्नोति ।

तेन यदुक्तम्—"पुंसां देहप्रदेशेषु" ( तत्त्व० २१८८ ) इत्यादि, तत्र सर्वं प्रयुक्तम्, एकस्य प्रदेशविभागायोगादिति दर्शयन्नाह—पुंसामित्यादि । प्रधानदेशत्वमिति । प्रधानस्य शरीरस्य देशत्वम् = विज्ञानोत्पत्तिदेशत्वमित्यर्थः । एवमुक्तेऽपि दुष्यतीति । एकस्य निरंशत्वात् । अव्यवस्थानमिति ।

१ °वृत्तयोऽर्थ०—पा० ।

तदेवाभोग्यमन्यस्य नाविशेषाद्धि युज्यते ॥ २५४३ ॥
अव्यक्तपूर्वरूपं हि विशेषानुदये सति ।
कथं नाम भवेच्छ्रोत्रमभोग्यमपरस्य ते ॥ २५४४ ॥
नित्यत्वादनपेक्षत्वाद् धर्माधर्मावशीकृतम् ।
सदैव च नभःश्रोत्रं सर्वभोग्यं प्रसज्यते ॥ २५४५ ॥
धर्माधर्मोपकार्यं हि नभो नैव कदाचन ।
नित्यत्वात् कार्यताभावे चास्य कैवं वशीक्रिया ॥ २५४६ ॥
मन्त्रौषधादिशक्त्या च पुनर्भोग्यं कथं भवेत् ।
नित्यत्वान्न हि तत् तेभ्यो विशेषं प्रतिपद्यते ॥ २५४७ ॥

---

व्यवस्थानाभावः ॥ २५३८–४३ ॥

अविशेषमेव दर्शयति—अव्यक्तपूर्वरूपं हीत्यादि ॥ २५४४ ॥

अथापि स्याद्—धर्माभ्यां वशीकृतत्वाद् विशेषोऽस्त्येव ? इत्याह—नित्यत्वादित्यादि । नित्यत्वमनपेक्षत्वे हेतुः, तथाऽवशीकरणस्य ॥ २५४५ ॥

अथानपेक्षस्यापि वशीकरणं कस्मान्न भवति ? इत्याह—धर्माधर्मेत्यादि । अनपेक्षत्वेन ह्यकार्यत्वमुच्यते । यच्चाकार्यं न तत् केनचिद् वशीक्रियते, यथा शशविषाणम्, अप्रतिसङ्ख्यानिरोधादिर्वा । अकार्यं च श्रोत्रमिति व्यापकविरुद्धोपलब्धिः । नित्यत्वादित्यनेन हेतोरसिद्धतां परिहरति । कार्यताया अभावे कैवं वशीक्रियेत्यनेनानैकान्तिकताम्[1] ॥ २५४६ ॥

ननु चाकार्यस्यापि वशीक्रिया दृश्यते, यथा—प्रागभोग्यस्य श्रोत्रस्य पश्चान्मन्त्रौषधादिशक्त्या भोग्यत्वं भवति, ततश्च हेतोरनैकान्तिकतेति ? तत्र परिहारमाह—मन्त्रौषधादीत्यादि । [G 689] आदिशब्देनोल्लेखनादिपरिग्रहः । कथं भवेदिति । यदि तत्रापि न कार्यता भवेदित्यध्याहारः । ननु चाकार्यस्यापि सतो विशेषोत्पत्तिमात्रेण वशीक्रिया भविष्यति ? इत्याह—नित्यत्वादित्यादि ॥ २५४७ ॥

---

१. परिहरतीति सम्बन्धः ।

अधिष्ठाने त्वनित्येऽपि क्षणिकानित्यता न चेत् ।
तदात्मातिशयायोगाद् बाधिर्यादिर्न युज्यते ॥ २५४८ ॥
अस्तु वातिशयस्तस्मिन् व्योम्नि त्वेष न विद्यते ।
न चाधिष्ठानसम्बन्धान्नित्यत्वादनपेक्षणात् ॥ २५४९ ॥
अतस्तद्द्वारकोऽप्यत्र बाधिर्यादिर्न युज्यते ।
नभसो भागवत्त्वेऽपि नित्यतायामिदं समम् ॥ २५५० ॥
तत्रैव भवतोऽप्येवं स्वामित्वानपकर्षणम् ।
न युक्तं यदि तस्यापि क्षणिकत्वं समस्ति न ॥ २५५१ ॥
को हि तस्या समुत्पन्नः पश्चादतिशयो यतः ।
स्वामित्वादपकृष्टोऽसौ न भोगं पुनराप्नुयात् ॥ २५५२ ॥
यदा च संस्कृतिर्नैव श्रोत्रे शब्दे च युज्यते ।

---

एवं तदधिष्ठानस्यानित्यत्वात् तत्संस्कारद्वारेण नित्यस्यापि श्रोत्रस्य वशीक्रिया भविष्यति ? इत्याह—अधिष्ठाने त्वित्यादि । अनित्येऽपीति । कालान्तरविनाशात् तस्यापि ‌‌'क्षणिनाशमेवरूपत्वान्नित्यस्येव नातिशयोत्पत्तिः सम्भवतीति कुत संस्कार । ॥ २५४८ ॥

अभ्युपगम्यातिशयं दोषमाह—अस्तु वेति । एष इति अतिशय । यद्यपि न विद्यते, तथाप्यधिष्ठानसम्बन्धात् तस्यापि भविष्यति ? इत्याह—न चाधिष्ठानेत्यादि । यदुक्तम्—"न चानवयवं व्योम" ( तत्त्व० २१८२ ) इत्यादि, तत्रापि सावयवस्य नभसो यदि नित्यत्वमभ्युपगम्यते, तदा यदनवयवनित्यनभःपक्षे दूषणं तत् सर्वं समानमित्यतिदिशति—नभस इत्यादि ॥ २५४९, २५५० ॥

यदुक्तम्—"यथा तत्र भवन्नेव" ( तत्त्व० २१०१ ) इत्यादि, तत्राह—तत्रैव भवत इत्यादि । सुबोधम् ॥ २५५१–२५५२ ॥

यदुक्तम्—"व्यञ्जकाना हि वायूनाम्" ( तत्त्व० २१०३ ) इत्यादि, तत्राह—यदा चेत्यादि । [ C 690 ] घटेति यत्न श्रवणादित्यर्थः । एवम् = अनन्तरोक्तेन प्रकारेण । नित्यस्यानतिशयात्मत्वेन संस्कृतिर्युज्यते । "तच्च सामर्थ्यनियमो वाच्यार्थदृष्टयत्ने" (तत्त्व० २५५७) इति वक्ष्यमाणेन सम्बन्ध । यथा

भेदाभेदविकल्पेन संस्कारानुपपत्तितः ॥ २५५३ ॥
व्यतिरेके हि संस्कारे श्रोत्रशब्दौ न संस्कृतौ ।
स्यातां ताभ्यां च सम्बन्धः संस्कारस्य न कश्चन ॥ २५५४ ॥
विभिन्नस्य हि सम्बन्धः कार्यकारणता भवेत् ।
तस्यां च सर्वदैवायं भवेद्धेतोः सदा स्थितेः ॥ २५५५ ॥
अनर्थान्तरपक्षेऽपि तद्वन्नित्यो भवेदसौ ।
तदशक्यक्रियस्तस्मान्नित्यं[1] ज्ञानं प्रसज्यते ॥ २५५६ ॥
तन्न सामर्थ्यनियमो वाय्वादेरुपपद्यते ।
कर्त्तव्यविषयायोगे सामर्थ्यस्याप्ययोगतः ॥ २५५७ ॥

शब्दानित्यत्वे प्रमाणम्

अतोऽभिव्यक्त्ययोगेन शब्दज्ञानमिदम्फलम् ।

यथासौ संस्कृतिर्नोपपद्यते, तथा तावद्विस्तरेण दर्शयन्नाह—भेदाभेदेत्यादि । संस्कृतिर्भवन्ती व्यतिरिक्ता वा भवेद्, अव्यतिरिक्ता वा—इति पक्षद्वयम्; वस्तुन प्रकारान्तरासम्भवात् । प्रथमे पक्षे श्रोत्रशब्दयोः संस्कारासिद्धिप्रसङ्गः, अर्थान्तरकरणात्, न हि घटकरणे पटः संस्कृतो नाम । नापि तस्य संस्कारस्य ताभ्यां सह सम्बन्धः सिद्ध्यति, येन तत्सम्बन्धिसंस्कारकरणद्वारेण तौ संस्कृतौ स्याताम् । तथा हि—भेदाभ्युपगमान्न तादात्म्यलक्षणः सम्बन्धः । भिन्नस्य सम्बन्धो भवन् कार्यकारणतालक्षण एव भवेदन्यत्रोपकाराभावात् । तस्यां च कार्यकारणतायां सत्यां सर्वदैवायं संस्कारो भवेत्, हेतोः श्रोत्रशब्दात्मकस्य सर्वदावस्थितत्वात् ।

द्वितीयेऽपि पक्षे दोषमाह—अनर्थान्तरेत्यादि । तद्वदिति श्रोत्रशब्दस्वरूपवत् । असाविति संस्कारः । ततश्च नित्यत्वादसौ संस्कारो न केनचित् क्रियते । तस्माच्च संस्कारादिज्ञानोत्पत्त्यादिव्यापारायां नित्यं ज्ञानं प्रसज्येतेति नित्यत्वे दोषः । तन्नेत्यादिनोपसंहरति ॥ २५५३–२५५७ ॥

अत इत्यादिना शब्दानित्यत्वसाधने प्रमाणयति । [ G. 691 ] प्रयोगः— यत् कादाचित्कं तदुत्पत्तिमत्कारणजन्यम्, यथा घटव्यक्तिविषयं ज्ञानम्, कादाचित्कं

1. तच्च शक्यक्रिय०—पा०, गा० ।

ग्राह्योत्पादविनाभावविघटादिव्यक्तिबुद्धिवत् ॥ २५५८ ॥
तस्मादुत्पत्त्यभिव्यक्त्यो कार्यार्थापत्तित सम ।
सामर्थ्यभेद सर्वत्र स्यात् प्रयत्नविवक्षयो ॥ २५५९ ॥
यावांश्च कश्चन न्यायो नभोभागत्वदूषणे ।
विभागेऽपि समस्तोऽसौ विज्ञेयो मतिशालिभि ॥ २५६० ॥
विषयस्यापि संस्कारे तेनैकस्यैव संस्कृति ।
नास्तत्वाच्छक्तिनियतेर्नातो विषयसंस्कृति ॥ २५६१ ॥
ज्ञानोत्पत्तावयोग्यत्वे गम्येत न कदाचन ।
सर्वं सर्वत्र शब्दोऽय तज्ज्ञानेऽनुपयोगत ॥ २५६२ ॥
ज्ञानोत्पत्तौ तु सामर्थ्ये सर्वं सर्वत्र सर्वदा ।
अवगम्येत शब्दोऽय ज्ञानहेतुतया स्थिते ॥ २५६३ ॥

---

च शब्दज्ञानमिति स्वभावहेतु । नित्य तज्ज्ञानासंविच्तेर्नासिद्धो हेतु । अभिव्य क्तेरपास्तत्वाच्चाप्यनैकान्तिक । सपक्षे भावात्न विरुद्ध । इदम्फलमिति । इद ग्राह्योत्पादाविनाभावविलक्षण फलमस्येति विग्रह । शेष सुबोधम् ॥ २५५८ २५५९ ॥

विभागेऽपक्षे पूर्वमेव दूषणस्योक्तत्वान्न पुनरुच्यते । अत एव पूर्वोक्त तदेव दूषण स्मारयन्नाह—यावांश्चेत्यादि । यदुक्तम्—‘विषयस्यापि संस्कारे तेनैकस्यैव संस्कृति’ ( तत्त्व० २२०३ ) इत्यादि, तत्राह—विषयस्येत्यादि । नेति ‘विषयस्यापि संस्कारे तेनैकस्यैव संस्कृति’ इत्येतत् । कुत ? अस्तत्वात् = प्रति क्षिप्तत्वात् । संस्कारस्येति शेष । तथा हि—व्यतिरिक्तोऽव्यतिरिक्तश्च संस्कार पूर्वं निरस्त । इतोऽपि न विषयस्य संस्कार, कुत ? [1]शक्तिनियते, अतो वक्ष्य माणाया[1] । शक्तिनियतेश्चेति चकारो लुप्तनिर्दिष्टो द्रष्टव्य । तेनायमर्थो भवति—शक्तिनियमाच्चातो वक्ष्यमाणात्न विषयसंस्कारो युक्त ॥ २५६० २५६१ ॥

तमेव शक्तिनियम दर्शयति—ज्ञानोत्पत्तावित्यादि । कदाचिदसौ शब्द प्रकृत्या ज्ञानोत्पत्तावयोग्यो भवेत्, वा—इति पक्षद्वयम् । प्रथमे पक्षे न कदाचित्

1-1 नियतरक्ष्यमाणाया —पा०, गा० ।

तं हि शक्तमशक्तं वा प्रकृत्यैवात्मनि स्थितम् ।
विरोधी सहकारी वा कोऽर्थं क्षपयितुं क्षमः ॥ २५६४ ॥
ज्ञानोत्पादनयोग्यश्च कांश्चिद् प्रति भवत्ययम् ।
तस्मादुत्पद्यमानोऽयं न सर्वैरवगम्यते ॥ २५६५ ॥
अथ या यत्समीपस्थैर्नादैः स्यादस्य संस्कृतिः ।
तैरेव श्रूयते शब्दो न दूरस्थैस्तु किं पुनः ॥ २५६६ ॥
सामीप्येऽपि हि संस्कारः कारणं परिकल्प्यते ।
संस्कारः स समानश्च तेषु दूरस्थितेष्वपि ॥ २५६७ ॥
विशिष्टसंस्कृतेर्जन्म ध्वनिभ्यो यदि गम्यते ।

---

केनचिदवगम्येत । द्वितीयेऽपि सर्वैः सर्व दैवावगम्येत; एकरूपत्वात् । अतो न संस्कारस्य सामर्थ्यम् ॥ २५६२–२५६३ ॥

स्यादेतत्— समर्थोऽपि विरोधिप्रत्ययवशात् कदाचिद् विज्ञानं नोत्पादयेत्, तथा ऽसमर्थोऽपि सहकारिप्रत्ययाहितसामर्थ्यः सन्नुत्पादयिष्यतीति ? तत्राह—तं हीत्यादि । [ G. 692 ] न हि स्वभावमखण्डयन्ननुत्पादयन् वा विरोधी सहकारी वा युक्तः; अतिप्रसङ्गात् । खण्डनोत्पादनाभ्युपगमे नित्यत्वहानिप्रसङ्गः ॥२५६४॥

यदुक्तम्—"यथैवोत्पद्यमानः" ( तत्त्व० २२०४ ) इत्यादि, तत्राह— ज्ञानोत्पादनेत्यादि । उत्पत्तिपक्षे नायं दोषः; यतः प्रतिनियतविज्ञानोत्पत्तिसमर्थ एव स्वहेतोरुपजायते, तेन न सर्वैः सर्वदा गम्यते । यस्य तु संस्क्रियते शब्दः, तस्यैवायं दोषो यदि नाम संस्कारः सम्भवतीति दर्शयन्नाह—अथ येत्यादि । न केवलं प्रकृत्या ज्ञानोत्पादनसामर्थ्याभ्युपगमे दूरस्थस्यापि ग्रहणं प्राप्नोतीति दोषः, संस्कारपक्षेऽपि दोष एवेत्यतः पक्षान्तरमुक्तम् । न दूरस्थैस्तु किं पुनरिति । श्रूयत इति सम्बन्धः । अपि तु श्रुत[1] एवेति[1] साक्षाद्दर्शयति ॥ २५६५-६६ ॥

एतदेव व्यक्तिकरोति—सामीप्येऽपीत्यादि ॥ २५६७ ॥

"शब्दोत्पत्तेर्निषिद्धत्वात्" ( तत्त्व २२०६ ) इत्यादावाह— विशिष्टसंस्कृतेरित्यादि । यदि संस्कृतिरुत्पद्यते ? तदा शब्दस्याप्युत्पत्तिप्रसङ्गः; तस्य

---

१–१. श्रूयेतैव—पा० ।

शब्दोत्पत्तिः प्रतिक्षेप्तुं न शक्या केनचित् तदा ॥ २५६८ ॥
विशिष्टसंस्कृतिः शब्दात् सा हि न व्यतिरेकिणी ।
शब्दस्याज्ञेयताप्राप्तेस्ततः शब्दोऽपि जायते ॥ २५६९ ॥
संस्कृतश्चैकदा शब्दस्तमात्मानं न जातुचित् ।
जहात्यनित्यतासङ्गादुपलभ्येत तत् सदा ॥ २५७० ॥
संस्कारद्वयपक्षेऽपि[1] सत्यं दोषद्वये वचः[2] ।
यस्मान्यतरवैकल्यं प्राक्तनस्यानुवृत्तितः ॥ २५७१ ॥
तथा हि संस्कृताः श्रोत्रवर्णा ये[3] व्यञ्जकैः[3] पुरा ।
न नष्टास्ते च्युतिप्राप्तेः सर्वैः सर्वश्रुतिस्ततः ॥ २५७२ ॥

संस्कृतेरव्यतिरेकात् । अथ व्यतिरेकः ? तदा संस्कारादेव ज्ञानोत्पत्तेः शब्दस्याकारकत्वादज्ञेयत्वप्रसङ्गः । ततश्च[4] "शब्दोऽपि जायते[5]" इत्यङ्गीकर्तव्यम् ॥२५६८-६९॥

अथापि स्याद्—यथा प्रतिनियतज्ञानोत्पादनसमर्थः शब्दः उत्पद्यते भवताम्, तथास्माकमपि [ G 693 ] संस्कारप्रतिनियमो भविष्यति, तेन—दूरस्थैर्न गम्यत इति ! अत्राह—संस्कृतश्चेत्यादि । यदि नाम प्रतिनियतपुरुषसन्तानवर्तिज्ञानोत्पादनसमर्थः संस्क्रियते, तथापि दोष एव । तथा हि—यदि ज्ञानोत्पादनयोग्यं संस्कृतं[6] स्वभावं[6] न जहाति, तदा सर्वदैव तज्ज्ञानोत्पत्तिप्रसङ्गः । अथ जहाति ? तदाऽनित्यत्वप्रसङ्गः । तत्[7] तस्मादुत्पद्यत एवेत्यङ्गीकर्तव्यम् ॥ २५७० ॥

यदुक्तम्—"संस्कारद्वयपक्षे तु" ( तत्त्व० २२०८ ) इत्यादि; तत्राह—द्वयेत्यादि । येषामुत्पत्तिपक्षः, तेषां मतेनान्यतरवैकल्यं युज्यते, न तु संस्कारवादिनां पक्षे; तेषां सदैव प्राक्तनस्य संस्कृतस्य स्वभावस्यानुवृत्तेः ॥ २५७१ ॥

तथा हीत्यादिना तामेवानुवृत्तिं दर्शयति । च्युतिप्राप्तेरिति । अनित्यत्वप्रसङ्गादित्यर्थः । अन्यथा प्रतिज्ञाविरोधः[8] स्यात् । सर्वश्रुतिरिति । सर्वस्मिन् काले श्रुतिः सर्वश्रुतिः । न तु सर्वस्य श्रुतिरिति विग्रहः; "कर्मणि च"

१. द्वयसंस्कार०—पा०, गा० ।
२ ···चः—पा० ।
३–३. यद् व्यञ्जकैः—पा०, गा० ।
४. ततः—पा०, गा० पुस्तकयोर्नास्ति ।
५. जायते—जै० ।
६–६. संस्कृतमात्मानं—पा० गा० ।
७. पा०, गा० पुस्तकयोर्नास्ति ।
८. ०विशिष्टः—पा०; ०विशुष्टिः—गा० ।

नियतश्रुतियोग्यौ चेच्छ्रोत्रवर्णौ च संस्कृतौ ।
नान्यवर्णप्रपत्तॄणां पुनः स्याच्छ्रवणं तदा ॥ २५७३ ॥
तद्वर्णनरविज्ञानयोग्यौ चेत् संस्कृतौ पुनः ।
तयोरेवानुवृत्तौ स्याद् तयोरपि ननु श्रुतिः ॥ २५७४ ॥
व्यावृत्तावन्य एवामी श्रोत्रवर्णाः कथं न ते ।
प्राप्नुवन्ति ततस्तेषु नित्यताशाऽनिबन्धना ॥ २५७५ ॥

आदित्यस्य नानात्मना ग्रहणस्य निरसनम्

जलादिषु न चैकोऽयं नानात्मा सवितेक्ष्यते ।
प्रतिबिम्बधियः सर्वा यन्निरालम्बनाः स्थिताः ॥ २५७६ ॥

---

(पा० सू० २.२ १४) इति समासप्रतिषेधात् ॥ २५७२ ॥

अथापि स्यात्—प्रतिनियतानेकपुंसां[1] श्रुतियोग्यौ संस्कृतौ श्रोत्रवर्णौ, तेन सर्वैर्न श्रूयत इति ? एवं तर्हि ये अन्येषां वर्णानां प्रतिपत्तारः, तेषां शब्दश्रवणं न प्राप्नोति । एतदेव दर्शयति—नियतेत्यादि । नियतानां पुंसां श्रुतियोग्याविति समासः । अन्ये च ते वर्णप्रपत्तारः, अन्येषां वा वर्णानां प्रपत्तार इति विग्रहः ॥ २५७३ ॥

अथापि स्यात्—ये तेऽन्यवर्णप्रतिपत्तारः, तज्ज्ञानोत्पत्तियोग्यं पुनरपि संस्कारान्तरं शब्दश्रोत्रयोर्भवेदित्येतदाशङ्क्य परिहरति—तद्वर्णेत्यादि । [G 691] ते च ते वर्णनराश्चेति समासः । के पुनस्ते ? वर्णा येऽन्यैः प्रतिपत्तृभिर्गृह्यन्ते, नराश्च तेषामेव ये प्रपत्तारः । तेषां विज्ञानम्, तत्र योग्याविति समासः । तयोरेवेति पूर्वसंस्कृतयोः श्रोत्रशब्दयोः । तयोरपीति पूर्वकयोर्वर्णनरयोः । एतदुक्तं भवति—पश्चाद् यदाऽन्यैः श्रूयते ककारादिवर्णः, तदापि यैः पूर्वं श्रुतस्तद्वत् तैरपि श्रूयेत, प्राक्तनस्वभावानुवृत्तेरिति ॥ २५७४ ॥

अथ नानुवृत्तिः, तदाऽनित्यत्वप्रसङ्ग इत्यादर्शयन्नाह—व्यावृत्तावित्यादि । सुबोधम् ॥ २५७५ ॥

यदुक्तम्—"जलादिषु यथैकोऽपि" (तत्त्व० २२०९) इत्यादि, तत्राह—जलादिष्वित्यादि ॥ २५७६ ॥

---

1. ०नियतानायेव पुसा—पा०, गा० ।

निराकारा धियः सर्वास्त्वत्पक्षेऽपि व्यवस्थिताः ।
आकारवान् पुनर्बाह्यः पदार्थोऽभ्युपगम्यते ॥ २५७७ ॥
जलाद्यन्तर्गतं चेदं प्रतिबिम्बं समीक्ष्यते ।
नभस्तलादिवर्त्ती च सूर्यादिर्न तथा स्थितः ॥ २५७८ ॥
तत् कस्माद् भात्यसावेवं भ्रान्त्या चेदत एव तत् ।
न तु स्पष्टमनालम्बं तद्रूपार्थवियोगतः ॥ २५७९ ॥
तस्यैव प्रतिपत्तिश्चेदन्यथेदं सुभाषितम् ।
तस्यान्यथेति[1] किं त्वेवं सर्वं स्यात् सर्ववेदकम् ॥ २५८० ॥
तस्यैव प्रतिपत्तिः स्याद् यदीक्ष्येत तथास्थितम् ।
अन्याकारोपलब्धौ तु तस्य दृष्टिः कथं भवेत् ॥ २५८१ ॥

---

सर्वमेव हि भ्रान्तं ज्ञानं निर्विषयमिति पूर्वमविशेषेण प्रतिपादितम् । तथापि पुनः प्रतिबिम्बधिया विशेषणात्[2] द्वयोरपि साकारनिराकारपक्षयोः प्रतिपादयति । तत्र प्रथमं पक्षमधिकृत्याह—**निराकारा** इत्यादि । [G 695] भवतो हि **मीमांसकस्य** निराकारं विज्ञानम्, आकारवान् बाह्योऽर्थः, ततश्च यज्जलान्तर्गतं रूपं दृश्यते न तावदसौ ज्ञानाकारः, बाह्यस्यैवाकारवत्त्वाभ्युपगमात् । नापि तत् प्रतिबिम्बमर्थान्तरभूतमभ्युपगतम्; सूर्यस्याग्रहणप्रसङ्गात् । नापि सूर्यो जलान्तर्गतो येन तथा भासेत; तस्याकाशदेशवर्त्तित्वात् । भ्रान्त्या तथा भासत इति चेत् ? एवं तर्हि न सूर्यालम्बनं ज्ञानम्, तस्य सूर्यस्य जलान्तर्गतरूपाभावात् । ततश्च यद्रूपोऽर्थो यज्ज्ञानेनावभासते तद्रूपार्थवियुक्तत्वात् तद्विज्ञानमनालम्बनमिति सिद्धम् । प्रयोगः—यो यद्विज्ञानप्रतिभासिस्वरूपो न भवति न स तद्विज्ञानविषयः, यथा रूपं श्रोत्रज्ञानस्य । न भवति प्रतिबिम्बविज्ञानप्रतिभासिस्वभावश्च सूर्य इति व्यापकानुपलब्धिः । नासिद्धो हेतुः; सूर्यस्य जलान्तर्गतरूपाभावात् । नाप्यनैकान्तिकः, अतिप्रसङ्गात् । एवं हि यत् किञ्चिद् यस्य कस्यचिदालम्बनं प्राप्नोति । सपक्षे सद्भावात् न विरुद्धः ।

१. तच्चान्यथेति—पा०, भा० ।
२. विशेषणा-पा०, विशेषेण-भा० ।

साकारेऽपि हि विज्ञाने न ज्ञातार्थविलक्षणे ।
आकारे सति विज्ञानं ग्राहकं तस्य युज्यते ॥ २५८२ ॥
पारम्पर्यार्पितं सन्तमवाग्वृत्त्यावबुद्ध्यताम् ।
किमूर्ध्ववृत्तिमेकत्वेऽप्यवागेवानुमन्यते[1] ॥ २५८३ ॥
यथैवावस्थितो ह्यर्कस्तथैवेक्ष्येत यद्यसौ ।
अवबुद्धः प्रकल्प्येत नान्यथेत्युपपादितम् ॥ २५८४ ॥

---

अथापि स्यात्—स एव सूर्यो देशादिभेदेन[2] केवलमन्यथा प्रतीयत इत्यतो हेतुरसिद्ध एवेति ! तदेतदुक्तं मौढतार्किकादते कोऽन्यो वक्तुमर्हति—तदेव चान्यथेति । तथा हि—तदेवेत्यनेन तत्स्वरूपं विधीयते[3], अन्यथेत्यनेन तन्निषेधः, तत् कथमेकत्रैकदा परस्परविरुद्धौ विधिप्रतिषेधौ युक्तौ । यदि पुनरन्यथा प्रतीयमानोऽपि स एव स्यात्, तदा सर्वविश्वमेकं भवेत् । ततश्च सहोत्पत्तिनाशौ स्याताम्, सर्वं च विज्ञानमेकविषयं स्यात् । तस्माद् यथा देशकालादिभेदवानसावर्थस्तथैव यदि प्रतीयेत, एवं स एव प्रतीतः स्यादिति कुतोऽसिद्धता ! द्वितीयेऽपि साकारपक्षे निरालम्बनतां प्रतिबिम्बधियां प्रतिपादयति—साकारेऽपीत्यादि । साकारविज्ञानपक्षे हि साकारसंवेदनेऽपि बाह्यार्थाविलक्षणाकारानुभवाद् बाह्यो विदित उच्यते; न तु विलक्षणानुभवात्, अन्यथाऽतिप्रसङ्गः स्यात् । न चात्र प्रतिबिम्बधियां सूर्याकाराविलक्षणाकारानुभवोऽस्ति, अन्यथा ह्यभ्रान्तसूर्यज्ञानाविशेषः प्रतिबिम्बधियां स्यात् ॥ २५७७–२५८२ ॥

यदुक्तम्—"अप्सूर्यदर्शिनाम्" ( तत्त्व० २२२० ) इत्यादि, तत्राह—पारम्पर्येत्यादि । [ G. 696 ] अनुबुद्ध्यतामिति आत्मा । ऊर्ध्ववृत्तिमिति आदित्यम्, उपरिस्थितमित्यर्थः[4] । मन्यत इति आत्मा । एतदुक्तं भवति—यदि नामात्मा पारम्पर्यार्पितमुपरिस्थितमादित्यमवाग्वृत्त्याऽवबुध्यते, किमित्यवागेव मन्यते, नोर्ध्वम् । एवं हि स एवावबुद्धो भवति, यदि यथास्थितो गृह्येत; अन्यथाऽतिप्रसङ्गः स्यात् ॥ २५८३–२५८४ ॥

---

१. किन्नूर्ध्व०—पा, गा० ।
२. देशभेदेन—पा०, गा० ।
३. विरुद्धयते—जै० ।
४. परिस्थितमि०—गा० ।

नैवं प्राङ्नतया[1] वृत्त्या प्रत्यग्वृत्ति समर्पितम् ।
बुध्यमानो मुखं भ्रान्त्या प्रत्यगित्यवगच्छति ॥ २५८५ ॥
प्रतिबिम्बकविज्ञानं स्वास्याद्यालम्बनं न तत् ।
तद्विलक्षणनिर्भासाद् रसशब्दादिवित्तिवत् ॥ २५८६ ॥
अल्पीयस्यास्यमल्पीयो दर्पणे प्रतिभाति हि ।
विपर्यस्तश्च वृक्षादिर्जलमग्नः प्रतीयते ॥ २५८७ ॥
दर्पणाभिमुखं बिम्बं नैवं तु प्रतिबिम्बकम् ।
जलाद्यन्तर्गतं चेदं बिम्बं त्वारादवस्थितम् ॥ २५८८ ॥
आश्रयानुविधानेन स्थूलसूक्ष्मादिभेदि च ।
प्रतिबिम्बं न बिम्बं तु नातो हेतोरसिद्धता ॥ २५८९ ॥

---

यदुक्तम्—"एवं प्राङ्नतया वृत्त्या प्रत्यग्वृत्तिसमर्पितम्" (तत्त्व० २२२३) इत्यादि, तत्राह—नैवं प्राङ्नतयेत्यादि[2] ॥ २५८५ ॥

अत्र कारणमाह—प्रतिबिम्बकविज्ञानमित्यादि । तद्विलक्षणनिर्भासादिति । भावप्रधानो[3] निर्देशः । तद्विलक्षणनिर्भासत्वादित्यर्थः । बहुव्रीहिश्चायम् । प्रयोगः—यद्यद् विलक्षणनिर्भासं ज्ञानम्, न तत्तदालम्बनम्, यथा रसादिविज्ञानं न शब्दालम्बनम्, शब्दविज्ञानं वा रसालम्बनम् । मुखादिविलक्षणनिर्भासञ्च प्रतिबिम्बधिय इति व्यापकविरुद्धोपलब्धिः ॥ २५८६ ॥

असिद्धतामस्य[4] परिहरन्नाह—अल्पीयसीत्यादि । अल्पीयसि दर्पणे महदप्यास्यम् = मुखम्, अल्पीय = अल्पतरं प्रतिभाति । अधोगतशाखादिश्च[5] जलमग्नो वृक्षादि प्रतीयते, तथा प्राङ्मुखं मुखमुपलभ्यते जलादिषु दूरप्रविष्ट[6]ञ्च, न च तथा मुखादिबिम्बकमवस्थितम्[7] । तथा [ G. 697 ] खड्गाद्याश्रयभेदाद् दीर्घादिभेदाकारेण प्रतिबिम्बकमाभाति, न च तथा दीर्घादिभेदवद् बिम्बक-

---

१. तन्नतया—जै०, पा० ।
२. तन्नतयेत्यादि—जै०, पा० ।
३. भावलक्षणो—पा०, गा० ।
४. सिद्धता०—पा० ।
५. ०शाखादिश्च—पा० ।
६. दूरप्रविष्ट—पा०, गा० ।
७. मुखादिबिम्बक०—पा० ।

विलक्षणावभासेनात्यर्थसंवेदने सति ।
रूपशब्दादिचित्तं स्यात् सर्वं सर्वार्थगोचरम् ॥ २५९० ॥
ईषत्सम्मीलितेऽङ्गुल्या यच्च चक्षुषि दृश्यते ।
पृथगेकोऽपि साप्येवं भ्रान्तिर्निर्विषया मता ॥ २५९१ ॥
प्रतिबिम्बोदयस्त्वत्र प्रागेव विनिवारितः ।
सहैकत्र ह्ययायोगात् मूर्त्तानां प्रतिघाततः ॥ २५९२ ॥
अनेकदेशवृत्तौ वा सत्यपि प्रतिबिम्बके ।
स्थूलसूक्ष्मादिवद् भेदादेकत्वं नैव विद्यते ॥ २५९३ ॥

---

मिति तद्विलक्षणनिर्भासित्वं ज्ञानस्य नासिद्धम् ॥ २५८७–२५८९ ॥

अनैकान्तिकतां परिहरन्नाह—विलक्षणावभासेनेत्यादि । सर्वस्य ज्ञानस्य
सर्वविषयत्वप्रसङ्गो बाधकं प्रमाणम् । यदुक्तम्—"ईषत्समीलिते" (तत्त्व० २२१७)
इत्यादि, तदप्यनेनैव प्रत्युक्तम्; तस्यापि निर्विषयत्वात् ॥ २५९०–२५९१ ॥

यथोक्तम् "अनेकदेशवृत्तौ च" ( तत्त्व० २२२४ ) इत्यादि, तत्राह—
प्रतिबिम्बोदय इत्यादि । प्रतिबिम्बस्य हि वस्तुत्वं पूर्वं निषिद्धम् "मूर्त्तस्या-
भिन्नदेशत्वानुपपत्ते" इत्यादिना ॥ २५९२ ॥

भवतु नाम प्रतिबिम्बं वस्तुसत्, तथापि तस्य समानबुद्धिगम्यत्वमसिद्धमिति
दर्शयन्नाह—अनेकदेशेत्यादि । आदिशब्देन दीर्घत्वादिभेदपरिग्रहः ।

अथापि स्यात्—सत्यपि स्थूलादिभेदे केनचिन्नीलादिसाधर्म्येण समानबुद्धि-
गम्यत्वमस्त्येवेति ? एवमपि न पारमार्थिकमैक्यं सिद्ध्यति । कल्पितं तु स्यात्,
तत्र च सिद्धसाध्यता । अथापि पारमार्थिकमैक्यं स्यात्, देशादिभेदेन भेद्यमाने-
ऽपि ? तदा विप्रचाण्डालयोरपि मनुष्यत्वसाम्यादेकत्वमस्तु । तथा लोहत्वसामान्येन
मातुस्ते स्वभार्यायाः स्वमुखापानयोश्च पार्थिवत्वादेकत्वमापद्यते । सर्वस्य विश्वस्य
वस्तुत्वादेकत्वे सहोत्पत्तिविनाशादिप्रसङ्गश्चानिवार्य एव ॥ २५९३ ॥

यदपीदमुक्तं भाष्ये—"अथापि स्यादेकस्य सतो नानादेशेषु युगपद्दर्शनमनु-
पपन्नमित्यादित्यं पश्यतु देवानाम्प्रियो य एक सन्ननेकदेशावस्थ इव लक्ष्यते····"[1],

---

1. अनविष्टः पाठो माष्ये द्रष्टव्यः ।

नैवं प्राङ्नतया[1] वृत्त्या प्रत्यग्वृत्ति समर्पितम् ।
बुध्यमानो मुखं भ्रान्त्या प्रत्यगित्यवगच्छति ॥ २५८५ ॥
प्रतिविम्बकविज्ञानं स्वास्याद्यालम्बनं न तत् ।
तद्विलक्षणनिर्भासाद् रसशब्दादिवित्तिवत् ॥ २५८६ ॥
अल्पीयस्यास्यमल्पीयो दर्पणे प्रतिभाति हि ।
विपर्यस्तश्च वृक्षादिर्जलमग्नः प्रतीयते ॥ २५८७ ॥
दर्पणाभिमुखं विम्बं नैवं तु प्रतिविम्बकम् ।
जलाद्यन्तर्गतं चेदं विम्बं त्वारादवस्थितम् ॥ २५८८ ॥
आश्रयानुविधानेन स्थूलसूक्ष्मादिभेदि च ।
प्रतिविम्बं न विम्बं तु नातो हेतोरसिद्धता ॥ २५८९ ॥

---

यदुक्तम्—"एवं प्राङ्नतया वृत्त्या प्रत्यग्वृत्तिसमर्पितम्" (तत्त्व०२२२३) इत्यादि, तत्राह—नैवं प्राङ्नतयेत्यादि[2] ॥ २५८५ ॥

अत्र कारणमाह—प्रतिविम्बकविज्ञानमित्यादि । तद्विलक्षणनिर्भासादिति । भावप्रधानो[3] निर्देशः । तद्विलक्षणनिर्भासत्वादित्यर्थः । बहुव्रीहिर्वायम् । प्रयोगः—यद् यद् विलक्षणनिर्भासं ज्ञानम्, न तत् तदालम्बनम्, यथा रसादिविज्ञानं न शब्दालम्बनम्, शब्दविज्ञानं वा रसालम्बनम् । मुखादिविलक्षणनिर्भासश्च प्रतिविम्बधियः इति व्यापकविरुद्धोपलब्धिः ॥ २५८६ ॥

असिद्धतामस्य[4] परिहरन्नाह—अल्पीयसीत्यादि । अल्पीयसि दर्पणे महदप्यास्यम् = मुखम्, अल्पीयः = अल्पतरं प्रतिभाति । अधोगतशाखादिश्च[5] जलमग्नो वृक्षादिः प्रतीयते, तथा मत्स्यद्भुत(?) मुखमुपलभ्यते जलादिषु दूरप्रविष्ट[6]वत्, न च तथा मुखादिविम्बकमवस्थितम्[7] । तथा [ C. 697 ] सजातीयाश्रयभेदाद् दीर्घादिभेदान्तरेण प्रतिविम्बकमाभाति, न च तथा दीर्घादिभेदवद् विम्बक-

---

1. नततया—जै०, पा० ।
2. नततयेत्यादि—जै०, पा० ।
3. भावलक्षणो—पा०, गा० ।
4. सिद्धता०—पा० ।
5. ०मुखादिश्च—पा० ।
6. दूरप्रवि०—पा०, गा० ।
7. मुखादिविम्बक०—पा० ।

विलक्षणावभासेनात्यर्थसंवेदने सति ।
रूपशब्दादिचित्तं स्यात् सर्वं सर्वार्थगोचरम् ॥ २५९० ॥
ईषत्सम्मीलितेऽङ्गुल्या यच्च चक्षुषि दृश्यते ।
पृथगेकोऽपि साप्येवं भ्रान्तिर्निर्विषया मता ॥ २५९१ ॥
प्रतिबिम्बोदयस्त्वत्र प्रागेव विनिवारितः ।
सहैकत्र ह्ययोगात् मूर्त्तानां प्रतिघाततः ॥ २५९२ ॥
अनेकदेशवृत्तौ या सत्यपि प्रतिबिम्बके ।
स्थूलसूक्ष्मादिवद् भेदादेकत्वं नैव विद्यते ॥ २५९३ ॥

---

मिति तद्विलक्षणनिर्भासित्वं ज्ञानस्य नासिद्धम् ॥ २५८७–२५८९ ॥
अनैकान्तिकतां परिहरन्नाह—विलक्षणावभासेनेत्यादि । सर्वस्य ज्ञानस्य
सर्वविषयत्वप्रसङ्गो बाधकं प्रमाणम् । यदुक्तम्—"ईषत्संमीलिते" (तत्त्व० २२१७)
इत्यादि, तदप्यनेनैव प्रत्युक्तम्; तस्यापि निर्विषयत्वात् ॥ २५९०–२५९१ ॥
यथोक्तम् "अनेकदेशवृत्ती च" ( तत्त्व० २२२४ ) इत्यादि, तत्राह—
प्रतिबिम्बोदय इत्यादि । प्रतिबिम्बस्य हि वस्तुत्वं पूर्वं निषिद्धम् "मूर्त्तस्या-
भिन्नदेशत्वानुपपत्ते" इत्यादिना ॥ २५९२ ॥
भवतु नाम प्रतिबिम्बं वस्तुसत्, तथापि तस्य समानबुद्धिगम्यत्वमसिद्धमिति
दर्शयन्नाह—अनेकदेशेत्यादि । आदिशब्देन दीर्घत्वादिभेदपरिग्रहः ।
अथापि स्यात्—सत्यपि स्थूलादिभेदे केनचिन्नीलादिसाधर्म्येण समानबुद्धि-
गम्यत्वमस्त्येवेति ? एवमपि न पारमार्थिकमैक्यं सिद्ध्यति । कल्पितं तु स्यात्,
तत्र च सिद्धसाध्यता । अथापि पारमार्थिकमैक्यं स्यात्, देशादिभेदेन भेद्यमाने-
ऽपि ? तदा विप्रचाण्डालयोरपि मनुष्यत्वसाम्यादेकत्वमस्तु । तथा लोलसामान्येन
मातुस्ते स्वभार्याया स्वमुत्रापानयोश्च पार्थिवत्वादेकत्वमापद्यते । सर्वस्य विश्वस्य
वस्तुत्वादेकत्वे सहोत्पत्तिविनाशादिप्रसङ्गश्चानिवार्य एव ॥ २५९३ ॥
यदपीदमुक्तं भाष्ये—"अथापि स्यादेकस्य सतो नानादेशेषु युगपद्दर्शनमनु-
पपन्नमित्यादित्यं पश्यतु देवानाम्प्रियो य एकः सन्ननेकदेशावस्थ इव दृश्यते....[1],

---

१. अवशिष्टः पाठो भाष्ये द्रष्टव्यः ।

वर्णानामन्यान्यत्वसमर्थनमुखेनानित्यत्वसाधनम्

पुंसामध्यवसायश्च योऽयमेवं प्रवर्त्तते ।
ममोपरि स्थितो भानुरिति भ्रान्तः स निश्चितः ॥ २५९४ ॥
सर्वे प्राणभृतो यस्मादेकमेव दिवाकरम् ।
पश्यन्ति यौगपद्येन न द्वितीयं कदाचन ॥ २५९५ ॥
रावं न मण्डलं यस्माद् द्वितीयादीह विद्यते ।
दृश्यादृष्टेरतश्चार्क एक एव विनिश्चितः ॥ २५९६ ॥
न त्वेव निश्चितः शब्द एकत्वेन कथञ्चन ।
क्रमेण युगपच्चापि तन्नानात्वोपलक्षणात् ॥ २५९७ ॥
यदा हि गादिकं[1] वर्णं[1] बक्तारो बहवः सकृत् ।
प्रयुञ्जते तदा भेदो विस्पष्टमुपलभ्यते ॥ २५९८ ॥

[ G, 698 ] दूरत्वादस्य देशो नावधार्यते, अतो व्यामोह, एव शब्देऽपि व्यामोहादनवधारण देशस्य" (मी० द०, शा० भा० १.१.१५) इति । अत्राह—पुंसामित्यादि । द्वितीयस्य [2]रवेर्मण्डलस्योपलब्धिलक्षणप्राप्तस्यानुपलम्भादभाव निश्चयादेकत्वसिद्धे 'ममोपरि स्थितो भानु' इत्येष भ्रान्त प्रत्ययोऽवधार्यते । न त्वेवं शब्दस्यैकत्व सिद्धम्, येन देशादिभेदेन वेद्यमानत्व[3] भ्रान्त स्यात् । सिद्धे ह्येकत्वे तथा वेद्यमानत्व[3] भ्रान्तं सिद्ध्येत्, तदेव तु न सिद्धमिति यत्किञ्चिदेतत् ।

रावमिति । रवेरिदमित्यपन्तमेतत् ।

ननु च प्रत्यभिज्ञाप्रत्ययेन शब्दस्याप्येकत्वं सिद्धमेव ? इत्याह —न त्वेवमित्यादि । प्रत्यभिज्ञाया पूर्वमप्रामाण्यस्य प्रतिपादितत्वादिति भाव ।

यौगपद्येन नानात्व[4] सिद्ध[4] प्रतिपादयति—यदा हीत्यादि । विस्पष्टमिति । द्रुतमध्यविलम्बितादिभेदेन प्रतिभासनात् ॥ २५९४–२५९८ ॥

१–१. गादिवर्णं च—पा०, गा० ।
२. रविमण्डल०—पा०, गा० ।
३–३. विद्यमानत्व—पा०, गा० ।
४–४. नानात्वसिद्धिं—पा०, गा० ।

**क्रमेण तु प्रयोगोऽस्य प्रत्यक्षेण न केवलम्।**
**भेदोऽवगम्यते किन्तु लिङ्गादपि धियां क्रमात् ॥ २५९९ ॥**

---

क्रमेणापि प्रतिपादयन्नाह—**क्रमेण** त्वित्यादि। **प्रत्यक्षेण न केवल**मिति। तत्रापि पट्वादिभेदेन[५] स्पष्टप्रतिभासिभेदानुभवात्। न चायं व्यञ्जकभेदः; तस्य पूर्वं निरस्तत्वात्। लिङ्गादपीति। अनुमानतोऽपीत्यर्थः। प्रयोगः—यद्यदा न भवति न तदा तदविकलकारणं भवति, यथा रूपालोकमनस्कारादिसत्त्वकलापेऽपि सति चक्षुर्विकलस्याभवच्चक्षुर्विज्ञानम्। न [ G 699 ] भवन्ति चैकगकारादिविज्ञानोत्पत्तिकाले पश्चात्कालभावीनि तद्ग्राहित्वेनाभिमतानि विज्ञानानीति व्यापकानुपलब्धिः। अविकलकारणत्वस्य भवनेन व्याप्तत्वात् तस्य चेहाभावः। ननु च सामान्येनाविकलकारणत्वमात्रस्य प्रतिषेधे साध्ये सिद्धसाध्यता। तथा हि— नित्यस्य शब्दस्य कारणत्वेऽपि सहकारिकारणवैकल्यादनुत्पत्तिः पश्चात्कालभाविनां प्रत्ययानामिष्यत एव परेण।

अथ विशिष्टेन शब्दाख्येन कारणेन यदविकलकारणत्वं तत्प्रतिषेधः साध्यते, तदाऽनैकान्तिकता हेतोः, दृष्टान्तश्च साध्यविकलः। न हि चक्षुर्विज्ञानं शब्दकारणवैकल्यान्न भवति, किं तर्हि? चक्षुर्वैकल्यात्? नैतदस्ति; सामान्येनैव साध्यम्, न च सिद्धसाध्यता। तथा हि—यदि नित्यस्य कारणान्तरापेक्षिता सम्भवेत् तदा सिद्धसाध्यता भवेत्; यावता सैव न सम्भवति, तस्य तेनानुपकार्यत्वात्। उपकारी ह्यपेक्ष्यः स्यात्, अन्यथातिप्रसङ्गः। तस्मादनपेक्ष्यस्य शब्दस्य कारणत्वाभ्युपगमे सर्वमेव तद्ग्राहिविज्ञानमविकलकारणमेवेति सदैव भवेत्। अभावे तु तदभवद्विज्ञानं तस्यैव शब्दस्य वैकल्यं सूचयेदिति कथं सिद्धसाध्यता। विशेषेणापि कारणवैकल्ये साध्ये नानैकान्तिकता, नापि दृष्टान्तस्य साध्यविकलता।

तथा ह्ययमत्रार्थो विवक्षितः—यस्मिन् सत्यपि यन्न भवति तत्कारणं भवतो न भवति, यथा चक्षुर्विज्ञानं शब्दे सत्यप्यभवत्। सत्यपि च गकारादिशब्दस्व-

---

५. पट्वादि०—पा०।

सत्त्व० : 17

उभयसंस्कारपक्षदूषणम्

व्यञ्जकध्वन्यधीनं च भवत्वस्योपलम्भनम् ।
यथावस्थितरूपस्य किन्तु तस्य ग्रहो भवेत् ॥ २६०० ॥
नान्यथा तद्ग्रहोऽयं स्यात् तद्रूपाप्रतिभासनात् ।
व्याप्ताशेषनभोभागो न हि शब्दः प्रकाशते ॥ २६०१ ॥
तद्ध्वनेर्भिन्नदेशत्वं श्रुतिः किमनुरुध्यते ।
व्यक्तस्तु प्रतिभासेत स्वात्मनैव घटादिवत् ॥ २६०२ ॥
सर्वं च प्रक्रियामात्रमिदमुक्तं न[1] कारणम् ।
व्यञ्जकानामसामर्थ्यं व्यक्त्ययोगाच्च साधितम् ॥ २६०३ ॥

रूपविशेषे तद्व्याक्त्येनाभिमतानि ज्ञानानि न भवन्तीति व्यापकानुपलम्भः । अत्रापि नित्यस्यापेक्षानुपपत्तिर्विपर्यये बाधकप्रमाणवृत्तिः । न च कुशूलस्थेन बीजादिना व्यभिचारः; तस्याङ्कुरं प्रति मुख्यकारणत्वानुपपत्ते इत्यलं प्रपञ्चेन ॥ २५९९ ॥

यदुक्तं पूर्वम्—"व्यञ्जकध्वन्यधीनत्वात्" ( तत्त्व० २२१० ) इत्यादिना, तद्वस्तुतो दूषितमपि पुनरपि निवर्त्य 'सत्यपि नित्यानां व्यञ्जके दुष्ट एवायं पक्षः' इति विस्त्यापयिषया दूषयन्नाह—व्यञ्जकेत्यादि । [ G 700 ] यदि हि शब्दस्य व्यञ्जकाधीनं ग्रहणम्, तत्किमिति यथाऽसौ यावद्व्योम स्थितस्तथा[2] न गृह्येत ! एवं तस्य तद्ग्रहणं भवेदन्यथाऽविप्रसज्यत इत्यावेदितं पूर्वम् । न ■ यावद्व्योम शब्दो गृह्यते । तस्माद् ध्वन्यनुरोधे[3]न शब्दः श्रुतेर्युक्तः[3], किं तर्हि ? यत्यासौ श्रुतिस्तमेव शब्दं तस्या अनुरोद्धुम् युक्तम् । एवं[4] तस्यासौ सिद्धयेन्नान्यथा, ततश्च घटादिवत् सर्वात्मनैव प्रतिभासेतेति सङ्क्षेपार्थः । एतच्च[5] सर्वं नित्यस्याव्यञ्जकमभ्युपगम्योक्तमिति दर्शयन्नाह—सर्वं चेदमित्यादि । व्यक्त्ययोगादिति व्यतिरिक्ताव्यतिरिक्तयोः[5] ॥ २६००-२६०३ ॥

१. च—पा०, गा० ।  २. तदा—पा०, गा० ।
३–३. ०रोधेन शब्दश्रुतेर्युक्ता—पा०; ०रोधेन न शब्दश्रुतिर्युक्ता—गा० ।
४. एवं च—गा० ।
५–५. पाठोऽयं पा० गा० पुस्तकयोर्नास्ति ।

देशभेदादीनां साधकत्वोपपादनम्

प्रत्यक्षस्तु स एवेति प्रत्ययः प्राङ् निराकृतः ।
देशभेदेन भिन्नत्वमित्येतत् तदबाधितम् ॥ २६०४ ॥
पर्यायेण च यः कश्चिद्भिन्नाद्[1] देशाद् व्रजत्यसौ[1] ।
भिद्यते[2] क्षणभङ्गित्वान्नान्यथा गतिमान् भवेत्[3] ॥ २६०५ ॥
पूर्वदेशावियुक्तस्य स्वभावस्यानुवर्त्तनात् ।
न हि देशान्तरप्राप्तिः स्थैर्ये तस्योपपद्यते ॥ २६०६ ॥
नभसो निरुपाख्यत्वान्नाभिव्यक्तिः प्रकल्प्यते ।
अल्पक्षत्वाच्च खातायामालोकः[4] स तथेष्यते ॥ २६०७ ॥
किञ्च शब्दवदाकाशेऽप्यभिव्यक्तिर्न युज्यते ।
ज्ञानं हि व्यक्तिरेषा च नित्यं स्याद्धेतुसन्निधेः ॥ २६०८ ॥

"देशभेदेन[5] भिन्नत्वम्" (तत्त्व० २२२५) इत्यादावाह—प्रत्यक्षस्त्वित्यादि[5] । तदिति तस्मात् ॥ २६०४ ॥

"पर्यायेण यथा चैकः" (तत्त्व० २२२६) इत्याद्यावाह—पर्यायेणेत्यादि । अनित्यस्य हि देशान्तरोत्पत्तिरेव गति, न तु नित्यस्य; एकदेशवर्त्तिस्वभावमविजहतो देशान्तरगमनायोगात् । त्यागे वा नित्यत्वहानिप्रसङ्गात् । एतदेव दर्शयति—पूर्वदेशावियुक्तस्येत्यादि ॥ २६०५-२६०६ ॥

"यथा महत्यां खातायाम्" (तत्त्व० २२२९) इत्यादावाह—नभस इत्यादि । नभसो वस्तुत्वासिद्धेर्नाभिव्यक्तिर्युक्ता; स्पष्टव्याभावमात्र एव तत्प्रवृत्तेः । तथा ह्यन्धकारे प्रतिघातमविन्दन्त आकाशमेव नात्र किञ्चिदिति वक्तारो भवन्ति । येषामपि वस्तुसदाकाशं तेषां तदतीन्द्रियमेवेति कथं व्योम्नि घोषयेत् । अत एवाह—अल्पक्षत्वाच्चेति । यद्येवं मृदि खातायां[6] किं तदुपलभ्यते ? इत्याह—आलोकः स तथेति ॥ २६०७ ॥

सत्यप्याकाशस्य वस्तुत्वेऽभिव्यक्तिर्नैव युज्यते इति दर्शयन्नाह—किञ्चे-

1-1 भिन्नदेशाद् व्रजत्यसौ—गा० । 2. सिद्ध्यति—पा०, गा० ।
3. ...भवेत्—पा०; ०स्य गतिर्भवेत्—गा० । 4. ऽे नायमा०—पा०, गा० ।
5-5. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति । 6. ख्यातायाम्—चै० ।

### अर्थशब्दयोर्वाच्यवाचकभावविचार

यदा[1] च व्यञ्जकः शब्दे न कथञ्चित् प्रकल्प्यते ।
तन्मात्रेयं परोपाधिः शब्दबुद्धौ मतिभ्रमः[2] ॥ २६०९ ॥
नातो दीर्घादयः सर्वे ध्वनिधर्मा इति स्थितम् ।
ध्वनीनां व्यञ्जकत्वे हि तत्स्यात्, तच्च निराकृतम् ॥ २६१० ॥
अत्यन्तभेदिनोऽप्येते तुल्यप्रत्यवमर्शने ।
शक्ताः शब्दास्तथार्थाश्चेत्यसकृच्चर्चितं पुरा ॥ २६११ ॥
नातो दृष्टार्थसम्बन्धः शब्दो भवति वाचकः ।
संवृत्या[3] वस्तुतस्त्वेष वाचको नेति साधितम् ॥ २६१२ ॥
मिथ्यावभासिनो ह्येते प्रत्ययाः शब्दनिर्मिताः ।
जातिस्वलक्षणादीनां वाच्यवाचकतास्थितेः ॥ २६१३ ॥
तद्भ्रान्त्या व्यवहर्त्तारो वैलक्षण्येऽपि वस्तुतः ।

---

स्यादि । [G 701] तत् स्यादिति । दीर्घादीनां ध्वनिधर्मत्वम् । तच्चेति ध्वनीनां व्यञ्जकत्वम् ॥ २६०८-२६१० ॥

यदुक्तम्—"न चादृष्टार्थसम्बन्ध." (तत्त्व० २२३३) इत्यादि, तत्राह—अत्यन्तभेदिनोऽपीत्यादि । अयमत्र सङ्क्षेपार्थ.—यदि पारमार्थिकस्यार्थशब्दयोर्वाच्यवाचकभावस्याभावप्रसङ्ग क्रियते भवता, तदा सिद्धसाध्यता । तथा हि—विस्तरेण जातिस्वलक्षणादीनां वाच्यवाचकत्वं शब्दपरीक्षायां निराकृतम् । अथ सांवृतस्यापि? तदानैकान्तिकता । तथा हि—अत्यन्तभेदिनोऽपि केचिदर्था. सहृत्यैकाकारप्रत्यवमर्शज्ञानस्य हेतुतां प्रतिपद्यमाना सांवृतं शब्दार्थयोर्वाच्यवाचकभावं सम्पादयिष्यन्तीति प्रागेवापोहचिन्तायां प्रतिपादितम् । तस्मादपोहशब्दार्थवादिनो बौद्धान् प्रति सर्वमिदमुच्यमानमत्यन्तपरिलघुतया परिक्षयत एव केवलमिति ॥ २६११-२६१२ ॥

संवृत्या वाचकत्वस्योपपत्तिमाह—मिथ्याऽवभासिन इत्यादि । [G. 702] पररूपं हि स्वप्रतिभासेन यथा संनियते[4] बुद्धया यथार्थम-

---

१. यथा—पा०, गा० ।
२. मति भ्रम—पा०, गा० ।
३. स्वहृत्या—पा०, गा० ।
४. सवृयते—पा०, गा० ।

गोशब्द एक एवेति मन्यन्ते समबुद्धयः ॥ २६१४ ॥
तस्माद् द्विजातिना प्रोक्तं बद्धसम्बद्धभाषिणा ।
शब्दभेदं पुरस्कृत्य तत्तत् सर्वमनास्पदम् ॥ २६१५ ॥
तथा हि हस्तकम्पादेर्नैकत्वं बुद्धिभेदतः ।
शीघ्रमन्दादिभेदेन तद्व्यक्तिश्च निराकृता ॥ २६१६ ॥
सामान्यं न च तत्रैकमनुगाम्युपलक्ष्यते ।
सङ्केतात् प्रतिषेधादिगत्यङ्गं च भवत्यसौ ॥ २६१७ ॥
साक्षाच्छब्दा न बाह्यार्थप्रतिबन्धविवेकतः ।
गमयन्तीति च प्रोक्तं विवक्षासूचकास्त्वमी ॥ २६१८ ॥

---

प्रकाशनात् सा कल्पिका बुद्धिः संवृतिः, तया यद्व्यवस्थापितं रूपं तत् सांवृत-मुच्यते संवृतिसत्त्वम्। तदेव न परमार्थिकम्; तस्यासत्त्वात्। भ्रान्तस्य च ज्ञानस्य सर्वस्यैव निर्विषयत्वात् ॥ २६१३-२६१५ ॥

अथापि स्याद्—विना पारमार्थिकेनैकत्वेन कथं विधिप्रतिषेधलक्षणं व्यवहार-मारोपवशेन शब्दाः सम्पादयन्ति ? इत्याह—तथा हीत्यादि। हस्तकम्पादे-रित्यादिशब्देनाक्षिनिकोचादिपरिग्रहः। शीघ्रमन्दादिभेदेनेति। बुद्धिभेदत इति सम्बन्धः। न चायं शीघ्रादिभेदो व्यञ्जककृतः; व्यक्तेर्निषिद्धत्वात्। तद्व्यक्ति-रिति नित्यव्यक्तिः। न च सामान्यवशाद् व्यवहाराङ्गता, तस्याप्रसिद्धत्वात्। अप्रती-तस्य सामान्यस्य न युक्तं व्यवहाराङ्गत्वम्; सर्वदा व्यवहारप्रसङ्गात्। प्रतिषेधा-दिगत्यङ्गमिति। आदिशब्देन विधानाभ्यनुज्ञानाभ्यर्थनादीनां ग्रहणम्। तेषां गतिः = प्रतीतिः, तस्या अङ्गम् = कारणम्, हस्तकम्पादिर्भवति। तद्वच्छब्दोऽपि भविष्यतीति शेषः ॥ २६१६-२६१७ ॥

यदुक्तम्—"तस्माच्छब्दार्थसम्बन्धो नित्य एवाभिधीयते" ( तत्त्व० २२५१ ) इति, तत्राह—साक्षादित्यादि। न हि कश्चिच्छब्दार्थयोर्वास्तवः सम्बन्धोऽस्ति, यस्य नित्यत्वमनित्यत्वं वा स्यात्। तथा हि—न बाह्यमर्थं शब्दाः प्रतिपादयन्ति तेन सह प्रतिबन्धाभावादिति पूर्वं शब्दपरीक्षायां निवेदितम्। प्रति-पादयतामतिप्रसङ्गः स्यात्। यद्येवम्; किं तर्हि प्रतिपादयन्ति ? इत्याह—विवक्षासूच-

तस्याः कार्यतया ते हि प्रत्यक्षानुपलम्भतः ।
निश्चिता इति तेनात्र कार्यकारणता स्फुटा ॥ २६१९ ॥
कार्यकारणभावश्च समयाद् येन निश्चितः ।

कास्त्वमीति । विवक्षामपि न वाच्यतया प्रतिपादयन्ति, किं तर्हि ? लिङ्गतया सूचयन्ति । अत एव सूचका इत्युक्तम् । तथा हि—शब्दादुच्चरितादर्थाध्यवसायी विकल्पो जायते, न विवक्षाध्यवसायी, यश्च न शब्देन श्रुतेनाध्यवसीयते, स कथं शब्दार्थः ? ॥ २६१८ ॥

[G 703] यद्येवम्, विवक्षयाऽपि सह कस्तेषां सम्बन्धो येन तां लिङ्गत्वेन सूचयेत ? इत्याह—तस्या इत्यादि । तस्या विवक्षाया कार्यत्वे नात्मनि प्रत्यक्षानुपलम्भाभ्यां शब्दा निश्चिता इति कार्यकारणलक्षण एव सम्बन्धः ॥ २६१९ ॥

यद्येवम्, समयस्तर्हि व्यर्थः, प्रत्यक्षानुपलम्भाभ्यामेव कार्यकारणभावस्य निश्चितत्वात् ? इत्याह—कार्यकारणभावश्चेत्यादि । एवं मन्यते—यद्यपि विवक्षामात्रेण सह कार्यकारणभावो निश्चितः, विवक्षाविशेषेण तु परसन्ताने समयादृते न निश्चेतुं शक्यत इत्यतस्तन्निश्चयाय समयः क्रियते । ननु च समयादपि कथमसौ निश्चेतुं शक्यते, तथा हि—यदि समयकाले परविवक्षाविशेषः प्रतीत्युपायः सम्भवेत्, तदाऽसौ समयस्तत्र कृतः पश्चाद्व्यवहारकाले विवक्षाविशेषप्रतीतिहेतुर्भवेत्, यावता स एवाभ्युपायो नास्ति । तथा हि—नानुच्चार्य शब्दं समयः क्रियते, ततश्च तत एव शब्दाद् विवक्षाविशेषप्रतिपत्तावितरेतराश्रयदोषः स्यात् । तथा हि—समयवशाच्छब्दो विशेषद्योतकः, समयश्च विशेषाविशेषप्रतिपत्तिमन्तरेण न शक्यत इति स्पष्टमितरेतराश्रयत्वम् ? नैष दोषः, यदा सर्व एवायं शाब्दो व्यवहारः स्वप्रतिभासानुरोधेनैवेष्यते भ्रान्तत्वात्, तैमिरिकद्वयद्विचन्द्रव्यवहारवत्, तदा का चोद्यचञ्चुता[1] ? न च सर्वत्र शब्द एव विवक्षाविशेषप्रतीतिहेतुः, अन्यथाऽपि कश्चिच्छृङ्गग्राहिकया, प्रकरणादिना चार्थविशेषोपदर्शनेन च विवक्षाविशेषं भावेन समयं कुर्यादिति नेतरेतराश्रयत्वम् ।

१ चोद्यचञ्चुता—पा० ।

[illegible] विवक्षां प्रपद्येत शब्देभ्यो हस्तकम्पवत् ॥ २६२० ॥
विवक्षावर्तिनाऽर्थेन कार्यकारणतात्मकः ।
शब्दानामेव सम्बन्धः समये सति जायते ॥ २६२१ ॥
तेन सामयिकः प्रोक्तस्तेन च द्योतनादतः ।
समयोऽप्युच्यते तेषां सम्बन्धो न तु मुख्यतः ॥ २६२२ ॥
कार्यकारणभूताभ्यां वस्तुभ्यामन्य एव न ।

---

किञ्च—भवतो विधियादिनस्तुल्यं चोद्यम्—परप्रतिपत्तेरप्रत्यक्षत्वात्[1] कथं वक्तृश्रोत्रोरेकार्थप्रतिपत्तिनिश्चय इति । न चैकार्थप्रतिपत्तिनिश्चयन्तरेण समयो युक्तः; तस्मात् [2]योऽत्र भवतः परिहारः [illegible] ममापि भविष्यति ।

स्यादेतत्—शब्दस्य विवक्षायामसमितत्वात् कथं तया सह सम्बन्धः समयाभिधीयते, न ह्यत्र समयः कृतोऽन्यार्थद्योतको भवति; अप्रसङ्गात् ? नैष दोषः; विवक्षाशब्देनात्परिवर्ती अर्थाकारो वा स्वरूपतया व्यस्तो यः स इहाभिप्रेतः; [ G. 704 ] परमार्थतस्तस्य विवक्षास्वभावत्वात् । स एवेह विवक्षाविशेषोऽभिप्रेतः । तत्रैव च समयो न स्वलक्षणे, स एव शब्देनाभिधीयते; ततस्तदाकारविकल्पोत्पत्तेः । केवला तु विवक्षा न शब्देनाभिधीयत इत्युक्तम् ॥२६२०॥

यद्येवम्, यदि विक्षापरिवर्त्तिनाऽर्थाकारेण कार्यकारणलक्षण एव सम्बन्धः शब्दस्य, तत् कथं तत्र तत्राचार्याः सामयिकं समयं वा शब्दार्थसम्बन्धमाहुः ? इत्याह—विवक्षावर्तिनेत्यादि । श्रोतृचेतसि समये सति जायते भवतीति सामयिकः । अध्यात्मादित्वात् (पा. सू. वा. ४.३.६०) ठञ् । यद्यपि तत्र भवतिः सत्तावचनो गृहीतः, तथापि परमार्थतः सत्ताजन्मनोरभेदात्तदेव भावत्वेन विवक्ष्यते । वक्तृसन्ताने च समयेन[3] द्योतनादुपचारात् समय उच्यते; तस्य प्रतिनियतकालवर्त्तित्वेन तत्कालासम्भवात् ॥ २६२१–२६२२ ॥

ननु यदि परमार्थतो वस्तुनः सम्बन्धो नास्तीत्युक्तम्, कार्यकारणतालक्षणस्तर्हि कथं भवति ? इत्याह—कार्यकारणभूताभ्यामित्यादि । ते एवेति

---

1. प्रत्यक्षत्वात्—पा०, गा० ।   2. तस्य—पा०, गा० ।
3. समयो न—पा० ।

कार्यकारणतायोगस्ते एव तु तथोदिते ॥ २६२३ ॥
ते च प्रत्येकमेकात्मरूपत्वेन जडैर्गते ।
संकेतव्यवहाराप्तकालव्याप्तिरतो मता ॥ २६२४ ॥
एकस्तु वास्तवो नैव सम्बन्ध इह युज्यते ।
असङ्कीर्णतयार्थानां भेदेऽसम्बन्धता भवेत् ॥ २६२५ ॥

समयसम्बन्धदूषणनिरासः

समयः प्रतिमर्त्यं च प्रत्युच्चारणमेव च ।
इत्याद्यतः परेणोक्तं परनीतिमजानता ॥ २६२६ ॥
समयो हि न सम्बन्धो नरधर्मतया तयोः ।
द्योतकः स तु तस्येति सम्बन्धः स्यान्न मुख्यतः ॥ २६२७ ॥

---

कार्यकारणभूते वस्तुनी । तथोदिते इति । कार्यकारणतेत्यादिना लाघवार्थम् ॥ २६२३ ॥

यद्येवम्, प्रतिपुरुषमयोगं तयोर्भेदात् कथमभिन्नसम्बन्धप्रतीतिर्वक्तृश्रोत्रोर्भवति, तथा हि–वक्तुरेव भवति–'य एव समयकाले मया गृहीतोऽर्थ शब्दो वा, तेनैव तमेवार्थं प्रतिपादयामि' इति, तथा श्रोतुरप्येव भवति—'तेनैव तमेवायमर्थं प्रतिपादयति' इति, अन्यथा भिन्नारोपाव्यवस्थितयो कथं व्यवहार स्यात् ? इत्याह–ते चेत्यादि । जडैरिति भ्रान्तैः । गते इति गृहीते । सङ्केतव्यवहारव्याप्तो व्याप्तश्चासौ कालश्चेति तथोक्तः, तस्य व्याप्ति । कार्यकारणाभ्यामेकरूपाभ्यामिति[1] शेषः ॥ २६२४ ॥

[ G 705 ] अथैक एव पारमार्थिक सम्बन्ध कस्मान्नेष्यते, येन काल्पनिक एवेष्ट ? इत्याह–एकस्त्वित्यादि । सम्बन्धो भवन् भिन्नाना वा भवेद् ? अभिन्नानां वा ? न तावद्भिन्नाम्; सर्वेषा स्वात्मनि स्थितत्वेनासङ्करात् । अभेदेऽप्येकमेव वद्वस्त्विति कस्य केन सह श्लेषो भवेत्, अतोऽसम्बन्धता भवेत् ॥ २६२५ ॥

यत्तु समयलक्षणसम्बन्धदूषणम् "समय प्रतिमर्त्यं च"(तत्त्व०२२५३) इत्यादिना, तत्र सिद्धसाध्यता प्रतिपादयन्नाह–समय इत्यादि । अनिष्टापत्तिहि दूषणमुच्यते, न च यौद्धैन समय शब्दार्थयोर्मुख्य सम्बन्ध इष्टः; तस्य पुरुषधर्मत्वात् ।

1 °कारणाभ्यामेक°—पा°, भा° ।

प्रत्युच्चारणमेनं च न परे प्रतिजानते ।
ईशादेः प्रतिषिद्धत्वात् सर्गादौ न च तत्कृतम् ॥ २६२८ ॥
प्रत्येकं यश्च सम्बन्धः सम्भिन्नः[1] क्षणभङ्गतः ।
तुल्यप्रत्यवमर्शश्च भेदेऽपि न विरुध्यते ॥ २६२९ ॥
क्रमेण जायमानाश्च धियस्तद्विषयाः स्फुटम् ।
तस्याप्याहुः क्रमं तासामक्रमो ह्यन्यथा भवेत् ॥ २६३० ॥
सकृदेव बहूनां तु संकेतकरणे सति ।
समयो नेष्यते भिन्नो नीलाद्येकक्षणो यथा ॥ २६३१ ॥
वक्तुरन्यो न सम्बन्धो बुद्धो श्रोतुर्न चापरः ।

---

तस्य च क्षपणे सति नेष्यति क्वचित् । न चान्यधर्मोऽन्यस्य सम्बन्धो भवति; अतिप्रसङ्गात् । यच्चोक्तम्–प्रत्युच्चारणमेव वा क्रियते, जगदादौ[2] चेति[2] पक्ष-द्वयम्, तस्यानभ्युपगमादेवादूषणम् । यदाह[3]—प्रत्युच्चारणमित्यादि । एनमिति समयम् । पर इति बौद्धा । ईशादेरिति ईश्वरब्रह्मादेः ॥ २६२६-२६२८ ॥

यदुक्तम् = प्रत्येकं वापि सम्बन्धः" (तत्त्व० २२५४) इत्यादि, तत्राह–प्रत्येकमित्यादि । द्वितीय एवात्र पक्षः । न च भेदधीप्रसङ्गः, भेदेऽपि तुल्य-प्रत्यवमर्शहेतुत्वाविरोधात् । अतोऽनैकान्तिकमेतद्यदुक्तम्—"भिन्नश्चेद्भेदधीर्भवेत्" (तत्त्व० २२५४) इति ॥ २६२९ ॥

स्यादेतत्—क्षणभङ्गोऽयमस्माकमसिद्धः, तत्कथमुच्यते—क्षणभङ्गतो भिन्न इति ? आह क्रमेणेत्यादि । [G. 706] तस्यापीति सम्बन्धस्य । क्रममाहुः = प्रतिपादयन्तीत्यर्थः । अक्रमो ह्यन्यथा भवेदिति । धियामिति सम्बन्धः । एतच्च विपर्यये बाधकं प्रमाणम् । प्रयोगश्च पूर्ववद् बोध्य. ॥ २६३० ॥

"वक्तृश्रोतृधियोर्भेदाद् व्यवहारश्च दुष्यति" ( तत्त्व० २२५५ ) इत्यादा-वाह—सकृदेवेत्यादि । यथा नीलादिक्षणो बहुभिर्दृश्यमानोऽपि न भिद्यते, एवं

---

१. सन्निभः—पा० । २–२. जगदादौ वेति—पा०, गा० ।
३. तदाह—पा०, गा० ।

एकरूपा च सा यस्य[1] द्वयोरप्यनुवर्त्तनात् ॥ २६३२ ॥
श्रोतुः कर्तुः च सम्बन्धं वक्ता पूर्वं प्रपद्यते ।
पूर्वोपलब्धो यस्तेन तमेव हि करोत्यसौ ॥ २६३३ ॥
एकाकारा यतस्तस्य वृत्ता प्रत्यवमर्शधीः ।
तस्माद् भिन्नेऽपि शब्दादावेकत्वं सोऽध्यवस्यति ॥ २६३४ ॥
घटादावपि सामान्यं प्रागेव विनिवारितम् ।
न हि भूतगुणप्रख्या काचिदाकृतिरिष्यते ॥ २६३५ ॥
न चास्याकृतितः सिद्धा शक्तिरुध्धारणादिषु ।
तेषामपि हि नित्यत्वमाकृतेर्यद्यभेदिनः ॥ २६३६ ॥

बहुना सङ्केतकरणेऽसति न सम्बद्धो भेत्स्यति, किं पुनर्द्वयोः ! सर्वेषां तुल्यप्रत्ययमर्शस्थितत्वादिति भाव । अतो न वक्तृश्रोत्रोरन्य सम्बन्धो भवति ॥ २६३१–२६३४ ॥

यदुक्तम्—'घटादावपि तुल्यं चेन्न सामान्यप्रतिसिद्धित' (तत्त्व० २२५७) इत्यादि, तत्राह—घटादावपीति । [G 707] प्रागेवेति सामान्यपरीक्षायाम् । पुनरत्रैव सङ्क्षेपेण निराकरणमाह—न हीत्यादि । भूतानाम् = क्षादित्यमहादीनां[2] काचित्[3] गुणवस्त्वव्यतिरिक्ता[4] भवता मीमांसकेन जातिरिष्यते । नापि दृश्यत्वेनेष्टा सती [illegible] दृश्यते । अव्यतिरिक्ताऽपि [illegible] युज्यते, तेषामपि घटादीनामाकृतिस्वरूपवन्नित्यत्वप्रसङ्गात् । अथापि भिन्नाऽभ्युपगम्यते ! तदा सम्बन्धाभावदोष । भिन्नाना हि तदुत्पत्तिलक्षण एव सम्बन्धो भवेत्, ततश्च तदुत्पत्तौ सत्यां जातेरनित्यता प्राप्नोति, उत्पत्तिधर्मकत्वात्, घटवत् ।

क्वचित्तु नित्यतेति पाठ । तत्रायमर्थ.—यदि घटादीनां ततो जाते सकाशादुत्पत्तिरङ्गीक्रियते, तदा घटादीनां नित्यता प्राप्नोति, नित्यं कारणस्य सन्नि-

१. यस्मात्—गा० ।
२ मादित्यमहादीना—पा०, क्षितिजलादीना—गा० ।
३. कण्ठे—पा०, काण्यादिवत्—गा० ।
४. गुणव्यतिरिक्ता—पा०, गुणवत् व्यतिरिक्ता—गा० ।

भेदे सम्बन्धदोषस्तु तदुत्पत्तौ त्वनित्यता ।
अतो नाकृतितो युक्ता शक्तिरवधारणादिषु ॥ २६३७ ॥
घटादेर्व्यतिरेकेऽपि शक्तेर्दोषा इमे ध्रुवम् ।
अवधारणादि तत्कार्यं नित्यमेवं प्रसज्यते ॥ २६३८ ॥
शक्तिरेव च सम्बन्धो भेदश्चास्या न चेन्मतः ।
शब्दार्थानां भवेदैक्यं[1] शक्तेरव्यतिरेकतः[2] ॥ २६३९ ॥
व्यतिरेकेऽपि सम्बन्धस्तस्यास्ताभ्यां न कश्चन ।
तदुत्पत्तौ न नित्यत्वं न चान्या वस्तुनो गतिः ॥ २६४० ॥
सम्बन्धाख्यानकाले तु गोशब्दावाचबुवीरिति ।
केचित् सम्बन्धबुद्धयाऽयं बुध्यन्ते नापरे[3] तथा ॥ २६४१ ॥
यस्मात् सम्बन्धसद्भावात् यादृशः स प्रकाशितः ।
तावकीने तु सम्बन्धे सर्वोऽर्थमवधारयेत् ॥ २६४२ ॥

धानान्नित्यमुत्पत्ति. प्राप्नोतीत्यर्थः । उभयस्वभावपक्षे उभयपक्षभावी दोषः, एकत्व-हानिप्रसङ्गश्च; वस्तुन. स्वभावद्वयानुपपत्ते. । एवं हि द्वे एव ते वस्तुनी कथिते स्याताम्, नैकमुभयात्मकम् । अनुभयपक्षे वस्तुत्वहानिप्रसङ्गः । एकस्य विधिप्रतिषेधायोगश्चेति वाच्यम् ।

इमे दोषा इति । सम्बन्धासिद्धिनित्यतादिप्रसङ्गलक्षणाः । नित्यमवधारणादिकार्यप्रसङ्गश्चाधिको दोषः ॥ २६३५–२६३८ ॥

यदुक्तम्—"शक्तिरेव हि सम्बन्ध." ( तत्त्व० २२६१ ) इत्यादि, तत्राह–शक्तिरेव चेत्यादि । न चान्येति । उभयानुभयस्वभावलक्षणे पूर्ववद्दोषप्रसङ्गात् ॥ २६३९-२६४० ॥

यदुक्तम्—"सम्बन्धाख्यानकाले च" (तत्त्व० २२६३) इत्यादि, तत्राह–सम्बन्धेत्यादि । [ G. 708 ] यादृश एतत्कार्यकारणभावलक्षणस्तादृशो यस्मात्

1. भवेदेका—पा०, गा० ।
२ शक्तिरव्यति०—पा० गा० ।
३. न परे—पा०, गा० ।

शक्तिरेव हि सम्बन्धो नित्या युस्माभिरिष्यते ।
सा चार्थबोधजनने नियताऽनवधिर्न वा ॥ २६४३ ॥
नियतानवधौ सर्वं किमयं नावधारयेत् ।
सावधावपि को हेतुः प्रकृतिश्चेत् स्वतस्तथा ॥ २६४४ ॥
संकेतग्रहणात् पूर्वं तस्य चास्मरणे पुनः ।
एकस्यैव प्रवृत्तं किं विज्ञानं न[1] प्रवृत्तिमत्[1] ॥ २६४५ ॥
तज्ज्ञानजन्मनियता सा हि शक्तिरवस्थिता ।
अथ ज्ञातैव सा शक्तिर्नियता परिकल्प्यते ॥ २६४६ ॥
ज्ञाताऽज्ञाता च भिन्ना चेन्नित्यत्वमवहीयते ।
ऐक्ये तु किन्निमित्तोऽस्य विभाग उपपद्यते ॥ २६४७ ॥

---

सम्बन्धोऽस्ति तस्मात् कश्चिद् बुध्यन्त इति युक्तं स्यात्, तस्य नियतज्ञानोत्पादकत्वेन स्थितत्वात् । भवदीये तु सम्बन्धे सर्वमयुक्तमिति दर्शयति—शक्तिरेव इत्यादि । तथा हि—शक्तिलक्षणसम्बन्ध इष्यते, अन्यतु च रूपं शक्तिरुच्यते । सा च नित्यैकस्वभावत्वेनेष्टाऽर्थबोधजनने च नियता न[2] तस्यार्थबोधनियता[2] सती किमनवधिरिष्टा कतिपयपुरुषावधिरहिता आहोस्वित् ?—इति पक्षद्वयम् । प्रथमे पक्षे सर्वेषां युगपत् सर्वथा भावाभावप्रसङ्गः । द्वितीयेऽपि पक्षे प्रतिनियतविज्ञानजनकस्वभावनियामको हेतुर्वाच्यः । कृतकानां हि भावानां प्रतिनियतकार्यजनकस्वभावस्य नियामकाः स्वहेतुप्रत्यया युक्ताः न तु नित्यानामिति भावः ।

स्यादेतत्—नित्यानामपि प्रकृतिरेव सा तादृशी, येन प्रतिनियतं कार्यं जनयन्ति, न सर्वम्, न हि स्वभावाः पर्यनुयोगमर्हन्तीति ? एवं तर्हि यदि स्वत एव तस्याय स्वभावः परनिरपेक्षः, तदा सङ्केतग्रहणात् पूर्वं तथा विस्मृतसङ्केतस्य तस्यैव प्रतिनियतस्य प्रतिपत्तुः सर्वदा ज्ञानप्रवृत्तिः प्राप्नोति, तज्ज्ञानजनने नियतायाः शक्तेः सदाऽवस्थितत्वात् ।

अथापि स्यात्—ज्ञापकत्वात् सम्बन्धलक्षणा शक्तिर्ज्ञाता सती ज्ञानं जनयति, नाज्ञाता, तेन न भवति यथोक्तदोषप्रसङ्ग इति ? तदसम्यक्, यदि हि ज्ञाता

---

1–1 न प्रवृत्तिमत्—पा०, गा० । 2–2 तत्रार्थ०—पा०, गा० ।

किञ्च केनाप्युपायेन विज्ञाता शक्तिरिष्यते ।
अर्थापत्त्येति चेद् यस्मादयं न्याय इह स्थितः ॥ २६४८ ॥
शब्दवृद्धाभिधेयानि प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥ २६४९ ॥
अन्यथानुपपत्त्या च वेत्ति शक्तिं द्वयाश्रिताम् ।
अर्थापत्त्याऽवबुध्यन्ते सम्बन्धं त्रिप्रमाणकम् ॥ २६५० ॥
अन्यथैवोपपन्नत्वाच्छक्तिर्बोद्धुं न शक्यते ।
शब्दात् सामयिकाद् यस्मात् प्रतिपत्तिरनाकुला ॥ २६५१ ॥

ज्ञाताज्ञातावस्थयोः परस्परं भेद इष्यते तदा नित्यत्वहानिः । अथाभेदः, तदा ज्ञाताज्ञातस्वभावद्वयविभागानुपपत्तिः, न ह्येकस्य वस्तुन एकपुरुषापेक्षया ज्ञातत्वमज्ञातत्वं च परस्परं विरुद्धं स्वभावद्वयं युज्यत इति ॥ २६४१–२६४७ ॥

किञ्च—सति हि प्रतिपत्त्युपाये शक्तेर्ज्ञातत्वं स्याद्, यावता स एव न सम्भवति इति मन्यमान पृच्छति – किञ्चेत्यादि । [G 709] अर्थापत्त्येत्यादिना परस्योत्तर विस्तरेण तावदाशङ्कते । तथा हि—सम्बन्धप्रतिपत्तेरयं न्यायः कुमारिलेन वर्णित —"यस्मात् प्रथमं तावत् प्रत्यक्षेण शब्दं वृद्धं च शब्दस्याख्यातारमभिधेयं च वाच्यं वस्तु पश्यति, ततः पश्चादनुमानेन चेष्टालक्षणेन लिङ्गेन श्रोतुः प्रतिपन्नत्वं पश्यति—अवधारयतीत्यर्थः । करणं कारकं कृत्वा चेष्टाया अनुमानमुक्तम् । ततश्च पश्चादर्थापत्त्या द्वयाश्रिताम् = शब्दार्थाश्रितां शक्तिं वेत्ति । अर्थापत्त्या तु साक्षादवबुध्यन्ते" इति, अतोऽर्थापत्त्याऽवबुध्यन्त इत्युक्तम् । त्रिप्रमाणकमिति । प्रत्यक्षानुमानार्थापत्तिलक्षणानि त्रीणि प्रमाणानि यस्याधिगमाय भवन्ति ॥ तथोक्त ॥ २६४८–२६५० ॥

अन्यथैवेत्यादिना दूषणमाह । अनेनार्थापत्तेरनैकान्तिकतामाह; विनापि नित्यसम्बन्धं प्रतिपत्तिसम्भवस्य प्रतिपादितत्वात ॥ २६५१ ॥

न [1]केवलं साधकप्रमाणाभावात्[1] तत्कल्पना न युक्ता, प्रमाणबाधितत्वादपि

१–१. पेपद्द्याधक०—पा०, या० ।

शक्तिनित्यत्वपक्षे तु सङ्केतादि व्यपेक्षते ।
न किञ्चिदिति शब्दार्थप्रतिपत्तिः सदा भवेत् ॥ २६५२ ॥
समयान्तरभावे[1] च कलिमार्यादिशब्दवत् ।
नान्यार्थबोधकत्वं स्याद् ध्वनेर्नियतशक्तितः ॥ २६५३ ॥
नानार्थद्योतनायैव शक्तिरेका यदीष्यते ।
भिन्ना वा शब्द एकस्मिन् सकृन्नानार्थवित् भवेत् ॥ २६५४ ॥
अर्थद्योतनशक्तेश्च सर्वदैव व्यवस्थिते ।
तद्धेतुरर्थबोधोऽपि सर्वेषां सर्वदा भवेत् ॥ २६५५ ॥

---

न युक्तेति दर्शयन्नाह—शक्तिनित्यत्वेत्यादि । [G 710] प्रयोगः—ये सङ्केतापेक्षार्थप्रकाशना न ते नित्यसम्बन्धयोगिनः, यथा गाव्यादिशब्दाः । सङ्केतापेक्षार्थप्रकाशनाश्च गवादयो लौकिकवैदिकाः शब्दा इति विरुद्धव्याप्तोपलब्धिः, सापेक्षत्वस्य नित्यसम्बन्धयोगित्वविरुद्धेनानित्यसम्बन्धयोगित्वेन व्याप्तत्वात् । एतच्च प्रमाणं पश्चात् करिष्यते, अत्र तु व्याप्तिमात्रमस्य प्रसाध्यते । तथा हि—शक्तिलक्षणेनार्थप्रतिपत्तिहेतुना सम्बन्धेन नित्यसम्बन्धयोगिनः शब्दा इष्टाः । सा च शक्तिर्नित्यत्वादनुपकार्येति न किञ्चित् सङ्केतादि व्यपेक्षते । ततश्च तद्भाविनी शब्दार्थप्रतिपत्तिः सर्वदा भवेत् । किञ्च—सा शक्तिरेकार्थनियता वा भवेत्, नानार्थनियता वा, तत्रापि नानार्थनियमपक्षे किमेकस्य शब्दस्य नानार्थद्योतिका शक्तिरेकैव, आहोस्विदनेका—इति विकल्पाः । तत्राद्ये पक्षे यदृच्छया देशकालादिभेदेन सङ्केतान्तरे क्रियमाणे सति ध्वनेः शब्दस्यान्यार्थबोधकत्वं[2] दृष्टम्, यथा—कलिमार्यादिशब्दानां [3]द्रविडार्यदेशयोर्यथाक्रमं कालवर्णोपसर्गाद्यभिधायिनाम्, तन्न प्राप्नोति, नियतशक्तिकत्वात्, चक्षुरादिवत् । न हि चक्षुः सङ्केतशताद् रसाद्युपलम्भाय नियोगमर्हति । द्वितीयेऽपि पक्षे एकस्माच्छब्दाद् युगपत् सर्वेषां पुंसां शब्दार्थप्रतिपत्तिप्रसङ्गः । तद्दर्शयति—शब्द एकस्मिन्नित्यादि ॥ २६५३, २६५४ ॥

अत्रैव दोषान्तरमाह—अर्थद्योतनशक्तेश्चेत्यादि । तस्मिन्निति अर्थ

---

1 समयान्तर०—पा०, गा० । 2 शब्दस्यान्यार्थ—पा०, गा० ।
3 द्रविडार्य०—पा० ।

तस्मिन् संकेतसापेक्षा शक्तिश्चेत् परिकल्प्यते ।
ननूपकार्यपेक्ष्येत नोपकार्या च साऽचला ॥ २६५६ ॥
अर्थद्योतनहेतोश्च संकेतस्य नराश्रयात् ।
शक्तावनरजन्यायामपि[1] मिथ्यात्वसम्भवः ॥ २६५७ ॥
नानार्थद्योतने शक्तिर्भवत्वेकस्य हि ध्वनेः ।
नाग्निहोत्रादयस्त्वर्थाः सर्वे सर्वोपयोगिनः ॥ २६५८ ॥
तदिष्टविपरीतार्थद्योतनस्यापि सम्भवात् ।
नित्यशब्दार्थसम्बन्धकल्पना वो निरर्थका ॥ २६५९ ॥

---

बोधे। सेति शक्तिः। अचलेति नित्या। अयं चानुपकार्यत्वे हेतुः॥ २६५५-२६५६॥

अभ्युपगम्यापि सङ्केतसापेक्षत्वम्, दोषान्तरमाह—**अर्थद्योतनहेतोश्चे**त्यादि। अपि नामासङ्कीर्णमर्थं जानीयामिति सङ्करहेतुः पुरुषोऽवकीर्णो भवता, तत्र यथा कश्चित् तैः प्रयुक्ताः सङ्कीर्यन्ते शब्दाः, तथा सर्वार्थसाधारणाः सन्तो वैदिकाः [G. 711] कश्चित्तैरिच्छावशात् संमिताः किं न सङ्कीर्येरन्; तेषां पुंसां तत्त्वापरिज्ञानात्। तथाहीच्छावशात् समयः, सा च तेषामतत्त्वविदां स्वातन्त्र्येण प्रवर्त्तमाना केन नियम्येत। ततश्च स्वतन्त्रेच्छाभावी समयोऽपि स्वैरी वैरी च किमिति विरुद्धमर्थं परिहरेत्। ॥ २६५७ ॥

नानार्थद्योतनशक्तिपक्षमभ्युपगम्य, दोषान्तरमाह—**नानार्थद्योतने शक्ति**रित्यादि। यद्यपि शब्दानां नानार्थप्रतिपादनसामर्थ्यमस्ति, न त्वर्थानां सर्वार्थक्रियाकारित्वम्; प्रतिनियतत्वात् कार्यकारणभावस्य। अन्यथा हि न कश्चिद्विघाती स्याद्, अविघाती वा। ततश्च प्रतिनियतार्थक्रियासाधनेऽर्थे प्रतिपिपादयिषिते सति सर्वार्थसाधारणस्य शब्दस्येष्टार्थविषयमेव समयं समयकृत् करोतीति [illegible] एतल्लभ्यम्। तस्मान्मिथ्यात्वसम्भवान्नित्यसम्बन्धकल्पना व्यर्थैव॥ २६५८-२६५९॥

---

1. शक्तावितर०—पा०, गा०।

सङ्केते च व्यपेक्षायां नित्यसामर्थ्यलक्षणः ।
किमकारण एवायं सम्बन्धः परिपोष्यते ॥ २६६० ॥
सिद्धोपस्थायिनस्तस्य न हि कश्चित् समीक्ष्यते ।
संकेत¹ व्यतिरेकेण¹ व्यापारोऽर्थावबोधने ॥ २६६१ ॥
तथा हि व्यवहारोऽस्य न दृष्टः समयं विना ।
तस्मात् सम्बन्धसिद्धिश्चेत्यनर्थैव परम्परा ॥ २६६२ ॥
नरेच्छामात्रसम्भूतसंकेतादपि केवलात् ।
युज्यते व्यवहारश्च ततो योगो न सिद्ध्यति ॥ २६६३ ॥

पुनरप्यानर्थक्यमस्य दर्शयन्नाह—सङ्केते चेत्यादि । यदि स्वभावमात्रेण सम्बन्धोऽर्थप्रतीतिहेतुः स्यात्, तदा सङ्केतानभिज्ञस्यापि स्यादित्यवश्यं समयापेक्षिता तस्येष्टव्या । ततश्च समयस्याप्यर्थप्रतीतिहेतुत्वेऽङ्गीक्रियमाणे स किमकारणं सिद्धोपस्थायी नित्यसम्बन्धोऽपरः पोष्यते । तथा हि—इयानेव सम्बन्धस्य व्यापारो यदर्थप्रतीतिजननम्, तच्चेत् समयेन क्रियते तदा किमपरनित्यसम्बन्धकल्पनया । न चापि तस्यानाधेयातिशयस्य काचिदपेक्षेति व्यवस्थापितम् । अदृष्टसामर्थ्यस्य च हेतुत्वकल्पने हन्त 'हरीतकी प्राप्य दन्ता विरेचयन्ति' इति किं न कल्प्येत । ॥ २६६०—२६६१ ॥

[G 712] तथा हीत्यादिना सम्बन्धस्य तामेव व्यापारासिद्धिं दर्शयति । तस्मादिति सङ्केतात् । अनर्थैव परम्परेति । अदृष्टसामर्थ्यस्य हेतुत्वकल्पनेऽनवस्थादोषात् । तथा हि—सम्बन्धेऽपि कल्पिते पुनरपि तस्यापरमदृष्टसामर्थ्यं हेत्वन्तरं न कल्प्येत, अदृष्टसामर्थ्यत्वाविशेषात् । एवं पुनरपि—इति महत्यनर्थपरम्परा आपद्येत ॥ २६६२ ॥

एवं बाधकस्य प्रमाणस्य व्याप्तिं प्रसाध्य नरेन्द्रेत्यादिनाऽर्थापत्तेरनैकान्तिकत्वं पूर्वं प्रतिपादितमुपसंहरति । योगो न सिद्ध्यतीति । नित्य इति शेषः ॥ २६६३ ॥

1-1 सङ्केतव्यति॰—पा॰, गा॰ ।

अन्यथाऽनुपपत्तिस्तद्व्यवहारस्य शङ्क्यते ।
अतीन्द्रियश्च योगोऽतो न नरैरवगम्यते ॥ २६६४ ॥
सर्वेषामनभिज्ञत्वात् पूर्वपूर्वाप्रसिद्धितः ।
न[1] सिद्धो योग इत्येवं किमसौ परिकल्प्यते ॥ २६६५ ॥

---

एवं च कृत्वा यच्चेदमुक्तम्—'सर्वेषामनभिज्ञानां[1] पूर्वपूर्वप्रसिद्धितः' (तत्त्व० २२७२) इत्यादि, तत्परस्परपराहतमुक्तमिति दर्शयति—अन्यथाऽनुपपत्तिरित्यादि। यदि हि सर्वेषामनभिज्ञत्वम्, कथं तर्हि पूर्वपूर्वतोऽनभिज्ञत्वात् सम्बन्धप्रसिद्धिर्भवेत्, न ह्यन्धपरम्परा परेषां रूपविशेषोपदेशाय प्रभवति। यथोक्तं शाबरे भाष्ये—नैवञ्जातीयकेष्वर्थेषु पुरुषवचनं प्रामाण्यमुपैति, अन्धानामिव वचनं रूपविशेषेषु" (मी० द०, शा० भा० १.१.२) इति। स्यादेतत्—प्रत्यक्षवर्शित्वात् सर्वेऽनभिज्ञा उच्यन्ते, न तु सर्वथा परिज्ञानाभावात्, शाब्दव्यवहारान्यथानुपपत्त्या तु प्रमाणेन पूर्वपूर्वेषां वृद्धानामभिज्ञत्वमस्त्येवेति। नैतदेवम्; यतोऽन्यथाऽपि सङ्केताच्छाब्दो व्यवहार: [2]प्रवर्तित इति दर्शितमेतत्। न[3] नाम दर्शितम्[3], तथापि सन्दिग्धमेतत्—किमसौ नित्य आहोस्विदनित्य इति? अत एवाह—शङ्क्यत इत्यादि। तथा हि—अर्थापत्त्या सम्बन्धमात्रास्तित्वं प्रतिपाद्यते, न तु विशेष:, तेन सह प्रतिबन्धासिद्धेरित्यभिप्रायः। अत एवानुमानान्नार्थापत्तेर्भेदः। [G. 718] स्यादेतत्—नानित्यस्यार्थप्रतिपादनहेतुत्वं दृष्टम्, न च युक्तमिति पूर्वं प्रतिपादितम्, अतोऽसामर्थ्यान्नित्य सिध्यतीति? तदेतन्नित्येऽपि समानमसिद्धं च। तथा हि—नित्यस्यापि सम्बन्धस्यार्थप्रतिपत्तिहेतुत्वं न दृष्टमिति समानम्, हस्तकम्पादीनामनित्यत्वेऽपि प्रतिपादकत्वं दृष्टमित्यदृष्टमसिद्धम्। अत एवायुक्तत्वमसिद्धम्। नित्यस्य च क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति तस्यैवायुक्तत्वमिति यत् किञ्चिदेतत्[4] ॥ २६६४–२६६५ ॥

---

१. ०मनभिज्ञवात्—जै०।
२. नेति त्रिटार्थे।
२–३ प्रवर्तत एतन्न नाम दर्शित—पा०, ०निश्चित—गा०।
४. किञ्चिदिति—पा०, गा०।

तद् गवाश्वादयः शब्दा नित्यसम्बन्धयोगिनः ।
सङ्केतसव्यपेक्षत्वान्नैव गाव्यादिशब्दवत् ॥ २६६६ ॥
गोशब्देऽवस्थिते योग्ये तदशक्तिजकारिताम् ।
गाव्यादेरपि गोबुद्धिमूलशब्दानुसारिणी ॥ २६६७ ॥

एवमर्थापत्तेरनैकान्तिकत्वमुपसंहृत्य बाधकं प्रमाणमुपसंहरति—तद्गवाश्वादय इत्यादि । तदिति तस्मात् । नित्यसम्बन्धयोगिन इति । नेति सम्बन्धः । प्रयोगरचना तु पूर्वमेव दर्शिता ॥ २६६६ ॥

ननु च गाव्यादिशब्दानामसाधुत्वान्नैव वाचकत्वमिष्टं परेणेत्यसिद्धो दृष्टान्त । तथा चोक्तं कुमारिलेन—

"गोशब्देऽवस्थितेऽस्माकं तदशक्तिजकारितात्[1] ।
गाव्यादेरपि गोबुद्धिर्मूलशब्दानुसारिणी" ॥ (श्लो. वा. श. नि.२७६) इति ।

अयमस्यार्थः—गोशब्दे साधौ वाचके सति या गाव्यादेरसाधोः प्रयोगात् गोबुद्धिर्भवतीत्युच्यते, न सा तत एव भवति, किं तर्हि ? मूलम् प्रधानं साधु-गोशब्दमनुसृत्य । तदशक्तिजकारितादिति, गाव्यादेरिति सामानाधिकरण्येन सम्बन्धः । तस्मिन् गोशब्दे साधौ पुरुषस्योच्चारयितुमशक्तिस्तदशक्ति, ततो जातो यस्तात्वादिव्यापारः स तथोक्तः, तेन कारितो गाव्यादिशब्द । पुरुषस्य[2] प्रयोज्यस्य गाव्यादिशब्दं कुर्वत प्रयोजकत्वेन विवक्षितं यत् तस्य[2] । तथा भर्तृहरिणोक्तम्—

"अम्बाम्बेति[3] यथा बाल शिक्ष्यमाण प्रभाषते ।
अव्यक्तं तद्विदां तेन व्यक्तेर्भवति निश्चय ॥
एवं साधौ प्रयोक्तव्ये योऽपभ्रंश प्रयुज्यते ।
तेन साधुव्यवहित कश्चिदर्थोऽनुमीयते" ॥ (वा. प. १. १५२-५३) इति ।

अत इदमाह—गोशब्देऽवेत्यादि ॥ २६६७ ॥

1. ॰शक्तिजकारित्वात्—चै॰ ।
2-2. पाठोऽयं पा॰, गा॰ पुस्तकयोर्नास्ति ।
3. अम्बाम्बेति—पा॰, गवाम्बेति—गा॰ ।

तन्नैवं शनकादीनां संस्कृतानवबोधनात् ।
मूलशब्दानुसारेण कथमर्थगतिर्भवेत् ॥ २६६८ ॥
तस्माच्छब्दार्थसम्बन्धो नित्यो नाभ्युपगम्यते ।
स तु सामयिको युक्तः सर्वथा तस्य सम्भवात् ॥ २६६९ ॥
देशोत्सादकुलोत्सादरूपो यः प्रलयो भवेत् ।
यो वाऽव्याहतबौद्धेन्द्रो ब्रह्मादेरपि शङ्क्यते ॥ २६७० ॥
तस्मिन् सम्भाव्यते वेदे ध्वस्तमूला मतिः परा ।
मिथ्यामोहमदादिभ्यो विपरीता च कल्पना ॥ २६७१ ॥
अन्य एव भवेद् वेदः प्रतिकञ्चुकतां गतः ।
इत्यप्याशङ्क्यते यावद् बाधकं न प्रकाश्यते ॥ २६७२ ॥

---

तन्नैवमित्यादिना प्रतिविधत्ते । [ G. 714 ] शनकादीनामिति कैवर्त्तकादीनाम् । आदिशब्देन म्लेच्छादीनां ग्रहणम् । तथा हि—तेषां प्रत्युत संस्कृतेनैव शब्देनार्थे प्रतिपाद्यमाने व्यामोह एव भवति, अतो न मूलशब्दानुसारिणी युक्ताऽर्थगतिः ॥ २६६८-२६६९ ॥

यदुक्तम्—'देशोत्सादकुलोत्सादरूपो वा प्रलयो भवेत्' (तत्त्व० २२७६) इत्यादि, तत्राह—देशोत्सादेत्यादि । एवं मन्यते—नैवास्माभिरपि शब्दोच्छेदात्मकः प्रलयो वर्ण्यते, नाप्यनादिपुरुष सृष्टिसंहारकारकः, किं तर्हि ? सर्वमेव जगदनादि, व्यवहारोऽप्यनादिवासनोद्भूतविकल्पपरिनिष्ठित. शाब्दः प्रवर्त्तत इति; किन्तु योऽयं भवता देशोत्सादादिरूपप्रलयो वर्णित, यश्च बौद्धैरम्बम्बुवायुसंवर्त्तनीयस्वभाव. पर्यन्ततस्त्रिसाहस्रमहासाहस्रलोकधातुमर्यादोऽधस्ताद्वायुमण्डलावधिरुपरिष्टाद्[1] यथाक्रमं प्रथमद्वितीयतृतीयध्यानपर्यन्त, सोऽयं प्रमाणेनानपितत्वादव्याहतोऽनाक्यनिषेधत्वाद् ब्रह्मादेरपि शङ्क्यते । अतोऽस्मिन् द्विविधेऽपि प्रलये वेदस्य ध्वंसः सम्भाव्यते, विपरीतार्थकल्पनं च । तथा चान्य एवायं वेदः प्रतिकञ्चुकताम् = तत्प्रतिभासतां गत.—इत्याशङ्का न निवर्त्तते यावद् बाधकं प्रमाणं नोच्यते भवतेति ॥ २६७०—२६७२ ॥

---

1. स "शत्—पा० ।

अन्यथाकरणेच्छायामपि वर्त्तेत न ध्वनिः ।
तथैव यदि वान्छा या[1] नृणां जायेत नान्यथा ॥ २६७३ ॥
शङ्का चेतीयं तथा वेदो न ग्रन्थार्थान्यथात्मकः ।
अन्यथेच्छाप्रवृत्तौ तु नाशङ्का विनिवर्त्तते ॥ २६७४ ॥

आनुपूर्व्यनित्यतामूलकपक्षनित्यतासमर्थनम्

न च सर्वैः क्रमः पुम्भिः पूर्वसिद्धः[2] प्रगृह्यते ।
स्वातन्त्र्येणापि कुर्वन्ति परवाक्याक्षरक्रमम् ॥ २६७५ ॥
अन्यथा कृतकः कश्चित् स्याद् ग्रन्थो वेदवन्न ते ।
अनर्थग्रन्थमात्रेऽपि ध्वस्ता कीर्तिरतस्तया ॥ २६७६ ॥
यथैवास्य परैरुक्तस्तथैवैनं विवक्षति ।

---

स्यादेतद्—अस्त्येव बाधकं प्रमाणम् । तथा हि—इदानीं तावत् सर्वत्र देशे पुरुषैर्न वेदस्य पाठादेरन्यथात्वं शक्यते कर्तुम्, अतः 'कालान्तरेऽपि तथाभूत्, भविष्यति च' इत्यध्यवस्यामः ? इत्यत एतदाशङ्क्याह—अन्यथाकरणेच्छायामित्यादि । [G. 715 ] यदि हि सत्यामन्यथाकरणेच्छायां वेदध्वनिरन्यथा न प्रवर्तेत, अन्यथाकरणेच्छा चोत्पादयितुं न शक्यते, तदा वेदपाठादेरन्यथात्वकरणाशक्तिः पुंसा[1] सिद्ध्येत् । तत्रापि न सर्वपुंसां सिद्ध्यति; अदर्शनमात्रस्याप्रमाणत्वात्, पुरुषाणामतिशयदर्शनाच्च । यावता शक्यते "शं नो देवीरभिष्टये" इत्यादेर्वेदवाक्यस्य पाठोऽन्यथापि कर्तुम्, अर्थो वा व्याख्यातुम् । तथा हि—मीमांसक-निरुक्तकारादयो बहुधा वेदार्थं विशंसन्तो दृश्यन्ते । तस्मान्न शङ्कानिवृत्तिः ॥ २६७३–२६७४ ॥

इत्येषाऽनियतिस्तन्न सम्बन्धवदनादिता ॥ २६७७ ॥
परेणोक्तान् ब्रवीमीति विवक्षा चेदृशी भवेत् ।
तुल्यप्रत्यवमर्शाद्धि विभ्रमात् कर्मभेदवत् ॥ २६७८ ॥
परेणोक्तास्तु नोच्यन्ते वैलक्षण्यात् स्वरादिभिः ।
न च व्यञ्जकधर्मोऽयं वर्णात्मत्वेन दर्शनात् ॥ २६७९ ॥
ततः प्रतिनरं वर्णा भिन्ना दृष्टा घटादिवत् ।
अतो भेदे सुविस्पष्टे तच्चिह्नं किं निषिध्यते ॥ २६८० ॥
प्राक् च जात्या घटादीनां व्यवहारोपलक्षणम् ।
निषिद्धं तदसत्त्वेन व्यक्त्या च तदयोगतः ॥ २६८१ ॥

---

मन्यश्चेति तयोक्त. । मात्रशब्देन व्याप्तिं दर्शयति । कृति. = करणम् । तथेति वेदवत् । अनियतिरिति अनियम । एष नियमो न स्यादिति यावत् । तदिति तस्मात् ॥ २६७५–२६७७ ॥

यदुक्तम्—'परेणोक्तान् ब्रवीमीति" (तत्त्व० २२९०) इत्यादि, तत्राह—परेणोक्तानित्यादि । कर्मभेदवदिति सप्तम्यन्ताद् वति । अनेनैकप्रत्यवमर्शस्य विपक्षसम्भवोपदर्शनादनैकान्तिकतोक्ता भवति ॥ २६७८ ॥

[ G. 716 ] स्यादेतद्, विभ्रमत्वमस्य कथं सिद्धम् ? इत्याह—परेणोक्तास्त्वित्यादि । स्वरादिभिरिति उदात्तादिभि । आदिशब्देन द्रुतमध्यविलम्बितादि परिग्रह । न च व्यञ्जकधर्मोऽयमिति स्वरादि । कुत ? वर्णात्मत्वेन तस्य स्वरादेर्दर्शनात्, सिद्धत्वादित्यर्थ । तच्चिह्नमिति । तस्य वर्णभेदस्य चिह्न तच्चिह्नम्, तत् किमिति निषिध्यते 'न चान्यचिह्नमस्ति व" (तत्त्व० २२९०) इत्यनेन ॥ २६७९–२६८० ॥

"जात्या यथा घटादीनाम्" (तत्त्व० २२९१) इत्यादावाह—प्राक् चेत्यादि । प्रागिति सामान्यपरीक्षायाम् । तदसत्त्वेनेति तस्या जातेरसत्त्वेन । सत्यपि सत्त्वे व्यक्त्या घटादिलक्षणया सह तस्या जातेरनुपकार्यायाः अयोगतोऽसम्बन्धाद्युक्त[1] तया व्यवहारोपलक्षणम् ॥ २६८१ ॥

---

1 ०न्धानुयुक्त —जै० ।

ताल्वादिजातयस्तस्मात् सर्वंपुस्व्यवस्थिता[1] ।
नातो वक्ता ध्वनींस्ताभिरुपलक्ष्य[1] निरस्यति ॥ २६८२ ॥
तन्न तज्जातयो भिन्नाः शब्दाभिव्यक्तिहेतवः ।
यावद्वर्णं प्रवर्तन्ते व्यक्तयो वा तदन्विताः ॥ २६८३ ॥
तत्र ताल्वादिसंयोगविभागक्रमपूर्वकम् ।
ध्वनीनामानुपूर्व्यं[2] ते जात्या चोभयनिस्यता ॥ २६८४ ॥
यथा न भ्रमणादीना मागाः जात्युपलक्षिताः[3] ।
क्रमानुवृत्तिरेव नो ताल्वादिध्वनिवर्णभाक् ॥ २६८५ ॥
व्यक्तीनामपि नो सौक्ष्म्याज्जातिधर्मावधारणम् ।
तद्वशेन न वर्णानां व्यापित्वेऽपि क्रमग्रहः ॥ २६८६ ॥

---

तेन वाक्तिद्वारेण यदेतत् समुपकल्पित तत् सर्वमसङ्गतमिति दर्शयति—ताल्यादिजातयस्तस्मादित्यादि ॥ २६८२ ॥

यदुक्तम्—"तेषां न जातयो भिन्ना शब्दाभिव्यक्तिहेतव" ( तत्त्व० २२९३ ) इत्यादि, तत्राह—तन्नेत्यादि । तदिति तस्मात् ॥ २६८३ ॥

यदप्युक्तम्—'तत्र ताल्वादिसंयोगे' ( तत्त्व० २२९४ ) इत्यादि, तत्राह—तत्र ताल्वादीत्यादि । तदिति[4] तस्मात्[4] ॥ २६८४ ॥

[ G 717 ] यदप्युक्तम्—"यथैव भ्रमणादीनाम्" ( तत्त्व० २२९५ ) इत्यादि, तत्र यथा न भ्रमणादीनामित्यादिना दृष्टान्तासिद्धिमाह । जातेर्निरस्तत्वादिति भाव[5] ॥ २६८५ ॥

यदुक्तम्—"व्यक्तीनामेव वा०" (तत्त्व० २२९६) इत्यादि, तत्राह—व्यक्तीनामपीत्यादि ।

यदुक्तम्—"तद्वशेन च०" ( तत्त्व० २२९६ ) इति, तत्राह—तद्वशेनेत्यादि ॥ २६८६ ॥

---

१ ०स्त स्व—पा० ।
२. ०मानुपूर्व्ये—जै० पुस्तक पाठ० ।
३ मागजात्यु०—जै० ।
४–४ पा०, गा० पुस्तकयोर्नास्ति ।
५. पा०, गा० पुस्तकयोर्नास्ति ।

तत्र ध्वनिगुणात् सर्वासित्यत्वेन व्यवस्थितात् ।
वर्णा अनुपतन्तः स्युरर्थभेदावबोधिनः ॥ २६८७ ॥
अन्यच्च जातयो भिन्नाः शब्दाभिव्यक्तिहेतवः ।
यावद्वर्णं प्रवर्तन्ते व्यक्तयो या तदन्विताः ॥ २६८८ ॥
इति व्यञ्जकसद्भावान्नित्यं शब्दोपलम्भनम् ॥
अतो व्यक्तिक्रमात्माऽपि युक्तो वर्णक्रमो न ते ॥ २६८९ ॥
व्यक्तिसम्बन्धरूपाणां जातीनां च व्यवस्थितौ ।
व्यक्तीनामपि नित्यत्वं दुर्वारमनुषज्यते ॥ २६९० ॥
जातिसम्बन्धरूपाणां व्यक्तीनां वाऽनवस्थितौ[1] ।
जातीनामप्यनित्यत्वमकामस्यापि ते भवेत् ॥ २६९१ ॥

---

यदप्युक्तम्—"एवं ध्वनिगुणान्" (तत्त्व० २२९७) इत्यादि, तत्रोच्यते—तन्नेत्यादि ॥ २६८७ ॥

यदुक्तम्—"तेषां च जातयो भिन्नाः शब्दाभिव्यक्तिहेतवः" (तत्त्व० २२९३) इत्यादि, तत्राभ्युपगम्य जातिदूषणमाह—अन्यच्चेत्यादि । अयं च निपातसमुदायो वाक्योपन्यासे द्रष्टव्यः । इतिशब्दो हेतौ । तेनायमर्थो भवति—यस्माज्जातयो भिन्नाः शब्दाभिव्यक्तिहेतवः स्थिताः, तेन॰ नित्यव्यक्तिस्थितत्वात् शब्दोपलम्भो नित्यं प्राप्नोति । व्यक्तेः क्रमाभावात् तदात्मा शब्दक्रमोऽपि न युक्तः । तदुक्तमेवोक्तम्—व्यक्तमेवानुपूर्व्यमिति ॥ २६८८-२६८९ ॥

तत्र जातिव्यक्त्योः सम्बन्धमभ्युपगम्य दोषमाह—व्यक्तिसम्बन्धरूपाणामित्यादि[2] । [G 718] द्विष्ठत्वात् सम्बन्धस्य, जातीनां नित्यत्वाभ्युपगमाच्च तत्सम्बन्धस्वभावानां व्यक्तीनामपि नित्यत्वं प्राप्नोति; अन्यथा हि जातीनां तत्सम्बन्धस्वरूपता न स्यात् । तथा व्यक्तीनामनित्यत्वाभ्युपगमात् तत्सम्बन्धस्वरूपाणां जातीनामप्यनित्यत्वं प्राप्नोति । तर्हि तत्सम्बन्धिनां च स्वरूपेण

---

1. वा व्यवस्थितौ—पा०, गा० ।  2. ०दूषणमित्यादि—गा० ।

॰ इत आरभ्य २७०५ कारिकाव्याख्यानं यावत्, अस्माकं निम्नपि भादर्शपुस्तकेषु तत्र तत्र बहूनि वाक्यानि त्रुटितानि दृश्यन्ते । तान्यस्माभिर्भोटभाषानुवादबलेन संस्कृत्येह स्थापितानि— इति ध्येयं विद्वद्भिः ।

अभिव्यक्तेरयोगे च पुरस्तादुपपादिते ।
इत्थं प्रतीयमानाः[1] स्युवर्णास्ते नावबोधकाः ॥ २६९२ ॥
कालोऽप्येको विभुर्नित्यः पूर्वमेव निराकृतः ।
वर्णवत् सर्वभावेषु व्यज्यते[2] न च केनचित् ॥ २६९३ ॥
वर्णेषु व्यज्यमानस्य नास्य प्रत्ययमाङ्गता ।
अन्याविशेषान्नान्यत्र सद्भावाच्चास्य नित्यता ॥ २६९४ ॥
तदानुपूर्वी वर्णानां ह्रस्वदीर्घप्लुताश्च ये ।
कालस्य प्रविभागास्ते न युक्ता ध्वन्युपाधयः ॥ २६९५ ॥
तस्मान्न पदधर्मोऽस्ति नित्यस्ते कश्चिदीदृशः ।
तेनानित्यं पदं सिद्धं वर्णानित्यत्ववादिनाम् ॥ २६९६ ॥

---

व्यक्तीनामनित्यता सेत्स्यति यदि तत्सम्बन्धादीनां जातीनामप्यनित्यता भवेत् । अन्यथा हि द्वितीयसम्बन्धिन्यविकले सति न युक्तमपरस्य वैकल्यम्; सम्बन्धस्वभावहानिप्रसङ्गात् ॥ २६९०-२६९१ ॥

दूषणान्तरं पूर्वोक्तं स्मारयन्नाह—अभिव्यक्तेरयोग इत्यादि । त इति पद्यन्त.[3] ॥ २६९२ ॥

यदुक्तम्—'कालधीको विभुर्नित्यः' (तत्त्व० २२९९) इत्यादि, तत्राह—कालोऽपीत्यादि । पूर्वमेवेति षट्पदार्थपरीक्षायाम् । व्यज्यते न च केनचिदिति । असत्त्वादेव, सत्त्वेऽपि नित्यस्य व्यक्तेर्निराकृतत्वात् । अन्याविशेषादिति । [G 719] अन्यस्मादविशेषो अन्याविशेष । तथा हि—बीजाङ्कुरलतादिषु यो व्यज्यते कालात्मा, ततस्तस्य वर्णेषु व्यज्यमानस्य कालात्मनो न कश्चिद् विशेषोऽस्ति; एकस्य सद्भावात्, अन्यथा अनेकत्वप्रसङ्ग. । अन्यत्र सद्भावात् तस्य नित्यतेति चेत् ? अन्यस्यायोगादिति चिन्त्यते । तदिति तस्मात् । न युक्ता इति । कालस्यासत्त्वात् । सत्त्वेऽप्यभ्युपगतम-विभागत्वमिति[4] ।

1. प्रतीयमाना—पा०, गा० । 2. युज्यते—जै० । 3. व्यक्त्यन्तरप-पा० ।
4. पाठोऽयं भोटभाषानुवादे नास्ति ।

परधर्मेऽपि चाङ्गत्वं[1] भवेदश्वजवादिवत् ।
यदि व्यक्तिः प्रकल्प्येत व्यञ्जकैः प्रत्ययैरिह ॥ २६९७ ॥
नित्यतायां तु सर्वेषामर्थापत्तिरपाकृता ।
अर्थप्रतीतिरूपत्वमनित्येषु हि साधितम् ॥ २६९८ ॥
यो यद्विवक्षासम्भूतविवक्षान्तरतस्ततः[2] ।

---

"परधर्मेऽपि०" ( तत्त्व० २३०२ ) इत्यादावाह—परधर्मेऽपीत्यादि । शेषं सुबोधम् ॥ २६९३-२६९७ ॥

अर्थापत्तिरपाकृतेति । "तथा हि हस्तकम्पादेः" ( तत्त्व० २६१६ ) इत्यादिना व्यभिचारस्य बाधकस्य च प्रमाणस्य वर्णनात् । अनित्येषु अर्थप्रतीतिरूपत्वं साधितमिति सामान्येन प्रतीतावत्यन्ताभेद इति एवं प्रतिपदं भिन्नत्वात् विशिष्टानुपूर्वीका अनित्या वर्णा. मदो दमः, सरो रस इत्यादौ प्रतीतिभेदनिबन्धनयुक्ताः । न तु नित्याः, तेषां सर्वत्रैकरूपत्वात् । न चानुपूर्व्यं तेभ्यो व्यक्त्यन्तरमित्येतत् सर्वं प्रतिपादयन्नाह—यो यद्विवक्षेत्यादि । अयमत्र तावत् समुदायार्थः—वक्तृसन्ताने प्रतिवर्णं तत्समुत्थापकानि ज्ञानानि पूर्वपूर्वसमनन्तरप्रत्ययजन्यानि विवक्षाभिधानि भवन्ति, ततश्च वर्णा., ते च श्रोतृसन्तानि पूर्वपूर्ववर्णग्राहिविज्ञानसहकारिणः स्वविषयाभिज्ञानानि क्रमवर्तीनि जनयन्ति, साक्षात्, ततश्च पश्चात् स्वस्वविषयां स्मृतिं क्रमभाविनीं जनयन्ति [G. 720] पारम्पर्येण, ततश्च वक्तृसन्तानभावीनि स्वसमुत्थापकानि ज्ञानान्यपेक्ष्य तेषां जन्यता, श्रोतृसन्तानभावीनि तान्यपेक्ष्य हेतुता, सैव तेषामानुपूर्वी, नान्या । कारणकार्यभेदाच्च प्रतिपदं वर्णानां भिन्नस्वभावत्वात् सरो रस इत्यादौ प्रतीतिभेदो युज्यते, न तु नित्यानाम्; तेषां सर्वदा सर्वत्रैकरूपत्वात् । नाप्यानुपूर्वी तेभ्योऽर्थान्तरभूतेष्ट; अर्थान्तरत्वेऽपि सम्बन्धासिद्धेरित्यभिप्रायः ।

अवयवार्थस्तूच्यते—वर्ण उत्पद्यत इति सम्बध्यते । सरः रस इत्यादौ सकारादेः परोऽकारादिः, सकारविवक्षा सम्भूतविवक्षान्तरतस्ततः उत्पद्यते । यस्य सकारादेर्विवक्षा यद्विवक्षा, ततः सम्भूतं यद्विवक्षान्तरं तथोक्तम् । एतदुक्तं भवति—वक्तृसन्ताने पूर्वपूर्ववर्णसमुत्थापकविवक्षासम्भूतं यदुत्तरोत्तरं विवक्षान्तरम्,

---

1. नाङ्गत्वं—पा० । 2. ०रियत.—पा० ।

वर्ण उत्पद्यते तस्य श्रुतिस्तत्समनन्तरम् ॥ २६९९ ॥
पूर्ववर्णचिदुद्भूतसंविन्नातिद्रुतश्रुतिः ।
सोऽपेक्ष्य तत्स्मृतिं पश्चात् कुरुते स्मृतिमात्मनि ॥ २७०० ॥
तत्समुत्थापकग्राहिज्ञानानि प्रति जन्यता ।
हेतुता चाऽनुपूर्वीयं वर्णेषु पुरुषाश्रया ॥ २७०१ ॥
अतः प्रतिपदं भिन्ना वर्णा इति परिस्फुटम् ।
रसो सरो लता ताल इत्यादिक्रमभेदतः ॥ २७०२ ॥
ईदृशेन क्रमेणैते त्वर्थभेदोपपादकाः ।

स्फोटवादखण्डनम्

अत एव निरर्थेह स्फोटस्यापि प्रकल्पना ॥ २७०३ ॥
स ह्यर्थप्रतिपत्त्यर्थं शाब्दिकैः परिकल्पितः ।
वर्णा एव च तच्छक्ता इत्यनर्थाऽस्य कल्पना ॥ २७०४ ॥

---

तत उत्तरोत्तरो यो वर्ण उत्पद्यते स स्मृतिं कुरुत इति वक्ष्यमाणेन सम्बन्धः । एवं तावद् वक्तृसन्तानवर्तिवर्णसमुत्थापकविवक्षावशाद् वर्णानां च जन्यत्वं प्रतिपाद्य श्रोतृसन्तानवर्तिविज्ञानं प्रति कारणत्वं प्रतिपादयति—तस्येति । य इति यो निर्दिष्टः स सम्बध्यते । तस्य श्रुतिरुत्पद्यत इति सम्बन्धः । समनन्तरमिति अव्यवधानेन ।

एवं श्रोतृज्ञानहेतुत्वं प्रतिपाद्य साम्प्रतं स्मृतिहेतुत्वं प्रतिपादयति—पूर्वेति । पूर्ववर्णानां चित् = ज्ञानम्, तेन उद्भूता संवित् = अनुभवो यस्य स तथोक्तः । नातिद्रुतश्रुतिरिति । द्रुतश्रुते स्मृतिजननासमर्थत्वात् । स इति । उत्तरोत्तरो वर्णस्तु तत्स्मृतिम् = पूर्वपूर्वस्मृतिम्, अपेक्ष्य = तत्सहकारेणोत्पद्य, स्मृतिम् = स्वस्वविषयाम् । समुत्थापकानि च ग्राहीणि चेति द्वन्द्वः । तेषां वर्णानाम्, तानि वा समुत्थापकग्राहीणि = तत्संग्राहीणि इति, पश्चात् तत्पुरुषः कर्मधारयो वा । समुत्थापकान्यपेक्ष्य जन्यतेति । हेतुग्राहीण्यनुभवस्मृतिज्ञानरूपाण्यपेक्ष्य हेतुतेति ।

एवमानुपूर्वीमर्थान्तरभूतां निराकृत्य वैयाकरणाद्युपकल्पितं ध्वनिभ्योऽर्थान्तरभूतं वाचकं शब्दात्मानं स्फोटमधुना निराचिकीर्षुराह—अत एवे-त्यादि ॥ २६९८-२७०३ ॥

दृश्यस्यादृष्टितश्चास्य नास्तिताऽव्यवसीयते ।
अदृश्यत्वे तु नैवायं लिङ्गवज्ज्ञापको भवेत् ॥ २७०५ ॥

[G. 721] तत्र किमयं स्फोटात्मकः प्रत्यक्षेण सिद्धः ? उताहस्विदनुमानेन ? तत्रापि नित्यो वा कैश्चिद् वैभाषिकैः कल्पित इव ? अनित्यो वा ? तथैव कश्चिन्निरवयवी वा ? अवयवी वा स्याद् ?—इति परीक्षितव्यः । तत्र न तावत् प्रथमः पक्ष इति दर्शयति—दृश्यस्येत्यादि । न हि वर्णेभ्यो व्यतिरिक्तो निरवयवोऽपरः शब्दात्मा श्रोत्रज्ञानसि प्रतिभासमानः समालक्ष्यते; यत उपलब्धिलक्षणप्राप्तस्यानुपलब्धिस्वभाव, तस्मात् प्रत्युत तस्य नास्तिता सिद्ध्येत् । अथ द्वितीयः पक्षः ? तथापि भावधर्मो वा हेतुर्भवेद्, अभावधर्मो वा, उभयधर्मो वा—इति विकल्पाः । आद्ये पक्षे स्फोटाख्यधर्मिधर्मो वा हेतुर्भवेत्, अन्यधर्मिधर्मो वा । तत्र तस्यैव स्फोटाख्यस्य धर्मिणोऽसिद्धत्वात् तस्य धर्मस्याप्यसिद्धत्वान्न तद्धर्मस्तावद्धेतुः । अन्यधर्मोऽपि न हेतुः; अपक्षधर्मत्वात् । यथा [1]अनित्यत्वसाध्ये शब्दे चाक्षुषत्वम्[1] । अभावधर्मोऽपि न भवति; तस्य विपरीतसाधकत्वात् । उभयधर्मोऽपि न भवति; तस्य व्यभिचारित्वात् । स्वभावहेतोर्वा तस्य सिद्धिर्भवेत् ? कार्यहेतोर्वा ? न तावदाद्यः पक्षः, तस्यातीन्द्रियत्वात् तत्स्वभावासिद्धेः । सिद्धौ वा व्यर्थो हेतुपर्येषणे, यतस्तत्स्वभावस्य सिद्धत्वात्, तदर्थत्वाच्च प्रयासस्य । नापि द्वितीयः पक्षः; अतीन्द्रियेण सह कार्यकारणभावासिद्धेः ।

स्यादपि स्यात्—यथा श्रोत्रादिविज्ञानस्य कादाचित्कत्वेन कारणान्तरसापेक्षत्वसिद्धौ सामर्थ्याच्छ्रोत्रादेरिन्द्रियस्य सिद्धिर्भवति, तथाऽत्राप्यर्थप्रतीतिं धर्मिणीं कृत्वा, वर्णाविशेषेऽपि सर, रस —इत्याद्यर्थप्रतीतिभेदात् स्फोटाख्यस्य कारणान्तरं कल्पयिष्याम इति ? एतदप्यसम्यक्; वर्णाविशेषस्यासिद्धत्वात् । तथा हि प्रागनन्तरमेव प्रतिपादितम्—वर्णा एव प्रतिपदं भिन्नाः कार्यकारणभेदादर्थप्रतीतौ समर्था इत्यनर्था कल्पनेति । एवमनुमेयत्वे दोषा वाच्या इत्यभिप्रायः ।

अथापि स्यात्—नासावनुमेयः; किं तर्हि ? अत्यन्तादृश्य ? इत्याह—अदृश्यत्वे तु नैवायमिति । यथा लिङ्गमज्ञातं ज्ञापकं न भवति, तद्वदयमपि

1-1. यथा चाक्षुषत्वं चय( घट )स्यानित्यत्वादौ साध्ये—पा०, गा० ।

सत्तामात्रेण तज्ज्ञानं हेतुभावव्यवस्थितेः ।
तस्य ज्ञापकतेष्टा चेन्नेत्रवत् सर्वदा भवेत् ॥ २७०६ ॥
सङ्केतानवबोधेऽपि[1] वर्णानामश्रुतावपि ।
तद्व्याख्यर्थेषु विज्ञानं शक्तकारणसन्निधेः ॥ २७०७ ॥
तथा हि नित्यसत्त्वोऽयं न चापेक्षाऽस्य काचन ।
ध्वनिसंकेतवर्णेश्च तद्व्यक्तिर्नाप्यदर्शनात् ॥ २७०८ ॥
ज्ञानं हि व्यक्तिरित्याहुस्तज्ज्ञानं[2] न च[2] विद्यते ।
ततो निरर्थिकैवास्य व्यञ्जकस्यापि कल्पना ॥ २७०९ ॥
"नादेनाहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकाया बुद्धौ शब्दोऽवभासते" ॥ २७१० ॥
( वा० प० १. ८४ )
इत्येतदपि तेनात्र निर्निमित्तं प्रकल्पितम् ।

स्यात्, अज्ञातत्वात् ॥ २७०४—२७०५ ॥

[ G 722 ] अथ सत्तामात्रेण चक्षुरादीन्द्रियवदसावोऽप्यर्थप्रतीतिहेतुर्भवेत् ? एवं तर्हि तद्धावज्ञानं सर्वदा भवेत् । तथा सङ्केतग्रहणादिक्रममन्तरेण तद्वयाथि ज्ञानं स्यात् । एतदेव सङ्केतेत्यादिना प्रदर्शयति । तत्रोपपत्तिमाह—तथा हीति । अथापि स्यात्—सङ्केताभिव्यक्त एवासावर्थप्रतीतिहेतुरिष्ट, न सत्तामात्रेण, तेन न भवति यथोक्तदोषप्रसङ्ग ? इत्याह—ध्वनिसङ्केतवर्णैरित्यादि । अदर्शनादिति अनुपलब्धे । अदृश्यत्वेनाभिमतत्वाच । एतदेव ज्ञानं हीत्यादिना दर्शयति ॥ २७०६-२७०९ ॥

स्यादेतत्, 'भासमानो न लक्ष्यते' इत्येतदसिद्धम्, तथा हि—पूर्वपूर्ववर्णाहितसंस्कारायामावृत्तसंस्कारपरिपाकाया बुद्धौ शब्दोऽकल प्रतिभासत एव ? इत्याह—नादेनेत्यादि । आवृत्त = सञ्जात सर्वबुद्ध्याहित संस्कारपरिपाको यस्यां बुद्धौ सा तथोक्ता । निर्निमित्तमिति । वर्णा एव हि यथानुभव पश्चात् सङ्कलनाप्रत्ययेन स्मार्त्तेनावसीयन्त इत्यभिप्राय । तथा हि—नैवान्त्यवर्णप्रतिपत्ते-

1. स॰॰॰नव॰—पा॰ । 2-2 च न—जै॰ ।

तस्यामपि न शब्दोऽन्यो भासमानो हि लक्ष्यते ॥ २७११ ॥
जन्यतां व्यज्यतां वापि ध्वनिभिः क्रमभाविभिः ।
येऽपि स्फोटस्य मन्यन्ते क्रमस्तेषां विरुध्यते ॥ २७१२ ॥
न हि क्रमेण युज्यते जातिव्यक्ती निरंशके ।
एकरूपाबहिर्भावात् ते स्यातां सर्वथैव हि ॥ २७१३ ॥
सांशत्वेऽपि यथा वर्णाः क्रमेण प्रतिपादकाः ।
स्फोटांशा अपि किं नैवं किमदृष्टाः प्रकल्पिताः ॥ २७१४ ॥

---

रूपर्षमन्यमकलं शब्दात्मानमुपलक्षयामः; नापि स्वयमयं वक्ता विभावयति । केवलमेवं यदि स्यात् साधु मे स्यादिति कल्याणकामतामूढमतिरन्त्यायां[1] बुद्धौ समाप्तकालः शब्दो भातीति स्वप्नायते ॥ २७१०-२७११ ॥

एवं सावयवनित्यपक्षे दूषणमुक्तम् । इदानीं नित्यानित्यपक्षयोरपि साधारणं दूषणमनवयवपक्षे प्राह—जन्यतामित्यादि । [G. 723] वैभाषिका हि केचित् पदकायाभिधानेन वाक्यस्फोटमनित्यस्वाभाव्यं प्रतिपन्नाः । निरंशक इति निरवयवे वस्तुनि । एकरूपाबहिर्भावादिति । एकस्माद् रूपाज्जाताद्, व्यक्ताद्वाऽजाताव्यक्ताभिमतस्यापि रूपस्याबहिर्भावात् । ते = जातिव्यक्ती सर्वस्यैव स्याताम् । ततश्च शेषवर्णादिप्रयोगवैयर्थ्यं स्यात् ॥ २७१२-२७१३ ॥

सावयवपक्षेऽपि दूषणमाह—सांशत्वेऽपीति । ते हि स्फोटांशाः प्रत्येकमनर्थका वा स्युः ? सार्थका वा ? प्रथमे पक्षे क्रमभावित्वाद् वर्णात्मवदप्रतिपादकत्वप्रसङ्गः । कल्पितं च वाचकत्वं स्यात्; असादृप्ये ताद्रूप्यात् । तथा हि—अर्थवानेकात्मा वाक्यमुच्यते, नावयवाः स्वयमनर्थकाः, तेषु स आत्मा कल्पनारोपितः स्यात्, माणवकादिषु सिंहत्वादिवत् । सति च कल्पिते वाचकत्वे वरं वर्णभागा एव सन्तु वाचकाः, किमदृष्टाः स्फोटांशाः कल्प्यन्त इति । अथ सार्थकत्वं[2] तदाऽनेककल्पना निरर्थिका । तथा हि—परिसमाप्तार्थं शब्दरूपं वाक्यमुच्यते, प्रत्येकं चेदर्थवन्तोऽवयवाः स्युः, तदा तावन्त्येव तानि वाक्यानि [3]जातानीति

---

१. ०रन्त्यायां—पा० । २. अर्थसार्थकत्व—जै० ।
३. शतानीति—पा० ।

जातौ व्यक्तौ कृतायां चेदेकेन ध्वनिना सकृत् ।
नितरां व्यक्तिसिद्धयर्थं वर्णान्यान् प्रयुञ्जते ॥ २७१५ ॥
यतो दुरवधाराऽस्य प्रकृतिः सा तथा कृता ।
समानशक्तिकैर्वर्णैर्भूयोऽपि व्यज्यते परैः ॥ २७१६ ॥
तस्यैवान्यस्य वैकस्य किं नावृत्तौ पुनः पुनः ।
व्यक्तिराधत्तंते तस्य मन्येवमविशेषतः ॥ २७१७ ॥

---

नैकोऽनेकावयवात्मा[1] सिद्धयति । एकावयवप्रतिपत्तौ च सत्यां वाक्यार्थप्रतिपत्तिप्रसङ्ग । यथोक्तम्—

"प्रत्येकं सार्थकत्वेऽपि मिथ्याऽनेकत्वकल्पना ।
एकावयवगत्या च वाक्यार्थप्रतिपद् भवेत् ॥" (प्र० वा० ३ २४९–५०)

इति ॥ २७१४ ॥

यदुक्तम्—'नहि क्रमेण युज्येते जातिव्यक्ती निरर्थके' इति (तत्त्व० २७१२) इति, अत्र परस्य परिहारमाशङ्कते—जातावित्यादि । यद्यप्येकेन ध्वनिना जातिः, व्यक्तिर्वा सर्वात्मना स्फोटस्य कृता, तथापि नोत्तरध्वनिप्रयोगवैयर्थ्यम्, तस्य स्पष्टव्यक्त्यर्थत्वात् । तथा हि श्लोक एव पुनः पुनरावर्त्यमानो [ G 724 ] व्यक्तो भवति, न च सकृदुच्चारणात् । ननु पुनः पुनरावृत्त्या तस्य विशेषान्तरमाधीयते, अथ च न पुनरावृत्तेर्वैयर्थ्यम्, एवमिहापि नोत्तरध्वनिवैयर्थ्यं भविष्यति ? एतदेव दर्शयति—यत इत्यादि । दुरवधारेति । अवधारयितुमशक्या ॥ २७१५-१६॥

तस्यैवेत्यादिना प्रतिविधत्ते । नन्वित्यामन्त्रणे । तस्यैव = प्रथमोच्चरितस्य वर्णस्य, अन्यस्य वा = तदन्तर्गतस्य, कस्यचिदेकस्य[2] पुनः पुनरावृत्त्या किं नाभिव्यक्तिः क्रियते, न हि तेनापादिता सती व्यक्तिर्नापादिता भवेत् । तथा हि—तद् व्यक्त्यर्थमात्रफलान्युत्तरोत्तरवर्णोच्चारणानि, समानशक्तिकत्वात् सर्वेषाम् । तच्चावर्तनमेकेनैव पुनः पुनरावर्त्यमानेन कर्तुं शक्यत इति शेषवर्णोच्चारणवैयर्थ्यम् । नाप्युत्तरोत्तरवर्णानां भिन्नशक्तिकत्वमभ्युपगन्तव्यम्, निरर्थके

---

1 नैकानेकावयवात्मा—पा० ।
2 जै० पुस्तके द्विरुक्तोऽयं पाठः ।

विषयेन्द्रियसंस्काररूपा व्यक्तिश्च वर्णवत् ।
अस्यापि प्रतिषेद्धव्या तदाभासेऽपि चेतसि ॥ २७१८ ॥
तस्मात् प्रत्यक्षतः पूर्वं क्रमज्ञानेषु यत् परम्[1] ।
समस्तवर्णविज्ञानं तदर्थज्ञानकारणम् ॥ २७१९ ॥
अन्त्यवर्णे हि विज्ञाते सर्वसंस्कारकारितम् ।
स्मरणं यौगपद्येन सर्ववर्णेषु जायते ॥ २७२० ॥

---

विशेषान्तरस्याधातुमशक्यत्वाद् विशेषान्तरकरणासम्भवे[2] भिन्नशक्तिकल्पनावैयर्थ्यप्रसङ्गात् ॥ २७१७ ॥

एतच्च सतामभिव्यक्तौ[3] सर्वं सम्भवेत, सैव तु न सम्भवतीति दर्शयन्नाह—विषयेन्द्रियेत्यादि । वर्णवदिति । यथा वर्णेषु विज्ञानजननयोग्यायोग्यस्वभावविकल्पेन विषयेन्द्रियसंस्काररूपाऽभिव्यक्तिर्दूषिता, तथेहापि दूषणीयेत्यर्थः । तदाभासेऽपीति स्फोटाभासेऽपि । अयं चाभ्युपगमवादः । एतदुक्तं भवति—यदि हि वर्णव्यतिरेकेणापरः स्फोटाख्यः शब्दात्माऽवभासेत, ततोऽस्याभिव्यक्तिः सम्भवेत्; व्यक्तेरुपलब्धिरूपत्वात्, यावता नावभासत इति पूर्वमावेदितम् । अवभासतां नाम, तथापि प्रकृत्योपलभ्यानुपलभ्यस्वभावस्योभयथाप्यभिव्यक्तिर्न युक्तेति ॥ २७१८ ॥

तस्मादित्यादिनोपसंहृत्य विनापि स्फोटेनार्थप्रतिपत्तेरुत्पत्तिक्रमं दर्शयति । [ G. 725 ] ननु च क्रमवर्तिनो हि वर्णाः क्रमेणैव चानुभूताः, यथा चाऽनुभवं[4] च स्मरणम्, तत् कथं समस्तवर्णनिर्भासि स्मार्तज्ञानमेकं युज्यते स्फोटमन्तरेण; न चाक्रमे ज्ञाने[5] क्रमिणां वर्णानां प्रतिभासो युक्तः ? इत्याशङ्क्याह—अन्त्यवर्णे हीत्यादि । अनेनैतदाह[6]—प्रथममनुभवः, ततस्तत्समनन्तरभावीनि स्मरणानि यथानुभवं क्रमेणैव जायन्ते, ततः स्मरणेभ्य उत्तरकालं युगपत् समस्तवर्णाध्यवसायि समुच्चयज्ञानमपरं स्मार्तमुत्पद्यते; यथा परिदृष्टार्थाध्यवसायित्वात् ॥२७१९-२०॥

---

१. यत्परम्—पा०, गा० । २. ०न च—गा० ।
३. सत्यामभि०—गा० । ४. यथानुभव—पा०, गा० ।
५. ज्ञाने—पा०, गा० । ६. अनेनैव तदाह—पा०, न च तदाह—गा० ।

सर्वेषु चैतदर्थेषु मानसं सर्ववादिनाम् ।
इष्टं समुच्चयज्ञानं क्रमजातेषु सत्स्वपि ॥ २७२१ ॥
न चेत् तदभ्युपेयेत भ्रमदृष्टेषु नैव हि ।
शतादिरूपं जायेत तत्समुच्चयदर्शनम् ॥ २७२२ ॥
तेन श्रोत्रमनोभ्यां स्यात् क्रमाद् वर्णेषु यद्यपि ।
पूर्वज्ञानं परस्तात् तु युगपत् स्मरणं भवेत् ॥ २७२३ ॥
तदारूढास्ततो वर्णा न दूरार्थावबोधनात् ।
शब्दार्थमतिस्तैर्न[1] लौकिकैरभिधीयते ॥ २७२४ ॥
आकारवति विज्ञाने सर्वमेतच्च युज्यते ।
अन्यथा हि विनष्टास्ते भासेरन् स्मरणे कथम् ॥ २७२५ ॥

एतच्च सर्ववादिनां प्रसिद्धम्, न मयैव कल्पितमिति दर्शयति—सर्वेषु चेति । एतदिति समुच्चयज्ञानम् ॥ २७२१ ॥

एतच्च युक्त्युपेतत्वादवश्यमभ्युपेयमिति दर्शयति—न चेदित्यादि । यदि हि सर्वमेव स्मरणं यथानुभवं क्रमेणैव जायते, तदा क्रमानुभूतेषु शतादिषु युगपच्छतादिविकल्पो न स्यात् । शतकोट्यादिविकल्पना चोत्पत्तिकाले[2] भेदो न भवेत् ॥ २७२२ ॥

तेनेत्युपसंहरति । यद्येवम्, समुच्चयज्ञानमेवार्थप्रतीतिहेतुः स्यात्, न ते वर्णाः, तेषां चिरनिरुद्धत्वात्, न चैतद्युक्तम्, यस्माच्छब्दादनन्तरमर्थप्रतीतिर्भवन्तीत्याकुमारमेतत् प्रतीतम् ? इत्याशङ्क्याह—तदारूढा इत्यादि । [G 720] तस्मिन् समुच्चयज्ञाने आरूढास्तदारूढाः । लौकिकैरिति स्वार्थतद्धितविधानम् ॥ २७२३–२७२४ ॥

नन्वेवमपि तेषां चिरनिरुद्धत्वादत्यन्तासत्त्वमेवेति कथं तदारोहणं भवेत् ? इत्याशङ्क्याह—आकारवतीत्यादि । निराकारे कस्मान्न युज्यते ? इत्याह—अन्यथा हीत्यादि । तथा यदेतत्—"अन्त्यवर्णे हि विज्ञाते"-(श्लो० वा०,स्फो० १२५)

1. ०दय मति०—पा०, गा० ।
2. चोत्पत्तिकाले—चे० ।

अथ वर्णास्तिरोभूतव्यक्तयो विदिताः पुरा ।
स्मर्यन्तेऽवस्थिता एव ? न; स्पष्टाभप्रसङ्गतः ॥ २७२६ ॥
अपास्ता च स्थितिः पूर्वं तत्स्थितौ स्मरणं भवेत् ।
वर्णानुभवविज्ञानकाल एवैकहेतुतः ॥ २७२७ ॥
गौरित्येकमतिस्त्वं तु नैवास्माभिर्निवार्यते ।
तद्ग्राह्यकार्यताभ्यां च शब्दे स्यादेकतामतिः ॥ २७२८ ॥

---

इत्यादिना कुमारिलेन स्फोटवादिनं प्रति समुच्चयज्ञानं वर्णितम्, तदस्मन्मत एव युज्यते; न तु भवतां मीमांसकानां निराकारवादिनां मत इत्युक्तं भवति ॥ २७२५ ॥

ननु च मीमांसकानामपि युज्यत एव, न हि तेषां मतेन वर्णा विनष्टाः, येन न भासेरन्, किं तर्हि ? तिरोभूताभिव्यक्तय सन्त्येव ! इत्येतदथेत्यादिनाऽऽशङ्कय नेत्यादिना परिहरति । यदि हि त एव वर्णाः पूर्वमनुभूताः सन्तः पश्चात् तिरोभूतव्यक्तयः समुच्चयज्ञानेन गृह्येरन्, तदाऽऽत्मानुभवज्ञानवत् तत्समुच्चयज्ञानं स्पष्टाभं प्राप्नोति; आकारस्य बाह्यगतत्वात् तस्य चैकरूपत्वात् । किञ्च—यदि तिरोभूतव्यक्तयः, कथं भासेरन्; व्यक्तेरुपलब्धिस्वभावत्वात् ! ॥ २७२६ ॥

अपि च—यद्यतीतस्यावस्थितिः सम्भवेत्, तदेतत् स्यात्; यावताऽतीतस्याव-स्थित्यभावादेव न युक्तं तस्य प्रतिभासनमिति दर्शयति—अपास्ता चेत्यादि । पूर्व-मिति त्रैकाल्यपरीक्षायाम् । अत्रैव बाधकं प्रमाणमाह—तत्स्थितावित्यादि । वर्णानुभवज्ञानकाले स्मरणोत्पत्तिप्रसङ्गो बाधकं प्रमाणम् । एकहेतुत इति अभिन्नकारणत्वात् ॥ २७२७ ॥

अत्र शाब्दिकाश्चोदयन्ति—यद्येको नास्ति स्फोटाख्यः शब्दात्मा, तत् कथं गौरित्येकाकारा गोशब्दे बुद्धिर्भवतीति ? अत आह—गौरित्यादि । [ G 727 ] एका मतिरस्येत्येकमति-, तद्भावस्तत्त्वम् । तद्ग्राह्यैकार्थताभ्यां चेति । तथा = एकया बुद्ध्या ग्राह्यस्तद्ग्राह्यः, एकोऽर्थः प्रयोजनं यस्य स तथोक्तः, तद्ग्राह्य-श्चैकार्थश्चेति द्वन्द्वः, तयोर्भावौ तद्ग्राह्यैकार्थते, ताभ्यामुच्यते[1] । एतदुक्तं भवति—

---

[1] °ते ।भ्याम्—पा°, गा° ।

शैघ्र्यादल्पान्तरत्वाच्च गोशब्दे सा भवेदपि ।
देवदत्तादिशब्देषु स्पष्टो भेदः प्रतीयते ॥ २७२९ ॥
वर्णोत्था चार्थधीरेषा तज्ज्ञानानन्तरोद्भवात् ।
येदृशी सा तदुत्था हि धूमादेरिव वह्निधीः ॥ २७३० ॥
न वर्णभिन्नशब्दाभज्ञानानन्तरभाविनी ।
अर्थधीर्विद्यते तेन नान्यः शब्दोऽस्ति वाचकः ॥ २७३१ ॥
कार्यताव्यवहाराय सर्वत्रैव विनिश्चितौ ।
अन्वयव्यतिरेकौ हि व्याप्तिस्तेनेह निश्चिता ॥ २७३२ ॥

---

एकबुद्धिग्राह्यत्वादेकत्वात्वादिमदर्थद्योतकत्वाच्चैको गोशब्द उच्यते इति॥२७२८॥

एकमतित्वं च न सर्वत्र सिद्धमिति दर्शयति—शैघ्र्यादित्यादि । शैघ्र्यात् = द्रुतोच्चारणात् । अल्पान्तरत्वम्[२] = स्वल्पविच्छेदत्वम् । सेति एका मतिः । देवदत्तादिपदे तु प्रतिवर्णं शब्दध्वनयः स्फुटतरं विच्छेदेन प्रतीयन्त इति धर्म्येकदेशासिद्धमेकमतित्वम् ॥ २७२९ ॥

वर्णोत्थेत्यादिना प्रमाणयति । प्रयोगः—या बुद्धिर्यद्विज्ञानानन्तरमुत्पद्यते सा तत्प्रकृतिका परम्परया, यथा धूमादिविज्ञानाद् वह्न्यादिविज्ञप्तिः । वर्णविज्ञानानन्तरभाविनी चार्थधीरिति स्वभावहेतुः । कार्यताव्यवहारश्चात्र साध्यते, तेन साध्यसाधनयोर्भेदः ॥ २७३० ॥

असिद्धतामस्य परिहरन्नाह—न वर्णेत्यादि । वर्णेभ्यो भिन्नो यः शब्दात्मा तदाभं यज्ज्ञानं तदनन्तरभाविनी न विद्यते[४], किं तर्हि ? वर्णविज्ञानानन्तरभाविनी । अतो नासिद्धो हेतुः । अनेन चोपलब्धिलक्षणप्राप्तस्यानुपलम्भादभावव्यवहारोऽपि दर्शितः ॥ २७३१ ॥

नाप्यनैकान्तिक इति दर्शयन्नाह—कार्यतेत्यादि । [G 728] कार्यताव्यवहारव्याप्तम् = कारणत्वं । हि यतः अन्वयव्यतिरेकाविति । साम

---

१ यदृशी—गै० पुस्तके पाठः । २ स्वल्पान्तरत्वम्—जै० ।
३. शब्दध्वनयः—या०, ध्वनयः—गा० । ४ विद्यते—पै० ।

शब्दानित्यत्वसमर्थनम्

अनित्येष्वेव वर्णेषु वाचकत्वे प्रसाधिते ।
प्रत्यभिज्ञानुमाने च निरस्ते नित्यसाधने ॥ २७३३ ॥
स्ववाक्यादिविरोधानामज्ञानाच्चोदना कृता ।
नित्यपक्षे तु सर्वे ते भवन्ति भवतां यतः ॥ २७३४ ॥
नित्या सती न वाग् युक्ता द्योतिकेत्युपपादितम् ।
आनुपूर्व्याद्ययोगेन नित्यं चानुपलम्भनात् ॥ २७३५ ॥
धर्मिभेदविकल्पेन याऽऽश्रयासिद्धिरुच्यते ।

---

नाधिकरण्येन सम्बन्धः । तदन्वयव्यतिरेकानुविधायित्वमात्रमेव तत्कार्यताव्यवहृतेरङ्गम्, नान्यत् । अतः कार्यताव्यवहारस्य निमित्तान्तरासम्भवो बाधकं प्रमाणमिति सिद्धा व्याप्तिः ॥ २७३२ ॥

स्यादेतत्—मा भूत् स्फोटस्य वाचकत्वम्, वर्णा एव नित्याः सन्तो वाचका भविष्यन्ति, ते च नित्याः प्रत्यक्षादिप्रमाणतः सिद्धाः ! इत्याह—अनित्येष्वित्यादि । प्रत्यभिज्ञा चानुमानं चेति प्रत्यभिज्ञानुमाने । क्वचित् प्रत्यभिज्ञानानुमानमिति पाठः, तत्र समाहारद्वन्द्वोऽपि विधेय । सहितशब्दलोपाद् विशेषणसमासो वा ॥ २७३३ ॥

"स्ववाक्यादिविरोधश्च" ( तत्त्व० २३०३) इत्यादावाह—स्ववाक्यादिविरोधानामित्यादि । सर्वे त इति स्ववाक्यादिविरोधाः । आनुपूर्व्यादीति । आदिशब्देन क्रमेण श्रुतिस्मृती गृह्येते । तथा हि—नित्यत्वान्न कालकृतानुपूर्वी । नापि देशकृता; व्यापित्वात् । नाप्यभिव्यक्तिकृता; अभिव्यक्तेरपाकृतत्वात । तथा ज्ञानजननेऽपि न नित्यानामुपयोगोऽस्तीति बहुधा निवेदितम् ॥ २७३४-३५॥

यदुक्तम्—"वक्तव्यं कतरः[1] शब्दः" ( तत्त्व० २३०९) इत्यादि । तत्राह—धर्मिभेदविकल्पेनेत्यादि । [ G 729 ] य एव वादिप्रतिवादिनोः प्रतिभासवशाद् धर्मी सिद्ध, स एव विशेषविवादाश्रय', न तु स्वेच्छोपकल्पित; तत्र विवादाभावात् । न हि स्वेच्छोपरचितधर्मिणि धर्मविशेषं कल्पयन् कश्चिन्निवार्यते इति ।

---

१. चैष कः—गा० ।

साऽनुमालक्षणाज्ञानाद्[1] धर्मित्वं भासिनो यतः ॥ २७३६ ॥
अविचारप्रसिद्धोऽर्थो योऽयं ज्ञानेऽवभासते ।
शनकादेरपि प्रोक्ता तावन्मात्रस्य धर्मिता ॥ २७३७ ॥
तत्रैव हि विवादोऽयं सम्प्रवृत्तः प्रवादिनाम् ।
इच्छारचितभेदे तु न विवादोऽस्ति कस्यचित् ॥ २७३८ ॥
अतोऽविशेषनिर्दिष्टे विशेषेण विकल्पनम् ।
सर्वस्यैवानुमानस्य प्रवृत्तिं प्रतिबाधते ॥ २७३९ ॥
चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितं ।
कारणैर्जन्यमानत्वादित्याद्यपि विकल्प्यते ॥ २७४० ॥
नित्यनित्यार्थसम्बद्धचोदनाजनिता मतिः ।
पक्षश्चेदाश्रयासिद्धिः परं प्रत्यनुपज्यते ॥ २७४१ ॥
तादवस्थ्यं च नित्यत्वं तदन्यत्वमनित्यता ।
तादवस्थ्यनिवृत्तौ[2] हि किमवस्थितमिष्यते ॥ २७४२ ॥

---

भासिन इति भासमानस्य । एतदेव दर्शयति—अविचारप्रसिद्धोऽर्थ इत्यादि । सुगमम् ॥ २७३६-२७३८ ॥

अविशेषेण धर्मिणि निर्दिष्टे यद्विशेषेण कल्पनं[3] तदेतज्जात्युत्तरमिति दर्शयन्नाह— अत इत्यादि । नित्या चासौ स्वयम्, [4]नित्येन [5]चार्थेनाकृतिलक्षणेन सम्बद्धेति तथोक्ता । तया जनिता या बुद्धिः, सा यदि पक्षः, तदा परं प्रति असिद्धो हेतुः ॥ २७३९-२७४१ ॥

यदुक्तम्—"अनित्यस्य च[5] नाशित्वम्" (तत्त्व० २२१४) इत्यादि, तत्राह— तादवस्थ्यमित्यादि । किमवस्थितमिष्यत इति । अवस्थाया अवस्थातुर-व्यतिरेकात्, तन्निवृत्तौ सामर्थ्यात् तस्यापि निवृत्तिः । अन्यथा यदेकयोगक्षेमं न भवति, तत् कथं तत्स्वभावं युक्तमिति भावः ॥ २७४२ ॥

१ सोऽनुमा०—पा०, गा० । २ तादवस्थ्यानिवृत्तौ—गा० पा० ।
३ विकल्पन—गा० ।
४-४. नित्यमर्थेन—पा०, गा० । ५. पा० पुस्तके नास्ति ।

केवलैन्द्रियकत्वे च हेतावत्र प्रकल्पिते।
जात्या बाधितया पूर्वं व्यभिचारो न गम्यते ॥ २७४३ ॥
स्वनिर्भासीन्द्रियज्ञानहेतुरैन्द्रियको भवेत्।
न च नित्येऽस्ति हेतुत्वमिति तद्धि प्रसाधितम् ॥ २७४४ ॥
सर्वेषां च प्रसिद्धेयमीदृगर्थस्य हेतुता।
धूमादावपि सर्वत्र विकल्पोऽयं समोऽन्यथा ॥ २७४५ ॥
प्रयत्नानन्तरज्ञानकार्यारम्भकता न च।
प्रतिसङ्ख्यानिरोधादेः न सिद्धा सांवृतस्य नः ॥ २७४६ ॥

---

यदुक्तम्—'केवलैन्द्रियकत्वे च' (तत्त्व० २३१६) इत्यादि, तत्राह—केवलैन्द्रियकत्वे चेत्यादि। पूर्वमिति सामान्यपरीक्षायाम् ॥ २७४३ ॥

यदि नाम जात्या व्यभिचारो नास्ति, तथापि सन्दिग्धव्यतिरेकोऽप्यनैकान्तिक एवेत्याशङ्क्य[1] हेतोरैन्द्रियकत्वस्य प्रतिबन्धमादर्शयन्नाह—स्वनिर्भासीत्यादि। [G 730] स्वनिर्भासिन इन्द्रियज्ञानस्य हेतुरर्थ ऐन्द्रियक उच्यते, नित्यस्य च क्रमयौगपद्याभ्यां नार्थक्रिया युक्तेति सिद्ध प्रतिबन्ध ॥ २७४४ ॥

'कार्या चैन्द्रियकत्वादौ'[2] (तत्त्व० २३१९) इत्यादावाह—सर्वेषामित्यादि। ईदृक् चासावर्थश्चेति तथोक्त। ईदृगिति अविचाररमणीय। अन्यथा धूमादावपि विकल्पः शक्यते कर्तुम्—किमेको[3] धूमो लिङ्गत्वेनोपात्त, आहोस्वित् विज्ञानप्रकृतिकालादिपरिणाम, किं वाऽवयवी परमाणुभिरारब्ध; अनारब्धो वा[4]—[5]इत्यादिविकल्पेऽन्यतरासिद्धतादिदोष. स्यात् ॥ २७४५ ॥

'प्रयत्नानन्तरज्ञानं कृतकानित्यसाधनम्' (तत्त्व० २३२१) इत्यत्राह—प्रयत्नेत्यादि। प्रयत्नानन्तरज्ञानभवं कार्यं तस्यारम्भकता प्रतिसङ्ख्यादिनिरोधादेर्न सिद्धेति सम्बन्ध। यदि हि सौत्रान्तिकनयेन प्रतिसङ्ख्यानिरोधादिना व्यभिचार उद्भाव्यते, तदा न सिद्धो व्यभिचार, तेषां मतेन प्रतिसङ्ख्यानिरोधादेः

---

1. ॰शङ्क्यते—चै०। 2. चैन्द्रियकत्वेऽपि—चै०।
3. किमैन्द्रियको—पा०, गा०।
4–5. वेत्यादि॰—गा०। ॰विकल्पो॰—पा०।

न च नाशात्मकाविष्टौ निरोधौ साश्रवैर्यतः ।
"प्रतिसङ्ख्यानिरोधो यो विसयोग पृथक् ॥ २७४७ ॥
उत्पादात्यन्तविघ्नोऽन्यो निरोधोऽप्रतिसङ्ख्यया" ।
(अभि० को० १६)
तस्मादज्ञानसिद्धान्ता[1] ब्रुवन्तेऽलोकमानिनः ॥ २७४८ ॥
नास्वभावात् स्वनाशौ च प्रयत्नानन्तरीयकौ ।

---

संवृतिसत्त्वात् । न च साङ्गत कस्यचित् कार्यस्यारम्भकत्वमुक्तम्, तल्लक्षणहानिप्रसङ्गात् । तथा हि—यदर्थक्रियाकारि तदेव परमार्थ, तदन्यत्तु संवृतिसत्—इति परमार्थसंवृतिसतोर्लक्षणम् ॥ २७४६ ॥

अथ वैभाषिकमतेन व्यभिचारः, तत्रापि यादृशौ भवता नाशाद्यात्मकौ वर्णितौ प्रतिसङ्ख्यानिरोधादी, तादृशौ वैभाषिकैर्नेष्टौ इत्यादर्शयति—न चेत्यादि । निरोधाविति । प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधौ । कीदृशौ नामेष्टौ ? इत्याह—साश्रवैर्यत इति । सक्लेशैर्वस्तुभिर्यो वियोगः स प्रतिसङ्ख्यया प्रज्ञया प्राप्यत इति कृत्वा [ C 731 ] प्रतिसङ्ख्यानिरोध उच्यते, स च प्रतिसंयोगिद्रव्यं भिन्नः, अत एवाह—पृथक् पृथगिति । यावन्ति हि संयोगिद्रव्याणि तावन्ति विसंयोगद्रव्याणीति सिद्धान्तात् । अप्रतिसङ्ख्यानिरोधस्तु—अनागतानां धर्माणामुत्पादस्यात्यन्तविघ्नभूतो धर्मो विसंयोगादन्यो यः स उच्यते । स च न प्रतिसङ्ख्यया लभ्यते, किं तर्हि ? प्रत्ययवैकल्यात् । अतोऽप्रतिसङ्ख्यानिरोध उच्यते । यथोक्तम्—

"प्रतिसङ्ख्यानिरोधो यो विसंयोग पृथक् पृथक् ।
उत्पादात्यन्तविघ्नोऽन्यो निरोधोऽप्रतिसङ्ख्यया ॥" (अभि० को० १६)

इति ॥ २७४७-२७४८ ॥

भवेतां नाम स्वभावौ, तथापि न व्यभिचार इत्यादर्शयन्नाह—नास्वभावादित्यादि । प्रयत्नानन्तरीयकाविति । नेति सम्बन्धः । कुतः ? अस्वभावात् । तथा हि—वस्तुसत्ताप्रतिषेधमात्रं नाशः, आकाशं च स्पृष्टव्या

1 ०दज्ञात०—पा०, गा० ।

कपालालोकराश्यादि तथाज्ञाननिबन्धनम् ॥ २७४९ ॥
एकस्यार्थस्वभावस्य परिरक्षिताद् द्विरूपता ।
अंशस्तस्मान्न[1] जात्याख्यो नित्योऽत्र घटते घटे ॥ २७५० ॥
तादवस्थ्यप्रतिक्षेपमात्रं चानित्यतेप्सिता ।
साध्यत्वेन प्रदीपादिस्तत्रोदाहरणं स्फुटम् ॥ २७५१ ॥
ज्वालादेरपि नाशित्वं न त्वसिद्धं प्रतिक्षणम् ।
लघवोऽवयवास्तत्र यान्ति देशान्तरं लघु ॥ २७५२ ॥
प्रभूतं वर्तिदेशे हि तेजस्तिष्ठति पिण्डितम् ।
तत्र यावद् व्रजत्यूर्ध्वं[2] तावज्ज्वालेति गम्यते ॥ २७५३ ॥
ततोऽपि यदपक्रम्य याति तद् स्यात् प्रभात्मकम् ।
ततः परं तु यद् याति तद् सौक्ष्म्यान्नावधार्यते ॥२७५४ ॥

---

भावमात्रम्, ततश्चैतौ स्वनाशौ द्वावपि निःस्वभावौ, तद् कथमनयो. प्रयत्नानन्तरीयकता भवेत्; स्वभावस्यैवार्थक्रियाकारित्वात् । किमिदानीं तर्हि विनाशादिविज्ञाननिबन्धनम् ? इत्याह—कपालेत्यादि । आलोकराशिः = आलोकसङ्घातः । आदिशब्देन तमोराशिग्रहणम् ॥ २७४९ ॥

यदुक्तम्—"अविशेषेऽपि नानित्यं न नित्यं वस्तु तन्मम" ( तत्त्व० २११२ ) इत्यादि, तत्राह—एकस्येत्यादि ॥ २७५० ॥

"अनित्यता विरुध्यैवम्" ( तत्त्व० २११४ ) इत्यादावाह—तादवस्थ्येत्यादि । तादवस्थ्यप्रतिषेधमात्रमेवानित्यता साध्यत्वेनेष्टा, तत्रापि प्रदीप उदाहरणं साध्यान्वितमस्त्येवेति कुतः साध्यहीनता दृष्टान्तस्य ? ॥ २७५१ ॥

ज्वालादेरित्यादिना परमतेन प्रदीपादेरपि दृष्टान्तस्य साध्यहीनतामाशङ्कते । [ G 732 ] तत्र हि ज्वालादेरवयवाः शीघ्रं शीघ्रं देशान्तरं व्रजन्ति, न तु प्रतिक्षणविशरारवः ॥ २७५२–२७५४ ॥

---

१. अंशस्तस्मात्—बौ० पुस्तके पाठः ।
२. व्रजत्यूर्ध्वं—पा० ।
३. ०विशरणाः—गा० ।

उत्तरावयवै रुद्धे मार्गे पूर्वे न यान्ति च ।
यथोत्तरे विमुञ्चन्ति पूर्वे यान्ति तथा तथा ॥ २७५५ ॥

सङ्क्रान्तावपि नैवैषां तृणादौ वृत्तिसम्भवः ।
तदेतत् कल्पनामात्रं प्रमाणानभिधानतः ॥ २७५६ ॥

किञ्चाव्याहतशक्तीनां तृणतूलादिसंगतौ ।
दाहवृत्तिप्रसङ्गोऽयं पूर्ववन्न निवर्तते ॥ २७५७ ॥

अन्यथा नित्यरूपा सा तेषु स्यात् कीदृशी तव ।
शक्ताशक्तस्वभावस्य यदा भेदो व्यवस्थितः ॥ २७५८ ॥

वाक्यनित्यतानिरसनम्

सम्बन्धस्य च नित्यस्य प्रतिषिद्धे पुरा ततः ।
सम्बन्धाकरणन्यायान्न युक्ता वाक्यनित्यता ॥ २७५९ ॥

---

अथ युगपत् कस्मात् सर्वे न विसर्पन्ति ? इत्याह—उत्तरावयवै-रित्यादि ॥ २७५५ ॥

ननु यदि प्रसर्पणधर्माणस्ते तत्समीपवर्त्ति तृणतूलादि किं न दहन्ति ? इत्याह—सङ्क्रान्तावपीत्यादि । संहतावस्थायामेव दहनवृत्तयो भवन्ति, न तु विप्रकीर्णावस्थायामिति भावः । तदेतदित्यादिना प्रतिविधत्ते । सत्यामपि चास्यां कल्पनायां न साध्यविकलता दृष्टान्तस्य । तथा हि—तादवस्थ्यप्रतिषेधमात्र-मनित्यतासाध्यत्वेनेष्टमित्युक्तम् । तच्च तादवस्थ्यं प्रदीपादौ नास्त्येवेति कुतः साध्यविकलता ? ॥ २७५६ ॥

तथाप्यभ्युपगम्य दोषमाह—किञ्चेत्यादि । अव्याहतशक्तीनामिति ज्वालावयवानाम् । पूर्ववदिति संहतावस्थाविशेषात् ॥ २७५७ ॥

अथ विशेषोऽभ्युपगम्यते, तदा नित्यत्वाभिमतक्षतिर्दुर्निवार इति दर्शयति—अन्यथेत्यादि । सुबोधम् ॥ २७५८ ॥

[G 733] यदुक्तम्—"सम्बन्धाकरणन्यायाद् वक्तव्या वाक्यनित्यता" इति (तत्त्व० २३३८), तत्राह—सम्बन्धस्य चेत्यादि ॥ २७५९ ॥

भवन्मतेन वाक्यमेव न सम्भवति यस्य त्वया नित्यत्वं प्रसाध्यते ?—

कतमस्य च वाक्यस्य नित्यत्वमुपगम्यते ।
वर्णमात्रात्मनो वर्णक्रमस्याथ विभेदिनः ॥ २७६० ॥
वर्णानां क्रमशून्यानां वाचकत्वं न विद्यते ।
नातस्ते तादृशा वाक्यं क्रमोऽप्येषां न विद्यते ॥ २७६१ ॥
व्याप्तेर्नित्यतया चैषां देशकालक्रमो न हि ।
लिपिवत् फलपुष्पादिभेदवच्चोपपद्यते ॥ २७६२ ॥
स्वाभाविके क्रमे चैषां सर इत्येव सम्भवेत् ।
न[1] पुना[1] रस इत्यादिः स्थितक्रमविरोधतः ॥ २७६३ ॥
स्थिता रेफादयश्चान्ते नैवान्यक्रमयोगिनः ।
शायन्ते वायुतो वर्णा नित्यैकत्वेन वर्णिताः ॥ २७६४ ॥
अन्यथा प्रत्यभिज्ञानं नित्यत्वैकत्वसाधनम् ।
व्यभिचारि त्वयैवोक्तं भवेद् भेदेऽपि वर्तनात् ॥ २७६५ ॥

इति मन्यमानो वाक्यं विचारयन्नाह—कतमस्येत्यादि । कदाचिद्[2]—वर्णमात्रमेवाविशिष्टं वाक्यं स्यात्, यद्वा—वर्णा एव विशिष्टाः क्रमवर्तिनो वाक्यम्, अथ वा—वर्णेभ्यो भेदिनः स्फोटाख्यस्य वाक्यत्वम्—इति पक्षत्रयम् ॥ २७६० ॥

तत्राद्ये पक्षे दोषमाह—वर्णानामित्यादि । द्वितीयेऽपि पक्षे प्राह—क्रमोऽप्येषां न विद्यत इति । तथा हि—द्विविध एव भावानां क्रमः—देशकृतो वा पिपीलिकापङ्क्त्यक्षरादिवत्, कालकृतो वा यथा बीजाङ्कुरकाण्डपुष्पफलादीनाम् । न तावदाद्यः क्रमो वर्णानां सम्भवति; व्याप्तेः, सर्वगतत्वाद् वर्णानाम् । न ह्याकाशवत् सकलदेशावष्टम्भेनावस्थितस्य देशविच्छेदकृतः क्रमो [G. 734] युक्तः; सर्वेषामेकत्रभोदेशावस्थानात् । नापि कालकृतः; नित्यत्वेन सर्वेषां समकालत्वात् । किञ्च—पुरुषकृतो वा क्रमो भवेत् ? स्वाभाविको वा ? न तावत् पुरुषकृत इष्टः; वेदस्य पौरुषेयत्वप्रसङ्गात्, तत्प्रतिषेधस्यैव[3] च साधयितुमिष्टत्वात्[3] । अथ स्वाभाविकः ? तदा सर इत्येव नित्यं भवेत्, न कदाचिद् रस इति । न चापि 'प्रतिपदं

1–1. न तु स्याद्—पा०, गा० । २. किं यदा०—गा० ।
३–३. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति ।

न च व्यक्तिक्रमो वाक्यं नित्ये व्यक्तिनिषेधनात् ।
वाक्यस्यायोगतस्तस्मान्नित्यत्वं[1] नोपपद्यते ॥ २७६६ ॥
यथा वृद्ध्यादयः शब्दा इच्छाविरचितार्थकाः ।
स्वर्गयागादयः शब्दाः सम्भाव्यन्ते तथैव च ॥ २७६७ ॥
न चोत्पाद्यकथारूपनाटकाख्यायिकादिषु ।
नित्यः शब्दार्थसम्बन्धो वास्तवोऽस्ति विवक्षितः ॥ २७६८ ॥
तत्रापि शक्तिनित्यत्वे[2] नियोगस्य त्वनित्यता ।
तद्गता[3] चेदनित्यत्वाच्छक्तौ[3] भ्रान्तिः प्रवर्त्तते ॥ २७६९ ॥

---

भिन्ना वर्णा[1] इत्यभ्युपेयम्, प्रत्यभिज्ञया नित्यैकत्वेन[4] वर्णानां[4] सिद्धत्वात्[5] । अन्यथा प्रत्यभिज्ञानं व्यभिचारि स्यात् ॥ २७६१-२७६५ ॥

अथापि स्यात्, अभिव्यक्तिक्रमस्तर्हि वाक्यं भविष्यति । इत्याह—न चेत्यादि । च शब्दात्रापि वर्णेभ्यो भिन्नं स्फोटाख्यं वाक्यमिति सूचयति । तस्य मीमांसकैरेव निरस्तत्वादिति भावः । नित्ये व्यक्तिनिषेधनादिति । नित्यस्य व्यक्तेर्निषिद्धत्वादित्यर्थः ॥ २७६६ ॥

यदुक्तम्—"दृष्टार्थव्यवहारवत्" (तत्त्व० २३३८) इत्यादि, तत्राह—यथा वृद्ध्यादय इत्यादि । इच्छया रचितोऽर्थो येषां ते तथोक्ताः । उत्पाद्या = स्वयमपूर्वैव पुरुषेण या कथा महाश्वेतादिका, सैव रूपम् = स्वभावो येषां नाटकाख्यायिकादीनां ते तथोक्ताः । न च तेषु नित्यः शब्दार्थसम्बन्धोऽस्ति विवक्षितः शक्तिलक्षणः, तद्वद् वेदेऽपि सम्भाव्यत इति भावः ॥ २७६७-२७६८ ॥

तत्रापीत्यादिना परमतेन दृष्टान्तासिद्धिमाशङ्कते । तत्राप्युत्पाद्यकथादिषु नित्या शक्तिरस्त्येव, किन्त्वसत्यैवार्थे यो नियोगः पुंभिः क्रियते, सोऽनित्यः,

---

1. वाक्यता०—पा०, गा० ।   २. शब्दनित्यत्व—जै० पुस्तक पाठः ।
३-३. तद्गतश्चेत् भिन्नता शक्तौ—पा०, गा० ।
४-४. वर्णानां नित्यत्वम्—पा०, गा० ।
५. इतोऽग्रे—'धर्मप्रवर्तक च मार्गविरुद्धत्वात्'—इति पा० गा० पुस्तकयोः प्रथमश्लोकस्थ पाठो दृश्यते ।

ननु वाह्यो न तत्रास्ति व्यक्तिः कार्ये प्रकल्प्यते ।
विकल्पप्रतिबिम्बे चेत् तद्वद् वेदेऽपि शङ्क्यते ॥ २७७० ॥
अतीन्द्रियार्थसम्बन्धां को वा शक्तिं प्रपद्यते ।
नातो वेदे नियोगोऽपि नरायत्तः प्रकल्प्यते ॥ २७७१ ॥
वृद्धेभ्यो न च तद्बोधस्तेऽपि ह्यज्ञाः स्वतः स्थिताः ।
सम्भाव्या प्रतिपत्तिस्तु व्याख्यानात् पुरुषाश्रयात् ॥ २७७२ ॥
ननु पर्यनुयोगोऽयं कृतकेऽप्यागमे समः ।

---

तद्वशादेव नियताया शक्तौ प्रतीतिविभ्रमो भवति, तस्मादसिद्धो दृष्टान्त इति ॥ २७६९ ॥

नन्वित्यादिना प्रतिविधत्ते । [ G 735 ] बाह्य इति । महाश्वेतादिरर्थ[1] ॥ २७७० ॥

यदुक्तम्—"स्वर्गयागादिसम्बन्धः केन दृष्टो ह्यतीन्द्रियः" (तत्त्व० २३२९) इत्यादि, तत्राह—अतीन्द्रियार्थसम्बन्धामित्यादि ।

अनेनैतदाह—स्वयमेव भवता सामर्थ्याद् दर्शितम्, यथा—योऽयं वेदार्थप्रत्ययो भवति स पुरुषाश्रयाद् व्याख्यानादेवेति । तथा हि—प्रकृत्यैव तावत्[2] पूर्वा[2] शक्तिरतीन्द्रियार्थाश्रिता, ततश्चातीन्द्रियाया शक्तौ न पुरुषकृतो नियोगः शब्दस्य सम्भवति । नापि वृद्धेभ्यस्तस्याः प्रतीतिः सम्भवति, तेषां सर्वेषामेवानभिज्ञत्वात्, अन्धानामिव वचनाद् रूपविशेषप्रतीतिः । तस्मात् सामर्थ्याद्वेदार्थप्रतीतिः पुरुषव्याख्यानादेवावतिष्ठते, गत्यन्तराभावादिति ॥ २७७१–२७७२ ॥

नन्वित्यादिना परश्चोदयति । नन्वयं समान[3] पौरुषेयेष्वप्यागमेषु प्रसङ्गः । तथा हि— किमिदानीन्तना परोक्षदेशिकाना बुद्धादिवचनानामर्थं यथाभिप्रायं प्रतियन्ति, आहोस्विद् विपर्ययमिति । न तत्रेत्यादिना प्रतिविधत्ते । तत्रेति पुरुषे[4] । तदिष्टे[4] हेयादितत्त्वे सोपाये पुरुषार्थोपयोगिनि । तथा हि—तत्र न्याय-

---

[1] महाश्वेतादित्यर्थ —पा०, महाश्वेतादिरित्यर्थ —गा० ।
[2]–[2]. तावदपूर्व—गा० । [3] सामान्य —पा०, गा० ।
[4]–[4]. पौरुषेये, अदृष्टे—गा० ।

न तत्र श्रद्धया वृत्तेरर्थसंशयतोऽपि वा ॥ २७७३ ॥
प्रत्यक्षेणानुमानेन विशुद्धे विषये सति ।
नन्वेवं[1] वैदिके शब्दे स स्वयम्प्रत्ययो यतः ॥ २७७४ ॥

---

मेवानुपालयन्त सौगताः सुधिय प्रवर्त्तन्ते, न प्रवादमात्रेण । श्रद्धयेति । अभिसम्प्रत्ययेन युक्तिनिध्यानजेन निश्चयेनेति यावत् । प्रमाणसिद्ध एवार्थेऽभिसम्प्रत्ययस्य युज्यमानत्वात् । नान्यत्र, तत्र संशयानतिवृत्तेः । अर्थसंशयतोऽपि[2] वेति । अत्यन्तपरोक्षेऽर्थे स्वर्गदेवतापूर्वादौ । तथा हि—तत्र पौरुषेये वाक्ये पुरुषस्य स्वाभिप्रायकथनेनाविपरीतसम्प्रदायसम्भवाच्छ्रोतृपरम्परया चाविच्छिन्नः सम्प्रदायः सम्यक् सम्भाव्यते । न त्वेवमपौरुषेये, तत्रोपदेष्टुरभावात् । [G 736] किञ्च—उपदेष्टा स्वयम्[3] लोकप्रत्यायनाय[4] ब्रुवाणो[5] लोकसङ्केतमेवानुसृत्य ब्रूते[6] इति ततो लोकप्रसिद्धेरपि तदर्थसिद्धिः सम्भवेत् । न त्वपौरुषेयात्; तत्र कस्यचित् समीहाभावात् ॥ २७७३ ॥

यद्येवम्, येन केनचिदागमेन किं न भवान् प्रवर्तते, सन्देहस्य सर्वत्र तुल्यत्वात् ?—इत्येतच्चोद्यनिराकरणायेदमाह—प्रत्यक्षेणेत्यादि ।

यत्र प्रत्यक्षानुमानाभ्यामभिमतस्यार्थस्य तथाभावो न विरुध्यते, तेन प्रवर्त्तमानः शोभेत सत्यपि संशये, न तु यत्रान्यथाभावस्तत्र, दृष्टप्रमाणोपरोधितानर्थसंशयस्योद्भूतत्वात् । यद्येवम्, वेदेऽप्यनेनैव न्यायेन प्रवृत्तिर्भविष्यति । इत्याह—नन्वेवमित्यादि । स्वयम्प्रत्यय इति । स्वत एव प्रमाणभूत इत्यर्थः । अतो न प्रमाणेन परीक्ष्य तत्र प्रवृत्तिर्युक्ता, स्वतः प्रामाण्यप्रसङ्गात् । न चापि तस्य विषयाद्[7] विशुद्धि[8] सम्भवति । तथा हि—अप्रच्युतानुत्पन्नपूर्वापररूपः पुमाननुक्रमेण[9] कर्ता कर्मफलानां च भोक्ता वेदे पठ्यते । स चायुक्त इत्यावेदितमात्मपरीक्षायाम् । तथा सामान्यादीन्यप्यपि प्रत्यक्षत्वेनोक्तानि, तथा क्रमेण जन्मस्थितिनिधनयोऽ-

---

1. न क्षेत्र—आ०, पा० । 2. अर्थसंशयतो—जै० ।
3. स्वयं—पा० । 4. लोकप्रत्यायनेन—पा० ।
5. ब्रुवाणो—पा० । 6. ब्रूत—पा० ।
7–8. विषयविशुद्धिः—पा०, पा० । 9. पुमाननु०—पा०, जै० ।

उत्पाद्यार्थकथाधर्ममनालोच्य समं श्रुतौ ।
एवं चेदमसम्बद्धं परैरत्रोपवर्णितम् ॥ २७७५ ॥
"शब्दार्थानादितां मुक्त्वा सम्बन्धानादिकारणम् ।
न स्यादन्यदतो वेदे सम्बन्धादि न विद्यते ॥ २७७६ ॥
उपायरहितत्वेन सम्बन्धाकरणानुमा ।
अनाख्यानानुमानं तु दृष्टेनैव विरुध्यते[1] ॥ २७७७ ॥

सम्भविन्योऽपि भावानां निर्दिष्टाः, तथाऽनाधेयविशेषस्य भागकर्तुं परापेक्षया जनकत्वम्, तथा निष्पन्नस्य पराश्रयेण स्थितिरकार्यस्याप्युपदिष्टा, तथा कारणाद् विनाशः—इत्यादिकं बहुविधं प्रमाणविरुद्धमुपलभ्यते । तत्कथं प्रेक्षावतस्तथाभूतेनागमेन प्रवृत्तिः स्यात् ) ॥ २७७४ ॥

यदप्यपरं कुमारिलेन सम्बन्धनित्यत्वसाधनाय साधनमुक्तम्, तस्योत्पाद्यकथारूपनाटकादिनाऽनैकान्तिकत्वमिति दर्शयति—उत्पाद्येत्यादि । उत्पाद्योऽर्थो यस्याः कथायाः सा तथोक्ता, उत्पाद्यार्था चासौ कथा चेति विग्रहः । तस्या धर्म इच्छाविरचितार्थत्वम् ॥ २७७५ ॥

किं तदुपवर्णितम् ? इत्याह—शब्दार्थानादितामित्यादि । [ G 737 ] शब्दो वर्णस्वभावः, तस्यार्थः सामान्यम्, तयोरनादित्वात् सम्बन्धोऽपि शक्तिलक्षणोऽनादिरेव, शक्तेर्भावाव्यतिरेकादिति भाव. । तथा सम्बन्धकरणस्योपायाभावेन सम्बन्धाकरणमनुमीयते। प्रयोग —यो यत्करणोपायरहितः स न तं करोति, यथा—अविद्यमानमृत्पिण्डदण्डचक्रसलिलसूत्रादिकारणकलाप कुलालो घटम् । सम्बन्धकरणोपायरहिताश्च सर्वपुरुषा इति व्यापकविरुद्धोपलब्धिः । न चासिद्धो हेतु; 'श्रोतुः कर्तुं[2] च[2] सम्बन्धं वक्ता कं प्रतिपद्यताम्" (तत्त्व० २२५६) इत्यादिना सर्वपुरुषाणामुपायरहितत्वस्य प्रतिपादितत्वात् । यद्येवम्, कारणवत्सम्बन्धाख्यानाभावानुमानप्रसङ्गः ? इत्याशङ्क्याह—अनाख्यानानुमानं त्वित्यादि । अनाख्यानानुमाने हेतौ 'उपायरहितत्वात्' इत्यस्यासिद्धि ॥ २७७६–२७७७ ॥

१. विरुध्यताम्—पा०, गा० ।
२-२. 'कर्तुंश्च—पा०, गा० ।

वृद्धाना दृश्यमाना च प्रतिपत्ति पुन. पुन ।
उपाय इति तद्धानिरसिद्धाऽवगम प्रति" ॥ २७७८ ॥
( श्लो॰ वा॰, स॰ प॰ १२६-२९ )

इत्येतद्धि भवेत् सर्वं यदि वेदार्थनिश्चय ।
वृद्धेभ्योऽप्यविसवादी सिद्ध. स्यादन्यथा क्षति ॥ २७७९ ॥
सिद्धसर्वोपसहारव्याप्तिकत्वान्न सम्भवि ।
सङ्घातत्वादिलिङ्गस्य किञ्चन प्रतिसाधनम् ॥ २७८० ॥

वृद्धानामित्यादिना तामेवासिद्धिं दर्शयति । येय वृद्धाना सम्बन्धप्रतीति पुन पुनर्दृश्यते, स एव सम्बन्धकथनोपाय । न ह्यप्रतिपद्य परस्मै कथयितुमीश[1] । तद्धानिरिति उपायहानि । अवगम प्रतीति सम्बन्धावबोध प्रति ॥२७७८॥

इत्येतद्धीत्यादिना दूषणमाह । यदुक्तम्[2]—'शब्दार्थानादिताम्" ( तत्त्व॰ २७७६ ) इत्यादि, तत्र यदि नित्यत्व शब्दार्थयोरनादित्वमभिप्रेतम्, तदसिद्धम्, व्यापिन क्षणभङ्गस्य प्रतिपादितत्वात् । अथ कार्यकारणपरम्परायाः, तदानैकान्तिकत्व विरुद्धत्व च सम्बन्धिभ्य सम्बन्धस्याव्यतिरेकात् तद्वदनित्यत्वप्रसङ्गात् । यच्चोक्तम्—"उपायरहितत्वेन' (तत्त्व॰ २७७७) इति तदप्यसिद्धम्, यतो भेदेऽपि प्रकृत्या चक्षुरादिवदेकाकारप्रत्ययपरामर्शजनने समर्था केचिदर्था इति प्रतिपादितम् । ततश्च वक्तृश्रोत्रोरेकार्थाध्यवसायी प्रत्यय स स्वकरणेऽप्युपाय इत्यभिप्राय । यदप्युच्यते—'वृद्धाना दृश्यमाना च प्रतिपत्ति" ( तत्त्व॰ २७७८ ) इति, तत्राप्युक्तम्–[ C 7°8 ] "वृद्धेभ्यो न च तद्बोधस्तेऽपि ह्यज्ञा स्वत स्थिता" ( तत्त्व॰ २७७२ ) इति । अन्यथा क्षतिरिति । यदि वृद्धा स्वयमज्ञा अपि सन्त सम्बन्ध प्रतिपद्यन्ते—इतीष्यते, तदा दृष्टविरोधोऽन्धस्येव रूपदर्शने प्रतिज्ञाया इत्यर्थ ॥ २७७९ ॥

यदुक्तम्—"सङ्घातत्वस्य वक्तव्यमीदृश प्रति साधनम्" (तत्त्व॰ २२४०) इत्यत्राह—सिद्धेत्यादि । सिद्धा सर्वोपसहारव्याप्तिर्यस्य तत् तथोक्तम्, तद्भाव तत्त्वम् । अनेन वस्तुस्वभावहेतुसमस्य प्रतिपादयति, अन्यस्य सर्वोपसंहारेण

[1] ॰मीशते—गा॰ ।

[2] यत्र चेदित्युक्तम्—जै॰, पा॰ पुस्तके नास्ति ।

सार्थकाः प्रविभक्तार्था विशिष्टक्रमयोगिनः ।
पदवाक्यसमूहाख्या वर्णा एव तयोदिताः ॥ २७८१ ॥
सार्थकप्रविभक्तार्थविशिष्टक्रमयोगिता ।
निषिद्धा पौरुषेयत्वे व्याप्तिरव्याहता ततः ॥ २७८२ ॥
वेदाध्ययनवाच्यत्वे न त्वेवं व्याप्तिनिश्चयः ।
सन्दिग्धव्यतिरेकित्वं व्यक्तं तेनात्र साधने ॥ २७८३ ॥
तथाविधे क्रमे कार्ये नराशक्तौ च निश्चये ।
सिद्धे व्याप्तिरिहेयं च निश्चेतुं नैव शक्यते ॥ २७८४ ॥
समस्तनरधर्माणां प्रत्यक्षीकरणे सति ।
स्यादेव निश्चयोऽयं च सर्वज्ञस्योपपद्यते ॥ २७८५ ॥

---

व्याप्त्यसिद्धेः । न च वस्तुबलप्रवृत्तेऽनुमाने प्रतिसाधनसम्भवः; वस्तूनां स्वभावा-न्यथात्वस्य कर्तुमशक्यत्वात् । नापि परस्परविरुद्धस्वभावद्वयस्यैकत्र सम्भवः, एकत्वहानिप्रसङ्गात् ॥ २७८० ॥

तामेव सर्वोपसंहारेण व्याप्तिसिद्धिं दर्शयन्नाह—सार्थका इत्यादि । तयेति संहतत्वेनोदिताः । अपौरुषेयत्वे तु वर्णानां सर्वमेतदनुपपन्नमिति पूर्वं प्रतिपादितम् । अतो व्याप्तिसिद्धिः ॥ २७८१–२७८२ ॥

ननु च "वेदाध्ययनवाच्यत्वात्" (तत्त्व० २३९१) इत्यस्यापि हेतोर्व्याप्तिः सर्वोपसंहारेण सिद्धैव, तथा हि—वेदानां कर्ता न कदाचिदप्युपलभ्यते ? इत्या-शङ्कयाह—वेदाध्ययनेत्यादि । न त्वेवमिति । यथा सङ्घातत्वस्य । यतो न सङ्घातत्वस्य साध्यविपर्यये व्यतिरेकित्वं सन्दिग्धम्, अस्य तु सन्दिग्धम् ॥२७८३॥

एतदेव प्रतिपादयति—तथाविध इत्यादि । [G 759] तथाविध इति "स्वर्गकामोऽग्निष्टोमेन यजेत" इत्यादिके । एवम्भूतं वर्णक्रमं यदि कर्तुं सर्वनराणामशक्तिर्निश्चिता भवेत्, तदा व्याप्तिनिश्चयो भवेत्; यावता सैव निश्चेतुमसर्वविदा न शक्यत इति दर्शयति—समस्तनरधर्माणामित्यादि । अयं चेति निश्चयः ॥ २७८४–२७८५ ॥

वृद्धानां दृश्यमाना च प्रतिपत्तिः पुनः पुनः ।
उपाय इति तद्धानिरसिद्धाऽवगमं प्रति" ॥ २७७८ ॥
(श्लो० वा०, स० प० १३६-३९)
इत्येतद्धि भवेत् सर्वं यदि वेदार्थनिश्चयः ।
वृद्धेभ्योऽप्यविसंवादी सिद्धः स्यादन्यथा क्षतिः ॥ २७७९ ॥
सिद्धसर्वोपसंहारव्याप्तिकस्याप्रसम्भवि ।
सङ्घातत्वादिलिङ्गस्य किञ्चन प्रतिसाधनम् ॥ २७८० ॥

वृद्धानामित्यादिना वामेनासिद्धिं दर्शयति । येयं वृद्धानां सम्बन्धप्रतीतिः पुनः पुनर्दृश्यते, स एव सम्बन्धकथनोपायः । न ह्यप्रतिपद्य परस्मै कथयितुमीशः[1] । तद्धानिरिति उपायहानिः । अवगमं प्रतीति सम्बन्धावबोधं प्रति ॥२७७८॥

इत्येतद्धीत्यादिना दूषणमाह । यदुक्तम्[2]—'शब्दार्थानादितास्' (तत्त्व० २७७६) इत्यादि, तत्र यदि नित्यत्वं शब्दार्थयोरनादित्वमभिप्रेतम्, तदसिद्धम्; व्यापिनः क्षणभङ्गस्य प्रतिपादितत्वात् । अथ कार्यकारणपरम्परया, तदानैकान्तिकत्वं विरुद्धत्वं च, सम्बन्धिभ्यः सम्बन्धस्याव्यतिरेकात् तद्वदनित्यत्वप्रसङ्गात् । यच्चोक्तम्—"उपायरहितत्वेन" (तत्त्व० २७७७) इति, तदप्यसिद्धम्, यतो भेदेऽपि प्रकृत्या चक्षुरादिवदेकाकारप्रत्ययमर्शजनने समर्था केचिदर्था इति प्रतिपादितम् । ततश्च वक्तृश्रोत्रोरेकार्थाध्यवसायी प्रत्ययः स स्वकरणेऽप्युपाय इत्यभिप्रायः । यदप्युच्यते—"वृद्धानां दृश्यमाना [redacted] प्रतिपत्तिः" (तत्त्व० २७७८) इति, प्रागप्युक्तम्—[C 738] "वृद्धेभ्यो न च तद्बोधस्तेऽपि ह्यज्ञाः स्वतः स्थिताः" (तत्त्व० २७७२) इति । अन्यथा क्षतिरिति । यदि वृद्धाः स्वयमज्ञा अपि सन्तः सम्बन्धं प्रतिपद्यन्ते—इतीष्यते, तदा दृष्टविरोधोऽन्यस्यैव रूपदर्शनप्रतिज्ञाया इत्यर्थः ॥ २७७९ ॥

यदुक्तम्—"सङ्घातत्वस्य वक्तव्यमीदृशं प्रति साधनम्" (तत्त्व० २३४०) इत्यत्राह—सिद्धेत्यादि । सिद्धा सर्वोपसंहारव्याप्तिर्यस्य तत् तथोक्तम्, तद्भावस्तत्त्वम् । अनेन वस्तुस्वभावहेतुत्वमस्य प्रतिपादयति, अन्यस्य सर्वोपसंहारेण

१. ०मीशते—गा० । २. यत्र चोदितमुक्तम्—जै०, पा० पुस्तके नास्ति ।

सार्थकाः प्रविभक्तार्था विशिष्टक्रमयोगिनः ।
पदवाक्यसमूहाख्या वर्णा एव तथोदिताः ॥ २७८१ ॥
सार्थकप्रविभक्तार्थविशिष्टक्रमयोगिता ।
निषिद्धा पौरुषेयत्वे व्याप्तिरव्याहता ततः ॥ २७८२ ॥
वेदाध्ययनवाच्यत्वे न त्वेवं व्याप्तिनिश्चयः ।
सन्दिग्धव्यतिरेकित्वं व्यक्तं तेनात्र साधने ॥ २७८३ ॥
तथाविधे क्रमे कार्ये नराशक्तौ च निश्चये ।
सिद्धे व्याप्तिरिहेयं च निश्चेतु नैव शक्यते ॥ २७८४ ॥
समस्तनरधर्माणा प्रत्यक्षीकरणे सति ।
स्यादेष निश्चयोऽयं च सर्वज्ञस्योपपद्यते ॥ २७८५ ॥

---

व्याप्त्यसिद्धे । न च वस्तुबलप्रवृत्तेऽनुमाने मतिसाधनसम्भव; वस्तूना स्वभावा-न्यथात्वस्य कर्तुमशक्यत्वात् । नापि परस्परविरुद्धस्वभावद्वयस्यैकत्र सम्भव, एकत्वहानिप्रसङ्गात् ॥ २७८० ॥

तामेव सर्वोपसहारेण व्याप्तिसिद्धि दर्शयन्नाह—सार्थका इत्यादि । तथेति सहतत्त्वेनोदिता । अपौरुषेयत्वे तु वर्णाना सर्वमेतदनुपपन्नमिति पूर्वं प्रतिपादितम् । अतो व्याप्तिसिद्धि ॥ २७८१–२७८२ ॥

ननु च "वेदाध्ययनवाच्यत्वात्" (तत्त्व० २३४१) इत्यस्यापि हेतोर्व्याप्ति सर्वोपसहारेण सिद्धैव, तथा हि–वेदाना कर्ता न कदाचिदप्युपलभ्यते ? इत्या-शङ्कयाह—वेदाध्ययनेत्यादि । न त्वेवमिति । यथा सहातत्वस्य । यतो न सहातत्वस्य साध्यविपर्यये व्यतिरेकित्व सन्दिग्धम्, अस्य तु सन्दिग्धम् ।२७८३॥

एतदेव प्रतिपादयति—तथाविध इत्यादि । [G 739] तथाविध इति "स्वर्गकामोऽग्निष्टोमेन यजेत" इत्यादिके । एवम्भूत कर्मक्रमं यदि कर्तुं सर्वनराणामशक्तिर्निश्चिता भवेत्, तदा व्याप्तिनिश्चयो भवेत्; यावता सैव निश्चेतुमसर्वविदा न शक्यत इति दर्शयति—समस्तनरधर्माणामित्यादि । अयं चेति निश्चय ॥ २७८४–२७८५॥

वेदप्रामाण्यप्रतिक्षेपः

सम्भाव्यते च वेदस्य विस्पष्टं पौरुषेयता ।
काममिथ्याक्रियाप्राणिहिंसाऽसत्याभिधा तथा ॥ २७८६ ॥
दुर्भणत्वानुदात्तत्वक्लिष्टत्वाश्रव्यतादयः ।
वेदधर्मा हि दृश्यन्ते नास्तिकादिवचस्स्वपि ॥ २७८७ ॥

ननु च धर्माद्युपदेशदुर्भणत्वादीनां वेदधर्माणां पौरुषेयेषु वाक्येष्वदर्शनाद् वेदस्य पौरुषेयत्वमसम्भाव्यमेव, तत्कथं सन्दिग्धासिद्धता स्यात् ? इत्याशङ्क्याह— सम्भाव्यत इत्यादि । एवं मन्यते—यदि नामादर्शनम्, तथाप्यदर्शनमात्रस्याप्रमाणत्वात् सन्दिग्धासिद्धैव, कदाचित् क्वचित् पुरुषास्तथाविधाना वेदधर्माणां कर्तारो भवेयुरिति । न चादर्शनमात्रं सिद्धम्, काममिथ्याचाराद्युपदेशादेर्वेदधर्मस्य नास्तिकादिवचनेष्वपि दर्शनात् । काममिथ्याक्रिया = काममिथ्याचारः । मात्राद्यभिगमनमिति यावत् । तस्योपदेशो गोसवादौ । यथोक्तम्—'उपहा उदकं चूषति तृणानि छिनत्ति उपैति मातरमुत स्वसारम्' ( ) इत्यादि । उपहेति यजमानः । अश्वमेधादौ प्राणिवधोपदेशः । यथोक्तम्—

"षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि ।
अश्वमेधस्य वचनादूनानि पशुभिस्त्रिभिः" ॥ ( ) इति ।

असत्यम् = मृषावादः, तदप्युपदिष्टम् । यथोक्तम्—

"न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन् न विवाहकाले ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥" ( ) इति ।

एषां काममिथ्याचारादीनाम्, अभिधा = अभिधानम् । वेदधर्मा नास्तिकादिवचस्स्वपि दृश्यन्त इति सम्बन्धः । तथेति समुच्चये । दुर्भणत्वम् = दुरभिधानम्, अनुदात्तत्वम् = मनोज्ञत्वम्, क्लिष्टम् = व्यवहितम् । 'आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः' ( ) इत्यादिवत् । अत्र हि—'आ मन्द्रैः' इत्ययं 'याहि' इत्यनेन व्यवहितेन सम्बध्यते । आयाहीत्यर्थः । अश्रव्यता = श्रुतिदुर्भगता । आदिशब्देन पदविच्छेदप्रकोदात्तादिपरिग्रहः ।

1 '॰त्स्य आह्—गा॰ ।

विषापगमभूत्यादि यच्च किञ्चित् समीक्ष्यते ।
सत्यं तद् वैनतेयादिमन्त्रवादेऽपि दृश्यते ॥ २७८८ ॥
किञ्चामुना प्रकारेण पौरुषेयं न किञ्चन ।
शक्यं सौगतमप्येवमनुमातुं वचो यतः ॥ २७८९ ॥
तदभिव्यक्तरूपत्वात् तदीयं च तदुच्यते ।
कर्तृस्मृतिश्च तत्रापि भवत्वर्थनिबन्धना ॥ २७९० ॥
परैरेवं न चेष्टं चेत् तुल्ये न्याये न किं मतम् ।
मा भूद् वैवं परस्येष्टिर्न्यायात् त्वाशंक्यते तथा ॥ २७९१ ॥

विषापगमभूत्यादीति । विषापगमे भूतिः = सामर्थ्यम्, प्रभाव [G 740] इति यावत् । अथ वा—विषापगमश्च भूतिश्चेति समासः । "भूतिर्विभूतिरैश्वर्यम्" ( अम० को० १.१.३६ ) इति यावत् । आदिशब्देन भूतग्रहावेशवशीकरणाभिचारादयो गृह्यन्ते । सत्यमिति अविसंवादि । वैनतेयादीत्यादि शब्देन बौद्धादिमन्त्रवादपरिग्रहः ॥ २७८६–२७८८ ॥

'भारतेऽपि भवेदेवम्" ( तत्त्व० २३४५ ) इत्यत्राह—किञ्चामुने-त्यादि । एवमनुमातुमिति । सौगतप्रवचनाध्ययनं प्रथमाभिहितं[1] सजातीया-ध्ययनपूर्वकम्, सौगताध्ययनवाच्यत्वात्, अधुनाध्ययनं यथेति ॥ २७८९ ॥

यद्येवम्, कथं तर्हि तत्सौगतं सेत्स्यति ? इत्याह—तदभिव्यक्तेत्यादि । तेन = सुगतेनाभिव्यक्तं रूपम् = स्वभावो यस्य तत् तथा, तद्भावस्तत्त्वम् । अत्रापि[2] सौगतेया कर्तृस्मृतिस्त्वर्थवादनिबन्धना शक्यते व्याख्यातुम् । तथा हि—अत्रापि करोतिः स्मरणार्थः किं न व्याख्यायते ? स्यादेतत्—न हि बौद्धैरेवमिष्टम्, येनैवं साध्येत ? इत्याह—तुल्ये न्याये न किं मतमिति । यद्ययमर्थो युक्त्युपेतः स्यात्, तदा किमिति बौद्धो नाभ्युपगच्छेत्, न हि न्यायोपपन्नेऽर्थे प्रेक्षावतोऽनभ्युप-गमो युक्तः । मा भूद् बौद्धस्य प्रेक्षावतोऽभ्युपगमः, तथापि न्यायादेवमा-पद्यते[3] भवत इति ब्रूमहे ॥ २७९०–२७९१ ॥

१. प्रथमाभिमत—गा० । २. तत्रापि—पा० गा० ।
३. ०मापाद्यते—पा०, गा० ।

"सर्वदा चैव पुरुषाः प्रायेणानृतवादिनः ।
यथाद्यत्वे न विश्रम्भस्तथातीतार्थकीर्त्तने" ॥ २७९२ ॥
(श्लो० वा०, चो० सू० १४४)
इत्येतेन त्वदुक्तेन न्यायेन च न सिद्धयति ।
कर्त्ता कश्चित् क्वचिद् ग्रन्थे स्वां कृतिं कथयन्नपि ॥ २७९३ ॥
ततश्चापौरुषेयेषु सत्याशा स्यच्यतामियम् ।
वेदार्थविपरीता हि तेऽप्यर्थाः प्रतिपादिताः ॥ २७९४ ॥
अपि चानादिता सिद्धचेदेवं नानरसंश्रयः ।
तस्मादकृतकत्वे वा स्यादन्योऽप्यागमोऽकृतः ॥ २७९५ ॥
तथा हि पारलोकादिव्यवहाराः पराश्रयाः ।
नास्तिकानां च सिद्धान्तः परसंस्कारभाविकः ॥ २७९६ ॥

---

एतदेव त्वद्वचनेन दृढीकुर्वन्नाह—सर्वदा चेत्यादि । इत्येतेनेति । "सर्वदा च" इत्यादिनानन्तरोक्तेन । स्यादेतद्, भवतु [ G 741 ] सर्वेषामपौरुषेयता ? इत्याह—ततश्चेत्यादि । ततश्चापौरुषेयत्वं सत्यार्थं न सिद्धयेत्; सौगतादिवचनेनानैकान्तिकत्वादिति भावः । तथा हि—वेदार्थविपरीता नैरात्म्यादयो भवन्मतेनाप्रमाणोपपन्नास्तेषु सौगतादिषु वचनेषु निर्दिष्टाः, तथा वैदिका अपि सम्भाव्येरन् ॥ २७९२–२७९४ ॥

एवं तावदनैकान्तिकत्वं प्रतिपादितम्, इदानीमिष्टविघातकृत्त्वाद् विरुद्धत्वमस्य प्रतिपादयन्नाह—अपि चेत्यादि । तथा हि—अपौरुषेयत्वमस्य साधयितुमिष्टम्, तच्च न सिध्यति[1], किं तर्हि ? अनादित्वमात्रमनिष्टमेव सिध्यति । स्यादेतत्—अनादित्वे सिद्धे सामर्थ्यादकृतकत्वं सिद्धयत्येव, न हि कृतकस्यानादित्वं युज्यते तत् ? इत्याह—तस्मादित्यादि । तस्मादनादित्वाद् यद्यकृतकत्वं[2] स्यात्, तदा परलोकादिव्यवहारस्यापि स्यात् ॥ २७९५ ॥

एतदेव दर्शयति—तथा हीत्यादि । पराश्रया इति । परपुरुषसंस्कारेण स्पृष्टा इत्यर्थः । परसंस्कारभाविक इति । परसंस्कारेण भावः, स यस्यास्ति स तथोक्तः । परसंस्कारेण वा भवितुं शीलमस्येति परसंस्कारभावी, ततः स्वार्थे

---

१ सिद्धम्—पा०, गा० । २. यद्यकृतकत्वं—पा०, गा० ।

ईदृश्यकृतकत्वे च कः सिद्धेऽपि गुणस्तव ।
अवैतव्यनिमित्तं हि यत्नोऽयं भवतोऽखिलः ॥ २७९७ ॥
कालत्वपुरुषत्वादौ सन्दिग्धव्यतिरेकिता ।
पूर्ववत् करणाशक्तेर्नराणामप्रसाधनात् ॥ २७९८ ॥
व्यक्तेश्च प्रतिषिद्धत्वाद् वक्ता कर्त्तैव गम्यताम् ।
तत्प्रयोगद्वयेऽप्युक्तं साध्यशून्यं निदर्शनम् ॥ २७९९ ॥
नरोपदेशापेक्षत्वात्[1] कृतकस्य च साधनात् ।
स्वार्थे वक्त्रनपेक्षत्वं धर्मिदृष्टान्तयोर्न च ॥ २८०० ॥
नित्यत्वेऽस्ति च वाक्यस्य धर्मिदृष्टान्तयोरपि ।
नित्यवाक्योद्भवत्वस्य स्पष्टासिद्धिः प्रतीयते ॥ २८०१ ॥

को विधेयः । तथा हि—येऽपि तावत् स्वप्रतिभारचितसङ्केताः सिद्धान्ताः, तेषामपि यथाश्रुतार्थविकल्पवशेनैव प्रवृत्तेः परसंस्कारबलेनैव प्रवृत्तिः प्रायेण[2] प्रायेण, यथा दर्शनवृत्तीनां लोकव्यवहाराणाम् ॥ २७९६ ॥

भवतु सर्वेषामपौरुषेयत्वमिति चेद् ? इत्याह—ईदृशीत्यादि । ईदृशि = सम्भवद्वितथार्थे ॥ २७९७ ॥

"अतीतानागतौ कालौ" (तत्त्व० २३४३) इत्यत्राह—कालत्वेत्यादि । [G, 742] सर्वेषां हि नराणां करणाशक्तिप्रसाधनं विपर्यये हेतोर्बाधकं प्रमाणम्, तस्य चानुपदर्शनात् सर्वहेतूनां साध्यविपर्यये व्यतिरेकः सन्दिग्ध इत्यनैकान्तिकता । पूर्ववदिति । वेदाध्ययनवाच्यत्वसाधनवत् । साध्यशून्यं निदर्शनमिति । वर्तमानकालवत् प्राक्तननरवदित्येतत् ॥ २७९८-२७९९ ॥

'अतश्च गम्यताम्" ( तत्त्व० २३४५ ) इत्यत्राह—नरेत्यादि । धर्मिदृष्टान्तयोरिति । साध्यधर्मिणि, दृष्टान्तधर्मिणि चेत्यर्थः ॥ २८०० ॥

"तत्कृतः प्रत्ययः सम्यक्" ( तत्त्व० २३४६ ) इत्यत्राह—नित्यत्वेऽस्ति इत्यादि । अत्रापि हेतोरसिद्धता, दृष्टान्तस्य च साध्यविकलता पूर्ववत् । धर्मिदृष्टान्तयोरिति सप्तमी 'नित्यवाक्योद्भवत्वस्य' इत्येतदपेक्षा । वाक्यस्येति

1. परोपदेशा०—जै० पुस्तके पाठः । 2. स्यादेव—पा० ।

इत्थं चापौरुषेयत्वे चोदनाया अनिश्चिते ।
सन्दिग्धासिद्धता दोषः पश्चिमेष्वपि हेतुषु ॥ २८०२ ॥
बाध्यते च श्रुतिः स्पष्टं क्षणभङ्गे प्रसाधिते ।
नित्या तावत् स्वरूपेण तत्कृतातो मतिः कुतः ॥ २८०३ ॥
न हि शीर्यत इत्युक्तः पुरुषश्च श्रुतावलम् ।
पुरस्तस्योदिता बाधा सुव्यक्ता तदसिद्धता ॥ २८०४ ॥

'नित्यत्वे' इत्येतदपेक्षा सम्बन्धषष्ठी । नित्ययावाक्ययोऽवस्त्वस्येत्यसिद्ध्यपेक्षा षष्ठी । पश्चिमेष्विति । "दोषवर्जितैः कारणैर्जन्यमानत्वात्" (तत्त्व० २३४७) इत्यादिषु च ॥ २८०१-२८०२ ॥

अनाप्तप्रणीतोक्तिजन्यत्वाद्, बाधवर्जनादित्यनयोर्[1] हेत्वोर्निश्चितैवासिद्धतेति दर्शयन्नाह—बाध्यते चेत्यादि । नित्या तावत् स्वरूपेणेति बाध्यत इति सबन्धः । एतदुक्तं भवति—स्पष्टं हि [ C 713 ] हेतुबलप्रवृत्तानुमानतः सर्वपदार्थव्यापिनि क्षणभङ्गे प्रसाधिते सति येयं नित्यत्वेनाभ्युपगता श्रुतिः सा तावद्बाध्यत इति स्वरूपग्रहणमभिधेयव्युदासार्थम् । तत्कृताऽतो मतिः कुतः इति । नैवेत्यर्थः । एतेन 'अनाप्तप्रणीतोक्तिजन्यत्वात्' इत्येतस्याश्रयासिद्धतोक्ता । 'बाधवर्जनात्' इत्येतस्य च स्वरूपतोऽसिद्धतां निश्चितां दर्शयन्नाह—न हि शीर्यत इत्यादि । "अशीर्योऽय न हि शीर्यते", "अविनाशी वा[2] अरे अयमात्मा" ( बृ० उ० ४.५.१५-१४) इति वेदे पठ्यते । अस्य[2] च[2] पुरुषस्य = आत्मन, पुर. = पूर्वं नैरात्म्यसिद्धौ, बाधोक्ता । अतो निश्चितमसिद्धत्वमस्य ।

ननु च—'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः' ( मी० द०, शा० भा० १.१.२ ) इति वचनाद् वैदिकैकदेशविशेष एव चोदनोच्यते, न तु सर्वो वेदः, चोदनाजनिता बुद्धि.[3] पक्षीकृता । न[4] तस्यान्यार्थस्य[4] वेदस्य बाधायामपि न चोदनाया बाधेति हेतोः सिद्धिरेव ? नैष दोषः; चोदनाग्रहणेन कचित् सर्वमेव वैदिकं वाक्यमुच्यते, न तु सर्वदा प्रवर्तकमेव । अन्यथा "न हिंस्याद् भूतानि"

1. पा० पुस्तके नास्ति । 2. तस्य—पा०, गा० ।
3. तु बुद्धिः—गा० । 4-4. तस्मादन्या०—पा०, गा० ।

करामलकवद् यस्य देशकालनरान्तरम् ।
प्रत्यक्षं तत्र तेनायं बाधाभावोऽवसीयते ॥ २८०५ ॥
नराविज्ञातरूपार्थे तमोभूते ततः स्थिते ।
वेदेऽनुरागो मन्दानां स्वाचारे पारसीकवत् ॥ २८०६ ॥
अविज्ञाततदर्थाश्च पापनिष्यन्दयोगतः ।

---

इत्येतद् यास्यं चोदना न स्यात्; अप्रवर्तकत्वात् । यथोक्तं भाष्ये—"उभयमिह चोदनया लक्ष्यते—अर्थोऽनर्थश्च" ( मी० द०, शा० भा० १.१.२ ) इति, तदपि विरुद्धयेत । न हि चोदनाऽनर्थे प्रवर्तयति, येन तथाऽनर्थो लक्ष्यत इति स्यात् । किञ्च यदेतदपरमुक्तं भाष्ये—"विप्लवते खल्वपि कश्चित् पुरुषकृताद् वचनात् प्रत्ययः, न तु वेदवचनस्य मिथ्यात्वसाये किञ्चन प्रमाणमस्ति" ( मी० द० शा० भा० १.१.२ ) इति; अस्य[1] तावद् बाधनाचोदनायामपि बाधा सम्भाव्यमाना दुर्वारैव । तथा हि कुमारिलेनोक्तम्—"अकर्तृकत्वसिद्ध्या च हेतुत्वं साधयिष्यते" ( श्लो० वा०, चो० सू० १८६ ) इति ।

यदा[2] चाकर्तृकस्यापि नित्यपुरुषादिविषयस्य वेदवचसो बाधा परिस्फुटा समीक्ष्यते, [3]तदा "अग्निहोत्रात् स्वर्गो भवति" इत्यादावपि बाधाशङ्का[4] दुर्वारैवेति स्फुटा तावत् सन्दिग्धासिद्धता पूर्वोक्तैव । अत एव पुनर्निर्वर्त्य सन्दिग्धासिद्धतामेव द्रढयन्नाह—करामलकवदित्यादि । तत्रेति देशकालनरान्तरे । तत्र यदुक्तम्—"न चैष देशान्तरे कालान्तरे वा विपर्येति तस्मादवितथ." ( मी० द० शा० भा० १.१.२ ) इति, तदनेन दूषितं भवति ॥२८०३—२८०५॥

यदुक्तम्—"तस्मादालोकवत्" (तत्त्व० २३५० ) इति, अत्राह—नराविज्ञातरूपार्थे इत्यादि । रूपम् = स्वरूपम्, अर्थः = अभिधेयः, नराविज्ञातौ रूपार्थावस्येति विग्रहः । [G 744] तत्र रूपमविज्ञातम्; किमयमेव वर्णः, अथान्यो विशेष एव वर्णक्रम, उत न—इति स्वतः परतश्च निश्चयायोगात् ।

---

१. अस्य नित्यस्य—गा० । २. यथा—पा०, गा० ।
३ तथा—पा०, गा० ।
४. बा शङ्का—पा०; बाशङ्का-गा० ।

तथैवामी प्रवर्त्तन्ते प्राणिहिंसादिकल्मषे ॥ २८०७ ॥
धर्मं प्रति न सिद्धातश्चोदनानां प्रमाणता ।
स्वतोऽन्येभ्यश्च मन्देभ्यस्तदर्थानवधारणात् ॥ २८०८ ॥
ज्ञानालोकव्यपास्तान्तस्तमोराशिः पुमानतः ।
श्रुत्यर्थानां विविक्तानामुपदेशकृदिष्यताम् ॥ २८०९ ॥

---

एवमर्थेऽप्यनिश्चयो द्रष्टव्यः । ततश्च तमोभूते—निश्चयाभावेनानालोकभूतत्वात् । तथैवेति[1] । पारसीकादिवद्भोसेवादिषु[1] । पापम्[2] = पूर्वपापाभ्यासवासना, वर्त्तिष्यन्[3] ॥ २८०६ २८०७ ॥

यदुक्तमादौ—"अवश्यं धर्माधर्मार्थिभिः पुरुषैः प्रेक्षावद्भिश्चोदनैव प्रमाणत्वे नाश्रयणीया" इति, तत्राह—धर्मं प्रतीत्यादि । धर्मग्रहणमुपलक्षणम्, अधर्मोऽपि ग्रहीतव्यः ॥ २८०८ ॥

यद्येवम्, कस्तर्हि धर्मादिव्यवस्थाश्रयः? इत्याह—ज्ञानेत्यादि । अन्तस्तमः = क्लिष्टाक्लिष्टमज्ञानम्, ज्ञानालोकेन व्यपास्तः = ध्वस्तोऽन्तस्तमोराशिर्येन स तथोक्तः । विविक्तानामिति । अनवधानाम् = शुद्धीनाम्[4], पशुवधकामभिथ्याचारादिकल्मषानङ्कितानामित्यर्थः । उपदेशकृदिष्यतामिति । एवं हि तदपौरुषेयस्य प्रकल्पितं सार्थकं भवतीति भावः, अन्यथा हि तस्मिन्नविज्ञातार्थे तदपार्थकमेव स्यात् । अनेनैतदुक्तं भवति—योऽयं स्वतः प्रामाण्याभ्युपगमो भवताम्, च न विना सर्वज्ञेन युक्त इत्यतोऽवश्यं सोऽभ्युपगन्तव्यः, अन्यथा तत्र प्रामाण्यासिद्धिरिति प्रतिपादितत्वात् । ततश्च तदुक्तमेव वरं वचनं धर्मादिसमाश्रयोऽस्तु, किमपरं प्रमाणोपपन्नापौरुषेयत्वकल्पनया । यच्चोक्तम्—योगिप्रत्यक्षसमाधिगम्योऽपि धर्मादिर्न भवतीति, तदपि शेषवदनुमानेन योगिनः पश्चात् साधयिष्यमाणत्वादिति भावः ॥ २८०९ ॥

इति श्रुतिपरीक्षा

---

१-१ पा॰ गा॰ पुस्तकयोर्नास्ति । २ पा॰ पुस्तके नास्ति ।
३ ॰तथैवेति, पारसीकादिवत्—पा॰, गा॰ ।
४ शुद्धानाम्—गा॰ । ५. दोषवत्, अनुमानेन—पा॰ ।

## स्वतःप्रामाण्यपरीक्षा

एवं च पौरुषेयत्वे वेदानामुपपादिते ।
"स्वतः प्रामाण्यमप्येषां प्रतिक्षिप्तमयत्नतः ॥ २८१० ॥
स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यताम्[1]" ।
(श्लो० वा०, चो० ४७)
इत्येतस्य च वाक्यस्य भवद्भिः कोऽर्थ इष्यते ? ॥ २८११ ॥

---

एवमित्यादिना— भूयः स्वतन्त्रश्रुतिनिःसङ्गत्वमेव प्रकारान्तरेण समर्थ्यते । [G. 745] तथा हि—श्रुतेः प्रामाण्यं यथा स्यादिति मन्यमानाः "सामान्येन सर्वप्रमाणानां स्वतःप्रामाण्यमप्रामाण्यं तु परतः" इत्याहुर्जैमिनीयाः । परतः किल प्रामाण्येऽनवस्थादिदोषप्रसङ्गात् प्रमाणेतरव्यवस्थोच्छेदः स्यात् । तथा हि— चत्वारः पक्षाः सम्भवन्ति—कदाचिदुभे[2] अपि[2] प्रामाण्याप्रामाण्ये स्वत एवेति प्रथमः, कदाचिदपरत एवेति द्वितीयः, प्रामाण्यं परतोऽप्रामाण्यं तु स्वत एवेति तृतीयः, एतद्विपर्ययश्च तुर्थः । तत्र न तावदाद्यः पक्षः, तथा हि—एकव्यक्त्याधारं वा तदुभयं स्याद् ? व्यक्तिभेदेन वा ? न तावदेकस्यां व्यक्तौ परस्परपरिहारस्थितलक्षणयोः प्रामाण्येतरधर्मयोः सम्भवः; विरोधात् । नापि व्यक्तिभेदेन; नियमकारणाभावान्निश्चयहेत्वसम्भवाच्चासङ्कीर्णप्रमाणाप्रमाणव्यवस्थानाभावप्रसङ्गात् । तथा हि—द्वयोरपि स्वातन्त्र्यादिदं प्रमाणमेवेति नियमो न स्यात् । बाह्यसामान्येन च द्वयोरपि तिरोहितभेदत्वाद्, अन्यस्य चावधारणकारणस्यानभ्युपगमाद् विभागेनापरिज्ञानाद्—इदं प्रमाणमप्रमाणमिति व्यवस्था न स्यात् । नापि द्वितीयः पक्षः; प्रागुभयस्वभावरहितस्य ज्ञानस्य निःस्वभावत्वप्रसङ्गात् । न हि परस्परपरिहारस्थितलक्षणयोः प्रामाण्येतरयोरभावे रूपान्तरमस्य शक्यमवधारयितुमित्यसंशयमस्यानुपाख्यत्वमापद्यते । आह च—

"स्वतस्तावद् द्वयं नास्ति विरोधात् परतो न च ।
निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥

---

१ गम्यताम्—इत्यपि पाठः ।
२–२. ०दुभेऽपि—पा०, गा० ।

मीमांसकानां स्वतःप्रामाण्यवाद

मेयबोधादिके शक्तिस्तेषां स्वाभाविकी स्थिता ।
न हि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते[1] ॥ २८१२ ॥
अनपेक्षत्वमेवैकं प्रामाण्यस्य निबन्धनम् ।
तदेव हि विनाश्येत सापेक्षत्वे समाश्रिते ॥ २८१३ ॥

---

विज्ञानव्यक्तिभेदेन भवेच्चेदविरुद्धता ।
तथाप्यन्यानपेक्षत्वे किं क नेति निरूप्यते ॥" इति ।
( श्लो० वा०, चो० सू० ३५, ३७ )

नापि तृतीयः पक्षः, अनवस्थादोषात् । तथा हि—न तावत् परतोऽप्रमाणभूतात् प्रामाण्यमाशङ्कनीयम्, तस्य स्वयमेवाप्रमाणत्वात् । नापि प्रमाणभूतात्, तस्यापि तुल्यपर्यनुयोगेन परतः प्रामाण्याशङ्कायामनवस्थाप्रसङ्गात् । ततश्चैकप्रमाणव्यक्तिव्यवस्थापनाय प्रमाणपरम्परामनुसरतः सकलमेव पुरुषायुषमुपयुज्येत[2] । तस्माद् गत्यन्तरासम्भवात् स्वतः सर्वप्रमाणानां प्रामाण्यम्, परतोऽप्रामाण्यमिति गृह्यताम् । तत्र प्रयोगः—ये यद्भावं प्रति नियतास्ते तं प्रति न परमपेक्षन्ते, यथाऽऽकाशममूर्तत्वाय । प्रमाणभावनियताश्च विवादास्पदीभूता विज्ञानादय इति व्यापकविरुद्धोपलब्धिः । न चास्याऽनैकान्तिकत्वम्, स्वतोऽसम्भविनो धर्मस्य परेणाधातुमशक्यत्वादाकाशस्येव मूर्तत्वम् । यदाह—"न हि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते" ( तत्त्व० २८१२ ) इति ॥ २८१०–२८११ ॥

अत्र स्वतः इत्यादिना तुच्छं प्रतिज्ञार्थं सम्भावयंस्तद्विचारद्वारेण दूषणमारभते । [ G 746 ] कोऽर्थ इष्यते ?—इति प्रश्ने, पर आह—मेयबोधादिक इत्यादि । यदि ज्ञानं प्रमाणम्, तदा तस्य मेयबोधे = प्रमेयपरिच्छेदे स्वाभाविकी शक्तिः, अर्थपरिच्छेदकत्वाज्ज्ञानस्य । अथ चक्षुरादीनि ? तदा तेषां यथार्थज्ञानजनने चोदनाया अतीन्द्रियार्थावगमे स्वत एव शक्तिः—इत्येतदादिशब्देन सङ्गृहीतम् । अत्रैव तावत् परः उपपत्तिमाह—न हीत्यादि ॥ २८१२ ॥

एतदेव दर्शयन्नाह—अनपेक्षत्वमेवैकमित्यादि । प्रामाण्यस्येति

१ शक्यते— पा०, गा० ।  २ ०मुपयुज्यते – पा०, गा० ।

को हि मूलहरं पक्षं न्यायवाद्यध्यवस्यति ।
येन तत्सिद्ध्युपायोऽपि स्वोक्त्यैवास्य विनश्यति ॥ २८१४ ॥
सापेक्षं हि प्रमाणत्वं न व्यवस्थाप्यते क्वचित् ।
अनवस्थितहेतुश्च कः साध्यं साधयिष्यति ॥ २८१५ ॥

स्वतःप्रामाण्यनिरसनम्

इत्येवमिष्यतेऽर्थश्चेन्ननु चाव्यतिरेकिणी ।
शक्तिः सर्वपदार्थानां पुरस्तादुपपादिता ॥ २८१६ ॥
इष्टकार्यसमर्थं हि स्वरूपं शक्तिरुच्यते ।
तस्य भावात्मनाभावे[1] भावो न स्यात् सकारकः ॥ २८१७ ॥

---

प्रामाण्यव्यवस्थानस्य । तदेव हीति प्रामाण्यम्, व्यापकनिवृत्तौ व्याप्यस्यानवस्थानात् ॥ २८१३ ॥

स्यादेतत्—विनाश्यतां नाम, को दोषः? इत्याह—**को** **हीत्यादि** । मूलम् = प्रामाण्यम्, तच्च सापेक्षत्वेनापह्रियते, तस्य तद्व्यापकविरुद्धत्वात् । तथा हि—निरपेक्षत्वेन प्रामाण्यं व्याप्तम्, तच्च कथं स्वव्यापकविरुद्धे सापेक्षत्वे सत्यवस्थां लभेत । येनेत्यादिना प्रामाण्यस्यानपेक्षत्वेन प्राप्तिं दर्शयति—**येनेति** । यस्मादित्यर्थः ॥ २८१४ ॥

कथं विनश्यति? इत्याह—**सापेक्षं** **हीति** । न व्यवस्थाप्यत इति । अनवस्था स्यात् । भवत्वनवस्थादोषः? इत्याह—**अनवस्थित** इत्यादि । अनवस्थितः = अपरिनिश्चितो हेतुर्यस्य वादिनः स तथोक्तः । एतदुक्तं भवति—ज्ञातो हि ज्ञापको व्याप्यमर्थं ज्ञापयति, न सत्तामात्रेण, ततश्च वादी स्वयमेव वा तदप्रतिपन्नः कथं परप्रतिपादनाय साधनमुपादास्यते ? ॥ २८१५ ॥

**इत्येवमित्यादिना** दूषणमारभते । [G 747] तत्र स्वाभाविकीति कोऽर्थोऽभिप्रेतः? किं नित्यत्वेन निर्हेतुकत्वात् स्वाभाविकी, आहोस्विदनित्याऽपि सती स्वहेतुभ्यो ज्ञानानां स्वभावनिष्पत्तिकाल एव भवति, न तूत्तरकालं हेत्वन्तरेणाधीयत इति कृत्वा स्वाभाविकीति विकल्पद्वयम् । तत्र न तावदाद्यो विकल्पः, तथा हि—सा व्यतिरिक्ता वा भवेद्, अव्यतिरिक्ता वा, यद्वा उभयानुभयस्वभावा—इति चत्वारः

---

१ °त्मताभावे—पा०, गा० ।

सा चानित्येदृशी शक्तिः स्वहेतुबलभाविनी ।
स्वाभाविकी प्रमाणानां युष्मासिः कथमिष्यते ॥ २८१८ ॥
स्वाभाविक्या हि शक्तौ स्यान्नित्यता हेतुताथ वा ।
प्रमाणानां च तादात्म्यान्नित्यताहेतुते ध्रुवम् ॥ २८१९ ॥
सदाभावोऽस्य याऽभावोऽहेतुत्वेऽप्यनपेक्षणात् ।
अतः कार्यं तदायत्तं कादाचित्कं न युज्यते ॥ २८२० ॥
दृश्यते च प्रमाणानां स्वरूपं कार्यमेव च ।
कादाचित्कमतः शक्तिर्युक्ता[1] स्वाभाविकी न च ॥ २८२१ ॥

पक्षः । तत्र न तावदाद्यः, सम्बन्धासिद्धेः पदार्थस्याकारकत्वप्रसङ्गाच्चेत्यादिना सर्वपदार्थानामव्यतिरिक्तैव शक्तिरिति बहुशः प्रतिपादितत्वात् । एतदेव सूचयन्नाह—दृष्टेत्यादि । कार्यकरणसमर्था हि स्वभावशक्तिः, तस्य च स्वभावस्य भावात्मतायाः अभावे सति स भावः कारको न स्यात्, ततश्चास्यावस्तुत्वप्रसङ्ग इति भावः ॥ २८१६-२८१७ ॥

अथाव्यतिरिक्तेति पक्षः तदा स्वाभाविकी न स्यात्, अर्थस्य हेतुबलभावित्वेनानित्यत्वात् तदव्यतिरिक्ताया अपि शक्तेर्हेतुबलभावित्वेनानित्यताप्रसङ्गात्, अन्यथा हि भिन्नयोगक्षेमत्वादभेदो न स्यात् । एतदेवाह—सा चानित्येदृशीत्यादि ॥ २८१८ ॥

किञ्च— प्रमाणानां शक्त्यव्यतिरेकाच्छक्तिस्वरूपवन्नित्यत्वाहेतुत्वप्रसङ्ग इति दर्शयन्नाह—स्वाभाविक्या हीत्यादि ॥ २८१९ ॥

ततश्च को दोषः इत्याह—सदाभाव इत्यादि । [G 718] अहेतुत्वे सदाभावोऽभावो वा । नित्यत्वे तु सदाभावोऽनुक्त[2] सिद्ध एवेति नोक्तः । अपरमपि प्रसङ्गमाह—अत इत्यादि । तदायत्तमिति प्रमाणायत्तम् । एतेन यथायोगं प्रत्यक्षानुमानविरोधौ प्रतिज्ञाया दर्शितौ । तथा हि—प्रमाणानां स्वरूपं कादाचित्कं प्रत्यक्षत एव सिद्धम् । अनुमानतोऽपि कार्यक्रमतोऽनुमितम्, ततश्च तस्य नित्यत्वाभ्युपगमः स्फुटतरमेव प्रमाणाभ्यां बाध्यत इति ॥ २८२०-२१ ॥

१ ०र्युक्ता—पा० गा० ।  २. ०नु —पा०, ०नुक्तोऽपि—गा० ।

प्रमाणानां स्वरूपं चेद् व्यञ्जकैर्व्यक्तमीक्षते[1] ।
प्रत्ययान्तरसापेक्षं कार्यमारभते च तत् ॥ २८२२ ॥
व्यक्तिहेत्वन्तरापेक्षे व्यक्ते नित्यस्य वस्तुनः ।
तस्मात् तद्रूपकार्याणां नित्यं स्यादुपलम्भनम् ॥ २८२३ ॥
पृथक्त्वमुभयात्मत्वं वाऽस्तु शक्तेस्तथापि तत् ।
ज्ञानं नित्यं भवेदेव नित्यशक्त्या हि सङ्गतम् ॥ २८२४ ॥

---

प्रमाणानामित्यादिना परस्य यथोक्तप्रसङ्गद्वयसमर्थनोपायमाशङ्कते[2] । यदा हि व्यञ्जकैः प्रमाणस्वरूपं व्यज्यते, तदा तदुपलभ्यते, नान्यदेति । तेन सत्यपि नित्यत्वे न सर्वदोपलब्धिप्रसङ्गः । नापि कार्यस्य सदा सद्भावप्रसङ्गः; कारणान्तरापेक्षस्य कार्यारम्भकत्वाभ्युपगमात्, न केवलस्य[3] । तेन कारणान्तरसन्निधानासन्निधानाभ्यां कार्यस्य कादाचित्कता भवतीति भावः ॥ २८२२ ॥

व्यक्तीत्यादिना प्रतिविधत्ते । व्यक्तिश्च हेत्वन्तरापेक्षा चेति व्यक्तिहेत्वन्तरापेक्षे । पूर्वं हि श्रुतिपरीक्षायां विस्तरेण व्यक्तिर्नित्यस्य निरस्ता । हेत्वन्तरापेक्षा चानुपकार्यस्यायुक्तेति प्रतिपादितम् । तद्रूपकार्याणामिति । तेषाम् = प्रमाणानाम् । रूपकार्याणि — रूपम् = स्वभावः । उभयपक्षस्तु विरोधाद् यथोक्तपक्षद्वयभाविदोषप्रसङ्गाच्च न युक्तः । नाप्यनुभयपक्षः, परस्परव्यवच्छेदरूपाणामेकनिषेधस्यापरविधिनान्तरीयकत्वात्, तदानीमेव विहितस्य निषेधो युक्तः; एकत्र विधिप्रतिषेधयोर्विरोधादिति भावः । स्फुटतरत्वाद् दूषणस्यैतन्नोक्तम् ॥ २८२३ ॥

इदानीमन्तिमं पक्षत्रयमभ्युपगम्य दूषणमाह—पृथक्त्वमित्यादि । पृथक्त्वम् = व्यतिरेकपक्षः । उभयात्मकग्रहणमुपलक्षणम् । अनुभयात्मकपक्षाङ्गीकारोऽपि द्रष्टव्यः । यद्वा—तस्याप्युभयरूपप्रतिषेधमात्रत्वादुभयात्मकत्वमस्त्येव । अस्मिन् पक्षत्रयेऽपि नित्यया शक्त्या ज्ञानस्य सम्बन्धान्नित्यत्वं स्यात् ॥ २८२४ ॥

---

1. °व्यक्तिमश्नुते—पा॰, गा॰ ।
2. ° द्वयसमाधानोपा°—गा॰ ।
3. °केवलस्य—पा॰, गा॰ ।

अन्यथा हि न नित्या स्यादेकरूपासमन्वयात् ।
कदाचित् सा हि सम्बद्धा तज्ज्ञानेन न चान्यदा ॥ २८२५ ॥
अथ शक्तिः स्वहेतुभ्यः प्रमाणानां प्रजायते ।
जातानां तु स्वहेतुभ्यो नान्यैराधीयते पुनः ॥ २८२६ ॥
तत्र न विवादो नः को ह्यनंशस्य वस्तुनः ।
स्वहेतोरुपजातस्य शक्तिं पश्चात् प्रकल्पयेत्[1] ॥ २८२७ ॥
पश्चादुत्तरकालं हि रूपमाधीयते परैः ।
तद्रूपान्तरमेवेति न तस्यात्मापविश्यते[2] ॥ २८२८ ॥
विरुद्धधर्मसङ्गो हि वस्तूनां भिन्नतोदिता ।
तन्निष्पत्तावनिष्पत्तेः शक्तावपि स विद्यते ॥ २८२९ ॥

[G 749] कथम् ? इत्याह—अन्यथा हीत्यादि । अन्यथा हि यदि शक्तिसम्बद्धं ज्ञानमनित्यं भवेत्, तदा शक्तेर्नित्यत्वं न प्राप्नोति । कुतः ? एकरूपासमन्वयात् । एकस्वभावानुगमाभावादित्यर्थः । तमेवैकरूपासमन्वयं दर्शयति—कदाचिदित्यादि । अनित्ये हि विज्ञाने सति शक्तेस्तज्ज्ञानसम्बन्धासम्बद्धस्वभावद्वयं स्यात् । न चैकस्य परस्परविरुद्धस्वभावद्वयसम्भवो युक्तः, एकत्वहानिप्रसङ्गात्, भेदव्यवहारोच्छेदापत्तेश्च ॥ २८२५ ॥

द्वितीयं विकल्पमधिकृत्याह—अथेत्यादि ॥ २८२६ ॥

तत्रेत्यादिना सिद्धसाध्यतां पक्षदोषमाह । तथा हि—स्थिरास्थिरस्वभावभेदेन द्विप्रकारस्यापि पदार्थस्य निरंशत्वात् सर्वात्मना परिनिष्पत्तेर्नोत्तरकालं प्रत्ययान्तरेणात्मभूता शक्तिराधातुं पार्यते । आधाने वार्थान्तरकरणमेव स्यात्, न तु स्वभावभूतशक्त्याधानम् । आत्मभावानभ्युपगमे वा शक्तेर्भावस्याकारकत्वप्रसङ्ग[2] इत्युक्तम् ॥ २८२७–२८२८ ॥

स्यादेतत्—मा भूदनंशस्य वस्तुन उत्तरकालं शक्त्याधानम्, सांशस्य कस्मान्न भवति ? इत्याह—विरुद्धधर्मसङ्गो हीत्यादि । स विद्यत इति विरुद्धधर्मसङ्गः ॥ २८२९ ॥

१. °रात्मापदिश्यते—पा०, गा० । २ °कारकत्वप्रसङ्गः—पा०, गा० ।

साधितक्षणभङ्गाश्च सर्वेऽर्था इति तेषु न।
प्रत्ययान्तरभावात्तु शक्ति[1] किञ्चन शक्तिमत् ॥ २८३० ॥
न हि तेषामवस्थानं परस्तादस्ति येन ते।
प्रत्ययान्तरतः शक्ति लभेरन् कुत्रचित् फले ॥ २८३१ ॥
एतावत् तु वदन्त्यत्र सुधियः सौगता इमे।
ज्ञाने क्वचित् स्थिताप्येषा न बोद्धुं शक्यते स्वतः ॥ २८३२ ॥
यथार्थस्थितविज्ञेयवस्तुबोधाप्तिशक्तिताम्[2] ।
को नामानुभवात्मत्वान्निश्चेतुं केवलात् प्रभुः ॥ २८३३ ॥
अप्रमाणेऽपि येनैतत् केशपाशादिदर्शने।
विद्यतेऽनुभवात्मत्वं विस्पष्टाकारभासिनि ॥ २८३४ ॥

अस्थिरे तु भावे विशेषेण दूषणमाह—साधितेत्यादि। [G. 750] कुत्रचित् फल इति[3] अर्थनिश्चयादौ[3]। शेषं सुबोधम् ॥ २८३०-२८३१ ॥

स्यादेतत्—यदि भवतां न विवादः, कथं तर्हि परतःप्रामाण्यमभ्युपगतम् ? इत्यत आह—एतावत् त्वित्यादि। बोद्धुमिति निश्चेतुम्। स्वत इति विज्ञानस्वरूपादनुभवमात्रादनपेक्षितोत्तरकालभाविकार्यसंवादात् ॥ २८३२ ॥

स्यादेतत् - विज्ञानाव्यतिरेकाच्छक्तेर्विज्ञानग्रहणे सापि गृहीतैव, तत् कथं बोद्धुं न शक्यते ? इत्याह—यथार्थस्थितेत्यादि। बोधश्चासौ आप्तिश्च बोधाप्ती, यथावस्थितस्य विज्ञेयस्य वस्तुनो ये बोधाप्ती, तत्र = तद्विषये, शक्ततेति विग्रहः। केवलादिति। सम्वन्धादिकारणगुणपरिज्ञानानपेक्षात् ॥ २८३३ ॥

कस्मान्न प्रभुः ? इत्याह—अप्रमाणेऽपीत्यादि। केशपाशादिदर्शन इति। केशोण्डुकादिदर्शने। अनेनैतदाह— यद्यप्यनुभूता शक्तिः, तथाप्यप्रमाणसारूप्याद् भ्रान्तेर्निश्चेतुं न शक्यते, त्रिपादिशक्तिवत्। न ह्यनुभव एव केवलो निश्चयहेतुः; अन्यस्याप्यभ्यासादेरपेक्षणात्। यत्र ह्यसौ भ्रान्तिनिमित्तेन न गुणान्तरमारोप्यते, तत्रैव निश्चयः ॥ २८३४ ॥

१. शक्तौ—पा०, गा०।
२. ०प्राप्तताम्—पा०, गा०।
२-३. इत्यर्थः निश्चयादौ—बौ०।

तस्मादर्थक्रियाज्ञानमन्यद् वा समपेक्ष्यते ।
निश्चयायैव न त्वस्या आधानाय विषादिवत् ॥ २८३५ ॥
यथा हि विषमद्यादेस्तदन्यसमतेक्षणात् ।
फलानन्तरताभावाच्चैतदात्माविनिश्चये[1] ॥ २८३६ ॥
मूर्च्छास्वेदप्रलापादितत्फलोत्पत्तिनिश्चये ।
तादात्म्यं गम्यतेऽप्येवं ज्ञाने तच्छक्तिनिश्चयः ॥ २८३७ ॥
किञ्चाविवादमेवेदं प्रामाण्यं शक्तिलक्षणम् ।
प्रमाणान्तरनिश्चेयमित्येवं हि त्वयोदितम् ॥ २८३८ ॥
शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः ।
इत्यर्थापत्तितः सिद्धं न सिद्धं परतः कथम् ॥ २८३९ ॥
निष्पन्नानन्यरूपस्य प्रामाण्यस्य स्वहेतुतः ।

---

कुतस्तर्हि सा निश्चेतव्या[2] ? इत्याह—तस्मादित्यादि । अन्यद्वेति हेतुशुद्धिज्ञानम् । न त्वस्या आधानायेति । अन्यदपेक्षत इति सम्बन्धः । अस्या इति शक्तेः । निश्चयस्य पुरुषाधारत्वात् तदुत्पत्तये युक्ता कारणान्तरापेक्षा, [G 751] न त्वाधानाय; तस्य वस्त्वाधारत्वात्, शक्तेश्च सहभावनिष्पत्तौ निष्पन्नत्वादिति भावः ॥ २८३५ ॥

यथा हीत्यादिना विषादिवदिति दृष्टान्तं व्याचष्टे । तदन्यसमतेक्षणादिति । तस्माद्विषादेरन्यदगारधूमकादि, तेन समता = सारूप्यम्, तस्या ईक्षणमिति विग्रहः । फलानन्तरताभावादिति । फलं मूर्च्छादि, तस्यानन्तरताया अभावादिति विग्रहः । अनन्तरं फलाभावादिति यावत् । एतदात्माविनिश्चय इति विषाद्यात्माविनिश्चये[3] । तादात्म्यमिति विषादिस्वभावत्वम् । तच्छक्तिनिश्चय इति यथावस्थितज्ञेयवस्तुबोधशक्तिनिश्चयः ॥ २८३६–३७ ॥

स्ववचनविरोधं प्रतिज्ञायाः प्रतिपादयन्नाह—किञ्चेत्यादि । न सिद्धं परतः कथमिति । सिद्धमेव; अर्थापत्तेः प्रमाणान्तरत्वादिति भावः ॥२८३८-३९॥

---

१ ०निश्चयः—गा० । २. निश्चेतव्या—गा० ।
३. विषाद्यात्माविनिश्चयः—गा० ।

तस्मादर्थक्रियाज्ञातमन्यद् या समपेक्ष्यते ।
निश्चयायैव न त्वस्या आधानाय विषादिवत् ॥ २८३५ ॥
यथा हि विषमद्यादेस्तदन्यसमतेक्षणात् ।
फलानन्तरताभावाच्चैतदात्मा विनिश्चये[1] ॥ २८३६ ॥
मूर्च्छास्वेदप्रलापादितत्फलोत्पत्तिनिश्चये ।
तादात्म्यं गम्यतेऽप्येवं ज्ञाने तच्छक्तिनिश्चयः ॥ २८३७ ॥
किञ्चाविवादमेवेदं प्रामाण्यं शक्तिलक्षणम् ।
प्रमाणान्तरनिश्चेयमित्येवं हि त्वयोदितम् ॥ २८३८ ॥
शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः ।
इत्यर्थापत्तितः सिद्धं न सिद्धं परतः कथम् ॥ २८३९ ॥
निष्पन्नानंशरूपस्य प्रामाण्यस्य स्वहेतुतः ।

---

पुनस्तर्हि सा निश्चेतव्या[2] ? इत्याह—तस्मादित्यादि । अन्यद्वेति हेतुशुद्धिज्ञानम् । न त्वस्या आधानायेति । अन्यदपेक्षत इति सम्बन्धः । अस्या इति शक्तेः । निश्चयस्य पुरुषाधारत्वात् तदुत्पत्तये युक्ता कारणान्तरापेक्षा, [ C 731 ] न त्वाधानाय, तस्य शक्त्याधारत्वात्, शक्तेश्च सहभावनिष्पत्तौ निष्पन्नत्वादिति भावः ॥ २८३५ ॥

यथा हीत्यादिना विषादिवदिति दृष्टान्तं व्याचष्टे । तदन्यसमतेक्षणादिति । तस्माद्विषादेरन्यदगारधान्यादि, तेन समता = सारूप्यम्, तस्या ईक्षणमिति विग्रहः । फलानन्तरताभावादिति । फलं मूर्च्छादि, तस्यानन्तरताया अभावादिति विग्रहः । अनन्तरं फलाभावादिति यावत् । एतदात्मा विनिश्चय इति विषाद्यात्मा विनिश्चये[3] । तादात्म्यमिति विषादिस्वभावत्वम् । तच्छक्तिनिश्चय इति यथावस्थितज्ञेयवस्तुबोधशक्तिनिश्चयः ॥ २८३६-३७ ॥

स्ववचनविरोधं प्रतिज्ञायाः प्रतिपादयन्नाह—किञ्चेत्यादि । न सिद्धं परतः कथमिति । सिद्धमेव, अर्थापत्तेः प्रमाणान्तरत्वादिति भावः ॥२८३८-३९॥

---

१ •निश्चय –गा• । २ निश्चितव्या—गा• ।
३. विषाद्यात्मविनिश्चय –गा• ।

योऽपि मन्यते—"न नित्यत्वाच्छक्तीनां स्वाभाविकत्वम्, नापि स्वहेतुभ्य एवोत्पत्तेरुत्तरकालं कारणान्तरानपेक्षणात्, किं तर्हि ¹ स्वभावत एव भावाना प्रति नियतरूपा शक्तय समुद्भवन्तीति स्वाभाविकत्वमासाम्। तथा हि—यदेव स्वात्मनि रूपमस्ति कारणानाम्, तदेव तै कार्ये समाधीयते, यथा कपालैरुप जन्यमाने घटे रूपादय स्वगुणद्वारेणैव प्रारभ्यन्ते, उदकाद्याहरणशक्तिस्तु तैरात्मन्यविद्यमानत्वान्नाधीयते घटे, स्वत एव तु सा तस्य प्रादुर्भवति, तथा ज्ञानेऽपि तत्कारणैरिन्द्रियादिभिरर्थपरिच्छेदशक्तिरात्मन्यविद्यमानत्वान्नाधीयते, स्वत एव सा तस्य भवतीति। अत स्वाभाविकी शक्ति" इति, तस्याप्येतत् प्रलाप मात्रम्, अनेन न्यायेनाप्रामाण्यस्यापि स्वत एव प्रसङ्गात्। तथा हि तदपि विपरीतार्थपरिच्छेदादिशक्तिलक्षणम्, न च नयनादीना तथाविधशक्तियोगोऽस्तीति। किञ्च—यथात्मन्यविद्यमानं रूपं कारणैर्नाधीयते कार्ये, तथा कथमि न्द्रियादयो ज्ञाने¹ रूपतामात्मन्यसतीमादधति विज्ञाने। ²अथाविद्यमानापि [G 753] सा तैराधीयते ³ अर्थपरिच्छेदशक्ति³ किं नादधीरन्। न हि तदाधाने तेषा कश्चित् प्रतिरोद्धा।

किञ्च—यदि तावद्व्यतिरेकिण्य शक्तयो भावादभ्युपगम्यन्ते, तदा भाव स्वरूपवत् तासामपि हेतुप्रतिबद्धैरात्मस्थितिरिति कुत स्वाभाविकत्वमासाम्। अथ व्यतिरेकिण्य, तदा स्वयमेव भावान् स्वाश्रयैस्तासा सम्बन्ध सिद्धयति, तेषा तदनुपकारकत्वात्। न चानुपकारक आश्रयो युक्त, अतिप्रसङ्गात्।

किञ्च—अनिमित्ता स्वातन्त्र्येणैता भवन्त्यो न देशकालनियममपेक्षेरन्। तथा हि—यस्य किञ्चित् क्वचिदायत्तमन्यत्र वा नोपजायते, न वा यत् पुनरनायत्त स्वातन्त्र्येण प्रवृत्तम्, तत्किमिति कदाचित् क्वचिद् विरमेत्। ततश्च प्रतिनियत शक्तियोगिता भावाना न स्यात्, अन्यथा सर्वस्य सर्वत्रोपयोग स्यादिति।

अन्ये⁴ तु मन्यन्ते—"तत्कार्यदर्शनमाश्रित्येदमुच्यते—'स्वत सर्वप्रमाणा-नाम्' इत्यादि, यत सर्वे एव भावा सन्त एव कारणै क्रियन्ते कार्योत्पादनियमात्।

१ ज्ञानेन—पा॰। २ तथा॰—पा॰, यथा॰—पा॰।
३ तथा॰—पा॰। ४. तद्दूषणमतमतत् प्रतीयते।

न ह्यसन्तो व्योमकुसुमादयः क्वचिदपि शक्यन्ते कर्तुम्, सिकतासु वा तैलम्। असत उत्पत्तौ सर्वस्यासत्त्वेऽतिशयाभावात् सर्वदा सर्वत्र चोत्पत्तिः स्यादिति? तदेतदयुक्तम्; कारणवैयर्थ्यप्रसङ्गात्। असत् तावद् भवन्मते न किञ्चित् क्रियते। सतोऽपि सर्वनिराशंसत्वान्न किञ्चित् कर्त्तव्यमस्तीति किं हि कुर्वंस्तस्य तत्कारकं भवेत्। अतः कार्यकारणत्वाभावप्रसङ्गः। अभिव्यक्तिः सतः क्रियत इति चेत्? न; तस्या अपि सदसत्त्वेन करणविरोधात्। यतस्तत्रापीदं विकल्पद्वयमवतरति—किं सा सती क्रियते? आहोस्विदसतीति? प्रथमे पक्षेऽतिशयाभावात् करणानुपपत्तिरित्युक्तम्। तत्राप्यभिव्यक्त्याश्रयणेऽनवस्थाप्रसङ्गः। नापि द्वितीयः पक्षः; असतः क्रियानभ्युपगमात्। अभ्युपगमे वा भावस्याप्यसतः करणप्रसङ्गात्।

किञ्च—अर्थान्तरभूता वा भावादभिव्यक्तिः क्रियेत? अनर्थान्तरभूता वा? यद्यर्थान्तरभूता क्रियेत, तदा भावस्य न किञ्चित् कृतं स्यात्। न ह्यन्यस्य करणेऽन्यत् कृतं नाम; अतिप्रसङ्गात्। तत्सम्बन्धिन्यभिव्यक्तिः क्रियत इति चेत्? न; अनुपकार्यतया तत्सम्बन्धित्वासिद्धेः। उपकारे वाभ्युपगम्यमाने तस्याप्यर्थान्तरत्वेऽनवस्थाप्रसङ्गात् सम्बन्धासिद्धिः। अनर्थान्तरत्वेऽपि कारणानां वैयर्थ्यप्रसङ्गः। भावादेवाभयभूतादुपकारस्वभावाया अभिव्यक्तेरुत्पादान्नित्याभिव्यक्तिप्रसङ्गः; स्वभावस्याभिव्यञ्जककारणस्य सर्वदा विद्यमानत्वात्। नाप्यनुपकार्यस्य परापेक्षा युक्तेति प्रतिपादितं बहुधा।

अथानर्थान्तरभूताभिव्यक्तिः क्रियत इति पक्षः? सोऽप्ययुक्तः; अतिशयाभावात्। तथा हि—अनर्थान्तरभूता क्रियत इति भावस्वभावः क्रियते—इत्युक्तं भवति। तस्य च सत्त्वेन सर्वनिराशंसत्वात् करणमयुक्तमित्येतदेव [G 754] चिन्त्यते।

किञ्च—अभिव्यक्तिवद् भावस्याप्यसतः करणं स्यात्; अव्यतिरेकात्। भावस्वभाववद् वाभिव्यक्तेरपि सत्या एव करणप्रसङ्गः। न चैतदपि युक्तम्; अतिशयाभावात्। अनवस्थाप्रसङ्गादित्युक्तम्। सदर्थविषये च कारणव्यापार इष्यमाणे कारणानां कार्यक्रियानुपरमप्रसङ्गः। किं हि तदोपरम्य कारणानि निवर्त्तेरन्? कार्यसत्तामिति चेत्? न; भवन्मत्या तस्याः प्रागपि भावात्। तस्माद-

सदेवोत्पद्यते, यस्य कारणमस्ति, न व्योमकुसुमादि, तदुत्पादनसमर्थकारणाभावादिति। अत कारणशक्तिप्रतिनियमात् कार्यकारणभावनियमो भविष्यति। न हि सर्वो भाव सर्वोत्पादनसमर्थोऽङ्गीक्रियते, अनादिस्वहेतुपरम्परया सर्वभावाना शक्तेर्नियमितत्वात्। यदि चासत्प्रामाण्यमन्येन कर्तुं न शक्यत इति स्वतस्तदुच्यते ? अप्रामाण्यमपि तर्ह्यनेनैव न्यायेन स्वत एव प्राप्नोतीति यत्किञ्चिदेतत्।

योऽपि मन्यते—"प्रामाण्य नाम विज्ञानस्यार्थपरिच्छेदोत्पादिका शक्ति, शक्तिश्च क्षणिकविज्ञानाश्रितत्वात् स्वतोऽसती न शक्यते कर्तुम्, कालत्रयेऽपि तस्या क्रियानुपपत्ते। तथा हि न तावत् प्राग्विज्ञानोत्पत्ते क्रियते, आश्रितत्वात्। न ह्याश्रितस्याश्रयाभावे करण युक्तम्, यथा—कुड्याभावे चित्रस्य, अनाश्रितत्वप्रसङ्गात्। अत एव सहकरणमप्ययुक्तम्, आश्रितत्वात्। न हि कुड्यालेख्ययोराश्रयाश्रितयोर्युगपदारम्भ सम्भवति। नाप्युत्पन्नस्य सतो विज्ञानस्य पश्चात्क्रियते, क्षणिकत्वात्, तावत्काल स्थितेरभावात्। अत सर्वप्रमाणाना स्वत प्रामाण्यमुच्यते" इति, तदेतदसम्यक्, तथा हि—यत्तावदुक्तम्—'अर्थपरिच्छेदोत्पादिका शक्ति प्रामाण्यम्' इति, तदसम्बद्धम्, अर्थपरिच्छेदस्य ज्ञानपर्यायत्वात्। न च तदेव ज्ञानमाश्रिता सती शक्तिस्तस्यैवोत्पादिका युज्यते, अनाश्रितत्वप्रसङ्गात्, समानकाले च कार्यकारणभावादनुपपत्ते।

यच्चोक्तम्—'आश्रितत्वात् सह प्राक् न क्रियते' इति, तदप्ययुक्तम्, अव्यतिरेकादाश्रितत्वासिद्धे। भावस्वभाव एव हि विशिष्टार्थक्रियाकारी तद्भावमात्रजिज्ञासाया शक्तिरिति व्यपदिश्यते, नार्थान्तरम्। अर्थान्तरत्वे भावस्याकारकत्वप्रसङ्ग सम्बन्धासिद्धिश्चेति [1]निर्लोठितमेतद् बहुश। तस्मात् स्वभावभूता विज्ञानस्य शक्तिरभिन्नयोगक्षेमत्वाद् विज्ञानस्यैववत् प्राग्विज्ञानोत्पत्तेरसत्येव क्रियत इत्यविरुद्धम्। सहैव च विज्ञानेनोत्पद्यत इत्यपि युक्तमेव, स्वभावभूतस्य धर्मस्य भावेन सहैकयोगक्षेमत्वात्।

भवतु नाम शक्तेर्व्यतिरेक पदार्थात्, तथापि सदसतोराश्रितत्वानुपपत्तेराश्रितत्वमसिद्धम्। तथा हि—सत् तावन्नाश्रयते, तस्य सर्वात्मना निष्पत्तेर्निरपेक्ष-

1 निर्लोठित०—पा०, गा०।

त्वात् । नापि स[1] तस्या[1] आश्रयो युक्तः; तस्याकिञ्चित्करत्वात् । [G. 755] यथा विन्ध्यो हिमवतः । स्थितिस्तेन क्रियत इति चेत् ? न; स्थितेः स्थातुरव्यतिरेकात् । स्थातुरेव हि स्वभावस्तथा भेदान्तरप्रतिक्षेपेणोच्यते । न च तेनाश्रयेणावस्थातुरात्मा क्रियत इत्यकिञ्चित्कर एव । व्यतिरेकेऽपि स्थितेः स्थातुः स्थापकोऽकिञ्चित्कर एव; अर्थान्तरभूतायाः स्थितेः करणात् । न चान्यस्य करणेनान्यस्य किञ्चित् कृतमित्युभयथापि स्थापकस्याकिञ्चित्करत्वम् । तत्सम्बन्धिनीं स्थितिं करोतीति चेत् ? न; स्थाप्यस्थापकयोरिव स्थितिमतः स्थित्या सह सम्बन्धासिद्धेः, अनवस्थाप्रसङ्गश्चेति निर्लोटितप्रायमेतत्[2] ।

किञ्च—यदि पदार्थस्य स्थापिका स्थितिरर्थान्तरभूताऽङ्गीक्रियते, तदा न कस्यचित् पदार्थस्य विनाशः प्राप्नोति; स्थापिकायाः स्थितेर्विद्यमानत्वात् । नापि विनाशहेतुवशात् सत्यामपि स्थितौ विनाशो भविष्यतीति शक्यं वक्तुम्; तस्याप्यकिञ्चित्करत्वादयुक्तं विनाशकत्वम् । तथा हि तत्राप्ययं विकल्पोऽवतरत्येव—किं भावादर्थान्तरभूतं विनाशं नाशहेतुः करोति ? आहोस्विद्भावमेव ? न तावद् भावमेव करोति; तस्य निष्पन्नत्वात् । अन्यस्य च करणे भावस्य न किञ्चित्कृतमिति तदवस्थत्वात् । भावस्य 'यनश्वराभावादकिञ्चित्करो विनाशहेतुरिति चर्चितमेतत् स्थिरभावपरीक्षायां विस्तरेण ।

किञ्च—प्रकृत्या भावोऽस्थिरस्वभावो वा स्यात् ? स्थिरस्वभावो वा ? तत्र यदि प्रकृत्यैवास्थिरात्मा भावः स्वहेतोरुत्पन्नः, तदा तेन स्वभावनिष्पत्तेरूर्ध्वं स्वयं न स्थातव्यमेव—इति तस्याकिञ्चित्करौ द्वावपि स्थितिनाशहेतू । अथ प्रकृत्या स्थिरात्मा भावः, तथापि तस्य स्वभावान्यथात्वासम्भवान्न कश्चिद् विनाशकः, स्वयमेव स्थास्यत्यतो नापि कश्चित् स्थापकः—इत्युभयथा स्थितिनाशहेतू अकिञ्चित्करौ ।

नाप्यसदाश्रयत इति पक्षः; तस्य सर्वस्वभावरहितत्वेनाधेयत्वव्यापारयोरसम्भवाच्छशविषाणवदित्यसिद्धमाश्रितत्वं शक्तेः । सिद्धौ वाऽनैकान्तिकत्वम्; आश्रितानामपि रूपादीनां घटे सहोत्पत्तिदर्शनात्, अप्रामाण्येऽपि प्रसङ्गाच्च । तथा हि—

---

१–१. स्वतः—पा॰, गा॰ ।

२. निर्लोडित॰—पा॰, गा॰ ।

प्रकारान्तरेण वेदप्रामाण्यं समर्थयतो
मीमांसकस्य खण्डनम्

स्वतस्तस्य प्रमाणानां प्रामाण्यस्योपवर्णनात् ।
स्वकार्ये वृत्तिर्जातानामयाप्यभिमता स्वतः ॥ २८४६ ॥
आत्मलाभे हि भावानां कारणापेक्षितेष्यते ।
लब्धात्मानः[1] स्वकार्येषु वर्त्तन्ते स्वयमेव तु ॥ २८४७ ॥

---

अप्रामाण्यमपि विपरीतार्थपरिच्छेदोत्पादिका शक्तिः । शक्तेश्च विज्ञानाश्रितायाः कालत्रयेऽप्यकरणात् प्रामाण्यवदप्रामाण्यात्मिका शक्तिः स्वत एव प्रसज्येत ।

किञ्च—यदि कालत्रयेऽपि ज्ञानस्य शक्तिर्न प्रादुर्भवति, तदा सर्वसामर्थ्यशून्यं विज्ञानं प्राप्नोति । यस्य हि यो धर्मः कालत्रयेऽपि न सञ्जायते, स कथं तस्य सम्भवेत्, यथाऽऽकाशस्य मूर्त्तत्वम् ! कुतो वा शक्तिमिदिदमत्यद्भुतमिन्द्रजालं शिक्षितम्, येनैता विज्ञानस्य कालत्रयेऽप्यसमासादितसम्भवा अपि सत्यस्तेन सह सङ्गतिमनुभवन्तीति ! किमप्येतन्महाद्भुतं[2] नियमादनुभवन्तीति चेत् ! न; सर्वस्य शक्तियोगितामसङ्गात्, नियामकाभावात् । न ह्यस्य तस्य प्रतिनियतपदार्थयोगितायां [G 750] किञ्चित् कारणं नियामकं पश्यामो येनैता विज्ञानस्य भवेयुः, नान्यस्येति । ततश्च प्रत्यासत्तिनिबन्धनाभावात् सर्वस्यैवैता प्राप्नुवन्तीत्युक्तमेतत् । न चापि तासामकिञ्चित्कर. कश्चिदाश्रयो युक्तः; नित्यत्वेन कस्यचित् स्वभावविशेषस्य कर्त्तव्यस्याभावादित्यलं बहुना ॥२८४२–२८४५॥

पुनरपि प्रकारान्तरेण प्रतिज्ञार्थं विकल्पयन्नाह— स्वत इत्यादि । एतदुक्तं भवति—अथ स्वत प्रामाण्यमित्यनेनायमर्थोऽभिप्रेत —जातानामुत्तरकाल स्वत एव कारणान्तरानपेक्षाणां[3] वृत्ति = हेतुभाव इति यावत् । तेन यथोक्तदोषानवसर इत्यभिप्रायः परस्य । तत्र प्रमाणानां स्वकार्यं स्वगतप्रामाण्यनिश्चय., अर्थनिश्चयो वा । एतस्मिन् स्वकार्ये कर्त्तव्ये न हेतुमपेक्षन्ते ॥ २८४६ ॥

कुतस्तर्ह्येषां व्यपेक्षा ! इत्याह—आत्मलाभे हीत्यादि ॥ २८४७ ॥

---

१. लब्धात्मनाम्—इत्यपि पाठः क्वचित् ।

२. महद्भुतं—पा०, गा० ।      ३. ०स्वकार्ये—गा० ।

उत्पादमात्र एवातो व्यपेक्षास्ति स्वहेतुषु ।
ज्ञानानां स्वगुणेष्वेषा न तु निश्चयजन्मनि ॥ २८४८ ॥
जनने हि स्वतन्त्राणां प्रामाण्यार्थविनिश्चितेः ।
स्वहेतुनिरपेक्षाणां तेषां वृत्तिर्घटादिवत् ॥ २८४९ ॥
मृत्पिण्डदण्डचक्रादि घटो जन्मन्यपेक्षते ।
उदकाहरणे त्वस्य तदपेक्षा न विद्यते ॥ २८५० ॥
एवं स्वतःप्रमाणत्वमन्ते चावश्यमेव तत् ।
पराधीने प्रमाणत्वे ह्यनवस्था प्रसज्यते ॥ २८५१ ॥
मौलिके च[1] प्रमाणत्वे प्रमाणान्तरसाध्यता ।

---

सामान्येन भावानामात्मलाभं प्रति कारणान्तरानपेक्षितां[2] प्रतिपाद्य ज्ञानेऽपि योजयन्नाह—उत्पादमात्र इत्यादि । स्वगुणेष्विति । निश्चयजन्मापेक्षयाऽऽधारसप्तमी । एतदुक्तं भवति—ज्ञानानां ये स्वगता गुणा अविपरीतबोधात्मकत्वम्, विशुद्धकारणजनितत्वमित्येवमादयः, तेषु निश्चयोत्पादे कर्तव्ये न तेषां हेतुषु व्यपेक्षाऽस्तीति ॥ २८४८ ॥

यद्येवम्, कथं तर्हि तेषां तत्र हेतुभावो भवति ? इत्याह—जनने हीत्यादि । प्रामाण्यं चार्थश्च = प्रमेय इति प्रामाण्यार्थौ, तयोर्विनिश्चितिः[3] । तस्या जनन इति सम्बन्धः । अर्थनिश्चितिरालोचनापेक्षयोच्यते; अन्येषां स्वयमेव निश्चयात्मकत्वात् । वृत्तिरिति । हेतुभाव इत्यर्थः ॥ २८४९ ॥

मृत्पिण्ड इत्यादिना घटादिवदिति दृष्टान्तं व्याचष्टे । [G. 757] एवं प्रतिज्ञार्थाविरोधं समर्थ्य, हेतोस्तद्भावनियतत्वादित्यस्य व्याप्तिं प्रसाधयन्नाह—अन्ते चावश्यमेव तदित्यादि । अन्त इति । सर्वपश्चिमे ज्ञान इत्यर्थः । तदिति प्रामाण्यम् । कस्मादवश्यमन्तेऽङ्गीकर्तव्यम् ? इत्याह—पराधीन इत्यादि ॥ २८५०–२८५१ ॥

एतदेव दर्शयति—मौलिके चेत्यादि[4] । मूलम् = प्रथमं ज्ञानम्, तत्र

---

१. चेत्—पा०, गा० । २. ॰न्तरापेक्षितां—पा०, गा० ।
३. अनयोर्वि॰—पा०, गा० । ४. चेदित्यादि—पा०, गा० ।

तत्र तत्रैवमिच्छन्तो न व्यवस्थां लभेमहि ॥ २८५२ ॥
यथैव प्रथमं ज्ञानं तत्संवादमपेक्षते ।
संवादेनापि संवादः पुनर्मृग्यस्तथैव हि ॥ २८५३ ॥
कस्यचित् तु यदीष्येत स्वत एव प्रमाणता ।
प्रथमस्य तथाभावे प्रद्वेषः केन हेतुना ! ॥ २८५४ ॥
एवं यदि गुणाधीना प्रत्यक्षादिप्रमाणता ।
गुणाश्च न प्रमाणेन विना सन्ति कदाचन ॥ २८५५ ॥
ततो गुणपरिच्छेदि प्रमाणान्तरमिच्छतः ।
तस्याप्यन्यपरिच्छिन्नगुणायत्ता प्रमाणता ॥ २८५६ ॥
यथैवाद्ये[1] ततश्चैवमनवस्थैव[1] पूर्ववत् ।
तत्र तत्रैवमिच्छन्तो न व्यवस्थां लभेमहि ॥ २८५७ ॥

---

मत्वं मौलिकम् । तत्समवायीति याक्त । तथा हि—परत प्रामाण्यं कदाचिदर्थक्रियासंवादज्ञानाद्वा भवेत ? कारणगुणपरिज्ञानाद्वा ? तत्र न तावदाद्यः पक्ष इति दर्शयन्नाह—यथैवेत्यादि ॥ २८५२–२८५३ ॥

अथापि स्याद्—अर्थक्रियासंवादिज्ञानस्य स्वत एव प्रामाण्यमिष्टम्, तेनानवस्था न भविष्यति ? इत्याह—कस्यचिदित्यादि ॥ २८५४ ॥

द्वितीयेऽपि पक्षेऽनवस्थादोष प्रतिपादयन्नाह—गुणाधीनेत्यादि । गुणाधीनेति कारणगुणपरिज्ञानायत्ता । प्रमाणतेति प्रमाणतानिश्चय । न सन्तीति । सद्व्यवहारयोग्या[2] न सन्तीत्यर्थः । तस्यापीति गुणपरिच्छेदिनः [G. 758] प्रमाणस्य । अन्यपरिच्छिन्नगुणायत्तेति । अन्येन प्रमाणेन परिच्छिन्नो यो गुणस्तन्निश्चयायत्तं प्रामाण्यमित्यर्थः ॥ २८५५-२८५६ ॥

अत्र दृष्टान्तमाह—यथाऽऽद्य इति । यथा प्रथमे ज्ञाने प्रमाणान्तरपरिच्छिन्नगुणायत्ता प्रमाणता, तथान्यत्रापीत्यर्थः । पूर्ववदिति संवादत प्रामाण्यनिश्चयवत् । तत्र तत्रेति पूर्वपूर्वस्मिन् गुणज्ञाने । अथ गुणज्ञानस्य स्वत

---

1–1. यथाद्ये च तथान्यनेत्यनवस्था—पा०, गा० ।
2. सद्व्यवहारयोग्या—पा० ।

गुणज्ञानं गुणायत्तप्रामाण्यमथ नेष्यते ।
आद्यमप्यर्थविज्ञानं नापेक्षेत गुणप्रमाम् ॥ २८५८ ॥
अतो दूरमपि ध्यात्वा प्रामाण्यं यत् स्वतः क्वचित् ।
अवश्याभ्युपगन्तव्यं तत्रैवादौ वरं स्थितम् ॥ २८५९ ॥
संवादगुणविज्ञाने केन वाप्यधिके न ते ।
आद्यस्य तदधीनत्वं यद्बलेन भविष्यति ॥ २८६० ॥
तस्मात् स्वतःप्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् ।
बाधकारणदुष्टत्वज्ञानाभ्यां तदपोह्यते ॥ २८६१ ॥
परायत्तेऽपि चैतस्मिन् नानवस्था प्रसज्यते ।
प्रमाणाधीनमेतद्धि स्वतस्तच्च प्रतिष्ठितम् ॥ २८६२ ॥

---

एव प्रामाण्यमनवस्थाभयादङ्गीक्रियते ? तदार्थविज्ञानेऽपि कः प्रद्वेषः, येन तस्य परतःप्रामाण्यमिष्यते, न तु स्वत इति न हि किञ्चित् कारणमुत्पश्यामः ? तस्मात् तीरादर्शने च शकुनिना सुदूरमपि गत्वा तत्रैव पुनरागन्तव्यमित्ययमप्रतिष्ठाविक्रुमतिपत्त्या[1] ।

एतदेव दर्शयति—गुणज्ञानमित्यादि । गुणायत्तम् = गुणनिश्चयायत्तं प्रामाण्यं यस्य तत् तथोक्तम् ॥ २८५७-२८५९ ॥

स्यादेतत्— संवादगुणज्ञानयोर्मूलज्ञानाद् विशेषोऽस्ति, तेन तयोः स्वतः एव प्रामाण्यं नाद्यस्य ? इत्यत आह—संवादेत्यादि । ननु यदि विज्ञानं स्वतःप्रमाणमेव सति सर्वज्ञानप्रामाण्यप्रसङ्गः ? इत्यत आह—तस्मादित्यादि । उत्सर्गः = सामान्येन विधानम्, तत्र भवमौत्सर्गिकम् । बाधः = अर्थान्यथात्वावधारणं कारणदुष्टत्वज्ञानं चेति बाधकारणदुष्टत्वज्ञाने । ननु[2] च[2] प्रामाण्यमौत्सर्गिकं स्थितं सत् कथमपोह्यते[3], यदप्रामाण्यं[4] [G 759] बाधकारणदुष्टत्वज्ञानाभ्यां प्रतिपाद्येत, तच्च ताभ्यां प्रतिपाद्यमानं परतो भवेत्; तयोरप्यत एवेति चेत्, एवं सति प्रामाण्यवदप्राप्यनवस्था भवेत् ? इत्यत आह—परायत्त इत्यादि । भवेदनवस्था, यदप्रामा-

---

१. ०ष्ठितद्रुम०—गा० । २-२. तथा च—गा० ।
३. कचिदपो०—गा० । ४. ननु च यद—गा० ।

प्रमाणं हि प्रमाणेन यथा नान्येन साध्यते ।
न सिध्यत्यप्रमाणत्वमप्रमाणात् तथैव हि ॥ २८६३ ॥
तुल्यजात्याश्रयत्वे हि प्रतिष्ठा नोपपद्यते ।
विजातेस्त्वन्यहेतुत्वाद् दृढमूलप्रतिष्ठिता ॥ २८६४ ॥
बाधकप्रत्ययस्तावद् अर्थान्यत्वावधारणम् ।
सोऽनपेक्षप्रमाणत्वात् पूर्वज्ञानमपोहते ॥ २८६५ ॥
तत्रापि त्वपवादस्य स्यादपेक्षा पुनः क्वचित् ।
जाताशङ्कस्य पूर्वेण साप्यल्पेन निवर्तते ॥ २८६६ ॥
बाधकान्तरमुत्पन्नं यद्यस्यान्विच्छतोऽपरम्[1] ।

---

प्यप्रमाणतो भवेत्, यावताऽप्रमाणाद् विजातीयादप्रामाण्यमिष्यते । तच्च स्वत एव प्रतिष्ठितमिति कुतोऽनवस्था । ॥ २८६०–२८६२ ॥

एतदेव दर्शयति—प्रमाणं हीत्यादि । विजातेरिति अप्रमाणस्य । अस्य च दृढमूलप्रतिष्ठितेत्यनेन सम्बन्धः । अन्यहेतुत्वादिति हेतुनिर्देशः । अन्यो हेतुः प्रमाणलक्षणो यस्येति विग्रहः । दृढमूलप्रतिष्ठितेति । दृढा = अनवस्थादिदोषैरकम्प्या मूलप्रतिष्ठा यस्य स तथा, तद्भावस्तत्त्वम् ॥ २८६३-२८६४ ॥

स्यादेतत्—यद्यप्यनपेक्ष्यप्रामाण्यो बाधकः प्रत्ययः, तथाप्यबाध्यमानतया प्रतीत एवान्यस्याप्रामाण्यमाधातुं समर्थः, नान्यथेति ? अत आह—बाधकप्रत्ययस्तावदित्यादि । अपोहत इति प्रतिक्षिपति, प्रमाणत्वेन[2] निरस्यतीत्यर्थः ॥२८६५॥

स्यादेतद्—बाधकेऽपि प्रत्यये प्रथमज्ञानस्येव बाधकान्तरं सम्भाव्यत एव, तत् कथं [illegible] बाधकान्तरापेक्षा निवृत्ता, येनास्याबाध्यमानतानिश्चयो भवेत् ? इत्यत आह—तत्रापीत्यादि । तत्रापि क्वचिदिति । अर्थान्यत्वावधारणलक्षणे बाधके प्रत्यये । जाताशङ्कस्येति पुंसः । पूर्वेणेति प्रथमेन ज्ञानेन । सापीति अपवादापेक्षा । अल्पेनेति । यत्नेनेति शेषः ॥ २८६६ ॥

कथं निवर्तते ? इत्याह—बाधकान्तरमित्यादि । [ C. 760 ] यदि

---

१. °न्विष्यतो°—पा°, गा° ।
२. अप्रमाणत्वेन—गा° ।

ततो मध्यमबाधेन, पूर्वस्यैव प्रमाणता ॥ २८६७ ॥
अथानुरूपयत्नेन सम्यगन्वेषणे कृते ।
मूलाभावान्न विज्ञानं[1] भवेद् बाधकबाधकम् ॥ २८६८ ॥
ततो निरपवादत्वात् तेनैवाद्यं बलीयसा ।
बाध्यते तेन तस्यैव प्रमाणत्वमपोह्यते ॥ २८६९ ॥
एवं परीक्षकज्ञानत्रितयं नातिवर्त्तते ।
ततश्चाजातबाधेन नाशङ्क्यं बाधकं पुनः ॥ २८७० ॥
उत्प्रेक्षेत[2] हि यो मोहादजातमपि बाधकम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥ २८७१ ॥
तथा च वासुदेवेन निन्दिता संशयात्मता ।
"नायं लोकोऽस्ति कौन्तेय न परः संशयात्मनः" ॥ २८७२ ॥
(भ० गी० ४. ४०)
यावानेवापवादोऽतो यत्र सम्भाव्यते मतौ ।

निरूपयतस्तस्यापि बाधकस्य बाधकान्तरमुत्पद्यते, तदा मध्यमस्य तृतीयेन बाधितत्वात् प्रथममेव प्रमाणं भवेत् । अथ नोत्पद्यते मूलस्य कारणस्याभावात् ? तदा तेनैव द्वितीयेन बलीयसाऽऽद्यं बाध्यत इति कृत्वा तस्य तेन प्रामाण्यमपोहितं भवति । नातिवर्त्तत इति नातिक्रमति । कोऽसौ ? पुमानिति शेषः । अथ तृतीयेऽपि ज्ञाने द्वितीयज्ञानवद् बाधकापेक्षा कस्मान्न भवति, येन परीक्षकज्ञानत्रयं नित्यं यतः स्यात् ? इत्यत आह—ततश्चेत्यादि । अजातोऽनुत्पन्नो बाधो यस्य प्रमातुः ॥ २८६७–२८७० ॥

कस्मान्नाशङ्क्यम् ? इत्याह—उत्प्रेक्षेत हीत्यादि । क्षयम् = नाशम्; तत्त्वभ्रंशात् ॥ २८७१ ॥

तथा चेत्यादिना प्रवचनेनैतदेव समर्थयते । वासुदेवेनेति विष्णुना । कुन्तेरपत्यं कौन्तेयः = अर्जुनः ॥ २८७२ ॥

यद्येवम्, प्रथमेऽपि ज्ञाने बाधाशङ्का न प्राप्नोति, ततश्च सर्वज्ञानेऽपि

1. विज्ञाने—गा० । 2. उत्प्रेक्षते—पा०, गा० ।

अन्विष्टेऽनुपजाते च तावत्येव तदात्मनि ॥ २८७३ ॥
कदाचित् स्यादपोत्येवं न भूयस्तत्र वस्तुनि ।
उत्प्रेक्षमाणैः स्यातव्यमात्मकामैः[1] प्रमातृभिः ॥ २८७४ ॥
देशकालनरावस्थाभेदाः संव्यवहारतः ।
सिद्धा एव हि ये यस्मिंस्तेऽपेक्ष्या बाधकार्थिना ॥ २८७५ ॥
दूरदेशव्यवस्थानादसम्यग्दर्शने भवेत् ।
अन्याशङ्का क्वचित् तत्र समीपगतिमात्रकम् ॥ २८७६ ॥
अपवादावधिः कालनरावस्थान्तरे न तु ।
व्यपेक्षा विद्यते तस्मिन् मृगतृष्णादिबुद्धिवत् ॥ २८७७ ॥

---

प्रामाण्यप्रसङ्गः ? इत्याशङ्क्याह—यावानेवेत्यादि । [G 761] यत्र = यस्यां मतौ यावानेवापवाद सम्भाव्यते, तावत्येवापवादेऽन्विष्टेऽनुपजाते च, तदात्मनि = तत्र मतौ । स नास्तीत्येव गम्यत इत्यध्याहार्यम् ॥ २८७३–२८७४ ॥

कुत्र कियानपवाद सम्भाव्यते ?—इत्येतद्दर्शयन्नाह—देशेत्यादि । देशश्च कालश्च नरश्चावस्था चेति तथोक्ताः, तासां भेदा इति समासः ॥ २८७५ ॥

एते च देशादिभेदा कस्यचिदेव केचिद् बाधकाः, न तु सर्वे सर्वस्य । तेन न सर्वत्र सर्वेषामाशङ्का कार्या—इत्येतद्दर्शयन्नाह—दूरदेशेत्यादि । अन्याशङ्केति । अन्यस्य बाधकस्याशङ्का अन्याशङ्का । क्वचिदिति मरीचिकादौ । समीपगतिमात्रकमिति । अपवादावधिरिति सम्बन्धः । एतदुक्तं भवति—यत्र देशदूरत्वमेव[2] भ्रान्तिनिमित्तं सम्भवति, तत्र समीपगमनमात्रमेवापेक्षणीयं बाधकस्य भावाभावनिश्चयाय, न तु तत्र[3] कालादौ व्यपेक्षा कार्या; तत्र तस्याभ्रान्तिनिमित्तत्वात् । अत्रोदाहरणमाह—मृगतृष्णादिबुद्धिवदिति । मृगतृष्णादिबुद्धिः = मरीचिकादौ जलादिभ्रान्तिः । आदिशब्देनाल्पीयसि महत्त्वबुद्धिः, यथा[4] दूरे

---

१. स्यातव्य नात्म०—पा०; स्यातव्य नास०—गा० ।
२. दूरदेशत्वमेव –पा०, गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।
४. यथा—पा० ।

एवं सन्तमसे काले यो गवाश्वादिसंशयः ।
भ्रान्तिर्वा[1] निर्णयस्तत्र प्रकाशोभवनावधिः ॥ २८७८ ॥
तथा हि चन्द्रदिग्मोहवेदवर्णस्वरादिषु ।
पुरुषान्तरसम्प्रश्नादन्यथात्वेऽवधारणम् ॥ २८७९ ॥
रागद्वेषमदोन्मादक्षुत्तृष्णादिक्षतेन्द्रियैः ।
दुर्ज्ञाने ज्ञायमानेऽयं तदभावाद् विपर्ययः ॥ २८८० ॥
ऋणादिव्यवहारेऽपि द्वयोर्विवदमानयोः ।
एकं प्रत्यर्थिनो वाक्यं द्वे वाक्ये पूर्ववादिनः ॥ २८८१ ॥
अनवस्थाभयादेव न वाक्यं लिख्यतेऽधिकम्[2] ।
ततस्तु निर्णयं ब्रूयुः स्वामिसाक्षिसभासदः ॥ २८८२ ॥

---

महति चाल्पबुद्धिरित्येवमादि गृहीतव्यम् । न हि तत्र समीपगतानां कालाद्यपेक्षा सम्भवति । एवं कालान्तरेष्वपि यत्र यस्यैव भ्रान्तिनिमित्तत्वं सम्भवति [3]तस्यैवापेक्षा[3] कार्या, नान्यस्येत्येतदुदाहरणेन दर्शयति ॥ २८७६–२८७७ ॥

तत्र कालविशेषमधिकृत्याह—एवं सन्तमस इत्यादि । सङ्गतं तमो यस्मिन् काले स तथोक्तः ॥ २८७८ ॥

[ G. 762 ] नरविशेषमधिकृत्याह—तथेत्यादि । तैमिरिकादीनां द्विचन्द्रादिज्ञानेषु पुरुषान्तरपरिप्रश्नादेवान्यथात्वनिश्चयो भवति, न तत्र कालाद्यपेक्षा ॥ २८७९ ॥

अवस्थाभेदमधिकृत्याह—रागद्वेषेत्यादि । तदभावादिति रागाद्यवस्थाया अभावात् ॥ २८८० ॥

ऋणादीत्यादिना लोकव्यवहारेणापि परीक्षकज्ञाने तृतीयस्यैवापेक्षेति प्रतिपादयति ॥ २८८१–२८८४ ॥

---

1. भ्रान्तेर्वा—पा०, गा० ।
2. लिङ्गपदे० — चै० पुस्तके पाठा० ।
3–3. तस्यैव चनापेक्षा—चै० ।

एवं ज्ञानत्रयस्यैव सर्वार्थाधिक्रियेष्यते[1] ।
त्रिसत्यतापि देवानामत एवाभिधीयते ॥ २८८३ ॥
तेन स्वतःप्रमाणत्वे नानवस्थोभयोरपि ।
प्रमाणत्वाप्रमाणत्वे यथायोगमतः स्थिते ॥ २८८४ ॥
नित्यमाप्तप्रणीतं वा वाक्यं यत्त्वावधार्यते ।
श्रोतृनुच्चारयितृभ्यां तन्न मनागपि दुष्यते ॥ २८८५ ॥
ये विद्यागुरवस्तत्र सहाध्यायिन एव च ।
विनाशं वारयन्तस्ते तादृशाः पालनक्षमाः ॥ २८८६ ॥
अतो गुणनिषिद्धैर्वा दोषैर्वाक्यं न दूष्यते ।
यद्वा कर्तुरभावे ते न स्युर्दोषा निराश्रयाः ॥ २८८७ ॥

किञ्च—यदि नाम प्रत्यक्षादेः परतःप्रामाण्यं सिद्ध्यति, न तु शाब्दस्य, तथाप्यस्मत्पक्षसिद्धिरेव । तथा हि[2]—सर्वोऽयमारम्भश्चोदनायाः प्रामाण्यप्रतिपादनफलः, शब्दस्य च प्रमाणस्य स्वतःप्रामाण्ये सिद्धे सिद्धमेव चोदनायाः प्रामाण्यमिति किमस्माकमन्येषां स्वतःप्रामाण्यप्रसिद्धये प्रयासेन ?—इति मन्यमानः शाब्दस्य प्रमाणस्य स्वतःप्रामाण्यं प्रतिपादयन्नाह—नित्यमित्यादि । [G 763] द्विविधं हि शाब्दं ज्ञानं प्रमाणम्—नित्यवाक्यजनितम्, आप्तप्रणीतवाक्यहेतुकं च । तत्रैतस्मिन् द्विविधेऽपि कारणस्यादुष्टत्वं प्रतिपादयति । तथा हि—यत् तावन्नित्यं वाक्यं तस्य श्रोतृवक्तृकृतो न दोषः सम्भवति, नित्यं विद्यागुरुभिरध्यापकैरध्येतृभिश्च पाल्यमानत्वात् । यदप्याप्तोक्तम्, तत्र गुणैः कृपादिभिर्दोषाणां निषिद्धत्वात् । प्रकारान्तरेण नित्यस्य वाक्यस्यादुष्टत्वं प्रतिपादयन्नाह—यद्वेत्यादि । दोषा हि रागादयः पुरुषधर्मत्वात् कर्तारमेवाश्रिताः । ते कथमाश्रयस्य[3] कर्तुर्निवृत्तावपौरुषेयेषु वाक्येष्ववतिष्ठेरन्, तदनाश्रितत्वप्रसङ्गात्[4] । आश्रितधर्मो ह्याश्रयानुविधायित्वम् ॥ २८८५–२८८७ ॥

---

१ सर्वत्र विनिय॰—पा॰, गा॰ ।   २ पा॰ पुस्तके नास्ति ।

३ कथमाश्रय—पा॰ ।

४. तदाऽनाश्रित॰—पा॰, गा॰ ।

तत्राप्रोक्तेद्वयं दृष्टं दोषाभावगुणात्मकम् ।
गुणेभ्यश्च प्रमाणत्वं यथा नास्ति तथोदितम् ॥ २८८८ ॥
गुणवत्त्वादतो वक्तुर्न दोषास्तन्निराकृताः ।
स्वतो वाक्यं प्रमाणं च दोषाभावोपलक्षितम् ॥ २८८९ ॥
दोषाभावो गुणेभ्यश्चेदाप्तवाक्येषु गम्यते ।
अनवस्था भवेद् सैव गुणवत्त्वानुगामिनः ? ॥ २८९० ॥
नैव दोषाः; गुणज्ञानं तदा नैव ह्यपेक्ष्यते ।
ज्ञायमानतया नैव गुणास्तत्रोपकारिणः ॥ २८९१ ॥
सत्तामात्रेण ते सर्वे दोषव्यावर्त्तनक्षमाः ।
नृदोषविषयं ज्ञानं येषु सत्सु न जायते ॥ २८९२ ॥
दोषैश्चाज्ञायमानत्वान्न प्रामाण्यमपोह्यते ।

---

ननु चाप्तवाक्यस्य गुणैर्दोषाणां निराकरणात् प्रामाण्याभ्युपगमे गुणेभ्यः प्रामाण्यमभ्युपगतं स्यात्, ततश्चानवस्थादोषोऽत्रापि[1] सम्भवेत् ? इत्याशङ्क्याह—तत्रेत्यादि । दोषाभावगुणात्मा स्वभावो यस्य द्वयस्य तत् तथोक्तम् । तथोदितमिति । "एवं यदि गुणाधीना प्रत्यक्षादिप्रमाणता" (तत्त्व० २८५५) इत्यादिना । तन्निराकृता इति गुणनिराकृताः । दोषाभावोपलक्षितमिति । वक्तरि स्थितगुणानां दोषनिषेधमात्र एव व्यापारो न प्रामाण्याधान इत्यभिप्रायः ॥ २८८८-२८८९॥

ननु च दोषाभावनिश्चयात् प्रामाण्येऽभ्युपगम्यमानेऽप्यनवस्थैवेति परमतमाशङ्कयन्नाह—दोषाभाव इत्यादि । तथा हि—दोषाभावो गुणपरिज्ञानान्निश्चेयः, गुणपरिज्ञानस्य च पुनरपि दोषाभावात् प्रामाण्यमवसेयम्, तत्रापि दोषाभावो गुणेभ्यः परिज्ञेयः, पुनस्तत्राप्येवम्—इत्येवं रीत्या सर्वव्यवस्थालोपिन्यनवस्था तदवस्था ॥ २८९० ॥

[ G 764 ] नैव दोष इत्यादिना प्रतिविधत्ते । तेषु सत्स्विति गुणेषु ॥ २८९१-२८९२ ॥

यदि नाम न ज्ञायते ततः किम् ? इत्यत आह—दोषैश्चेति । न प्रामाण्यम-

---

१. ०श्चावस्था०—पा०, गा० ।

अनपोदितसिद्धं[1] च तदिहापि स्वतः स्थितम् ॥ २८९३ ॥
दोषाः सन्ति न सन्तीति पौरुषेये तु शङ्क्यते ।
वेदे कर्तुरभावाच्च दोषाशङ्कैव नास्ति नः ॥ २८९४ ॥
अतो यदनपेक्षत्वाद् वेदे प्रामाण्यमुच्यते ।
तदाप्तेन प्रणीतेऽपि सुतरां सिद्धयति स्वतः ॥ २८९५ ॥
वेदार्थेऽन्यप्रमाणैर्या सर्वकालमसङ्गतिः ।

---

पोद्यत इति सम्बन्धः । कस्मात् ? अज्ञायमानत्वात् । गुणनिषिद्धत्वाद् दोषाणामभावादेवाज्ञायमानत्वम् । अनपोदितसिद्धं चेति । अनपोदितत्वात् सिद्धम्; उत्सर्गस्यापवादविरहे निसर्गसिद्धत्वात् । इहापीति । आप्तवाक्ये न केवलमपौरुषेय इत्यपिशब्दः ॥ २८९३ ॥

ननु च यदि नाम कश्चित् पौरुषेये वाक्ये दोषा न ज्ञायन्ते, तथापि सम्भाव्यन्त एव; तेषां तदाश्रितत्वात् । ततश्च यथा गुणाः सत्तामात्रेण दोषव्यावर्तनक्षमाः, तथा दोषा अपि गुणव्यावर्त्तनसमर्था इति तत्किमुच्यते—'दोषैश्चाज्ञायमानत्वान्न प्रामाण्यमपोद्यते' इति । एतदाशङ्कयाह—दोषाः सन्तीत्यादि । एवं मन्यते—न ह्यस्माभिरवश्यं पौरुषेयवचनस्य प्रामाण्यं समर्थनीयम्, किन्तु सर्व एवायमारम्भो वेदस्य प्रामाण्यसिद्धये । तत्र यदि नाम पौरुषेयस्य वचनस्याप्रामाण्यं जातम्, तथापि न काचित् क्षतिर्वेदस्य, दोषाशङ्काया अभावादेव प्रामाण्यसिद्धेरित्यनपेक्षत्वादुच्यत इति । यथोक्तं भाष्ये— 'तस्मात् प्रमाणम्; अनपेक्षत्वात् । नैवं सति प्रत्ययान्तरमपेक्षितव्यं पुरुषान्तरं वापि । अयम्प्रत्ययो ह्यसौ" ( मी० द०, शा० भा० १.१.५ ) इति ॥ २८९४–२८९५ ॥

अपि च—किं प्रमाणस्य[2] प्रमाणान्तरपरिच्छिन्नेऽर्थे प्रवृत्तिरिष्टा, आहोस्विन्नेति पक्षद्वयम् । [ C. 765 ] तत्र यदि नान्नेष्टेति द्वितीयः पक्षः, तदा वेदस्य स्वत एव प्रामाण्यं सिद्धमिति दर्शयति—वेदार्थ इत्यादि । वेदार्थः = 'अग्निहोत्रात् स्वर्गो भवति' इत्यादि । अन्यप्रमाणैरिति वेदादन्यैः प्रत्यक्षादिभिः ।

---

१. अनापोदित०—चै० ।
२. पा० गा० पुस्तकयोर्नास्ति ।

**तथैवास्य प्रमाणत्वमनुवादत्वमन्यथा ॥ २८९६ ॥**
**अन्यस्यापि प्रमाणत्वे सङ्गतिर्नैव कारणम् ।**
**तुल्यार्थानां विकल्पेन ह्येकस्यैव प्रमाणता ॥ २८९७ ॥**
**यत्रापि स्यात् परिच्छेदः प्रमाणैरुत्तरैः पुनः ।**
**नूनं तत्रापि पूर्वेण नार्थः सोऽवधृतः स्फुटम् ॥ २८९८ ॥**
**सकृज्ज्ञातविनष्टे च भवेन्नार्थे प्रमाणता ।**
**श्रौत्रधीश्चाप्रमाणं[1] स्यान्नेत्रादिभिरसङ्गता ॥ २८९९ ॥**

सङ्गति. = एकविषयतया सम्बन्ध, तत्प्रतिषेधोऽसङ्गति । तथैवेति असङ्गत्या । अस्येति वेदस्य । अथ प्रवृत्तिरिष्टेति पक्ष, तदा गृहीतग्राहित्वादुत्तरकालभाविनो ज्ञानस्य न प्रामाण्यं प्राप्नोतीति दर्शयन्नाह— अनुवादत्वमन्यथेति । अन्यथा— यद्यन्यैरपि प्रमाणैरवगतेऽर्थे प्रमाणस्य प्रवृत्तिरिष्येत[2], तदा तस्यान्यप्रकाशितार्थ-प्रकाशकत्वादनुवादत्वमिति स्मृत्यादिवदप्रामाण्यप्रसङ्ग । तस्माद् यत् प्रमाणम्, न तत् प्रमाणान्तरसङ्गतिमपेक्षत इति सर्वस्यैव प्रमाणस्य स्वत प्रामाण्य प्रसिद्ध मिति भावः ॥ २८९६ ॥

एतदेव दर्शयति—अन्यस्यापीत्यादि । वेदादन्यस्यापि प्रत्यक्षादे. । तुल्यार्थानामिति एकविषयप्रवृत्तानाम् । एकस्यैवेति प्रथमस्य, अन्येषा-मनुवादत्वात् । न च तेभ्य उत्तरकालभाविभ्य प्रत्ययेभ्य प्रथमस्य प्रामाण्य युक्तम्; तेषां गृहीतविषयत्वेन स्वयमेवाप्रमाणत्वात् ॥ २८९७ ॥

ननु च दृश्यत एव सन्तमसादिप्रदेशे प्रथमज्ञानगृहीतस्याप्यर्थस्योत्तरोत्तरत प्रमाणात् परिच्छेद. स्पष्टालोकावस्थायाम्[2] इत्याशङ्कयाह—यत्रापीत्यादि । पूर्वस्य[3] ज्ञानस्यानवधृतार्थत्वादप्रामाण्यमेवेति[3] भाव ॥ २८९८ ॥

अपि च— यदि प्रमाणान्तरसङ्गत्या प्रामाण्यम्, एवं सति सकृज्ज्ञातविनष्टार्थ-विषयस्य ज्ञानस्य श्रौत्रधियश्च प्रामाण्यं न प्राप्नोति, तद्विषये प्रमाणान्तराप्रवृत्तेरिति दर्शयति—सकृदित्यादि । [G 766] नेत्रादिभिरसङ्गतेति । एकविषयत्वेना-

१. श्रौत्रा धी०—पा०, गा० । २. ० रिष्यते—पा०, गा० ।
३—३. पूर्वस्याज्ञान०—जै० ।

श्रोत्रज्ञानान्तरेणास्याः सम्बन्धाच्चेत् प्रमाणता ।
सिद्धा वेदेऽपि तज्जन्यविज्ञानान्तरसङ्गतेः ॥ २९०० ॥
साधनान्तरजन्या तु बुद्धिर्नास्ति द्वयोरपि ।
हेत्वन्तरकृतज्ञानसंवादोऽतो न वाञ्छ्यते ॥ २९०१ ॥
यथा स्वैकेन्द्रियाधीनविज्ञानान्तरसङ्गतिः ।
प्रत्यक्षे कारणं क्लृप्ता तथा वेदेऽपि कल्प्यताम् ॥ २९०२ ॥
एकेनैव हि वाक्येन देशकालनरादिषु ।
जन्यमानेऽर्थसंवादे न मृग्यं कारणान्तरम् ॥ २९०३ ॥
तस्माद् दृढं यदुत्पन्नं विज्ञानं न विसंवदेत् ।

---

सम्बन्धात् । प्रयोगः—यत् प्रमाणान्तरसङ्गतिनिरपेक्षं तत् स्वत एव प्रमाणम्, यथा श्रोत्रज्ञानं सकृच्छ्रुतविनष्टविषयं च विज्ञानम् । प्रमाणान्तरसङ्गतिनिरपेक्षं च वेदार्थविषयं ज्ञानमिति स्वभावहेतुः ॥ २८९९ ॥

श्रोत्रेत्यादिना दृष्टान्तस्य साधनविकलतामाशङ्कते । तथा हि—एकस्मिन्नपि शब्दे बहुशः श्रूयमाणे श्रोत्रज्ञानान्तरप्रवृत्तेरस्याः श्रोत्रधियः प्रमाणान्तरसङ्गत्यपेक्षया सम्यक्त्वमवसीयते । सिद्धा वेदेऽपीत्यादिना प्रतिविधत्ते । तज्जन्यविज्ञानान्तरसङ्गतेरिति । वेदजन्यविज्ञानान्तरसम्बन्धात् । द्वयोरपीति । श्रोत्रबुद्धिवेदार्थबुद्ध्योः । एतदुक्तं भवति—'प्रमाणान्तरसङ्गतिनिरपेक्षत्वात्' इत्यत्र साधनान्तरजन्यं प्रमाणान्तरं विवक्षितम्, न त्वेकसाधनसाध्यम्, तेन हेतोः सविशेषणत्वान्न साधनविकलता दृष्टान्तस्येति भावः । हेत्वन्तरकृतज्ञानसंवाद इति । हेत्वन्तरेण कृतं च तत् ज्ञानं चेति तथोक्तम्, तस्य संवाद इति विग्रहः ॥२९०० २९०१॥

अथैकसाधनसाध्यप्रमाणान्तरप्रवृत्तिमात्रेणापि परतः प्रामाण्यमिष्टम्, तदा सिद्धसाध्यतेति मन्यमान आह—यथेत्यादि । कारणं क्लृप्तेति । "श्रोत्रज्ञानान्तरेणास्याः सम्बन्धाच्चेत् प्रमाणता" (तत्त्व० २९००) इति वचनात् ॥२९०२॥

कथं वेदे कथनीयम् ? इत्यत आह—एकेनैव हीत्यादि । [G 767]

१ देशकालाद्यर्थेषु—पा० ।

देशान्तरादिविज्ञानैः प्रमाणं तदसंशयम् ॥ २९०४ ॥
साध्या न चानुमानेन शब्दादीनां प्रमाणता ।
प्रत्यक्षस्यापि सा मा भूत् तत्साध्यैवाविशेषतः ॥ २९०५ ॥
प्रमाणानां प्रमाणत्वं येन चान्येन साध्यते ।
तस्याप्यन्येन साध्यत्वादनवस्था प्रसज्यते ॥ २९०६ ॥
अन्येनासाधिता चेद् स्यात् साधकस्य प्रमाणता ।
साध्यानामपि सा सिद्धा तद्वदेव भवेत् ततः ॥ २९०७ ॥
ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते ।
न चेत्थमगृहीतेन व्यवहारोऽवकल्प्यते ? ॥ २९०८ ॥
प्रमाणं[1] ग्रहणात्[1] पूर्वं स्वरूपेण प्रतिष्ठितम् ।

दृढमिति । संशयविपर्यासरहितत्वात् । देशान्तरादिविज्ञानैरिति । आदि-शब्देन नरान्तरादिविज्ञानपरिग्रहः ॥ २९०३-२९०४ ॥

न चासिद्धतास्य हेतोरिति दर्शयन्नाह—साध्येत्यादि । न तावत् प्रत्यक्षेण साध्याः वेदार्थस्यातीन्द्रियत्वादिति भावः । नाप्यनुमानेन; अतिप्रसङ्गात् । शब्दानामिति । वैदिकानामिति शेषः । प्रकरणाद् वा विशेषगतिः ॥ २९०५ ॥

स्यादेतत्—इष्यत एव प्रत्यक्षस्याप्यनुमानसाध्या प्रमाणता ? इत्याह—प्रमाणानामित्यादि । प्रत्यक्षवत् तस्याप्यनुमानस्यापरेणानुमानेन प्रमाणतायां साध्यायामनवस्था स्यात् । अथानुमानाख्यस्य साधनस्य प्रामाण्यं नान्येन साध्यते, तदा साध्यस्यापि प्रत्यक्षादेः सा साध्या मा भूद्; अविशेषात् ॥२९०६-२९०७॥

नन्वित्यादिना बौद्धो हेत्वसिद्धिमेव समर्थयते । यदि प्रमाणानां प्रमाणान्तरापेक्षा न स्यात्, तदा प्रमाणमित्येषु प्रत्यक्षादिषु निश्चयो न स्यात्, ततश्च सर्वव्यवहारोच्छेदप्रसङ्गः ॥ २९०८ ॥

प्रमाणं ग्रहणादित्यादिना प्रतिविधत्ते । एतदुक्तं भवति—यद्यपि प्रमाणं स्वरूपनिश्चयं प्रति प्रमाणान्तरमपेक्षते; तथापि न व्यवहारोच्छेदः; अर्थपरिच्छेदं प्रति प्रमाणान्तरनिरपेक्षत्वात् । अर्थश्चेत् परिच्छिन्नः, तदा तावतैव सर्वव्यवहारपरि-

1-1. प्रामाण्यग्रहणात्—इत्यपि पाठः ।

निरपेक्षं च[1] तत्स्वार्थे[1] प्रमिते मीयते परैः ॥ २९०९ ॥
यथा चाविदितैरेव चक्षुरादिभिरिन्द्रियैः ।
गृह्यन्ते विषयाः सर्वे प्रमाणैरपि ते तथा ॥ २९१० ॥
तेनात्र ज्ञायमानत्वं प्रामाण्ये नोपयुज्यते ।
विषयानुभवोऽप्यस्मादज्ञातादेव लभ्यते ॥ २९११ ॥
अप्रमाणं पुनः स्वार्थे प्रमाणमिव हि स्थितम् ।
मिथ्यात्वं तस्य गृह्येत न प्रमाणान्तराद् ऋते ॥ २९१२ ॥
न ह्यर्थस्यान्यथाभावः पूर्वेणास्तस्तथात्ववत् ।

---

समाप्तिरिति किं स्वरूपं प्रति निश्चयानिश्चयनिरूपणया, अर्थनिश्चयार्थत्वादस्या इति सक्षेपार्थः ।

अवयवार्थस्तूच्यते—ग्रहणात् [G 768] पूर्वमिति । प्रमाणमेतदित्यतो निश्चयात् पूर्वमित्यर्थः । स्वरूपेणेति अर्थपरिच्छेदात्मना । निरपेक्षमिति । स्वार्थपरिच्छेदं प्रति प्रमाणान्तरं नापेक्षत इत्यर्थः । तत्स्वार्थे प्रमिते = निश्चिते तूत्तरकालमनुमानादिभिः प्रमाणैः प्रमीयते । यथोक्तम्—"न ह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते । ज्ञाते त्वनुमानादवगच्छति" (मी० द० शा० भा० १.१.५) इति ॥ २९०९ ॥

स्यादेतत्—अविदितायां बुद्धौ स्वार्थपरिच्छेद एव न युक्तः, यथोक्तम्—"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति" (   ) इत्याशङ्क्याह—यथा चेत्यादि सुगमम् ॥ २९१०-२९११ ॥

यद्येवम्, अप्रमाणमप्यन्यथा[2] नीत्या स्वत एव प्रसज्यते ? इत्याशङ्क्याह—अप्रमाणमित्यादि । अप्रमाणं हि प्रमाणवदाभातीति न तत्स्वरूपमात्रेण स्वार्थं परिच्छिनत्ति, तस्मान्मिथ्यात्वम् = मिथ्यार्थपरिच्छेदित्वमस्य प्रमाणान्तरं विना ग्रहीतुं न शक्यत इति परतस्तद् व्यवस्थाप्यते ॥ २९१२ ॥

ननु च प्रमाणेऽपि तुल्यम्, तथा हि—तदपि स्वार्थे क्वचिदप्रमाणमिवाभाति ? इत्यत आह—न ह्यर्थस्येत्यादि । पूर्वेणेति अप्रमाणेन । आत्त इति

---

१–१. स्वार्थे च—इत्यपि पाठः । २. प्रमाणम॰—जै॰, पा॰ ।

तत्राप्यन्यथाभावे धीर्यद्वा दुष्टकारणे ॥ २९१३ ॥
तावता चैव मिथ्यात्वं गृह्यते नान्यहेतुकम् ।
उत्पत्त्यवस्थं[1] चैवेदं[1] प्रमाणमिति मीयते ॥ २९१४ ॥
अतो यत्रापि मिथ्यात्वं परेभ्यः प्रतिपाद्यते ।
तत्राप्येतद् द्वयं वाच्यं न तु साधर्म्यमात्रकम् ॥ २९१५ ॥
तत्राप्रमाणसाधर्म्यमात्रं यत्किञ्चिदाश्रिताः ।
सर्वं प्रमाणमिथ्यात्वं साधयन्त्यविपश्चितः ॥ २९१६ ॥

---

गृहीतः । तथात्ववदिति वैधर्म्यदृष्टान्तः । एतदुक्तं भवति—यथा प्रमाणेन तथात्वमात्तं न तथा मिथ्यात्वमप्रमाणेनेति[2] न समानम् । तथा हि—उत्पत्त्यवस्थमेव प्रमाणं प्रमाणमिति मीयते, [ G 769 ] न त्वप्रमाणमप्रमाणमिति; तस्य नित्यं प्रमाणवद्वभासनादिति भावः । तदित्यादिना परतोऽप्रामाण्यमुपसंहरति । यद्वा दुष्टकारणे धीरिति सम्बन्धः ।

तावता चैवेति । अन्यथा भावधिया, दुष्टकारणधिया च । स्यादेतत्—यद्येतयोर्धियोः सम्यक्त्वं गृहीतं भवेत्, तदाऽऽद्यायां मिथ्यात्वं गृह्येत, तयोश्च सम्यक्त्वग्रहणाय प्रमाणान्तरापेक्षायामनवस्था स्यात्! इत्यत आह—उत्पत्त्यवस्थमित्यादि । इदमिति अर्थान्यथाज्ञानम्[3], दुष्टकारणज्ञानं च । तेन नानवस्थेति भावः ॥ २९१३-२९१४ ॥

यदुक्तं बौद्धादिना—"मिथ्यार्थं वैदिकं वचो वाक्यत्वाद्, अग्निः शीत इत्यादि पुरुषवाक्यवद्" इत्यादि साधनम्, तस्यानैकान्तिकतेति दर्शयन्नाह—अतो यत्रापीत्यादि । यत्रापीति चोदनादौ । एतद् द्वयमिति । अन्यथात्वज्ञानम्, दुष्टकारणज्ञानं च । साधर्म्यमात्रकमिति । असत्यार्थेन पुंवाक्येन वाक्यत्वादिना तुल्यत्वम् ॥ २९१५ ॥

कस्मान्न वाच्यमित्यत्रोपपत्तिमाह— तत्रेत्यादि । यद्यप्रमाणसाधर्म्यमात्रेणाप्रमाणं स्यात्, तदा सर्वत्र प्रमाणानामप्रामाण्यप्रसङ्गः । शक्यते हि सर्वत्र वस्तुला-

---

१-१. उत्पत्त्यवस्थमेवेदं—पा०, गा० । २. मिथ्यात्वमप्रमा०—गा० ।
३. अथान्यथा०—जै० ।

तेषामात्मवधायैव तादृक्साधनकल्पनम् ।
उत्पद्यते परस्यापि प्रतिबिम्बेन तादृशम् ॥ २९१७ ॥
तेन च प्रतिषिद्धत्वादयथाभूतसाधनम् ।
नौत्सर्गिकप्रमाणत्वाच्चोदना[1] बाधितुं क्षमम् ॥ २९१८ ॥
अत्राभिधीयते येषां ज्ञानानां[2] स्थितिरिष्यते ।
तेषामेव तु सन्त्वेषा व्यवस्था सनिबन्धना ॥ २९१९ ॥
आत्मलाभे घटादीनां कारणापेक्षितेष्यते ।
लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥ २९२० ॥
यत्तु ज्ञानं त्वयाभीष्टं जन्मानन्तरमस्थिरम् ।
लब्धात्मनोऽसतः पश्चाद् व्यापारस्तस्य कीदृशः ॥ २९२१ ॥

दिना साधर्म्यं वक्तुमिति सङ्क्षेपार्थः । कथमात्मवधाय भवति ? इत्याह—उत्पद्यत इत्यादि । परस्यापीति मीमांसकस्य । प्रतिबिम्बेनेति । यथा बिम्बादनन्तरं प्रतिबिम्बमुत्पद्यते, तथा बौद्धोपन्यस्तसाधनानन्तरं प्रतिसाधनं मीमांसकस्योदेतीत्यर्थः । तथा हि शक्यमिदमभिधातुम्—"अमृषा वैदिकं वचः, वचनत्वादिदम्, अग्निरग्नौ भास्वर इत्यादिपुरुषवचनवत्" इति । तेनैवंविधेन प्रतिप्रमाणेन प्रतिषिद्धत्वात्[3] = व्याहतत्वात्, अयथाभूता चोदनेत्यस्यार्थस्य यत् साधनमुपन्यस्तं बौद्धादिना, तन्न चोदनां बाधितुं क्षमम्, कुतः ? औत्सर्गिकप्रमाणत्वात् । औत्सर्गिकं प्रमाणं प्रामाण्यं यस्य तथोक्तं तद्भावस्तत्त्वम् ॥२९१६–२९१८॥

[G 770] अत्राभिधीयत इत्यादिना—"आत्मलाभे हि भावानाम्" (तत्त्व० २८४७) इत्यारभ्य यथाक्रमं दूषणं वक्तुमारभते—सनिबन्धनेति वस्त्वधिष्ठाना, असतो व्यापारायोगादिति भावः ॥ २९१९ ॥

का पुनरसौ व्यवस्था ? इत्याह—आत्मलाभ इत्यादि ॥२९२०॥

अथ ज्ञानेऽपि कस्मान्न युज्यते ? इत्याह—यत्त्वित्यादि । असतः कीदृशो व्यापार इति । नैव कश्चित्, सर्वसामर्थ्यशून्यत्वादसत्त्वस्येति भावः । सत्त्वेऽपि

1. ॰च्चोदना—पा॰, गा॰ । 2. ज्ञानाना—पा॰, गा॰ ।
3. प्रतिषिद्धत्वात्—जै॰ ।

"व्यापारः कारणानां हि दृष्टो जन्मातिरेकतः ।
प्रमाणेऽपि तथा मा भूदिति जन्म विवक्ष्यते ॥ २९२२ ॥
न हि तत्क्षणमप्यास्ते जायते वाऽप्रमात्मकम् ।
येनार्थग्रहणे पश्चाद् व्याप्रियेतेन्द्रियादिवत्" ॥ २९२३ ॥
(श्लो० वा०, प्र० सू० ५४-५५)
अथाप्यक्षणिकं ज्ञानं नित्यं चाभ्युपगम्यते ।

---

वा निरीहत्वात् सर्वभावानामिति[1] नैव व्यापार सिद्ध्येत् । न च ज्ञानस्य किञ्चित् कार्यमस्ति यत्र व्याप्रियेत । स्वार्थपरिच्छेदात्मकमस्तीति चेत् ? न, ज्ञानपर्यायत्वादस्यात्मानमेव करोतीति सुव्याहृतमेतत् । प्रमाणमेतदिति निश्चयजननं स्वकार्यमिति चेत् ? न, क्वचिदनिश्चयाद्, विपर्ययदर्शनाच्च । अनेनात्रापि प्रतिज्ञार्थे प्रत्यक्षादिविरोध प्रतिपादित । तथा हि—उपलब्धिलक्षणप्राप्तस्यानुपलम्भेनान्योपलम्भात्मना प्रत्यक्षेणासतो व्यापाराभावो निश्चित । नैरूप्याच्च वियदम्भोजवदनुमानतोऽपि सिद्ध । त्वयापीष्टमित्यनेन स्ववचनविरोध चोद्भावयति ॥ २९२१ ॥

तमेव व्यापार इत्यादिना श्लोकद्वयेन दर्शयति । तथा हि—"सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्" (मी० द० १.१.४) इत्यत्र सूत्रे जन्मग्रहणस्य साफल्य प्रतिपादयितु व्यापार इत्याद्युक्त कुमारिलेन । ज्ञायमानाया[2] एव बुद्धे प्रामाण्य यथा स्यादिति प्रतिपादनार्थं जन्मग्रहण कृतमिति । किं कारणम् ? इत्याह—न हीत्यादि । तदिति ज्ञानम् ॥ २९२२-२९२३ ॥

[G 771] अथापीत्यादिना परस्योत्तरमाशङ्कते । तथा चान्यत्र कुमारिलेन नित्यत्वमेकत्व च बुद्धीना वर्णितम् । यथोक्तम्—

"बुद्धीनामपि चैतन्यस्वाभाव्यात् पुरुषस्य[3] न[3] ।
नित्यत्वमेकता चेष्टा भेदस्तु विषयाश्रय" ॥
(श्लो० वा०, श० नि० ८०४) इति ।

---

1 ०भावाना—पा०, गा० । 2. ज्ञायमानाया—पा० ।
3-3 पुरुषस्यातो—पा०, गा० ।

अभ्युपेतविरोधोऽप्यमेवं     युक्त्यावबाधनम् ॥ २९२४ ॥
साधितक्षणभङ्गं हि सर्वं वस्तु सविस्तरम् ।
नित्यं च जन्यते नेति कारणापेक्षितास्य का ॥ २९२५ ॥
अतश्च शक्यते वक्तुं स्वतः एव न वर्तते ।
पश्चात् प्रमा स्वकार्येषु नैरूप्याद् गगनाब्जवत् ॥ २९२६ ॥
अस्तु वाऽक्षणिकं ज्ञानं स्वतः एव प्रवर्तते ।
स्वप्रामाण्यविनिश्चित्यं चेत् कथं संशयादयः ॥ २९२७ ॥

---

अत्रापि पक्षे प्रतिज्ञाया अभ्युपेतविरोध, अनुमानविरोधोऽपि । तथा[1] क्षणिकत्वं बुद्धीनामभ्युपगतम् । यथोक्तं भाष्ये—"क्षणिका हि सा न बुद्ध्यन्तरकालमवस्थास्यते" ( मी० द०, शा० भा० १.१.५ ) इति । तथा—"न तत्क्षणमप्यास्ते" इत्यादिवचनात् स्ववचनविरोधोऽपि[2] ॥ २९२४ ॥

युक्तिबाधां दर्शयति—साधितेत्यादि । नित्यत्वाभ्युपगमे कारणापेक्षितावचनयुक्तेति[3] दर्शयति— नित्यं चेत्यादिना । अन्यस्य हि कारणान्तरापेक्षिता तत्र आत्मभावलिप्सया । यत्तु नित्यत्वाद्नुत्पाद्यं तस्य कापेक्षा ? ॥ २९२५ ॥

अतश्चेत्यादिना प्रयोगरचनयाऽनुमानबाधामेव दर्शयति ॥ २९२६ ॥

अस्तु वेत्यादिनाऽभ्युपगम्याक्षणिकत्वं प्रत्यक्षादिबाधां दर्शयति । यदि स्वत एव प्रमाणनिश्चयं जनयति, तदा प्रमाणे संशयादयो न प्राप्नुवन्ति । आदिशब्देन विपर्यास, तत्पूर्वको विरोध, विपरीता प्रवृत्ति, परस्परपराहतव्याख्यानप्रणयनम्, विसंवादश्च गृह्यते । तत्र संशयादेः प्रमाणान्तरं निश्चयविपरीताकारस्य संविदनात् प्रत्यक्षत एव निश्चयाभाव सिद्ध, यत्राभाव वा तद्विवित्तप्रदेशोपलम्भात् । ततश्च तत्साधनप्रतिज्ञाया प्रत्यक्षविरोध ॥ २९२७ ॥

1. क्षणिक—पा०, गा० ।
2. तथा हि—गा० ।
3. स्ववचनविरोधोऽपि—पा०, गा० ।
4. न युक्तमिति—पा०, गा० ।

प्रामाण्यनिश्चयो यस्मात् तत्र तन्मात्रभाविकः ।
तस्मिन् जाते च सन्देहविपर्यासावनास्पदौ ॥ २९२८ ॥
निश्चयारोपमनसोर्बाध्यबाधकभावतः ।
समारोपविवेके हि निश्चयो वर्त्ततेऽखिलः ॥ २९२९ ॥
ततश्च चोदनाजन्यमतिप्रामण्यसिद्धये ।
दोषवर्जितहेतूत्थभावाद्[1] युक्तिरपार्थिका ॥ २९३० ॥
सिद्धे स्वतःप्रमाणत्वे साऽपवादनिवारिणी ।
यदीष्यते; तदप्येवं नाऽऽशङ्काया असम्भवात् ॥ २९३१ ॥

---

प्रामाण्येत्यादिना प्रत्यक्षे विरोधमेव समर्थयते । [G 772] तस्मिन्निति । प्रामाण्यनिश्चये ॥ २९२८ ॥

कस्मादनास्पदौ ? इत्याह—निश्चयेत्यादि । एतदेव कुतः ? इत्याह—समारोपेत्यादि । निश्चयो हि समारोपविपरीताकारत्वात् तद्विषयमनिराकृत्य नात्मस्थितिमासादयति, उष्णस्पर्श इव शीतमिति कृतस्तेन विषयीकृते विषये समावेशो विपर्यासस्य । ॥ २९२९ ॥

ततश्चेत्यादिना स्ववचनविरोधमपि दर्शयति । हेतूत्थभाव = हेतूत्थत्वम् । आदिशब्देनाप्तप्रणीतोक्तिजन्यत्वात्, बाधवर्जनादित्यादि गृह्यते । तथा हि—

"चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।
कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥
तथाप्तप्रणीतोक्तिजन्यत्वाद् बाधवर्जनात् ।"
(श्लो० वा०, चो० सू० १८४, १८५) इति ।

चोदनाजनिताया बुद्धेः प्रामाण्यसिद्धये साधनं ब्रुवता परतः साधनात् प्रामाण्यनिश्चय उक्तो भवति । "स्वतः सर्वप्रमाणानां प्रामाण्यम्" इति च वदता तन्निषेधश्चेति परस्परवचनव्याघातः ॥ २९३० ॥

सिद्धे इत्यादिना परस्योत्तरमाशङ्कते । अथापि स्यात्—नास्माभिश्चोदनाजनिताया धियः प्रामाण्यसिद्धये साधनमभिधीयते, किं तर्हि ? यत् तत्र परेणा-

1. ०हेत्वर्थ०—बौ० पुस्तके पाठः ।

तावदेव हि साऽऽशङ्का यावन्नोदेति निश्चयः।
निश्चये तद्गते तस्मिन्नप्रामाण्ये कुतो न्वियम् ॥ २९३२ ॥
येन तद्विनिवृत्त्यर्थं यत्न सार्थकतां व्रजेत्।
स्थाणौ निश्चिततादात्म्यो नान्यथात्वं हि मन्यते ॥ २९३३ ॥
यद्रूपनिश्चयो यस्माज्जायते यत्र वस्तुनि।
तद्विपर्ययशङ्कायास्तत एव निवर्तनम् ॥ २९३४ ॥
यथा धूमादिलिङ्गेभ्य पावकाद्यस्तितागतौ।
तन्नास्तित्वव्यवच्छेदस्तत एवोपपद्यते ॥ २९३५ ॥
अप्रामाण्यव्यवच्छेदः स्वत एवंवमिष्यताम्।
अतो न साधनं युक्तमप्रामाण्यनिवृत्तये ॥ २९३६ ॥

प्रामाण्यमासक्त तन्निषेधाय इत्येतदपि न युक्तम्, [G 773] शा[1] आशङ्काया असम्भवात्। उक्तं हि— 'निश्चयारोपमनसोर्बाध्यबाधकभावतः' (तत्त्व० २९२९) इति, तत् कुतो निश्चये समुत्पन्ने सती प्रामाण्याशङ्का, येन तन्निवृत्तये भवत साधनप्रयोगप्रयास सफलो भवेत्। अत्र दृष्टान्तमाह— स्थाणावित्यादि। निश्चितं तादात्म्यं स्थाणुत्वं येन प्रतिपत्रा स तथोक्त। अन्यथात्वमिति वृक्षत्वपुरुषत्वादि ॥ २९३१ २९३३ ॥

यद्येवम्, कथमप्रामाण्याशङ्का विना साधनप्रयोगं निवर्तयितुं शक्यते[1] इत्याह—यद्रूपेत्यादि। यस्मिन् रूपे निश्चयो यद्रूपनिश्चय। तद्विपर्यय शङ्काया इति। तद्रूपविपरीते स्वभावे शङ्काया इत्यर्थः। तत एवेति तद्रूप निश्चयात् ॥ २९३४ ॥

अत्रैव[2] दृष्टान्तमाह—यथा धूमादीत्यादि। तन्नास्तित्वव्यवच्छेद इति। पावकादिनास्तित्वव्यवच्छेद ॥ २९३५ ॥

अप्रमाणेत्यादिनोपसहरति ॥ २९३६ ॥

---

१ का० पुस्तके नास्ति शङ्क्यते—गा०।
२ अपेव—चे०।

अप्रमाणद्वयाशङ्का यदि वर्तेत तत्र तु ।
प्रामाण्यनिश्चयो न स्याद् भ्रान्त्या तद्विषयीकृतेः ॥ २९३७ ॥
यः सन्देहविपर्यासप्रत्ययैर्विषयीकृतः ।
स्थाणुवन्न हि तत्रास्ति सदा तद्रूपनिश्चयः ॥ २९३८ ॥
बलिभुग्धूमहेतूत्थदोषादिप्रत्ययैर्यथा ।
स्थाणुतेजोऽप्रमाणादि परेभ्यो व्यवसीयते ॥ २९३९ ॥
यद् सन्देहविपर्यासविषयत्वं गतं तथा ।
परतो निश्चयस्तस्य प्रमाणत्वस्य गम्यताम् ॥ २९४० ॥

---

अत्रैवोपचयहेतुमाह—अप्रमाणद्वयेत्यादि । अप्रमाणद्वयं संशयविपर्यासात्मकम् ॥ २९३७ ॥

य इत्यादिना विरुद्धव्याप्तोपलब्धिमसम्भावयन् स्ववचनविरोधमेव समर्थयते । निश्चयविरुद्धाभ्यां संशयविपर्यासाभ्यां तद्विषयीकृतस्य वस्तुनो व्याप्तत्वान्न तत्र निश्चयावकाशः ॥ २९३८ ॥

[G 774] बलिभुगित्यादिना अनुमानविरोध दर्शयति, स्वपक्षसिद्धिं च । प्रयोग—ये सन्देहविपर्यासविषयीकृतात्मानस्ते परतोऽवसातव्यात्मतत्त्वाः, यथा स्थाण्वादय । सन्देहविपर्यासविषयीकृतात्मकं च केषाञ्चित् प्रामाण्यमिति स्वभावहेतु । बलिभुक् च धूमश्च हेतूत्थदोषादयश्चेति तथोक्ता, तेषु प्रत्यया इति समास. । एभिश्च यथाक्रमं स्थाण्वादीनां सम्बन्ध । एतेन च हेतोर्व्याप्तिर्दर्शिता ॥ २९३९ ॥

साम्प्रतं पक्षधर्मोपदर्शनासिद्धि[1] परिहरन्नाह—यत् सन्देहेत्यादि । यदिति यस्मात् । गतमिति निश्चितम् । कस्य ? प्रमाणस्येति शेष । तथा हि—चोदनाजनितायाः बुद्धेः प्रतिपादितं सन्देहविपर्यासविषयत्वम् । तथेति । यथा स्थाण्वादेः परतो निश्चय. । तस्येत्यादिना प्रमाणफलोपदर्शनम् ॥ २९४० ॥

यदुक्तम्—“सिद्धे स्वत प्रमाणत्वे साऽपवादनिवारणी” (तत्त्व० २९३१)

---

1. ०धर्मोपदेशेना०—पा०, गा० ।

अयं भवता पक्षः—यत्र वाक्ये नञः श्रुतिः ।
तत्रैवान्यव्यवच्छेदः स्वात्मनैवान्यत्र गम्यते ॥ २९४१ ॥
चोदनाजनिता बुद्धिः प्रमाणमिति, नेह च ।
प्रयोगोऽस्ति नञस्तेन नाप्रामाण्यनिवर्त्तनम् ॥ २९४२ ॥
किञ्च सर्वप्रमाणानां प्रामाण्यं निश्चितं यदि ।
स्वत एव तदा कस्मात् मतभेदः प्रवादिनाम् ॥ २९४३ ॥
येनैवं स्वत एवेति प्रोच्चैर्नियम[1] उच्यते ।
किञ्चित् स्वतोऽन्यतः किञ्चित् परैरनियमो मतः ॥ २९४४ ॥

इति, तत्र युक्तम्, आशङ्काया असम्भवादिति प्रतिपादितम् । इदानीं भवतु नामाप्रामाण्याशङ्कानिवृत्तये साधनप्रयोगः, तथापि भवन्मतेन सोऽपि न युक्त इति दर्शयन्नाह—अथ चेत्यादि । भवता विधिशब्दार्थवादिनाऽयं पक्षः—यत्रैव वाक्ये नञः प्रयोगस्तत्रैवान्यव्यवच्छेदः प्रतीयते, अन्यत्र तु विधिरेवेति । न चात्र चोदनाजनितेत्यादौ साधनवाक्ये नञः प्रयोगोऽस्ति, तत् कथमनेनाप्रामाण्यव्यवच्छेदः प्रतिपाद्यताम् ॥ २९४१–२९४२ ॥

यदुक्तम्—"चोदना[2] समाश्रयः" ( तत्त्व० २९२७ ) इति, तत्रादिशब्दोपात्तमर्थं दर्शयति—किञ्चेत्यादि । [ G 770 ] यदि सर्वप्रमाणानां स्वत एव प्रामाण्यं भवेत्, तदा वादिनां प्रामाण्यविषये मतभेदो न स्यात् ॥२९४३॥

स एव कथं सिद्ध इत्याह—येनैवमित्यादि । एकैरिति मीमांसकैः । परैरिति बौद्धैः । ते किञ्चित् स्वतः प्रमाणमिष्टम्, यथा—स्वसंवेदनप्रत्यक्षं योगिज्ञानम्, अर्थक्रियाज्ञानम्, अनुमानम्, अभ्यासवच्च प्रत्यक्षम्, तद्धि स्वत एव निश्चीयते, अभ्यासबलेनापहस्तितभ्रान्तिकारणत्वात् । किञ्चिदन्यतः, यथा—विवादास्पदीभूतं चोदनाजनितं ज्ञानम्, प्रत्यक्षं चानपगतभ्रान्तिनिमित्तम्, अभ्यासार्थक्रियाज्ञानयोरनवाप्तत्वात् ।

यद्येवम्, अनुमानादौ भवन्मतेन विवादो न प्राप्नोति, तस्य स्वत एव प्रमाणत्वात् । तथा हि—केचित् त्रिरूपलिङ्गहेतुकमनुमानमिच्छन्ति, केचिद् द्विरूप

१ प्रोच्चै०—गा०, प्राच्ये०—गा० । २ र्तक— गा०, गा० ।

विवादो भ्रान्तितो यस्मात् सा च निश्चयबाधिता।
निश्चिन्वन्तस्ततस्तत्त्वं विवदेरन्न वादिनः ॥ २९४५ ॥

लिङ्गजम्, केचिदेकरूपलिङ्गसमुद्भवम्; तल्लक्षणप्रणयनं चानर्थकम्; तथा लोकायतं प्रति तत्प्रामाण्यप्रतिपादनं न कर्त्तव्यम्, स्वत एव प्रामाण्यनिश्चयादिति समानम्? नैष दोषः; यतोऽनुमानस्य तादात्म्यतदुत्पत्तिप्रतिबद्धलिङ्गनिश्चयादुत्पत्तेरन्तरेणार्थक्रियासंवादं पारम्पर्येण तथाविधवस्तुप्रतिबद्धजन्मतया तदर्थाव्यभिचारित्वं निश्चितमिति स्वतः प्रामाण्यमुच्यते। तदुत्पत्तिहेतुलिङ्गस्वरूपापरिज्ञानाद् वादिनोऽनुत्पन्न एवानुमाने परस्परं विप्रवदन्ते, न तूत्पन्ने; तत्स्वरूपादिनिश्चयात्। अत एवाचार्याः तदुत्पत्तिहेतुलिङ्गस्वरूपव्युत्पादनमेव कुर्वन्ति लक्षणे। कथं हि नाम विपरीतलिङ्गस्वरूपावधारणादनुमानोत्पत्तिर्भविष्यतीति।

यदपि लोकायतं प्रत्यनुमानस्य प्रामाण्यप्रतिपादनं कर्त्तव्यमिति चोद्यते, तदप्ययुक्तम्; न ह्यस्माभिरनुमानस्य प्रामाण्यं साध्यते, किं तर्हि? व्यवहारः। तथा हि—मिथ्यार्थशास्त्रश्रवणाद् व्यामूढो लोकायतः सिद्धेऽप्यनुमानस्य प्रामाण्ये साङ्ख्यवन्न तद्व्यवहारं प्रवर्त्तयति, तस्य विषयोपदर्शनेन विषयी व्यवहारः साध्यते—यद्यत उत्पन्नं तत् तत्प्रापणशक्तियुक्तम्, यथा प्रत्यक्षं स्वार्थस्य। अनुमेयादुत्पन्नं चेदं तत्प्रतिबद्धलिङ्गदर्शनद्वारायातं लिङ्गिज्ञानम्—इत्येवं सङ्केतविषयकथनेन समये प्रवर्त्तनात्। तथा हि—प्रत्यक्षेऽर्थाव्यभिचारनिबन्धन एवानेन प्रामाण्यव्यवहारः कृतः। अव्यभिचारश्चास्य कोऽन्यस्तदुत्पत्तेः। यथोक्तम्—

"अर्थस्यासम्भवेऽभावात् प्रत्यक्षेऽपि प्रमाणता।
[G 776] प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयम्" ॥ ( ) इति।

तस्माद् यथा साङ्ख्यस्तृणाग्रे करिशताभावं व्यवस्यन्नपि शास्त्रश्रवणव्यामोहाद् भावव्यवहारमप्रवर्त्तयन् प्रवर्त्तते, तथायमपि लोकायतः। न च चोदनाजनिताया बुद्धेः प्रामाण्यं सिद्धम्, येनात्राप्यनुमानवत् प्रामाण्यव्यवहारः साध्यत इति स्यात्, तत्र प्रतिबन्धासिद्धेः प्रामाण्यस्यैव साध्यत्वादिति न समानम् ॥ २९४४ ॥

स्यादेतत्—भवतु नाम मतभेदः, स कस्मात् स्वतःप्रामाण्ये सति न युज्यते? इत्याह—विवादो भ्रान्तित इत्यादि। अनेन विवादस्य निश्चयविरुद्धभ्रान्ति-

स्वतः सर्वप्रमाणानां प्रामाण्यस्य विनिश्चये ।
न विसंवादभाक् कश्चिद् भवेन्निश्चयवृत्तितः ॥ २९४६ ॥
अप्रमाणे प्रमाणत्वबुद्ध्या वृत्तो हि वञ्च्यते ।
स्वतःप्रामाण्यबोधात् तु विपरीतो न कश्चन ॥ २९४७ ॥
नन्वप्रमाणतो वृत्तो विसंवादं[1] समश्नुते ।
निश्चयः परतस्तस्य बाधकात् प्रत्ययान्मतः ॥ २९४८ ॥
प्रमाणतः प्रवृत्तस्तु न विसंवादमश्नुते ।
अस्यैव चेष्यतेऽस्माभिः स्वतःप्रामाण्यनिश्चयः ॥ २९४९ ॥
नाभिप्रायापरिज्ञानादिदं ह्यत्र विवक्षितम् ।
स्वतः सर्वप्रमाणानां प्रामाण्यस्य विनिश्चये ॥ २९५० ॥
नियते[2] यस्य[3] नैवास्ति स्वतःप्रामाण्यनिश्चयः ।
पारिशेष्यबलात्[4] तस्मिन्नप्रामाण्यं प्रतीयते ॥ २९५१ ॥

कार्यस्योपलम्भात्निश्चयाभावसिद्धिमादर्शयन् अनुमानविरुद्धत्वं स्वतःप्रामाण्यप्रतिज्ञाया दर्शयति ॥ २९४५ ॥

अपरमपि निश्चयविरुद्धकार्योपलम्भमादर्शयति— स्वत इत्यादि । विसंवादो हि निश्चयविरुद्धाया भ्रान्तेः कार्यत्वेन प्रतीतः, स च स्वतःप्रामाण्याभ्युपगमे सति न प्राप्नोति ; निश्चयेन तत्कारणस्य भ्रान्तेरपनीतत्वात् । विपरीत इति विसंवादभाक् ॥ २९४६–२९४७ ॥

नन्वित्यादिना परः प्रत्यवतिष्ठते । विसंवादो ह्यप्रमाणात् प्रवृत्तस्य भवति, तस्य चाप्रमाणस्य परतो निश्चयोऽभ्युपगत एव । यतः पुनः प्रमाणात् न ततः प्रवृत्तस्य विसंवादोऽस्ति । तस्यैव च स्वतःप्रामाण्यमिष्टमिति कथं स्वतःप्रामाण्यप्रतिज्ञाया अनुमानबाधा ! ॥ २९४८–२९४९ ॥

[ G 777 ] नाभिप्रायेत्यादिना प्रतिविधत्ते । इदमत्र विवक्षितम्— यदि भवता सर्वप्रमाणानां स्वतःप्रामाण्यमभ्युपगम्यते, तदा प्रामाण्यनिश्चयोत्पादेन

1. विरं वा च—पा० ।  2. नियतो—गा० ।
3. वय—पा०; यत्र—गा० ।  4. परिशेषबलाद्—पा०, गा० ।

अर्थान्यथात्वहेतूत्थदोषज्ञानानपेक्षया ।
जन्मानन्तरमेवातस्तदप्रामाण्यनिश्चयात् ॥ २९५२ ॥
अप्रमाणे प्रमाणत्वविपर्यासो न सङ्गतः ।
अतोऽसंवादिनो नैव कश्चिद् वर्तेत तद्गतेः ॥ २९५३ ॥
जन्मातिरिक्तकालश्च क्रियाकालो न विद्यते ।
क्षणिकत्वाद् घटादीनामित्यसिद्धं निदर्शनम् ॥ २९५४ ॥
तेषामुत्तरकालं हि कुलालाद्यनपेक्षिणाम् ।
स्वोपादानाद्यपेक्षत्वात् स्वतो नास्ति प्रवर्तनम् ॥२९५५ ॥

प्रमाणं व्याप्तमित्यभ्युपगतं स्यात् । ततश्च यत्रैव प्रमाणव्यापकः प्रामाण्यनिश्चयो नोदेति, तत्र सामर्थ्यादप्रामाण्यमवतिष्ठते[1]; प्रमाणाप्रमाणयोः परस्परव्यवच्छेदरूपत्वात् । ततश्चाप्रामाण्यमपि स्वत एव सामर्थ्यादापतितम्; विसंवादकारणदोषपरिज्ञानानपेक्षणात्[2], प्रामाण्यनिश्चयानुत्पत्तेरेवाप्रामाण्यस्य निश्चितत्वात् । ततश्च यदुक्तम्—"निश्चयः परतस्तस्य बाधकात् प्रत्ययान्मतः" (तत्त्व० २९४८) इति, तन्नोपपद्यते । एवं च सति जन्मोत्तरमेव[3] प्रामाण्यनिश्चयोत्पादानुत्पादाभ्यां प्रमाणेतरयोर्निश्चितत्वादप्रमाणात्[4] परिनिश्चिता नैव कस्यचित् प्रेक्षावतः प्रवृत्तिरेव सम्भवतीति कुतो विसंवादसम्भव इति । तद्गतेरिति विसंवादित्वगतेः, निश्चयादित्यर्थः ।

एते च प्रतिज्ञादोषोद्भावनमुखेन हेतोरव्याप्तिप्रकाशनाद् हेतुदोषा एव द्रष्टव्याः, न तु प्रतिज्ञादोषाः; अन्यथा हि प्रतिज्ञाया असाधनाङ्गत्वात् तद्दोषोद्भावनं प्रतिवादिनो निग्रहस्थानं स्यात् ॥ २९५०–२९५३ ॥

घटादिवदिति दृष्टान्तस्यासिद्धिं प्रतिपादयन्नाह—जन्मातिरिक्तेत्यादि ॥ २९५४ ॥

ननु च जन्मोत्तरकालं घटादयो दृश्यन्त एव कुलालाद्यनपेक्षा मधूदकाद्यर्थक्रियाकारिणः, तत् कथं तेषां जन्मातिरिक्तः कालो न विद्यते ? इत्याह—तेषामित्यादि । [ C. 778 ] स्वोपादानम् = पूर्वः पूर्वः सजातीयः क्षणः । आदिशब्देन तद्धारकपुरुषादिपरिग्रहः । एतदुक्तं भवति—उत्तरकालमन्य एव घटादि-

1. अप्रामाण्य०—जै०, पा० । 2. ०ज्ञानादपेक्ष०—पा० ।
3. जन्मान्तरमेव—जै० । 4. प्रामाण्येतर०—पा०, गा० ।

न चानवस्थितिप्राप्तिरन्यतो मानसंश्रितौ ।
यस्मादर्थक्रियाज्ञाने[1] स्वतःप्रामाण्यनिश्चयः ॥ २९५६ ॥
ननु कोऽतिशयस्तस्य प्राक्तनादस्ति येन तत् ।
परतः पूर्वविज्ञानमिव नाभ्युपगम्यते ? ॥ २९५७ ॥
उच्यते—वस्तुसंवादः प्रामाण्यमभिधीयते ।
तस्य चार्थक्रियाभ्यासज्ञानादन्यन्न लक्षणम् ॥ २९५८ ॥
अर्थक्रियावभासं च ज्ञानं संवेद्यते स्फुटम् ।
निश्चीयते च तन्मात्रभाव्यामर्शनचेतसा ॥ २९५९ ॥
अतस्तस्य स्वतः सम्यक्प्रामाण्यस्य विनिश्चयात् ।
नोत्तरार्थक्रियाप्राप्तिप्रत्ययः समपेक्ष्यते ॥ २९६० ॥

---

क्षणाः स्वोपादानापेक्षा वर्त्तमाना दृश्यन्ते, न तु कस्यचिज्जन्मोत्तरकालमवस्थितिः सिद्धा; क्षणिकत्वात् सर्वभावानामिति ॥ २९५५ ॥

"यथैव प्रथमं ज्ञानम्" ( तत्त्व० २८५३ ) इत्यत्राह—न चेत्यादि ॥ २९५६ ॥

'परः प्रत्यवतिष्ठते—नन्वित्यादि[2] ॥ २९५७ ॥

उच्यत इत्यादिना प्रतिविधत्ते । अयमत्र सङ्क्षेपार्थः—प्रमाणं हि नामाविसंवादि ज्ञानमुच्यते, "प्रमाणमविसंवादि ज्ञानम् (प्र०वा० १.३) इति वचनात् । न[3] चाविसंवादोऽर्थक्रियालक्षण एव, तदर्थत्वात् प्रमाणचिन्तायाः; यतोऽर्थक्रियार्थी प्रमाणमप्रमाणं वाऽन्वेषते प्रेक्षावान् व्यसनितया। सा चार्थक्रिया दाहपाकादिनिर्भासज्ञानोदयलक्षणा, तदुत्पादादेवार्थक्रियार्थिनः प्रवृत्तस्याकाङ्क्षानिवृत्ते । तथार्थक्रियाज्ञानमात्मसंवेदनप्रत्यक्षतया स्वयमेवाविर्भवति, स्वरूपानुभवत्वाच्चानन्तरं यथानुभवं परामर्शज्ञानोत्पत्त्या निश्चितमिति स्वत एव सिद्धम् । न च तत्साध्यं फलान्तरमाकाङ्क्षितं पुरुषेण, येनापरमर्थक्रियानिर्भासि प्रत्ययान्तरोदयमनुसरतोऽनवस्था स्यात् । तथा हि—लोके वृद्धिच्छेदादिकं[4] फलमभिवाञ्छितम् [ G 779 ] तच्चा-

---

१. तस्माद०—पा० ।
२. चे०, पा० पुस्तकयोर्नास्ति ।
३. स—गा० ।
४. वृद्धिच्छेदा०—पा० ।

ज्ञानप्रमाणभावे च तस्मिन् कार्यावभासिनि ।
प्रत्यये प्रथमेऽप्यस्माद्धेतोः प्रामाण्यनिश्चयः ॥ २९६१ ॥
आद्ये ह्यवस्तुविषये[1] वस्तुसंवादलक्षणम् ।
द्वितीयं न प्रवर्तेत यस्य हेतोरसम्भवात् ॥ २९६२ ॥
अशोकस्तबकादौ हि पावकाध्यवसायिनः ।
न दाहपाकनिर्भासि विज्ञानं जातु जायते ॥ २९६३ ॥
जातौ वा न विजातीयं ज्वलनात् तत् प्रसज्यते ।
तत्कार्ययोग्यतामात्रलक्षणत्वाद् विभावसोः ॥ २९६४ ॥
तस्मादर्थक्रियाभासं ज्ञानं यावन्न जायते ।
तावदाद्येऽप्रमाशङ्का जायते भ्रान्तिहेतुतः ॥ २९६५ ॥
अनन्तरं फलाद्दृष्टेः तादृशस्योपलम्भनम् ।

ह्लादपरितापादिरूपज्ञानाविर्भावादेवाभिनिर्वृत्तमित्येवमवैवाहितसन्तोषा निवर्तन्ते जना इति स्वत एव तस्य सिद्धिरुच्यते । यत् पुनः पूर्वकं तत् कारणभूतं ज्ञानं तस्य न[2] तत्प्रापणशक्तिः प्रामाण्यमुच्यते । सा च शक्तिरनभ्यासादविदितकार्यैरवधारयितुं न शक्यत इत्युत्तरकार्यज्ञानप्रवृत्त्या निश्चीयत इति प्रथमस्य परतः प्रामाण्यमुच्यते ॥ २९५८–२९६१ ॥

पुनरप्यनवस्थां प्रकारान्तरेण परिहरन्नाह—आद्य इत्यादि । यदि हि—आद्यम् = प्रथमं ज्ञानमवस्तुनि प्रवृत्तमभविष्यत्, तदा फलज्ञानमुत्तरकालभावि नोदपत्स्यत, कारणाभावात्, वस्तुप्रतिबद्धत्वादर्थक्रियाज्ञानस्य । न ह्यनग्निग्राहिणो ज्ञानादशोकस्तबकादावग्न्यध्यवसायेन प्रवृत्तस्य दाहपाकादिनिर्भासिनः प्रत्यया प्रसूयन्ते । प्रसवे वाऽग्निरेवासौ, कुतः? दाहपाकादिकार्योत्पत्तिहेतुत्वमात्रलक्षणत्वात् । विभावसोः वह्नेरित्यर्थः ॥ २९६२-२९६४ ॥

तस्मादित्यादिनोपसंहरति ॥ २९६५ ॥

ननु चार्थक्रियाज्ञानवदाद्यमपि ज्ञानं साक्षादग्न्यादिपदार्थजनितमेव, तत्किमिति तत्रैवाप्रामाण्याशङ्का, नोत्तरत्र? इत्याशङ्क्याह—अनन्तरमित्यादि । आद्ये हि

1. हि वस्तु—पा॰, गा॰ । 2. च—पा॰ ।

मतेरपटुतेत्यादि भ्रान्तिकारणमत्र च ॥ २९६६ ॥
कार्यावभासिविज्ञाने जाते त्वेतन्न विद्यते ।
साक्षाद् वस्तुनिबद्धाया[1] क्रियाया प्रतिवेदनात् ॥ २९६७ ॥
वृत्तावभ्यासवत्या तु वैलक्षण्य प्रतीयते ।
अतद्विषयतो ज्ञानादाद्येऽप्राप्तेऽपि[1] तत्फले ॥ २९६८ ॥

ज्ञाने भ्रान्तिकारणमस्ति, तथा हि तदनन्तरं दाहादिलक्षणस्य [G 780] फलस्या नुत्पादो भ्रान्तज्ञानसाधर्म्यं च[2] बुद्धेरपाटवम् । आदिशब्देना नभ्यास , अनभ्यास इत्यादि गृह्यते । फलज्ञाने तु न किञ्चिद् भ्रान्तिकारण विद्यत इति तस्य स्वत एव निश्चय ॥ २९६६ २९६७ ॥

आद्येऽपि ज्ञाने यत्राभ्यासादिना प्रोत्सारित भ्रान्तिनिमित्तम्, तस्य स्वत एव प्रामाण्यमिति दर्शयन्नाह—वृत्तावित्यादि । अभ्यासबलेन यथा योगिना मणि रूप्यादिषु वा तद्विदां दूरीकृतभ्रान्तिनिमित्तमेव स्फुटप्रतिभास प्रजायते विज्ञानम्, एवमन्यत्राप्यभ्यासबलात् स्फुटतरप्रतिभासतया निरस्तविभ्रमाशङ्कमुपजायमानमव्यव-धानेन[3] सजातीयसाधारणाध्यवसायिन परामर्शप्रत्यय[4] जनयद् विजातीयतोऽत द्विषयाद् व्यावृत्तमवसीयत इति स्वत एव तस्य प्रामाण्यमुच्यते ।

यत्तु मन्यते—"अभ्यासवत्यामपि प्रवृत्तौ तादूप्यलक्षणलिङ्गदर्शनादनुमानत एवार्थप्रापणशक्तिलक्षणप्रामाण्यनिश्चय इति सर्वत्र परत प्रामाण्यावसाय , न कचि देव स्वत " इति, तत्र ब्रूमहे, तथा हि—असङ्कीर्णतादूप्यलक्षणलिङ्गनिश्चय एव कुतो भवति ? इति वक्तव्यम् । अभ्यासादिति चेत् ? एव तर्हि यदभ्यासबलाद् विजातीयाकारव्यवच्छेदेन सजातीयसाधारणमसङ्कीर्णं सारूप्यमवसीयते भ्रान्तिकारणाभावात्, क प्रामाण्ये प्रद्वेषो येन तदनुभूत[5] भ्रान्तिकारणविरहेऽपि नाध्यवसीयत इति स्यात् ।

अपि च—किमिद सारूप्यं नाम ? यदि बोधरूपता, सा मिथ्याज्ञानेऽ-

---

१ °दाद्ये प्राप्ते —पा° ।
२ पा°, गा° पुस्तकयोनास्ति ।
३ °मध्यवधानेन—पा° ।
४ न परामर्श°—पा° ।
५ तदनुभूत वो—पा° ।

वैलक्षण्यप्रतीतौ तु विजातीयार्थशङ्कया ।
कार्यावभासिविज्ञानाद् ऋते मानाविनिश्चयः ॥ २९६९ ॥

प्यस्तीत्यनैकान्तिकता हेतो । अथ लोहिताकारनिर्भासिता ? साऽशोकस्तबकादिग्राहि-विज्ञाने विद्यत इति व्यभिचार एव । अथाग्न्यादिपदार्थकार्यता ? सा कथं निश्चितेति वक्तव्यम् ? तत्सिद्ध्यर्थमपरलिङ्गान्तरमनुसरतोऽनवस्था स्यात् । अथापि स्यात्—अभ्यासबलादेव प्रत्यक्षतो लिङ्गानुसरणमन्तरेणापि स्वत एव सा सिद्धेति ? एवं तर्हि यद्यभ्यासस्येदृश सामर्थ्यमभ्युपगम्यते, तदा [1]शक्तिनिश्चयोऽप्यभ्यासबला-देवान्तरेणापि लिङ्गानुसरणं भवतीति किं नाभ्युपगम्यते । किञ्च—यदि तत्-कार्यता सिद्धा ज्ञानस्य, तदा व्याप्त्यनुसरणमनर्थकम्; तत्कार्यतावसायादेव तदर्थ-प्रापणशक्तिसिद्धे, अनुमानज्ञानवत् । यथानुमानज्ञानस्य वस्तुप्रतिबद्धलिङ्गदर्शनबले-नोत्पत्तेः पारम्पर्येण वस्तुकार्यतावसायादेव स्वतः प्रामाण्यं न सारूप्यबलादन्यथा ह्यनवस्था स्यात्; तथेहापि स्वत एव प्रामाण्यं [ G 784 ] स्यात् । तथा हि—यत्र पक्षधर्मत्वनिश्चयेऽपि साध्यार्थप्रतीतिर्न जायते, तत्र दृष्टान्तधर्मिणि व्याप्तिमनु-सरेत् प्रतिपत्ता, यथा कृतकत्वानित्यत्वयोः । इह तु ज्ञानस्य तत्कार्यत्वावसायादेव[2] तदर्थाव्यभिचारितया तत्प्रापणशक्ति सिद्धेति तादूप्यं लिङ्गम् ।

यद्येवम्, कथमुक्तमाचार्येण लोकायतमधिकृत्य—"स खलु 'प्रत्यक्षं प्रमाणं नानुमानम्' इति ब्रुवाणः कासाञ्चिद् व्यक्तीनां प्रवृत्तौ सवादं विसंवादं चोपलभ्य तल्लक्षणं व्यान्यां कथयेद् यथोपदेशं प्रवर्त्तमानस्याविप्रलम्भार्थम्, तत्र यथादृष्ट-साधर्म्यात् तथा प्रसाधितमनुमेयतां नातिपतति" ( ) इति ? नैष दोषः; स्वपरसन्तानवर्त्तिनीरननुभूतविषया बुद्धीरधिकृत्यैतदुक्तम्; 'अन्यत्रानु-भूतविषयास्य' इति वचनात् । अन्यथा हि यदि सारूप्यात् सर्वत्र प्रामाण्यं निश्ची-यते, तदान्यत्राननुभूतविषयास्य इति प्रतिषेधोऽनर्थकः स्यात् । तस्मादभ्यासवशात् प्रोत्सारितभ्रान्तिनिमित्तमुपजायते यत् तत्स्वत एव प्रमाणमिति स्थितम् ॥२९६८॥

यदुक्तम्—"यथैव प्रथमज्ञानं तत्संवादमपेक्षते" ( तत्त्व० २८५३ ) इत्यादि, तत्राह—वैलक्षण्येत्यादि । यत्र ह्यनुभूतमपि प्रामाण्यं भ्रान्तिकारणसद्भा-

1. शक्तिनिश्चयो०—पा० ।  2. तत्कार्यत्वाव०—पा०, गा० ।

तस्मिन् सदपि मानत्वं विनिश्चेतुं न शक्यते ।
उत्तरार्थक्रियाज्ञानात्[1] केवलं तत् प्रतीयते ॥ २९७० ॥
अतश्च प्रथमं ज्ञानं तत्संवादमपेक्षते ।
संवादेनापि संवादः पुनर्मृग्यस्तथैव न ॥ २९७१ ॥
भ्रान्तिहेतोरसद्भावात् स्वतस्तस्य प्रमाणता ।
प्रथमस्य तदाभावे प्रद्वेषो भ्रान्तिसम्भवात् ॥ २९७२ ॥

---

वाद् विनिश्चेतुं न शक्यते, तत्र परतोऽर्थक्रियाज्ञानान्निश्चीयते, तज्जन्ममात्रेणैव च पुरुषस्याभीष्टार्थसंसिद्धेराकाङ्क्षा विनिवृत्तेति न पुनः संवादेनाप्यपरः संवादस्तथैव = आद्यज्ञानवदपेक्षणीयः ॥ २९६९–२९७१ ॥

"कस्यचित्तु यदीष्येत" ( तत्त्व० २८५४ ) इत्यादावाह—भ्रान्तिहेतोरित्यादि । ननु च यत् सन्दिग्धार्थाविनाभावित्वेनानिश्चितार्थप्रापणसामर्थ्यं ज्ञानम्, तदनुमानवन्न प्राप्नोति । तथा हि—अनुमानस्यार्थाविनाभावसंशये सति न प्रामाण्यमिष्टम्, [ G 782 ] एवं प्रत्यक्षेऽपि न प्राप्नोति ? नैष दोषः, न ह्यनुमानवदर्थनान्तरीयकमात्मानमुपदर्शयत् प्रत्यक्षं प्रमाणमिष्टम्, किं तर्हि ? प्रतिभासमानार्थावसायं कुर्वत्[2] । तथा हि—अर्थक्रियार्थिनोऽभिमतमर्थं प्रापयत् प्रमाणमुच्यते । न चार्थदेशं पुरुषमुपसर्पयदर्थं वा पुरुषदेशमानयत् तत्प्रापकं भवति, अपि तु पुरुषं प्रवर्तयत् । स च पुरुषं न हस्तेन गृहीत्वा प्रवर्त्तयति, किं तर्हि ? प्रवृत्तिविषयमुपदर्शयत् । तच्चोपदर्शनं प्रतिभासमानार्थावसायान्नान्यत् । यत्र च संशयस्तत्रावश्यं प्रतिभासमानाकारव्यवसायोऽस्ति, तदनवसाये तद्विमर्शायोगात् । ततश्चैतावता प्रत्यक्षव्यापारपरिसमाप्ते पश्चादर्थाविनाभावसंशयो भवन् प्रत्यक्षव्यापारमुपरुणद्धीति सत्यपि संशयोदये भवत्येव प्रामाण्यं प्रत्यक्षस्य ।

यत्तु प्रतिभासमानपदार्थविरुद्धाकारावसायाक्रान्तमुदेति, तन्न प्रमाणम्, यथा मरीचिकासु जलज्ञानं जलावसायाक्रान्तम्, तत्र यथोक्तप्रमाणव्यापाराभावात् । यथा शङ्खे पीतज्ञानम्, मणिप्रभायां मणिज्ञानम्, तदप्यप्रमाणमेव, तत्र यथार्थे प्रतिभासावसाययोरभावात् । प्रतिभासवशाद्धि प्रत्यक्षस्य ग्रहणाग्रहणे, न त्वर्थाविसंवादमा

---

1. उत्तरार्थक्रिया०—जै० पुस्तके पाठः । 2. कुर्वत्तु—पा०, गा० ।

ननु तस्य प्रमाणत्वे विज्ञानस्याविनिश्चिते ।
कथं तत्र प्रवर्त्तेत प्रेक्षावानीप्सितागतेः ? ॥ २९७३ ॥
उच्यते—संशयेनैव वर्त्ततेऽसौ विचक्षणः ।
वैचक्षण्यक्षतिस्तस्य न चैवमनुपज्यते ॥ २९७४ ॥

त्वात् । न चात्र यथास्वभावदेशकालावस्थितवस्तुप्रतिभासोऽस्ति, न चादेश-काल[1] स एव भवति, देशकालयोरपि वस्तुस्वभावभेदकत्वात्; अन्यथा हि भेदव्यवहारोच्छेदः स्यात् ।

अनुमानस्य तु विकल्पात्मकत्वेन सामान्यविषयत्वान्न प्रतिभासवशाद् वस्तु-विषयत्वव्यवस्था, वस्तुनोऽप्रतिभासात्, किं तर्हि ? निश्चयवशात् । यथोक्तम्—

"निश्चयैः ।

यत्र निश्चीयते रूपं तत् तेषां विषयः कथम् ॥" (            ) इति ।

ततश्चानुमानस्य तदाभासशून्यस्यापि नान्तरीयकार्थदर्शनबलेनोत्पत्तेः पारम्पर्येण वस्तुनि प्रतिबन्धात् प्रामाण्यमित्यवश्यं तत्राविनाभावनिश्चयोऽपेक्षणीयः; अन्यथा अनुमानस्योत्पत्त्यसम्भवादिति नानुमानतुल्यं प्रत्यक्षम् ॥ २९७२ ॥

नन्वित्यादिना परः परतःप्रामाण्ये सतीतरेतराश्रयत्वमुद्भावयति । तथा हि—प्रेक्षापूर्वकारिणः प्रामाण्यनिश्चये सति प्रवृत्त्या भवितव्यम्, प्रवृत्तौ च सत्यां प्रामाण्यनिश्चय इतीतरेतराश्रयात् कथं प्रेक्षावत ईप्सितार्थविनिश्चये सति प्रवृत्तिः स्यात् ॥ २९७३ ॥

उच्यत इत्यादिना प्रतिविधत्ते । [G 783] द्विविधा हि प्रवृत्तिः—अर्थक्रियार्था, प्रामाण्यनिश्चयार्था च । तत्राद्या प्रवृत्तिः सत्यपि संशये यथा भवति तथा प्रतिपादितम्; प्रतिभासमानार्थावसायमात्रेणैव प्रत्यक्षस्य प्रवर्त्तक-त्वात् । तेन वैचक्षण्यक्षतिरेवं सति नानुपज्यते, अर्थसंशयेनापि कृषीवलादीना-मिव प्रवृत्तिदर्शनादित्यभिप्रायः । न च कृषीवलादीनामुपायनिश्चयेन प्रवृत्तेर्युक्ता प्रेक्षापूर्वकारितेति युक्तं वक्तुम्; उपेयार्थत्वादुपायस्य । उपेयानिश्चये तन्निश्चया-योगात् ॥ २९७४ ॥

1. नचदेश०—पा० ।

संशयेन यतो वृत्तेस्तत्प्रामाण्यविनिश्चये ।
निश्चितोपायता तेन माने[1] सत्यपि संशये ॥ २९७५ ॥
सन्देहेन[2] प्रवृत्तौ[2] मे फलप्राप्तिर्भवेद् यदि ।
प्रामाण्यनिश्चयस्तत्र ज्ञान[3] एव[3] भविष्यति ॥ २९७६ ॥
नान्यथेति न चाप्येवमनुयोगोऽत्र युक्तिमान् ।
उपाये वर्तते कस्मादिति न ह्यन्यथागतिः ॥ २९७७ ॥
न ह्युपायाद् विना कश्चिदुपेयं प्रतिपद्यते ।
इति सन्देहवृत्तोऽपि प्रेक्षावत्तां जहाति न ॥ २९७८ ॥
ननु चार्थक्रियाभासि ज्ञानं स्वप्नेऽपि विद्यते ।
न च तस्य प्रमाणत्वं तद्धेतोः प्रथमस्य च ॥ २९७९ ॥
नैवं भ्रान्ता हि साऽवस्था सर्वा बाह्यानिबन्धना ।
न बाह्यवस्तुसद्भावस्तास्ववस्थासु विद्यते ॥ २९८० ॥

द्वितीयापि प्रवृत्तिः सत्यपि प्रामाण्यसंशये सुतरां युक्तैवेति दर्शयन्नाह—संशयेनेत्यादि । यतः — यस्मात् प्रामाण्यनिश्चयं प्रति संशयेन प्रवृत्तेरेवोपायता तेन पुरुषेण निश्चिता, तत्श्चोपायविषये संशयाभावात् प्रवृत्तिर्युक्तैव ॥२९७५॥

कथं सा तेनोपायता निश्चिता ? इत्याह—सन्देहेन प्रवृत्तावित्यादि । सन्देहेन[4] प्रवृत्तोऽपीति[4] प्रामाण्यसन्देहेन प्रवृत्तोऽपीत्यर्थः । शेषं सुबोधत्वान्न विवृतम् ॥ २९७६–२९७८ ॥

ननु चेत्यादिना परोऽर्थक्रियाज्ञानात् प्रामाण्यनिश्चयस्यानैकान्तिकतां दर्शयन्नन्तरयामेव समर्थयते । [G 781] तद्धेतोः प्रथमस्येति । अर्थक्रियाज्ञानहेतोः । न प्रमाणत्वमिति सम्बन्धः ॥ २९७९ ॥

नैवमित्यादिना प्रतिविधत्ते । यदि तावद् [6]बाह्यार्थवादिनं बौद्धं प्रति चोद्यते

१ मान—पा०, मा च—गा० । २–२ सन्देहे नेह वृत्तौ—जै० ।
३–३ ज्ञात एव—पा०, गा० । ४–४ सन्देहवृत्तो०—पा०, गा० ।
५. ०यत्तरया०—पा०, गा० ।
६. बाह्यार्थ —पा० ।

स्वसंविदितरूपाश्च चित्तचैत्ताविलक्षणाः ।
अवस्थाद्वयभेदोऽपि स्पष्टं तेन प्रतीयते ॥ २९८१ ॥
स्यान्मतम्—परतस्तस्य प्रामाण्यस्य विनिश्चये ।
प्रसज्यते प्रमेयत्वमिति न[1] त्वविरोध्यदः[1]॥ २९८२ ॥

---

तदाऽसिद्धमिति प्रथमेन श्लोकेन दर्शितम् । तथा हि—तेन याह्यार्थवादिनाऽर्थसंवादात् प्रामाण्यमिष्टं नार्थक्रियाज्ञानसंवादात् । न च स्वप्नेऽर्थसंवादोऽस्ति; सर्वस्या एव स्वप्नावस्थाया भ्रान्तत्वेन सर्वेषामविसंवादात् । तत्र सर्वविज्ञानानामर्थमन्तरेणैवोत्पत्तेर्निर्विषयत्वम्, तेन जाग्रदवस्थायां भाविन एव ज्ञानस्य प्रामाण्यलक्षणावतारान्नानेन व्यभिचारो युक्त इति भावः । किञ्च—अपटुतमपूर्वकमस्थिरं[2] व्याकुलं च स्वप्नेऽर्थक्रियाज्ञानम्, तद्विपरीतं जाग्रदवस्थायामिति तथाविधस्य प्रामाण्ये कुतः स्वप्नेनानैकान्तः । अथ योगाचारं प्रति चोद्यते, तत्रापीदं प्रकृतानुपयोगि । तथा हि—सांव्यवहारिकस्येदं प्रमाणस्य लक्षणम् "प्रमाणमविसंवादि ज्ञानम्" ( प्र० वा० १.३ ) इति । तत्र चार्थक्रियानिर्भासिज्ञानसंवेदनमेवाविसंवादः । तदाविभवि लोकस्य तथा व्यवहारात्, तदर्थत्वाच्चार्थप्रवृत्तेः । तच्च सांव्यवहारिकं ज्ञानं जाग्रदवस्थाभाव्येव; तत्रैव लोके सर्वव्यवहाराणां पारमार्थिकत्वाभिनिवेशात्, न तु स्वप्नावस्थायाम् । ततश्च—जाग्रत्प्रत्ययत्वे सतीति विशेषणस्याभ्यधानेतरेण व्यभिचारः ।

स्यादेतत्—तुल्ये सर्वाकारतः[3] प्रतिभासे कथमयं भेदो निश्चीयते—इयं[4] जाग्रदवस्था, इयं स्वप्नावस्थेति ? अत आह—स्वसंविदित्यादि । सुबोधम् ॥ २९८०-२९८१ ॥

स्यान्मतमित्यादिना परस्य चोद्यमाशङ्कते । यदि परतः प्रामाण्यं निश्चीयते[4], तदा प्रमाणान्तरेण मीयमानत्वात् तत् मेयं प्राप्नोति । न च प्रमाणमेव प्रमेयं युक्तं विरोधादिति चोद्यम् । न त्वविरोध्यद इति परिहारः । अद इति एतत् । अपेक्षाभेदात् कार्यकारणपितृपुत्रव्यपदेशवदविरोधि ॥ २९८२ ॥

---

१-१. नन्वविरो॰—पा॰, गा॰ । २. अप्रवृत्ति॰—जै॰, पा॰ ।
३ सर्वस्य परतः—गा॰ । ४-४. पाठोऽयं पा॰, गा॰ पुस्तकयोर्नास्ति

तद्ग्राह्यवस्त्वपेक्षं हि प्रामाण्यं तस्य गीयते।
परतोऽवगतेस्तस्य प्रमेयत्वव्यवस्थितिः ॥ २९८३ ॥
अपेक्षाभेदतश्चैवं कार्यकारणतादिवत्।
प्रमाणत्वप्रमेयत्वव्यवस्था न विरुध्यते ॥ २९८४ ॥
एवमर्थक्रियाज्ञानात् प्रमाणत्वविनिश्चये।
नानवस्था पराकाङ्क्षाविनिवृत्तेरिति स्थितम् ॥ २९८५ ॥
समुत्पन्नेऽपि विज्ञाने न तावदवधार्यते।
यावत् कारणशुद्धत्वं न प्रमाणान्तराद् गतम् ? ॥ २९८६ ॥

---

एतदेव दर्शयति—तद्ग्राह्येत्यादि। [G 785] तेन ज्ञानेन यद् ग्राह्यं वस्तु तदपेक्षया तत् प्रमाणमेव, न प्रमेयम्, व्यवस्थापकप्रमाणान्तरापेक्षया तु प्रमेयमेव न प्रमाणमिति न साङ्कर्यदोषः। यथा कार्यं कारणमिति व्यपेक्षा नैवात्र सङ्कीर्यते ॥ २९८३–२९८४ ॥

एवमित्यादिनोपसंहरति। पराकाङ्क्षाविनिवृत्तेरिति। परा = अन्या चासा वाकाङ्क्षा चेति विग्रहः। परस्मिन् वा = स्वाकारादन्यस्मिन् आकाङ्क्षा पराकाङ्क्षा तस्या विनिवृत्तेरिति समासः। किञ्च—"प्रमाणमविसंवादि ज्ञानम्" इत्यनेनार्थक्रियाधिगमलक्षणफलप्रापकहेतोर्ज्ञानस्येदं लक्षणमुच्यते, ततश्च फलज्ञाने[1] लक्षणाननुगतात्, कथं तस्यापि प्रामाण्यमवसीयत इत्यस्य चोद्यस्यावकाशः कथं भवेत्? तथा हि—अङ्कुरस्य हेतुर्बीजमिति लक्षणे सति अङ्कुरस्यापि कथं बीजत्वमिति किं विदुषां प्रश्नो जायते। यथा च बीजस्य तद्भावोऽङ्कुरदर्शनादवगम्यते, तथा प्रमाणस्यापि तद्भावोऽर्थक्रियालक्षणफलदर्शनात्। न च तत्र फलमन्येन प्रमाणेनावगम्यते, यतोऽनवस्था प्रसज्यते, ज्ञानात्मनः फलस्य स्वत एव संवेदनात् सिद्धेः। न च स्वरूपे ज्ञानस्य भ्रान्तिः सम्भवति, तदनिश्चये स्वसंवेदनस्यैवाभावप्रसङ्गादिति यत्किञ्चिदेतत् ॥ २९८५ ॥

इदानीं कारणविशुद्धिद्वारेण प्रामाण्यनिश्चयेऽनवस्थादोषः समुत्पन्नेऽपी

---
1. फलज्ञाने—गा०।

अत्रापि सुधियः प्राहुर्नानवस्थेति येन सा।
शुद्धिः संवादिनो ज्ञानादनपेक्षात् प्रतीयते ॥ २९८७ ॥
सन्निकृष्टे हि विषये कार्यसंवाददृष्टितः।
कारणानां विशुद्धत्वमयत्नेनैव गम्यते ॥ २९८८ ॥
विप्रकृष्टे हि विषये तदुद्भूता मतिः प्रमा।
तज्जन्यत्वाद् यथैवेयं सन्निकृष्टार्थगोचरा[1] ॥ २९८९ ॥

---

पीत्यादिना श्लोकेन पूर्वपक्षमुत्क्षिप्य अत्रापीत्यादिना परिहरति।

[ G 786 ] द्विविधं हि ज्ञानम्—सन्निकृष्टविषयम्, विप्रकृष्टविषयं च। तत्र यत्तावत् सन्निकृष्टविषयम्, तस्य न कारणगुणावधारणात् प्रामाण्यनिश्चयः, किं तर्हि ? अर्थक्रियासंवादिविज्ञानात्। तथा हि—न तत्र गुणावधारणं सम्भवति यावदर्थक्रियासंवादात् सम्यक्त्वं नावसीयते, तदध्यवसिते सम्यक्त्वे पश्चात्कालभाविकारणगुणावधारणमकिञ्चित्करमेव।

यत् पुनर्विप्रकृष्टार्थविषयं ज्ञानम्, तस्य कारणगुणनिश्चयात् प्रामाण्यनिश्चय इति दर्शयन्नाह—विप्रकृष्टे हीत्यादि। यद्विप्रकृष्टविषयं सौवर्णशङ्खमादिज्ञानं तस्य तज्जन्यत्वात् = विशुद्धकारणजन्यत्वात्, सन्निकृष्टविषयशुक्लशङ्खमादिज्ञानवत् प्रामाण्यनिश्चयः। प्रयोगः—यद्विशुद्धकारणजनितं तत् प्रमाणम्, यथा सन्निकृष्टार्थविषयं शुक्लशङ्खमादिविज्ञानम्, विशुद्धकारणजनितं चेदं विप्रकृष्टार्थविषयं पीताकारशङ्खाद्यवभासि[2] विज्ञानमिति स्वभावहेतुः ॥ २९८६–२९८९ ॥

ननु चासिद्धो हेतुः। तथा हि—कारणशुद्धिर्नार्थसंवादमन्तरेणावधारयितुं शक्यते; अतीन्द्रियत्वादिन्द्रियाणाम्। अर्थसंवादापेक्षायां च तदेव प्रामाण्यं निश्चितमिति कारणगुणावधारणमनर्थकमेव स्यात्, तस्य प्रामाण्यनिश्चयोत्तरकालभावित्वात्। अथापि स्यात्—एकदा सन्निकृष्टविषयाद् विज्ञानादर्थक्रियासंवादतो गुणवत्तां निश्चित्यान्यदा विप्रकृष्टविषयस्यापि ज्ञानस्य संवादमन्तरेणैव कालान्तरेण गुणवत्ताया निश्चितत्वात् ततः प्रामाण्यनिश्चयो भविष्यतीति ? तदेतदसम्यक्; न हि क्षण-

---

1. ०गोचरम्—पा०, गा०।
2. ०शङ्खावभासि—पा०, गा०।

सितसाध्यक्रियावाप्त्या यथा शङ्खे पुरःस्थिते ।
कामलाकान्तनेत्रोत्थं[1] विज्ञानं[1] नेति गम्यते ॥ २९९० ॥
इत्थं कारणसंशुद्धौ प्रतीतायां[2] तदेव वा ।
शातकुम्भमये शङ्खे पीताकारमतिर्भवेत् ॥ २९९१ ॥
विशुद्धकारणोत्पादात् त्वस्याः प्रामाण्यनिश्चयः ।
निष्पादितक्रिये कम्बौ सिताकारमतेरिव ॥ २९९२ ॥
क्षुदाद्यनुपघातादिवचनादिदमुक्तवान् ।
भाष्यकारोऽप्यतो मोहादनवस्थेह चोद्यते ॥ २९९३ ॥

---

क्षयिणां भावानामेकरूपैव प्रवृत्ति सम्भवति, अपरापरप्रत्ययोपयोगेन प्रतिक्षण भिन्नशक्तित्वात् ? इत्येतत् सर्वमाशङ्कयाह—सितसाध्यक्रियावाप्त्येत्यादि ।

अनेनैतदाह—न ह्यस्माभि कालान्तरभाविनो विप्रकृष्टविषयस्य ज्ञानस्य कारणपरिशुद्धया प्रामाण्यं निश्चीयते, येनासिद्धता हेतोर्भवेत्, प्रतिक्षणमपरापरप्रत्ययोपयोगेन भिन्नशक्तिसम्भवादिति, कि तर्हि ? यदैव सन्निकृष्टविषयस्य ज्ञानस्य [ G. 787 ] शुक्लशङ्खग्राहिण सितसाध्यार्थक्रियाप्राप्त्या कारणशुद्धिनिश्चय, तदैव या विप्रकृष्टदेशवर्त्तिनि शातकुम्भमये शङ्खे पीताकारा धीरुत्पद्यते, तस्या कारणपरिशुद्धित प्रामाण्यमवसीयते । न च[3] तस्यामेवावस्थाया कारणान्यथात्व सम्भवति—मा भूत सन्निकृष्टार्थविषयज्ञानस्यार्थक्रियाविसवाद इति ॥२९९०-२९९२॥

एतच्च भवद्भिर्मीमांसकैरिष्टमेवेति दर्शयन्नाह—क्षुदाद्यनुपघातादीत्यादि। अनेन प्रतिज्ञाया स्ववचनविरोधोऽपि प्रतिपादित । तथा हि—भाष्यकारेणोक्तम्—"यदा क्षुदादिभिरुपहत मनो भवतीन्द्रियं वा, सौक्ष्म्यादिभिर्वा बाह्यो विषय, ततो मिथ्याज्ञानम्, अनुपहतेषु सम्यग्ज्ञानम् । इन्द्रियमनोऽर्थसन्निकर्षो हि ज्ञानस्य हेतु, असति तस्मिन्नज्ञानम् । तद्गतो हि दोषो मिथ्याज्ञानस्य हेतु, दुष्टेषु हि ज्ञानं मिथ्या भवति, दोषापगमे सम्प्रतिपत्तिदर्शनात् । कथ दुष्टादुष्टावगम इति चेत् ? प्रयत्नेनान्विच्छन्तो न चेद्दोषमवगच्छेम, प्रमाणाभावाददुष्टमिति मन्येमहि"

---

१–१. नेत्रोत्थविज्ञान—पा०, गा० । २. प्रतीतायां—पा०, गा० ।
३. वा—पा०, गा० ।

दुष्टकारणजन्यत्वशङ्कया नाधिगम्यते ।
मानत्वाऽऽद्यस्य[1] तच्छुद्धिज्ञानमभ्यधिकं मतम् ॥ २९९४ ॥
एवं चार्थक्रियाज्ञानाद्धेतुशुद्धिविनिश्चितौ ।
अकृतार्थक्रिये वृत्तेरर्थेऽवाच्योपपद्यते[2] ॥ २९९५ ॥
यदि स्वतःप्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् ।
बाधकारणदुष्टत्वज्ञानाभ्यां तदपोद्यते ॥ २९९६ ॥
बाधकारणदुष्टत्वज्ञानाभावात् प्रमाणता ।
प्राप्तेयं च परस्मात् ते भवेद् प्रामाण्यनिश्चयः ॥ २९९७ ॥
तथा हि तदभावोऽयमभावाख्यं प्रमान्तरम् ।
त्वत्पक्षेऽनुपलम्भाख्यमनुमानं तु मन्यते ॥ २९९८ ॥

---

(मी० द०, शा० भा० १.१.५) इति विस्तरः । अनेन हि ग्रन्थेन भाष्यकृता कारणशुद्धिज्ञानात् प्रामाण्यनिश्चय स्पष्टमाख्यात ; अन्यथा 'प्रयत्नेनान्विच्छन्तः'[3] इत्यनेन किं दर्शितं भवेत । ततश्च स्वत. प्रामाण्यप्रतिज्ञाव्याघात· ॥ २९९३ ॥

यदुक्तम्—"संवादगुणविज्ञाने केन वाभ्यधिके मते" ( तत्त्व० २८६०) इति । [illegible] संवादं प्रति पूर्वमुक्तम् , गुणज्ञानं प्रत्याह—दुष्टेत्यादि । मानतेति प्रामाण्यम् । आद्यस्येति अर्थज्ञानस्य । तद्धि कारणशुद्धिज्ञानाद् प्रथममासित्वा-दाद्यम् । तदिति तस्मादर्थे[4] ॥ २९९४ ॥

एवमित्यादिना प्रवृत्तेरदुष्टता[5] दर्शयति—अकृतार्थक्रिय इति । अकृता अर्थक्रिया येन [illegible] तयोक्त । अवाच्येति । अवचनीया, अनिन्द्येत्यर्थः । प्रामाण्य-निश्चय पूर्वत्वादस्या इति मन्यते ॥ २९९५ ॥

[ G. 788 ] "तस्मात् स्वत· प्रमाणत्व सर्वत्रौत्सर्गिकं स्थितम्" ( तत्त्व० २८६१ ) इत्यादावाह—यदि स्वत इत्यादि ।

---

1. ०द्यस्य—जै० ।
2. ०रर्थवाच्यो० पा०; ०रेपाऽवाच्यो०—गा० ।
3. यत्नेना०—जै०, पा० । 4. तस्मात्—पा०, गा० ।
5. रदुष्टता—गा० ।

अनयैवोपपत्त्या स्यादप्रामाण्यमपि स्वतः ।
तत्रापि शक्यते वक्तु यस्मान्न्यायोऽयमीदृशः ॥ २९९९ ॥
तस्माद् स्वतोऽप्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् ।
बाधकारणदुष्टत्वज्ञानाभावादपोद्यते ॥ ३००० ॥
तथा बोधात्मकत्वेन बुद्धेः प्राप्ताऽप्रमाणता ।
यथार्थज्ञानहेतूत्थगुणज्ञानादपोद्यते ॥ ३००१ ॥
अप्रामाण्ये परायत्ते भवत्येवानवस्थितिः ।

---

अत्र प्रथमेन श्लोकेन परपक्षानुवादः, द्वितीयादिना दूषणम् । यदि हि बाधकादिप्रत्ययेन प्रामाण्यमपोद्यते, एवं सति बाधकादिप्रत्ययाभावात् प्रामाण्यनिश्चयोऽभ्युपगतः स्यात् । ततश्च परत एव प्रामाण्यमुक्तं भवेत्, अभावस्यापि प्रमाणान्तरत्वेनेष्टत्वात् । अस्मत्पक्षे त्वनुपलब्धिसंज्ञकेऽनुमानेऽन्तर्भावान्न प्रमाणान्तरम् ॥ २९९६–२९९८ ॥

किञ्च–उत्सर्गापवादयोः कल्पितयो[1] शब्दार्थविषयत्वेनानवस्थितत्वाद् वस्तुचिन्तायामनधिकार एव, सर्ववस्तूनां स्वस्वभावव्यवस्थितत्वेन स्वभावान्तरानुगमाभावात्, केवलं तदुपन्यासो भवत उत्सर्गापवादविषयानभिज्ञत्वमेव प्रकटयति । तथा हि––त्वदुपवर्णितयैवोपपत्त्या विपरीतोऽप्युत्सर्गापवादः शक्यते कल्पयितुमिति दर्शयति––अनयैवेत्यादि ॥ २९९९–३००० ॥

यदप्युक्तं कुमारिलेन––

"तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥" (श्लो० वा० चो० सू० ५३) इति, अत्रापि हि दिशा शक्यमपि स्वतो[2] वक्तुमिति दर्शयन्नाह––तथा बोधात्मकत्वेनेत्यादि । [G 789] अप्रमाणतेत्यकारप्रश्लेषः । यथार्थज्ञानं च = अर्थसंवादज्ञानम्, हेतूत्थगुणज्ञानं च = कारणसमुत्थगुणज्ञानमिति समाहारद्वन्द्वः । "परायत्तेऽपि चैतस्मिन्[3]" (तत्त्व० २८६२) इत्यादावाह––अप्रामाण्य इत्यादि ।

---

१ कल्पितेन––गा० ।
२. पा०, गा० पुस्तकयोर्नास्ति ।
३. तस्मिन्––पा०, गा० ।

प्रमाणाधीनमेतद्धि स्वतस्तच्चाप्रतिष्ठितम् ॥ ३००२ ॥
तथा हि बाधकाभावात् प्रामाण्यं भवतोच्यते ।
बाधाभावोऽप्यभावाख्यं प्रमाणान्तरमिष्यते ॥ ३००३ ॥
तस्यापि [1] बाधकाभावात् प्रामाण्यमभिधीयते ।
तत्र तत्रैवमिच्छायां व्यवस्था नोपलभ्यते ॥ ३००४ ॥
अनपेक्षप्रमाणत्वं बाधकप्रत्यये यतः ।
न सिद्धं तेन नैवायं पूर्वज्ञानमपोहते ॥ ३००५ ॥
अथापि बाधकाभावाद् विना प्रामाण्यमिष्यते ।
क्वचिदाद्ये तथाभावे प्रद्वेषः किन्निमित्तकः ? ॥ ३००६ ॥
बाधकः प्रत्ययश्चायं पूर्वज्ञानमपोहते ।
अनपेक्षप्रमाणत्वाद् यदि शङ्काऽत्र किं भवेत् ॥ ३००७ ॥
अनपेक्ष्यप्रमाणत्वं शङ्क्यते चात्र बाधकम् ।
विरुद्धमेतदाशङ्का निश्चिते न हि जायते ॥ ३००८ ॥

एतद्धीति अप्रामाण्यम् । तच्चेति प्रमाणम् ॥ ३००१–३००२ ॥

कथमप्रतिष्ठितम् ? इत्याह—तथा हीत्यादि ॥ ३००३–३००४ ॥

यदुक्तम्—"बाधकप्रत्ययस्त्ववत्" (तत्त्व० २८६५) इत्यादि, तत्राह—अनपेक्षप्रमाणत्वमित्यादि । अभावाख्यस्य प्रमाणस्यापेक्षत्वादनपेक्षप्रमाणत्वमस्यासिद्धम्[2] ॥ ३००५ ॥

अथापीत्यादिना अनवस्थामेव समर्थयते । यद्यनवस्थाभयात् क्वचिद्विनैव बाधकाभावं प्रामाण्यमिष्यते, तदा प्रथमेऽपि ज्ञाने बाधकाभावो नापेक्षणीयः स्यात् । ततश्च सर्वज्ञानानां प्रामाण्यप्रसङ्गः ॥ ३००६ ॥

यदुक्तम्—"तत्रापि त्वपवादस्य स्यादपेक्षा" ( तत्त्व० २८६६) इत्यादि, तत्राह—बाधकः प्रत्ययश्चायमित्यादि । यदि बाधकः प्रत्ययोऽनपेक्ष्यप्रमाणभाव , तत्कथं तत्रापवादाशङ्का, येनोच्यते 'तत्रापि त्वपवादस्य स्यादपेक्षा' इति, ततश्च

1. बाधकाभाव—पा०, गा० ।
2. पेक्षित्वा०—पा०; ०पेक्षितत्वा०—गा० ।

स्वतःप्रामाण्यपक्षेऽपि स्वरसेनैव निश्चयात् ।
कस्माद् बाधकसद्भावसिद्धौ यत्नो विधीयते ॥ ३००९ ॥
तथा हि स्वरसेनैव न यस्मिन् माननिश्चयः ।
निश्चीयतेऽयत्नेन[1] सामर्थ्यात् तत्र बाधकः ॥ ३०१० ॥
अतः परीक्षकज्ञानत्रयमत्र किमुच्यते ।
नैकस्याप्यवकाशोऽस्ति तस्मिन्निश्चयतः स्वतः ॥ ३०११ ॥
यदि चोत्पद्यते शङ्कानुपलम्भेऽपि संशयात् ।
बाधाभावाविनाभूतं यस्मान्नानुपलम्भनम् ॥ ३०१२ ॥
एवं सति त्रये कस्मात् परितोषस्त्वया कृतः ।
प्रवृत्तावपि शङ्क्येत बाधा पूर्ववदत्र हि ॥ ३०१३ ॥
यावन्न कार्यसंवादस्तावन्न विनिवर्त्तते ।
बाधाशंका यतस्तस्मिन् नियमस्त्रितयेऽफलः ॥ ३०१४ ॥

---

परस्परव्याहतमेतदुक्तम्—अनपेक्षप्रमाणत्वम्, तत्र चाशङ्क्यते—बाधकमिति । तथा हि—'अनपेक्षम्' इत्यनेन निश्चयेन विषयीकृतमुच्यते, [G 790] यत्र च निश्चयस्तत्राशङ्काया असम्भव, निश्चयारोपमनसोर्बाध्यबाधकभावात् । आशङ्काया-श्चोभयांशावलम्बित्वेनारोपाकारप्रवृत्तत्वात् ॥ ३००७–३००८ ॥

"अयत्नानुरूपयत्नेन" (तत्त्व० २८६८) इत्यत्राह—स्वतःप्रामाण्यपक्ष इत्यादि । यदि स्वत एव प्रामाण्यनिश्चय, तदा निश्चयेन प्रामाण्यस्य व्याप्तत्वाद्, यत्रानिश्चयस्तत्र सामर्थ्यादप्रामाण्यस्यावस्थानाद् बाधकसद्भावो यत्नमन्तरेणैव निश्चित इति तद्भावसिद्ध्यर्थो व्यर्थो यत्न । तत्र चैकस्यापि परीक्षकज्ञानस्यापेक्षावकाशो नैव सम्भवतीति किं पुनस्त्रयाणामिति, अत इदमप्यसङ्गतमुक्तम् । एवं[2] च परीक्षकज्ञानत्रितयं नातिवर्त्तत इति दर्शयति—अत इत्यादि । स्यादेतत्—अनुपलम्भमात्रेण बाधकाभावो न शक्यते निश्चेतुम्, सतोऽपि कस्यचिद् दूरसूक्ष्मव्यवहितस्यानुपलब्धेर्बाधकाभावेनानुपलम्भस्याव्याप्तत्वात्, तेन बाधकाभावसिद्ध्यै यत्नो

---

1 °ऽत्र यत्नेन—पा०, °ऽप्ययत्नेन—पा० ।
2. इद—पा०, पा० ।

ततश्चाजातबाधेनाप्याशंक्यं बाधकं पुनः ।
छलेन वस्तुनस्तत्त्वं न हि जात्ववतिष्ठते ॥ ३०१५ ॥
आजीवितात् समुत्पन्नं बाधप्रत्ययवर्जितम् ।
शङ्खे पीतनिभं ज्ञानं प्रमाणं न हि जायते ॥ ३०१६ ॥
विशुद्धिकारणाभावान्नोपजायेत बाधकम् ।
अन्येन वा निमित्तेन नातः शंका निवर्त्तते ॥ ३०१७ ॥
सनिमित्तैव सेयमाशंका न[1] तु[1] मोहतः ।
शुद्धिसंवाददृष्टौ तु नाशंका सुधियो भवेत् ॥ ३०१८ ॥

---

विधीयत इति ? यद्येवम्, परीक्षकज्ञानत्रयनियमं जहीहि, प्रथमज्ञानवदन्यस्यापि बाधकस्याशङ्क्यमानत्वात्, [ G. 791 ] यावद्धि फलज्ञानं[2] नोदेति तावद् बाधाशङ्का केन निवर्त्तताम्, येन त्रयनियमः स्यात्, न चाक्रोशमात्रेणैव विना प्रमाणं प्रेक्षावतामाशङ्कानिवृत्तिर्युक्ता । तथा हि—वस्तुस्थित्या प्रमाणचिन्ता, नायं छलव्यवहारः प्रस्तुतो येन कतिपयप्रत्ययमात्रं निरूप्यते । यदि पुनर्ज्ञानत्रयोदयावधिमात्रेण प्रामाण्यमवतिष्ठते, हन्त तर्हि येषामाजीवितं कामलोपहतचक्षुषां पीतशङ्खाकारमेव ज्ञानमुपजायते तेषां तद्विज्ञानं प्रमाणं स्यात् ॥ ३००९–३०१६ ॥

स्यादेतत्—यदप्रमाणम्, तस्य किमिति ज्ञानत्रयपरीक्षाया ऊर्ध्वं बाधकं नोपजायते, अनुत्पत्तेर्नास्तीत्यवसीयते ? इत्याशङ्क्याह—विशुद्धीत्यादि । विशुद्धेः कारणं द्रोणकुसुमरसनिषेकादि, तस्याभावान्नोपजायते बाधकम् । अन्येन वा निमित्तेनेति । यथा मरुमरीचिकानिचये समुपजातसलिलविभ्रमस्य पुंसोऽनुपसर्पणात् सलिलस्वभावविविक्तमरुस्थलीनिर्भासि ज्ञानं नोपजायते ॥ ३०१७ ॥

"उत्प्रेक्षेत हि यो०" ( तत्त्व० २८७१ ) इत्याद्यत्राह—सनिमित्तैवेत्यादि । प्रतिपादितमेतद्यथा कारणशुद्धिसंवादज्ञानाभ्यां शङ्का निवर्तते । यत् पुनरुक्तम् "तथा च वासुदेवेन" ( तत्त्व० २८७२ ) इत्यादि, तत् केवलमात्मनो भक्तिवादावलम्बनं प्रकटितम्, न वस्तुस्थितिः । न हि वचनमात्रान्निर्युक्तिकात्

---

१–१. सत्र—पा०, गा० । २. यावद्धि फल०—गा० ।

स सर्वव्यवहारेषु संशयात्मा न जायते ।
निःसंशया हि धीस्तस्य शुद्धिसंवाददर्शने ॥ ३०१९ ॥
अत्रापि यः पुनः शंकां कश्चित् प्रकुरुते जडः ।
संशयात्मकताऽजेन[1] मन्ये तं प्रति निन्दिता ॥ ३०२० ॥
देशकालनरावस्थाभेदापेक्षाप्रकल्पिते ।
प्रामाण्यनिश्चयेऽन्यस्माद् व्यक्तं प्रामाण्यनिश्चितिः ॥३०२१॥
तथा हि देशकालादौ बाधाभावात् सुनिश्चितौ ।
प्रमाणान्तरतः प्राच्ये[2] ज्ञाने प्रामाण्यनिश्चयः ॥ ३०२२ ।

परस्य प्रेक्षावतो व्युत्थितचेतसस्तत्त्वभावनिर्णयो जायते । तथा हि—वासुदेववचनमन्येनाभिसम्बन्धिना व्यवस्थितत्वादविरोधीति दर्शयन्नाह—अत्रापीत्यादि । अत्र = शुद्धिसंवाददर्शने, यो भवद्विध शङ्का कुरुते—"संवादेनापि संवादः पुनर्मृग्यस्तथैव हि" ( तत्त्व० २८५३ ) इत्येवम्, तं प्रति, अजेन = विष्णुना, संशयितात्मता[3] निन्दितेति सम्भाव्यते ॥ ३०१८–३०२० ॥

[G 792] "यत्रानेनापवादोऽसौ यत्र सम्भाव्यते मतौ" ( तत्त्व० २८७३ ) इत्यादावाह—देशेत्यादि । अनेन स्ववचनविरोधं प्रतिपादयति । तथा हि—देशकालनरावस्थापेक्षया प्रामाण्यनिश्चये प्रकल्प्यमाने परत एवेति स्पष्टमुक्तं भवति, यतो देशकालादौ प्रमाणान्तरतो बाधाया अभावे निश्चिते सति प्राच्ये = प्रथमे ज्ञाने प्रामाण्यनिश्चयोऽभ्युपगम्यमानः कथं परतो नाभ्युपगतः स्यात् । अवश्यं हि प्रमाणान्तरतो बाधाया अभावो निश्चेयः[4] । तथा हि—स्वतः प्रामाण्येऽभ्युपगम्यमाने सर्वज्ञानानां प्रामाण्यप्रसङ्गो मा भूदित्यवश्यं त्वया वक्तव्यम्—यत्र बाधा नास्ति तस्यैव स्वतःप्रामाण्यं नान्यस्येति । स च बाधाया अभावोऽनुपलम्भमात्रान्न शक्यते निश्चेतुम्; व्यभिचारादिति सामर्थ्यादुपलब्धिलक्षणप्राप्तानुपलम्भतो निश्चेयः; तस्यैव बाधाभावेन व्याप्तत्वात् । स चोपलब्धिलक्षणप्राप्ता

1. ०येन—पा० ।
2. प्राच्ये—पा०, गा० ।
3. संशयात्मकता—पा०, गा० ।
4. निश्चय—पा० ।

ऋणादिव्यवहारस्तु यो वाक्यत्रययोगवान् ।
तादृशस्थलात्मैव नोदाहार्यः प्रमास्थितौ ॥ ३०२३ ॥
अर्थिप्रत्यर्थिनौ तत्र स्मृत्वा स्मृत्वा परिस्फुटम् ।
न हि सूक्ष्मेक्षिकां कर्तुं लभेते तत्र वस्तुनि ॥ ३०२४ ॥
वस्तुस्थित्या प्रमाणं तु व्यवस्थाप्यं छलान्ननु[1] ।
प्रकृताप्रतिरूपोऽतो व्यवहार उदाहृतः ॥ ३०२५ ॥
त्रिसत्यताऽपि देवानां नैव निश्चितिकारणम् ।
आद्यान्निश्चितेरसद्भावे नैव स्यात् परतोऽप्यसौ ॥ ३०२६ ॥
तदीयमेव येनेदं वचनद्वयमुत्तरम् ।
तदाद्ये प्रत्ययाभावे को विशेषस्तदन्ययोः ! ॥ ३०२७ ॥

---

नुपलम्भः संवादविज्ञानतो नान्यो युक्त इति प्रमाणान्तरत एव प्रामाण्यनिश्चयो-ऽभ्युपगतः स्यात् ॥ ३०२१-३०२२ ॥

"ऋणादिव्यवहारे०" (तत्त्व० २८८१) इत्यावाबाह—ऋणादीत्यादि । वस्तुस्वभावप्रतिबद्धायां प्रमास्थितौ प्रकृतायां इच्छामात्रविरचितसङ्केतप्रतिबद्धस्य चलात्मनो ऋणादिव्यवहारस्योदाहरणम्, तत् केवलं भवतः प्रकृतानभिज्ञतां प्रकटयति ॥ ३०२३-३०२५ ॥

"त्रिसत्यताऽपि देवानाम्" ( तत्त्व० २८८३ ) इत्यादावाह—त्रिसत्येत्यादि । [ G 793 ] आद्यादिति । प्रथमाद् वचनान्निश्चितेरसद्भावे सति परतः = उत्तरकालभाविनो वचनद्वयात् असौ = निश्चितिर्नैव स्यात्, विशेषाभावात् ॥ ३०२६ ॥

एतदेव दर्शयति—तदीयमित्यादि । उत्तरमिति पश्चात्कालभावि । प्रत्ययाभाव इति निश्चयाभावे । तदन्ययोरिति । तस्मादन्ययोः, उत्तरकालभाविनोरित्यर्थः । यो ह्येकं वचनं द्वितीयं च मिथ्या वदेत् स तृतीयमपि किं न वदेत्, कस्तदानीं तस्य प्रतिरोद्धा, येन तृतीयात् सम्प्रत्ययो भवेत ! ॥३०२७॥

---

1. ०न तु—चै० ।

अतः पूर्वोक्तया युक्त्या त्वत्पक्षेऽप्यनवस्थितः ।
प्रमाणत्वाप्रमाणत्वे यथायोगमतः[1] स्थिते ॥ ३०२८ ॥
वाक्यं नित्यं पुराऽस्माभिर्विस्तरेण[2] निराकृतम् ।
क्षीणनिःशेषदोषश्च नाप्तोऽस्ति भवतां[3] मते[3] ॥ ३०२९ ॥
अक्षीणावृतिराशिस्तु कीदृगाप्तो भविष्यति ।
तस्य सम्भाव्यते दोषादन्यथापि वचो यतः ॥ ३०३० ॥
जातोऽप्याप्तो[4] तदीयोऽसौ गुणौघः केन शक्यते ।
ज्ञातुमाप्तप्रणीते स्याद् यतो वाक्येऽवधारणम् ॥ ३०३१ ॥

---

"तेन स्वतःप्रमाणत्वे" ( तत्त्व० २८८४ ) इत्यादावाह—अत इत्यादि । पूर्वोक्ता युक्तिः—

"तथा हि बाधकाभावात् प्रमाणं भवतोच्यते ।
बाधाभावोऽप्यभावाख्यप्रमाणान्तरमिष्यते" ॥ ( तत्त्व० ३००३ )

इत्यादिनोक्ता ॥ ३०२८ ॥

"नित्यमाप्तप्रणीतं च" (तत्त्व० २८८५) इत्यादावाह—वाक्यमित्यादि ।

"पूर्वं श्रुतिपरीक्षायाम् नित्यं वाक्यं विस्तरेण निरस्तमित्यसिद्धत्वात् कुत स्तस्य स्वतःप्रामाण्यचिन्तावतारो भवेत् । आप्तस्य स्वयमनभ्युपगमात् प्रणीतमपि वाक्यमसिद्धमेव । तथा हि—यस्यानृतहेतवो रागादयो दोषाः निःशेषं प्रहीणाः, स एवाप्तो युक्तः; अन्यथा रागादिभिर्दोषैरनृतहेतुभिः परीतचेतसः कथमाप्तत्वं स्यादिति । न च भवद्भिः प्रहीणाशेषक्लेशावरणः कश्चिदाप्तोऽभ्युपगम्यते, येनाप्तवचनं प्रमाणं भवेद् भवताम् ॥ ३०२९-३०३० ॥

किञ्च—भवतु नामाप्तः, तथापि तस्य वचनमसिद्धमेवेति दर्शयति—जातोऽपी- त्यादि । [G. 791] न ह्याप्तमनन्यथायं 'तदीयमेतद्वचनम्' इत्येवमवधारयितुं शक्यम्, न चाप्तावधारणं सम्भवति । तथा हि—यस्तावत् क्षीणनिःशेषदोषोऽती-

---

1. ०मतो—चै० ।
2. पुरोऽस्माभि०—चै० ।
3-3. भवतः स्मृतो—पा०, गा० ।
4. आप्तेऽ०—पा०, गा० ।
5. पु

योऽप्यर्तीन्द्रियदृक् पश्येत् तदीयगुणसम्पदम् ।
तस्याप्याप्तप्रणीतेन वचसा किं प्रयोजनम् ? ॥ ३०३२ ॥
स हि वाक्यनिराशंसः स्वयमर्थं प्रपद्यते ।
अन्योऽप्याप्तापरिज्ञानात् ततोऽर्थं नावगच्छति ॥ ३०३३ ॥
स्वतःप्रामाण्यवादे च स्वतो निश्चयजातितः ।
विनाशासम्भवायोगात् किमयं विनिवारणम् ॥ ३०३४ ॥
न नाम दूष्यते वाक्यं दोषैर्गुणनिराकृतैः ।
गुणानिश्चयतस्तत् तु विनिश्चेतुं न शक्यते ॥ ३०३५ ॥
वाक्यस्याकर्तृकत्वं च प्रागेव विनिवारितम् ।
नातः कर्तुरभावे ते[1] न स्युर्दोषा निराश्रयाः ॥ ३०३६ ॥

न्द्रियार्थदर्शी स यद्यप्याप्तमवधारयति, तथापि तद्वचनमकिञ्चित्करमेव; स्वयं सर्वार्थप्रत्यक्षदर्शित्वेन, तद्वचनादप्रवृत्तेः । अतस्तस्य तदवधारणमनर्थकम् । यश्चान्योऽर्वाग्दर्शी नैवाप्तावधारणपटुरिति नासौ स्वतस्तद्वचनदर्थमवगच्छति; अनिश्चितत्वात् ॥ ३०३१–३०३३ ॥

"ये विद्यागुरवः" ( तत्त्व० २८८६ ) इत्यादावाह—स्वतःप्रामाण्ये-त्यादि । निश्चयजातितः = निश्चयोत्पत्तेः । अन्यथा यदि स्वतो निश्चयो नोत्पद्यते; तदा स्वतःप्रामाण्यवादो हीयेत ॥ ३०३४ ॥

"अतो गुणनिपिद्धैर्वा" ( तत्त्व० २८८७) इत्यत्राह—न नामेत्यादि । यदि नाम दोषैर्न दूष्यते गुणवद्वाक्यम्, गुणैर्दोषाणां निराकृतत्वात्; तथापि परसन्तानवर्तिनां गुणानामतीन्द्रियत्वात् तदनिश्चये गुणवद्वाक्यं निश्चेतुं न शक्यते । चाविनिश्चितं[2] स्वतःप्रमाणं भवितुमर्हति ॥ ३०३५ ॥

"यद्वा कर्तुरभावेन न स्युर्दोषाः" ( तत्त्व० २८८७ ) इति, अत्राह—वाक्यस्येत्यादि । प्रागेवेति श्रुतिपरीक्षायाम् ॥ ३०३६ ॥

1. न—गा० ।
2. चापि निश्चितं—पा०; चाविनिश्चितं—गा० ।

गुणेभ्यश्च प्रमाणत्वं यथा युक्तं तथोदितम् ।
गुणानां चापरिज्ञाने दोषाभावो न लक्ष्यते ॥ ३०३७ ॥
स्वतो वाक्यं प्रमाणं तद् दोषाभावोपलक्षितम् ।
न युक्तमपरिज्ञानाद् दोषाभावो ह्यलक्षणम् ॥ ३०३८ ॥
न हि दण्डापरिज्ञाने पुंसां दण्डीति लक्ष्यते ।
तल्लक्षितं स्वतो मानमित्येतच्च पराहतम् ॥ ३०३९ ॥
दोषाभावः प्रमाभावात् प्रमाणान्निश्चितात्मकः ।
वाक्यस्य लक्षणं युक्तं परतोऽतः प्रमास्थितिः ॥ ३०४० ॥

"तत्रासोक्तेर्द्वयं दृष्टम्" ( तत्त्व० २८८८ ) इत्यादावाह—गुणेभ्य[1] इत्यादि[1] । [G. 795] तथोदितमिति । "तत्रापि सुधियः प्राहुः" ( तत्त्व० २९८७ ) इत्यादिना ।

यच्चोक्तम्—"स्वतो वाक्यं प्रमाणं च दोषाभावोपलक्षितम्" ( तत्त्व० २८८९ ) इति, तदप्ययुक्तम्; गुणानामतीन्द्रियत्वात् तदपरिज्ञाने दोषाभावस्य गुणभावात्मकस्य लक्षयितुमशक्यत्वात् । एतदेवाह—दोषाभावो ह्यलक्षणमिति । लक्ष्यतेऽनेनेति लक्षणम्, न लक्षणमलक्षणम्, उपलक्षणं न भवतीत्यर्थः; अपरिज्ञातत्वादिति भावः ॥ ३०३७-३०३८ ॥

न चापरिज्ञातं लक्षणं भवतीति दर्शयति—न हीत्यादि । किञ्च—भवतु नाम दोषाभावो लक्षणम्, तथापि दोष एव; स्ववचनव्याघातप्रसङ्गात् । तथा हि—यदि दोषाभावेन प्रामाण्यमुपलक्ष्यते, तदा स्पष्टमेव परतःप्रामाण्यमुक्तं स्यात्, ततश्च 'स्वतः प्रामाण्यम्' इत्येतद्वचनं पराहतं स्यात् । एतदेव स्पष्टयति—दोषाभाव[2] इत्यादि[2] । दोषाभावो यद्यभावाख्येन प्रामाण्येन निश्चितो भवेत्, तदाऽसौ लक्षणं भवेत्; अनिश्चितस्य लक्षणत्वायोगात्, अन्यस्य चाभावनिश्चायकस्य प्रमाणस्याभावात् । ततश्च परतोऽभावात्मकात् प्रामाण्यं स्फुटतरमेवोक्तं स्यात् ॥ ३०३९–३०४० ॥

१–१. पा०, गा० पुस्तकयोर्नास्ति ।    २–२. पा०, गा० पुस्तकयोर्नास्ति ।

नृदोषविषयं ज्ञानं तेषु सत्सूपजायते ।
न नाम दोषाभावे तु गुणाज्ञाने कथं मतिः ॥ ३०४१ ॥
द्वेषमोहादयो दोषाः कृपाप्रज्ञादिबाधिताः ।
तथार्थनिश्चये तेषामसत्त्वं हि कथं गतम् ॥ ३०४२ ॥
तदा न व्याप्रियन्ते[1] तु ज्ञायमानतया[1] गुणाः ।
दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः ? ॥ ३०४३ ॥
(श्लो० वा०, चो० सू० ६७)
यद्येवम्, संशयो न स्याद् विपर्यस्ता मतिस्तथा ।
दोषाः सन्त्यस्य नो वेति सन्त्येवेत्याप्तसम्मते ॥ ३०४४ ॥
तत्सन्देहविपर्यासौ भवतश्चात्र कस्यचित् ।
यावद् गुणगणाधार इत्यसौ नावगम्यते ॥ ३०४५ ॥

यदुक्तम्—"नृदोषविषयं ज्ञानं तेषु सत्सु न जायते" (तत्त्व० २८९२) इति, तत्राह—नृदोषेत्यादि । यदि नाम गुणेषु सत्सु दोषविषयं ज्ञानं नोत्पद्यते, गुणानां परसन्तानवर्त्तिनामतीन्द्रियत्वात् तदपरिज्ञाने सति दोषाभावनिश्चयो न प्राप्नोति; गुणभावात्मकत्वाद् दोषाभावस्य । न हि घटविविक्तप्रदेशापरिज्ञाने घटाभावो ज्ञातुं शक्यते ॥ ३०४१ ॥

एतदेव दर्शयति—द्वेषेत्यादि । [G. 796] तेषामिति दोषाणाम् ॥ ३०४२ ॥

अत्र कुमारिलेनोक्तम्—

"तदा न व्याप्रियन्ते तु ज्ञायमानतया गुणाः ।
दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः ॥"
(श्लो० वा०, चो० सू० ६७)

इत्येतत् तदेत्यादिनाशङ्कते । उपकारिण इति दोषाभावनिश्चयं प्रत्युपकारिणः ॥ ३०४३ ॥

यद्येवमित्यादिना प्रतिविधत्ते । यदि सत्तामात्रेण गुणा दोषाभावनिश्चयाय व्याप्रियेरन्, तदाऽऽप्तसम्मते पुंसि न कस्यचिद् दोषाभावं प्रति संशयविपर्यासौ

1–1. ०ऽज्ञायमान०—जै०पु।

दोषाभावेऽप्ययज्ञाने स्वतः प्रामाण्यनिश्चयः ।
तथापि विमतिर्न स्यात् पूर्ववत् तत्र वक्तरि ॥ ३०४६ ॥
दोषाभावस्य चाज्ञानादप्रमाद्यनास्तिता ।
कथं प्रतीयते येन भवेत् प्रामाण्यनिश्चयः ॥ ३०४७ ॥
अथाप्रमाद्यसत्ताऽप्रतीतावपि गम्यते ।
प्रामाण्यं स्वतः एवैवं विमतिः स्यान्न पूर्ववत् ॥ ३०४८ ॥
किमस्य वचनं मानं किं वाऽमानमथाप्यदः ।

प्राप्नुत, निश्चयेन तयोर्व्यापितत्वात् । न चैव भवति । तत् तस्माद् यावद् गुणवत्तानिश्चयो न जायते, तावद् दोषाभावविषयौ संशयविपर्यासौ भवत एवेति न सत्तामात्रेण व्याप्रियन्ते गुणा ॥ ३०४४–३०४५ ॥

अथापि स्यात्—मा भूद् गुणानां व्यापारो दोषाभावनिश्चयाय, तथाप्य निश्चितादेव दोषाभावात् प्रामाण्यनिश्चयो भविष्यतीति । एतदप्ययुक्तम्, पूर्ववत् तत्रासम्मते वक्तरि विमत्यभावप्रसङ्गात् । न हि तद्वाक्यस्य स्वतः प्रामाण्यनिश्चये सति तस्मिन् वक्तरि किमयं सत्यवादी, न वा, नैव वेति मतिर्युक्ता । विमतिशब्देनात्र संशयविपर्यासौ विवक्षितौ । विपरीताकारा मतिर्विमतिरिति कृत्वा संशयस्योभयाकारत्वेन विपरीताकारसम्भवात् ॥ ३०४६ ॥

यच्चापरमिदमुक्तं कुमारिलेन—

"तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः ।
अप्रमाणद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः ॥"

( श्लो० वा०, चो० सू० ६५ ) इत्यादि,

तदपि दोषाभावनिश्चये सत्ययुक्तमेवेति दर्शयति—दोषाभावस्येत्यादि । [ G 797 ] यदि हि संशयविपर्यासाभ्यामप्रमादभूताभ्यां रहितं ज्ञानं सिद्ध्येत्, तदा तत्प्रमाणं भवेत् अन्यथाऽपवादसमाक्रान्ते विषये कथमुत्सर्गो निविशेत । तयोश्च संशयविपर्यासयोर्दोषहेतुकत्वाद् दोषाभावानिश्चये तयोरभावनिश्चयो न युज्यते । अप्रमाद्यनास्तितेति । संशयविपर्ययनास्तिता ॥ ३०४७–४८ ॥

तामेव विमतिं दर्शयति—किमस्य वचनं मानमित्यादि ॥ ३०४९ ॥

अमानमेव सर्वेषां स्वतःप्रामाण्यनिश्चयात् ॥ ३०४९ ॥
दोषाभावाप्रमाभावगुणभावेषु त्रिष्वपि ।
अवश्याभ्युपगन्तव्या प्रतीतिर्नियमादतः ॥ ३०५० ॥
साऽप्रमाणं प्रमाणं वेत्येषाप्येवं[1] विकल्प्यते ।
यथार्थनिश्चयायाङ्गमप्रमाणं कथं भवेत् ! ॥ ३०५१ ॥
प्रामाण्ये परतः प्राप्ते तत्प्रामाण्यविनिश्चयः ।
कथं वा गम्यते तस्याः प्रतीतेः सा प्रमात्मता ॥ ३०५२ ॥
बाधकप्रत्ययाभावादिति चेत् सोऽपि किं प्रमा ।
न वेति दोषः सर्वोऽपि पुनरत्रानुवर्त्तते ॥ ३०५३ ॥
प्रामाण्ये परतःप्राप्ता प्रस्तुतस्य प्रमाणता ।
यथार्थज्ञानहेतुत्वमप्रमाणस्य वा कुतः ॥ ३०५४ ॥

---

एवं दोषाभावादीनां सत्तामात्रेण प्रामाण्यनिश्चयं प्रत्यङ्गभावो न युक्त इति प्रतिपादितम् । इदानीं तेषु निश्चयापेक्षणे परतः प्रामाण्यम्, अनवस्था च प्रसज्यत इत्येतद् द्वयं विस्तरेण प्रतिपादयन्नाह—दोषाभावेत्यादि । दोषाभावे, अप्रमाणद्वयाभावे, गुणेषु चावश्यं प्रतीतिः = निश्चयाख्या अभ्युपगन्तव्या; अन्यथा प्रामाण्यनिश्चयायोगादिति प्रतिपादितत्वात् ॥ ३०५० ॥

यदि नामाभ्युपगता, ततः किम् ? इत्याह—सेत्यादि । सैषा त्रिष्वपि यथोक्तेषु प्रतीतिः प्रामाण्याङ्गत्वेनेष्टा—किमप्रमाणम्, आहोस्वित् प्रमाणमिति कल्पनाद्वयम् । यद्याद्यः कल्पः, तदा प्रामाण्यनिश्चयाङ्गं न प्राप्नोति; स्वयमप्रमाणत्वात् । न ह्यप्रमाणत्वेन गृहीतः साक्षी व्यवहारे निश्चयाङ्गं भवति ॥ ३०५१ ॥

अथ द्वितीयः पक्षः, तदा परतस्तस्य विवक्षितस्य ज्ञानस्य प्रामाण्यप्रसङ्गः, अनवस्थादोषश्च । [ G. 798 ] तामेवानवस्थां प्रतिपिपादयिषुः सन् पृच्छति—कथं वेत्यादि । सोऽपीति बाधकप्रत्ययाभावः ॥ ३०५२–३०५३ ॥

कथमसौ दोषोऽत्राप्यनुवर्त्तते ? इत्याह—प्रामाण्य इत्यादि । सुबोधम् ।

---

1. वेत्येषामेव—पा०, गा० ।

अस्यापि गम्यते केन प्रामाण्यमिति चिन्त्यते ।
बाधकप्रत्ययासत्त्वादित्यनिष्ठा प्रसज्यते ॥ ३०५५ ॥
तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः ।
अप्रमाणद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः ॥ ३०५६ ॥
(श्लो० वा०, सो० सू० ६५)
सर्वत्रैवं प्रमाणत्वं निश्चितं चेदिहाप्यसौ ।
पूर्वोदितो दोषगणः प्रसक्तो चानवस्थिति- ॥ ३०५७ ॥
दोषाभावे प्रमासत्त्वमितीदं च निषेधनम् ।
केवलं यदि कल्प्येत तत्सिद्धिर्नैव सम्भवेत् ॥ ३०५८ ॥

---

अस्यापीति बाधकप्रत्ययाभावस्य ॥ ३०५४-३०५५ ॥

किञ्च—"तस्माद् गुणेभ्यो दोषाणामभाव" इत्यादिना प्रदर्शितेन न्यायेन यदि सर्वत्र प्रामाण्यं निश्चीयते, तदा पूर्वमेव प्रमाणं परतोऽभ्युपगतं स्यात्, अनवस्था च । तद्दर्शयति—तस्मादित्यादि । पूर्वोदित इति । गुणादीनां परसन्तानवर्तिनामर्वाग्दर्शनस्यातीन्द्रियत्वात् तदनिश्चये दोषाभावस्याप्यनिश्चयाद-प्रमाणद्वयासत्त्वमप्यनिश्चितमिति न गुणादिभ्यः प्रामाण्यं सिद्ध्येत् । अथ ते सत्तामात्रेणोपकारकाः, तदा विमतिर्न स्यादित्येवमादिर्दोषगणः सर्वत्र प्रसज्यते ॥ ३०५६-३०५७ ॥

अपि च—"तस्माद् गुणेभ्यो दोषाणामभाव" इत्यादिना यत् प्रामाण्यनिश्चयाङ्गत्वेनोक्तम्—अप्रमाणद्वयासत्त्वं दोषाभावश्चेत्येतद् द्वयम्, तत्किं प्रसज्यप्रतिषेधमात्रमिष्टम् ? आहोस्वित् पर्युदासात्मकम् ?—इति कल्पनाद्वयम् । प्रथमपक्षे दोषमाह—दोषाभाव इत्यादि । यदि प्रसज्यप्रतिषेधमात्रमिष्टम्, तदा तस्य सिद्धिर्नैव सम्भवेत् । तथा हि—तस्य [G 799] स्वतो वा सिद्धिर्भवेत्, परतो वा; स्वतोऽपि सिद्धिर्भवन्ती स्वयं प्रकाशात्मतया वा भवेत्, निश्चयजननाद् वा, परतोऽपि कस्माच्चिदुपलम्भाद् वा भवेद्, अनुपलम्भाद्वा—इति पक्षाः । न तावत् स्वतः प्रकाशात्मतया सिद्धिर्युक्ता, तस्यावस्तुत्वात् प्रकाशात्मतायाश्च वस्तुधर्मत्वात् । ज्ञानमेव हि प्रकाशात्मतया स्वसंवित्त्या सिद्ध्यति, न तु वस्तु-

अभावानुपलम्भेन[1] तत्सिद्धिर्नावकल्प्यते ।
अनवस्थितिदोषाच्च न युक्तानुपलम्भतः ॥ ३०५९ ॥
दोषाप्रमाद्वयासत्ता गम्यतेऽनुपलम्भतः ।
उपलम्भस्य नास्तित्वमन्येनेत्यनवस्थितिः ॥ ३०६० ॥
पर्युदासात्मकं तच्चेत् तद्विविक्तान्यदर्शनात् ।
दोषाभावपरिज्ञानं गुणज्ञानात्मकं भवेत् ॥ ३०६१ ॥
विवक्षितप्रमाज्ञानस्वरूपं च प्रसज्यते ।
अप्रमाणद्वयासत्त्वज्ञानं तद्व्यतिरेकि च ॥ ३०६२ ॥

---

स्वभावनिषेधमात्रलक्षणोऽभावः[2] । नापि निश्चयजननात् स्वतस्तस्य सिद्धिः; सर्वसामर्थ्यविरहलक्षणत्वादभावस्य जनकत्वानुपपत्तेः । जनकत्वे वा वस्तुरूपताप्रसङ्गात् । तस्यानाधेयातिशयत्वेन सहकारिनिरपेक्षत्वात् तन्मात्रभाविनः कार्यस्याविरामप्रसङ्गाच्च ।

परतोऽप्युपलम्भात् तस्य सिद्धिर्नावकल्प्यते, कुतः ? अभावात् = अभावात्मकत्वात्, उपलम्भस्य भावविषयत्वात् । नाप्यनुपलम्भात्तस्य सिद्धिः; अनवस्थाप्रसङ्गात् । तथा हि—अनुपलम्भोऽप्यभावात्मकत्वात् कथं सिद्ध इति तत्रापीदम्—स्वतः, परत इति चिन्ताऽवतरत्येव । न तावत् स्वतः; यथोक्तदोषप्रसङ्गात् । नापि परतः; अनवस्थादोषात् ॥ ३०५८–३०५९ ॥

तामेवानवस्थां दर्शयति—दोषाप्रमाद्वयासत्तेत्यादि । दोषाश्च अप्रमाद्वयं च, तयोरसत्तेति समासः ॥ ३०६० ॥

द्वितीयेऽपि पर्युदासात्मके दोषमाह—पर्युदासात्मकं तच्चेदित्यादि । दोषाभावो हि पर्युदासवृत्त्या गुणात्मक एव भवेत्, ततश्च तत्परिज्ञानमपि गुणज्ञानात्मकं प्राप्नोति, तच्च नेष्टम्; "तत्र न स्थापितास्ते तु[3] ज्ञायमानतया गुणाः" (तत्त्व० २८४२) इति [G. 800] वचनात् । अप्रमाणद्वयासत्त्वमपि

---

1. ०दुपलम्भेन—इत्यपि पाठः ।
2. ०लक्षणोऽभाव०—जै० ।
3. च—पा०, गा० ।

अप्रमाद्वितयासत्त्वे ज्ञाते स्वातन्त्र्यतोऽथ वा ।
परिशिष्टः प्रमात्मेति भवतो निश्चयः कुतः ॥ ३०६३ ॥
अन्यथानुपपत्त्या चेदन्वर्थापत्तितो भवेत् ।
अनुमातोऽन्यतो वापि स्यादेवं निश्चयोऽन्यतः ॥ ३०६४ ॥
अस्मादेव[1] च ते न्यायादप्रामाण्यमपि स्वतः ।
प्रसक्तं शक्यते वक्तुं यस्मात् तत्राप्यदः स्फुटम् ॥ ३०६५ ॥
तस्माद् दोषेभ्यो गुणानामभावस्तदभावतः ।
प्रमाणत्वस्य नास्तित्वं तेनोत्सर्गोऽनपोदितः ॥ ३०६६ ॥
यस्मादुत्सर्गभावोऽयं विवक्षामात्रनिर्मितः ।
शक्योऽभिधातुं विस्पष्टमप्रमाणेऽपि मानवत् ॥ ३०६७ ॥
यतो बाधात्मकत्वेन बुद्धेः प्राप्ता प्रमाणता ।
यथार्थज्ञानहेतूत्थगुणज्ञानादपोद्यते ॥ ३०६८ ॥

---

पर्युदासपक्षे प्रमाणात्मकमेवावतिष्ठते, ततश्चाप्रमाणद्वयासत्त्वज्ञानमपि विवक्षितप्रमाणज्ञानस्वरूपं प्रसज्यते, ततश्च "अप्रमाणद्वयासत्त्वे[2] तेनोत्सर्गोऽनपोदितः[2]" (तत्त्व० ३०५६) इति न युज्यते, दुःश्लिष्टत्वात्। तथा हि—तस्यैव प्रमाणत्वेन निश्चितत्वात् तस्य प्रमाणत्वं निश्चीयत इति हेतुहेतुमद्भावेन वाक्यार्थो दुःश्लिष्टः स्यात्; अव्यतिरेकात्। किञ्च—हेतुहेतुमतोर्भेदात् तद्व्यतिरेकि = प्रमाणपरिज्ञानव्यतिरेकि अप्रमाणद्वयासत्त्वज्ञानं प्रसज्यते। न च पर्युदासात्मकस्य तद्व्यतिरेकिता युक्ता, गत्यन्तराभावात्[3]। अप्रमाद्वितयासत्त्वे ज्ञात इत्यादिनाभ्युपगम्य प्रमाद्वयासत्त्वसिद्धिं परमतेनैव परतःप्रामाण्यं प्रतिपादयति—अन्यथानुपपत्त्येति। संशयविपर्यासाभ्यामन्यस्य ज्ञानस्य स्वतःप्रामाण्यं मुक्त्वा गत्यन्तरासम्भवात् ॥ ३०६३–३०६४ ॥

"तस्माद् गुणेभ्य" (तत्त्व० ३०५६) इत्यादिनोक्तस्य न्यायस्यानैकान्तिकत्वं प्रतिपादयन्नाह—अस्मादेव चेत्यादि। अद इति एतत्। किं तच्छक्यते वक्तुम् ?

1. तस्मादेव—पा०, गा०। 2–2. ०मस्मादुत्सर्गो०—जै०।
3. पा०, गा० [illegible]।

गुणैश्चाज्ञायमानत्वान्नाप्रामाण्यमपोद्यते ।
अनपोदितसिद्धं च स्वतस्तदपि संस्थितम् ॥ ३०६९ ॥
दोषाः सन्ति न सन्तीति पौरुषेयेषु शङ्क्यते ।
कर्त्तुर्वेदेऽपि सिद्धत्वाद् दोषाशङ्का न नास्ति नः ॥ ३०७० ॥
अतो यदनपेक्षत्वाद् वेदे प्रामाण्यमुच्यते ।
तदसिद्धं यतः सोऽपि कर्त्तारं समपेक्षते ॥ ३०७१ ॥
यदि संवादिविज्ञानं न वा हेतुविशुद्धता ।
निश्चिता संशयोत्पत्तेस्तदा वेदे न मानता ॥ ३०७२ ॥
अन्यस्यापि प्रमाणत्वे एवम्भूतस्य सङ्गतिः ।
कारणं कल्प्यते यस्माद् निश्चयस्तन्निबन्धनः ॥ ३०७३ ॥

---

इत्याह—तस्मादित्यादि । मानवदिति सप्तम्यन्ताद्वतिः । तदपीति अप्रामाण्यम् । शेषं सुबोधम् ॥ ३०६५–३०६९ ॥

"दोषाः सन्ति न सन्ति" ( तत्त्व० ३०४४ ) इत्यत्राह—दोषा इत्यादि । [ C. 801 ] श्रुतिपरीक्षायां वेदस्य कर्त्तुः प्रसाधितत्वात् कर्त्तुरभावादित्यसिद्धम्, तेन प्रेक्षावतामस्माकं वेदे दोषाशङ्का न नास्ति, अपि त्वस्त्येव ॥ ३०७० ॥

"अतो यदनपेक्षत्वात्" ( तत्त्व० २८९५ ) इत्याह—अत इत्यादि । सोऽपीति वेदः ॥ ३०७१ ॥

'वेदार्थेऽन्यप्रमाणैर्या" ( तत्त्व० २८९६ ) इत्यत्राह—यदि संवादि विज्ञानमित्यादि । यद्यर्थक्रियासंवादिज्ञानं कारणविशुद्धिज्ञानं च द्वयमप्येतत् प्रामाण्यनिश्चयकारणं वेदे नाङ्गीक्रियते, तदा निश्चयहेत्वभावाद् वेदे प्रामाण्यनिश्चयो न प्राप्नोति; कारणमन्तरेण कार्यस्यासम्भवात् ॥ ३०७२ ॥

"अन्यस्यापि प्रमाणत्वे" ( तत्त्व० २८९७ ) इत्यत्राह—अन्यस्यापीत्यादि । एवम्भूतस्येति संवादगुणपरिज्ञानलक्षणा । अत्र चानवस्थादोषः पूर्वमेव परिहृतः । तस्माद् यत् प्रमाणं न तत् प्रमाणान्तरसङ्गतिमपेक्षत इत्येतदनैकान्तिकम्; निश्चयार्थं प्रमाणान्तरस्यापेक्षणात् ॥ ३०७३ ॥

स्थिते हि तस्य मानत्वे निश्चयः क्रियतेऽन्यथा ।
न त्वपूर्वं प्रमाणत्वमन्यथा तस्य जन्यते ॥ ३०७४ ॥
सकृज्ज्ञातविनष्टे च स्यादेवार्थे प्रमाणता ।
अनिश्चितेऽपि सास्त्येव निश्चयोऽप्युदितक्रमात् ॥ ३०७५ ॥
यदि कारणशुद्धत्वं[1] विज्ञानं[1] निश्चयस्ततः ।
यदि वार्थक्रिया प्राप्ता साक्षाद् दाहादिलक्षणा[2] ॥ ३०७६ ॥
यदाऽभ्यासवती वृत्तिर्निरपेक्षा फलोदये ।
सर्वोपायवियोगे तु न प्रमाणविनिश्चयः ॥ ३०७७ ॥
अतः प्रमाणता तस्मिन् विद्यमानाप्यनिश्चिता ।
अविद्यमानकल्पेति सैवास्तीत्युपदिश्यते ॥ ३०७८ ॥

---

एतदेव दर्शयति—स्थिते हीत्यादि । एतेनेदमपि प्रयुक्तं भवति—"यत्रापि स्यात् परिच्छेदः प्रमाणैरुत्तरोत्तरैः" (तत्त्व० २८९८) इत्यादि । न ह्यन्यतो माननिश्चये तस्य पूर्वस्य ज्ञानस्यार्थप्रापणशक्तिलक्षणं मानत्वमपैति ॥ ३०७४ ॥

"सकृज्ज्ञानविनष्टे च भवेन्नार्थे प्रमाणता" (तत्त्व० २८९९) इत्यत्राह—सकृदित्यादि । सेति मानता ॥ ३०७५ ॥

[G. 802] उदितमेव क्रमं दर्शयन्नाह—यदि कारणशुद्धत्वमित्यादि[3] । यदि वार्थक्रिया प्राप्तेति । तदा निश्चयस्तत इति प्रकृतेन सम्बन्धः । ननु चार्थक्रियाज्ञानस्यान्यविषयत्वात् पूर्वप्रत्ययप्रामाण्यस्य सिद्धिस्ततो न युक्ता । तथा हि—अयमग्निरित्यास्फुरदुज्ज्वलविषयं लोचनज्ञानं रूपमात्रमादि, स्पर्शार्थक्रियाज्ञानं[4] तु स्पर्शमात्रगोचरमिति कथमन्यार्थमन्यविषयस्य ज्ञानस्य प्रामाण्यं साधयेत्[5], अतिप्रसङ्गात् । नैष दोषः, एकसन्तानवर्तिनो विषयद्वयस्याविनाभावादन्यस्फुरणमपि ज्ञानमन्यविषयस्य ज्ञानस्य प्रामाण्यं साधयिष्यति । न हि तौ रूपस्पर्शौ विनिर्भागेन वर्तेते, एकसामग्र्यधीनत्वात् । तत्र पूर्वस्य ज्ञानस्यार्थेऽ-

1-1. शुद्धत्वादिज्ञान—पा० मा० । 2. वाहादि०—पा०, मादि०—गा० ।
3. ०शुद्धत्वादीत्यादि—पा०, गा० । 4. स्नानार्थं०—पा० ।
5. ०योदेद्—पा०, गा० ।

श्रोत्रबुद्धेरपि व्यक्ता नेत्रादिमतिसङ्गतिः[1]।
एकसामग्र्यधीनं हि रूपशब्दादि वर्तते ॥ ३०७९ ॥
परस्परादिनिर्भागात् सन्तत्यान्योऽन्यकारणम्।
तेषामस्त्येव सम्बन्धस्तदेवं सुपरिस्फुटम् ॥ ३०८० ॥
तद्धियामपि तद्द्वारा धूमेन्धनविकारवत्।
श्रोत्रधीस्तत्प्रमाणं स्यात् तदन्यमतिसङ्गतेः ॥ ३०८१ ॥

प्यर्थरूपेण प्रवृत्तिदर्शनादुत्तरकालभाविनस्तद्विषयाविनाभूतस्पर्शग्राहिणो ज्ञानात्निश्चयोत्पत्तिरपेक्ष्यते। नन्वेवमपि क्षणिकत्वात् सर्वभावानां पूर्वज्ञानपरिगृहीतरूपाविनाभाविस्पर्शे[2] नैवोत्तरज्ञानप्रवृत्त्या विषयीकृत इति कथं ततो विनिश्चयः? नैष दोषः; उत्तरेषां रूपादिक्षणानां पूर्वज्ञानगृहीतैः रूपादिक्षणैरविशिष्टार्थक्रियावाञ्छायामभिन्नयोगक्षेमत्वादैक्यमेव व्यवह्रियते। न क्षणिकदर्शनानां क्षणैर्व्यवहारः। अथ वा—पूर्वज्ञानपरिच्छिन्नरूपाद्यर्थाविनाभावादुत्तरज्ञानविषयस्य तत्कारणतया सत्यपि भेदव्यवहारे ततो निश्चयो न विरुध्यते ॥ ३०७६—३०७८ ॥

यदुक्तम्—"श्रोत्रधीश्चाप्रमाणं स्यात्" (तत्त्व० २८९१) इत्यादि, तत्राह—श्रोत्रबुद्धेरित्यादि। [G. 803] इतराभिश्चक्षुरादिधीभिरसङ्गतिर्नैव सिद्धा। तथा हि—वीणादिशब्दस्य तत्सम्बन्धिनश्च रूपादेरेकसामग्र्यधीनत्वात् परस्पराविनिर्भागलक्षणो[3] धूमेन्धनविकारयोरिव सम्बन्धोऽस्त्येव। प्रबन्धवृत्त्यपेक्षायां च पूर्वपूर्वः कलापोऽन्यस्योत्तरोत्तरस्य कारणं भवतीति साक्षाच्च कार्यकारणभावलक्षणोऽपि सम्बन्धोऽस्त्येव। ततश्च तद्ग्राहिणामपि ज्ञानानां तद्द्वारकपारम्पर्येण सम्बन्धोऽस्ति। तत् तस्माच्छ्रोत्रधीः प्रमाणं भवत्येव; तदन्याभिश्चक्षुरादिमतिभिर्यथोक्तसम्बन्धसद्भावात्। तथा हि—दूराद् वीणादिशब्दाश्रवणात् तदर्थिनो वेण्वादिशब्दसाधर्म्यादुपजातसंशयस्य पुंसः प्रवृत्तौ वीणारूपदर्शनाद् यः प्रागुपजातः संशयः—किमयं वीणाध्वनिः, उत वेणुगीता-

1. नेत्रादिमतसङ्गतिः—पा०।
2. स्पर्शे—पा०, गा०।
3. ०स्पराविभाग०—पा०, गा०।

साधनान्तरजन्या तु बुद्धिरेषा विनिश्चिता ।
हेत्वन्तरकृतज्ञानसंवादस्तेन वाञ्छ्यते ॥ ३०८२ ॥
एवं नानेन्द्रियाधीनविज्ञानान्तरसङ्गतिः ।
प्रत्यक्षे कारणं क्लृप्ता वेदे त्वेषा न दृश्यते ॥ ३०८३ ॥
तथा हि सलिलज्ञानमाद्यमुत्पद्यतेऽक्षिजम् ।
पानस्नानादिनिर्भासं जिह्वाकायाश्रितं परम् ॥ ३०८४ ॥
एकेनापि तु वाक्येन देशकालनरादिषु ।
लभ्यते नार्थसंवादः सर्वस्मिन् संशयोदयात् ॥ ३०८५ ॥
अग्निहोत्राद् भवेत् स्वर्ग इतीत्थं श्रूयते समम् ।
निश्चयाङ्गवियुक्तं हि शब्ददर्दुरमात्रकम्[1] ॥ ३०८६ ॥

---

विशब्द इति, स व्यावर्त्तते । यत्र च देशे मृदङ्गादिप्रतिशब्दश्रवणात् भ्रान्तस्य तदर्थाधिगतिर्न भवति, तत्र विसंवादादप्रामाण्यं प्रत्येति ॥३०७९–३०८१॥

"साधनान्तरजन्या तु बुद्धिर्नास्ति द्वयोरपि" (तत्त्व० २९०१) इत्यादावाह—साधनान्तरेत्यादि । एषेति वीणादिरूपग्राहिणी ॥ ३०८२ ॥

"यथा त्वेकेन्द्रियाधीनविज्ञानान्तरसङ्गति" (तत्त्व० २९०२ ) इत्याद्याह—एवमित्यादि । एषा न दृश्यत इति । नानेन्द्रियाधीना विज्ञानान्तरगति[2] ॥ ३०८३ ॥

कथमसौ प्रत्यक्षे कारणं क्लृप्ता ? इत्याह—तथा हीत्यादि । अक्षिजमिति रूपविषयं चक्षुर्विज्ञानमित्यर्थः । परमिति उत्तरकालभावि ॥ ३०८४ ॥

"एकेनैव हि वाक्येन" ( तत्त्व० २९०३ ) इत्याद्याह—एकेनापीत्यादि । [ G 804 ] अनेनासिद्धतामर्थसंवादस्याह । तथाहि—'अग्निहोत्रात् स्वर्गो भवति' इत्यतो वाक्यात् प्रेक्षावतो निश्चयकारणाभावात् संशयो जायत एवेति न देशकालादौ संवादसिद्धि ॥ ३०८५-३०८६ ॥

---

1. शब्ददर्दुर०—पा० ।
2. ०न्तरसङ्गति—पा०, भा० ।

स्वर्गादौ मतभेदश्च विप्राणामपि दृश्यते ।
लभ्यते नार्थसंवादः तस्मादिह नरादिषु ॥ ३०८७ ॥
चोदनाजनिते ज्ञाने दार्ढ्यं प्रागपहस्तितम् ।
सन्दिग्धो हि तथाभावस्तद्ग्राह्यस्यान्यसाम्यतः ॥ ३०८८ ॥
असर्वदर्शिभिर्विप्रैः कुत एतद् विनिश्चितम् ।
चोदनाजनिता बुद्धिः सर्वसंवादिनीति च ॥ ३०८९ ॥
निश्चितोक्तानुमानेन प्रत्यक्षस्यापि मानता ।
शुद्धकारणजन्यत्वात् तत् प्रमाणं तदन्यवत् ॥ ३०९० ॥

---

नापि नरान्तरे सर्वत्र संवादो लभ्यत इति दर्शयन्नाह—स्वर्गादावित्यादि । तथा हि—मनुष्यातिशायिपुरुषविशेषनिर्मितः सुमेरुगिरिशिखरादिदेशविशेषोऽप्सरोऽनुपद्भुत्ताधिष्ठानो नानोपकरणसमृद्ध स्वर्ग इति निरुक्तकारादयो वर्णयन्ति । प्रीतिविशेषो मनुष्याणामेव स्वर्ग इति मीमांसकाः । यागेऽपि विप्रतिपत्तिर्दृश्यते—श्रूयते हि पुराकाले पिष्टमयः पशुर्येनायजन्त यज्वान इति, अन्यैस्तु दुरात्मभिर्निष्कृष्य प्राणिविशेष एव पशुरिति वर्णितम् ॥ ३०८७ ॥

"तस्माद् इदं यदुत्पन्नम्" ( तत्त्व० २९०४ ) इत्याह—चोदनाजनित इत्यादि । प्रागिति श्रुतिपरीक्षायाम् । अन्यसाम्यत इति । 'अग्निहोत्रात् स्वर्गो न भवति' इत्यादिपौरुषेयवचनसमुद्भूतप्रतीत्या तुल्यत्वात् ॥ ३०८८ ॥

किञ्च—वाङ्मात्रमेतद् भवताम्, यथा—चोदनाजनिता बुद्धिर्देशादिषु न विसंवदतीति दर्शयति—असर्वदर्शिभिरित्यादि ॥ ३०८९ ॥

"साध्या ■ चानुमानेन" ( तत्त्व० २९०५ ) इत्यादावाह—निश्चितेत्यादि । अनिष्टापत्तिर्हि प्रसङ्ग उच्यते, न च प्रत्यक्षस्यानुमानतः प्रामाण्यसिद्धिर्नेष्टा, येन प्रसङ्गापादनं स्यात् । यथा चानुमानेन प्रत्यक्षस्य प्रामाण्यं साध्यते, तथा पूर्वमुक्तम् । तदेव स्मारयति—शुद्धकारणजन्यत्वात् तत् प्रमाणमिति । तदन्यवदिति सन्निकृष्टविषयग्राहिप्रत्यक्षवत् ॥ ३०९० ॥

सर्वस्य च न साध्येय प्रमाणान्तरत प्रमा।
यस्मादर्थक्रियाज्ञाने भ्रान्तिर्नास्तीति साधितम् ॥ ३०९१ ॥
आत्मकार्याख्यलिङ्गाच्च निश्चिताव्यभिचारत ।
जायमानेऽनुमानेऽपि भ्रान्तिरस्ति न काचन ॥ ३०९२ ॥
क्वचित् तु विविधभ्रान्तिनिमित्तबलभाविनी ।
भ्रान्तिरभ्यासतेऽनेन यस्मात् तत्र न निश्चय ॥ ३०९३ ॥
अव्यक्तव्यक्तित्वेन व्यक्तोऽर्थो न प्रसिद्ध्यति ।
परप्रत्यक्षवत् तस्माज्ज्ञान ज्ञातमितीष्यताम् ॥ ३०९४ ॥

---

[G 805] "प्रमाणाना प्रमाणत्व येन चान्येन साध्यते" (तत्त्व० २९०६) इत्यादावाह—सर्वस्येत्यादि। यथा चार्थक्रियाज्ञाने भ्रान्तिर्नास्ति, तथा पूर्वम् 'उच्यते वस्तुसवादे' (तत्त्व० २९५८) इत्यादिना प्रसाधितम्। तेनार्थक्रियाज्ञानसवादात् प्रामाण्ये नानवस्था भवति ॥ ३०९१ ॥

अनुमानेनापि साध्ये न भवत्येवेति दर्शयति—आत्मेत्यादि। आत्मा च स्वभाव कार्यं चेति तथोक्तम्, तदाख्या यस्य लिङ्गस्येति विग्रह। निश्चितोऽव्यभिचारो यस्य लिङ्गस्य तत् तथोक्तम्। एतदुक्त भवति—तादात्म्य तदुत्पत्तिसम्बन्धाभ्या प्रतिबद्धस्वभावकार्याख्यलिङ्गनिश्चयबलेनोपजायमानमनुमान विभ्रमकारणाभावात् स्वत एव प्रमाणमिति नानवस्था ॥ ३०९२ ॥

"अन्येनासाधिता चेत्" (तत्त्व० २००७) इत्यादावाह—क्वचिदित्यादि। अभ्यासादनिश्चयकारणस्याभावात् क्वचिदर्थे प्रत्यक्षे भ्रान्तिरस्त्यत इति न तस्य सिद्ध्येत् स्वत एव प्रमाणता ॥ ३०९३ ॥

"प्रमाण सहजात् पूर्वं स्वरूपेण प्रतिष्ठितम्" (तत्त्व० २९००) इत्यादावाह—अव्यक्तेत्यादि। अव्यक्ता व्यक्तिर्यस्यार्थस्य स तथोक्त। अवश्य हि ज्ञान ज्ञातव्यम्, तदज्ञाने सर्वोऽज्ञनपदज्ञान। तथा हि—अर्थाभिव्यक्ति रेव ज्ञानमुच्यते, नान्या, तस्याश्चाभिव्यक्ते परोक्षत्वेऽर्थस्यापि परोक्षत्वप्रसङ्ग, यथा परसन्तानवर्तिन पर्यायस्यार्थस्याव्यक्त व्यक्तित्वात्। प्रयोग —यदस्या व्यक्तव्यक्तिक वस्तु, तत् तस्य प्रत्यक्ष न भवति, यथा परसन्तानवर्तिनैव प्रत्यक्षेण

स्वयं तु जडरूपत्वाच्चक्षुरादिभिरिन्द्रियैः ।
गृह्यन्ते विषया नैवं तेषां ज्ञाने तु हेतुता ॥ ३०९५ ॥
तेनात्र ज्ञायमानत्वं प्रामाण्य उपयुज्यते ।
विषयानुभवो यस्मादज्ञातात्रैव¹ लभ्यते ॥ ३०९६ ॥

विषयीकृतमन्यस्य । अव्यक्तव्यक्तिकं च विवादास्पदीभूतं विज्ञानं कस्यचिदिति व्यापकविरुद्धोपलब्धिः । न चानैकान्तिको हेतुः; तस्य वस्तुनो व्यक्त्युत्पादमन्तरेण प्रत्यक्षत्वे सर्वेषां प्रत्यक्षत्वप्रसङ्गात् । न चैवं भवति, तस्माद्विपर्ययः ॥ ३०९४ ॥

[ G 806 ] "यथा चाविदितैरेव" ( तत्त्व० २९१० ) इत्यत्राह— स्वयमित्यादि । विषयवज्जडरूपत्वाच्चक्षुरादीनां न विषयग्रहणं मुख्यतोऽस्ति, केवलं विज्ञानं प्रति हेतुभावमात्रेण तेषां विषयग्रहणं कल्पितमित्यज्ञातैरेव तैर्विषयज्ञानोत्पादकतया विषया गृह्यन्ते इति स्यात् । न त्वेवं विज्ञानेन विषयस्य किञ्चित् क्रियते, येनाज्ञातमपि चक्षुरादिवद् विषयं गृह्णातीति स्यात् । अभिव्यक्तिः क्रियत इति चेत् ? न; ज्ञानपर्यायत्वात् । अभिव्यक्तिः, उपलब्धिः, परिच्छित्तिः, संवेदनमित्येवमादयः पर्याया उच्यन्ते, नार्थान्तरम् । न च स्वात्मनः करणं युक्तम्; स्वात्मनि कारित्रविरोधात् । उत्पन्नानुत्पन्नावस्थयोः सदसत्त्वाच्च । तथा हि— उत्पन्नं वा ज्ञानमात्मानं कुर्याद्, अनुत्पन्नं वा ? न तावदुत्पन्नम्; तदात्मनोऽप्येकयोगक्षेमतयोत्पन्नत्वात् । न च यो येन सहैकयोगक्षेमो न भवति ॥ तत्स्वभावो युक्तः, अतिप्रसङ्गात् । न चोत्पन्नस्य स्वभावस्य करणं युक्तम्; अतिशयस्याभावात्, करणाविरामप्रसङ्गाच्च । नाप्यनुत्पन्नमिति पक्षः, असत्त्वात् । न ह्यसतो व्यापारो युक्तः; तस्य सर्वसामर्थ्योपाख्याविरहलक्षणत्वात् । व्यापारे सत्यसत्त्वहानिप्रसङ्गात् । इदमेव हि सत्त्वलक्षणं यदर्थक्रियाकारित्वम् । तस्मान्न साम्यं दृष्टान्तस्य दार्ष्टान्तिकेन ॥ ३०९५ ॥

"तेनात्र ज्ञायमानत्वम्" ( तत्त्व० २९११ ) इत्यादावाह—तेनात्रेत्यादि ॥ ३०९६ ॥

1. °ज्ञातो नैव—पा०, गा० ।

एतावत् तु भवेदत्र ग्रहणेऽपि स्वसंविदः ।
भ्रान्तिकारणसद्भावात् तथात्वे न विनिश्चयः ॥ ३०९७ ॥
तदा याथार्थतया भावोऽप्यस्मान्नैवावसीयते ।
सादृश्यादुपलम्भेन तदन्यारोपसम्भवात् ॥ ३०९८ ॥
आभ्यासिकं यथा ज्ञानं प्रमाणं गम्यते स्वतः ।
मिथ्याज्ञानं तथा किञ्चिदप्रमाणं स्वतः स्थितम् ॥ ३०९९ ॥
बाधकारणदुष्टत्वज्ञानेऽप्युक्ताऽनवस्थितिः ।
तावता तस्य मिथ्यात्वं ग्रहीतुं तत्र पार्यते ॥ ३१०० ॥

ननु च यदि ज्ञानं स्वसंविदा स्वत एव सिद्धम्, तर्हि स्वत एव ज्ञानं प्रमाणम्! इत्याशङ्कयाह—एतावदित्यादि । न ह्यनुभूतमित्येव सर्वात्मना निश्चयो जायते; कारणान्तरापेक्षत्वान्निश्चयोत्पत्तेरिति बहुधा प्रतिपादितम् । तेन गृहीतमपि ज्ञानस्य स्वसंविदोऽर्थप्रमाणसामर्थ्यं भ्रान्तिकारणस्याप्रमाणसारूप्यानभ्यासादेः [G, 807] सद्भावान्निश्चयानुत्पत्तेरनिश्चितमित्युच्यते; निश्चयानुभवयोर्भेदात् । ततश्च समारोपव्यवच्छेदेन परतः प्रामाण्यमिष्टमित्यदोषः । यथोक्तम्—"स्वरूपस्य स्वतो गतिः, प्रामाण्यं व्यवहारेण" (प्र० वा० १. ६–७) इति । तथात्व इति प्रामाण्ये ॥ ३०९७–३०९८ ॥

"अप्रामाण्यं पुनः स्वार्थे" (तत्त्व० २९१२) इत्यादावाह—आभ्यासिकमित्यादि । अभ्यासे भवमाभ्यासिकम् । यथाऽभ्यासबलात् प्रामाण्यं कस्यचित् स्वत एव निश्चीयते इत्युक्तम्, तथा मिथ्यात्वमपि कस्यचित् स्वत एवावसीयते । तथा च दृश्यन्त एव तैमिरिकादयः केचिदभ्यासबलात् केशोण्डुकादिविज्ञानमुत्पादसमनन्तरमेव मिथ्यात्वेन निश्चिन्वन्तः ॥ ३०९९ ॥

"तदत्राप्यन्यथाभावे पौर्यया दुष्टकारणे" (तत्त्व० २९१३) इत्यादावाह—बाधकारणेत्यादि । उक्तेति—

"तथा हि बाधकाभावात्[1] प्रमाणं भवतोच्यते ।
बाधाभावोऽप्यभावाख्यं प्रमाणान्तरमिष्यते ॥"
(तत्त्व० २००३) इत्यादिना ।

१. बाधकारणाभावात्—बौ० ।

उत्पत्त्यवस्थमेवेदं प्रमाणमिति मीयते ।
न तावदविकल्पत्वादनिष्टेश्चात्मसंविदः ॥ ३१०१ ॥
नापि ज्ञानान्तरेणैव तत्कालेऽसंनिधानतः ।
तस्याप्यव्यक्तभावत्वादनिष्टापत्तितोऽपि वा ॥ ३१०२ ॥
वेदे तु[1] बाधकं मानमुक्तमेवानुमात्मकम् ।
तदुक्तात्माद्यपोहेन तस्मान्मानं न युज्यते ॥ ३१०३ ॥
पौरुषेयत्वसिद्धेश्च शङ्कया दुष्टनिमित्तता ।
वह्नेरिव स्वतः शक्तिर्मिथ्याज्ञानेषु वा भवेत् ॥ ३१०४ ॥

---

तदिति तस्मात् ॥ ३१०० ॥

'उत्पत्त्यवस्थं चैवेदं प्रमाणमिति मीयते' (तत्त्व० २९१४) इत्यत्राह— उत्पत्त्यवस्थमित्यादि । उत्पत्त्यवस्थाया किमात्मनैव प्रमाणमिति निश्चीयते ? आहोस्विद् विज्ञानान्तरेण सहकालभाविना ? यद्वोत्तरकालभाविना ?—इति पक्षाः । तत्र न तावदात्मनैव, सर्वज्ञानानामात्मनि निर्विकल्पत्वात् प्रमाणमित्येव ग्रहणमनुपपन्नम् । नापि परेण संवेदन ज्ञानस्येष्टम्, नित्य बुद्धेः परोक्षत्वाभ्युपगमात् । नापि ज्ञानान्तरेण समानकालभाविना, युगपद्विज्ञानद्वयानुत्पत्तेः । नापि भिन्नकालभाविना, तस्यापि ज्ञानान्तरस्यासिद्धौ[2] तद्ग्राह्यस्यापि ज्ञानस्याव्यक्तरूपिकत्वेनासिद्धेः तस्यापि ज्ञानान्तरेण सिद्धाविष्यमाणायामनवस्थाप्रसङ्गात् ॥३१०१–३१०२॥

[ G. 808 ] "अतो यत्रापि मिथ्यात्वम्" ( तत्त्व० २९१५ ) इत्यादावाह—वेदेऽपीत्यादि । न हि साधर्म्यमात्रं बौद्धैर्वेदे बाधकं प्रमाणमुच्यते, किं तर्हि ? तदुक्तात्मसामान्यादेः पदार्थस्य प्रमाणबाधनात् । एतच्चात्मपरीक्षादौ प्रतिपादितम् ।

किञ्च—श्रुतिपरीक्षायां वेदानां पौरुषेयत्वस्य साधितत्वात्, सत्यपि वा अपौरुषेयत्वे दाववह्न्यादिवन्मिथ्यात्वकारणत्वसम्भवात्, अप्रामाण्यमस्य सम्भाव्यत इत्येवमुच्यते, न साधर्म्यमात्रम् ।

---

1. ऽपि—पा०, गा० ।
2. ० तद्ग्राह्यस्यासिद्धौ—पा०, गा० ।

चोदनाप्रभवं ज्ञानमतो दुष्टनिमित्तकम् ।
शङ्क्यते, दृष्टदोषाच्च शङ्क्यदोषं न भिद्यते ॥ ३१०५ ॥
तस्मात् स्वतः प्रमाणत्वं वेदस्यापि न युज्यते ।
तेन निश्चितनिर्दोषकृताख्यातत्वमिष्यताम् ॥ ३१०६ ॥

कुमारिलस्योत्तरम्

रागद्वेषादियुक्ता हि प्रवक्तारो यथा यथा ।
तथा तथा हि रक्षन्ति स्वाध्यायं सुतरां ननु ॥ ३१०७ ॥
कस्य किं दुर्बलं को वा कस्मात् पूर्वं प्रपाठकः ।
कः स्वरक्षामतां कुर्यात् को भिन्द्यादपदे पदम् ॥ ३१०८ ॥
इति यस्य हि संरब्धाः सन्ति रन्ध्रगवेषिणः ।
कथं न नाम निर्दोषं स पठेद् वेदमादृतः ॥ ३१०९ ॥

---

स्यादेतत्—यदि नाम सम्भाव्यते, तथापि सम्भावनामात्रात् कथमप्रामाण्यमस्य सिद्ध्यति ? इत्याह—दृष्टदोषाच्च शङ्क्यदोषं न भिद्यत इति । शङ्क्या दोषा यस्मिन् वाक्ये तत् तथा । न भिद्यत इति । उभयस्यापि प्रामाण्य[1] सद्व्यवहारनिषेधयोग्यतया[1] तुल्यत्वात् ॥ ३१०३–३१०५ ॥

तस्मादित्यादिनोपसंहरति । कृतश्चासावाख्यातश्चेति तथोक्तः । आख्यातः = व्याख्यातः, निर्दोषे पुरुषे कृताख्यात इति तृतीयासमासः तद्भावस्तत्त्वम्, निश्चितं च तन्निर्दोषकृताख्यातत्वं चेति विग्रहः । तदेतदिष्यताम्, वेदस्य प्रामाण्यसिद्धय इति सम्बन्धः । ततश्चैवमिष्यमाणे परतः प्रामाण्यं स्यात्, अनिष्यमाणे त्वप्रामाण्यमेवेति भावः ॥ ३१०६ ॥

"निश्चितनिर्दोषकृताख्यातत्वमिष्यताम्" इत्यत्र कुमारिलस्योत्तरमाह—रागेत्यादि । [G 809] कस्याध्येतुः किं स्मृतिमेधादि[2] दुर्बलम्, को वा कुतोऽधीतवान्, को वा स्वरस्योदात्तादेः क्षामतामन्यथात्वं कुर्वीत, अपदमेव वा पदच्छेदेन भित्त्वा पठेत्—इत्येवं यस्य वेदपाठकस्य रन्ध्रं निरूपयन्तो वेदाध्यायिनो नराः संरब्धाः = समारब्धवीर्याः सन्ति, स कथं वेदपाठको वेदमादरान्न पठेत् ।

---

१-१ प्रमाण्यसद्व्यवहारनिषधयोग्यतयो — पा० । २ स्मृतिमत्तादि — पा० ।

शुद्धाश्चेदप्युदासीनाः स्युर्वेदाध्यायिनो नराः ।
आचक्षीरन् परैरेवं न ते वेदं विनाशितम् ॥ ३११० ॥
ततः कालेन महता तूपेक्षितविनाशितः ।
अन्य एव भवेद् वेदः प्रतिकञ्चुकतां गतः ॥ ३१११ ॥
रागद्वेषादियुक्तांस्तु[1] रुन्धद्भिर्वेदनाशिनः[2] ।
सर्वदा रक्षितो वेदः स्वरूपं न प्रहास्यति ॥ ३११२ ॥
इष्यते च जगत् सर्वं न कदाचिदनीदृशम् ।
न महाप्रलयो नाम ज्ञायते पारमार्थिकः ॥ ३११३ ॥

तस्य प्रत्यवस्थानम्

नैतदेवम्; भवेन्नाम ह्येवं पाठस्य तुल्यता ।
तदर्थतत्त्वबोधस्तु न विनाऽध्यक्षदर्शनम् ॥ ३११४ ॥

---

ततश्चास्य वेदस्याप्रामाण्यशङ्काया अभावात् किमिति निश्चितनिर्दोषकृतत्वख्यातत्व-मिष्यतामित्यभिप्रायः । तथा हि—यदि वेदाध्यायिनः शुद्धधियोऽपि परैर्विना-श्यमानं[3] वेदमौदासीन्यमालम्बना[3] नाचक्षीरन्, तदा सम्भाव्यते—अन्य एवायं वेदः प्रतिच्छायतां यात इति; यावता तैर्विशुद्धधीभिर्वेदविनाशिनो नरान् रागादिपरीत-चेतसो रुन्धद्भिः = निवारयद्भिः सदैवायं संरक्षितो वेद इति ॥ कथमात्मस्वरूपं जह्यात् ॥ ३१०७–३११२ ॥

स्यादेतत्—यद्यपि सर्वदा रक्षितस्तैर्वेदः; तथापि महाप्रलये समुच्छिन्नस्यास्य पश्चादन्यथात्वमपि सम्भाव्यते ? इत्याशङ्क्याह—इष्यत इत्यादि ॥ ३११३ ॥

नैतदेवमित्यादिना प्रतिविधत्ते ।

एवं हि किल केवलपाठमात्रस्य तुल्यत्वं प्रतिपादितम्, न त्वर्थाविगमो-पायः[4], तदस्य तदर्थमवश्यं निश्चितनिर्दोषकृतत्वख्यातत्वमस्येष्टव्यमेव ॥३११४॥

[G. 810] न चापि पाठमात्रस्यादर्शनमात्रेणासर्ववित्त्वा सर्वदेशादौ तौल्य

---

१. युक्तांस्तु—पा०, गा० ।  २. रुन्धद्भिर्वेदविनाशिनः—जै० ।
३–३. ०मानान् वेदानौ०—पा०, गा० ।
४. त्वर्थविगमो०—पा०; स्वर्थाविगमो०—गा० ।

सर्वे च यस्य पुरुषा देशकालौ तथाखिलौ ।
करामलकवद् व्यक्ता वर्त्तन्तेऽध्यक्षचेतसि ॥ ३११५ ॥
स पाठस्यापि तुल्यत्व बोद्धु शक्तोऽन्यथा पुन ।
देशकालनरावस्थाभेदेन विमति कथम् ॥ ३११६ ॥
जगत् सदेदृश चेति न प्रमाणमिहापि व ।
न युक्ताऽदृष्टिमात्रेण सवर्त्तस्यापि नास्तिता ॥ ३११७ ॥
स्वत प्रामाण्यपक्षे तु निश्चय कुरुते स्वत ।
वेद स्वार्थस्वरूपे च तत्र मोहादिसम्भव ॥ ३११८ ॥
अतश्चाज्ञानसन्देहविपर्यासास्पदे स्थिते ।
नोपदेशमपेक्षेत द्विजपोतोऽपि कश्चन ॥ ३११९ ॥

निश्चेतु शक्यत इति दर्शयति—सर्वे चेत्यादि । अत्रैवोपपत्तिमाह—अन्यथे त्यादि । यदि पाठस्य तुल्यत्व भवेत्, तदा क्वचिद् देशादौ पाठ प्रति पुसा विमति = सशयो न प्राप्नोति ॥ ३११५–३११६ ॥

'इष्यते च जगत् सर्वम्' (तत्त्व० ३११३) इत्यादावाह—जगत् सदेदृशमित्यादि । ईदृशमेन सर्वदा जगदित्यत्र न किंचित् साधक प्रमाणमस्ति । यच्च गौडै 'सवर्त्तकल्पो नरकासम्भवात्' प्रतिभाजनक्षय' ( ) इति संवर्त्तकल्पो' वर्ण्यते, यच्च स्मृतिकारैरुच्यते—

'आसीदिद तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेय प्रसुप्तमिव सर्वत ॥ (मनु० १ ५) इति,

तदेतदस्य द्विविधस्यापि सवर्त्तस्य न किंचिद् बाधक प्रमाणमस्ति येन सर्वदा जगदीदृशमेव सिद्ध्येत् । न चादर्शनमात्रेण वस्तूना नास्तिता सिद्ध्यति सत्यपि वस्तुनि क्वचिददर्शनात् सम्भवेन दर्शनमात्रस्य व्याप्त्यसिद्धे ॥ ३११७ ॥

किञ्च—वेदस्य स्वत प्रामाण्याचिर्ये स्वार्थस्वरूपविषयनिश्चयोत्पत्ते सम्मोहाभावात्, नियतत्वाच्च स्वभावान्यथाभावस्य कर्तुमशक्यत्वात् —उभयथापि न

१ नायक०—गा० ।　　२ पा० गा०, पुस्तकयोर्नास्ति ।

तथा[1] चाज्ञानमूलस्य[2] न विनाशोऽपि सम्भवी ।
को वा विनाशो नित्यस्य भवेद् वज्रातिशायिनः ॥ ३१२० ॥
अभिव्यक्त्यन्यथात्वं चेन्नित्ये सा न[3] त्वपाकृता[3] ।
अतो रक्षामपि प्राज्ञा निष्फलामस्य कुर्वते ॥ ३१२१ ॥
अतीन्द्रियार्थदृक् तस्माद् विधूताखिलतमश्चयः ।
वेदार्थप्रविभागज्ञः कर्त्ता चाभ्युपगम्यताम् ॥ ३१२२ ॥

---

विनाशः सम्भवति भवन्मतेनेत्यतो वेदाध्यायिभिरस्य निष्फलमेव रक्षा क्रियत इत्येतद् दर्शयति— स्वत इत्यादि । [ G 811 ] द्विजपोत = ब्राह्मणशिशुः ।

एवं तावत् स्वतः प्रामाण्याद् विनाशोऽस्य न सम्भवतीति प्रतिपादितम् । इदानीं नित्यत्वादपि न सम्भवतीत्येतद् दर्शयितुं पृच्छति—को वेत्यादि अभिव्यक्त्यन्यथात्वं चेदिति[4] । विनाश इति सम्बन्धः । सेति अभिव्यक्तिः । अस्येति वेदस्य ॥ ३११८–३१२१ ॥

अतीन्द्रियेत्यादिनोपसंहरति । अखिलतम = क्लिष्टाक्लिष्टमज्ञानम्, तस्य चयः = संहतिः, स विधूतो येन स तथोक्तः । प्रविभागज्ञ = व्याख्याता । कर्त्तेति । वेदस्येति शेषः । तदेवं प्रतिज्ञातार्थस्य सर्वथा प्रमाणबाधितत्वम्, हेतोश्च 'तद्भावभावभावित्वात्' इत्येतस्यानैकान्तिकत्वं साधितम् । सपक्षसिद्ध्यर्थं च प्रमाणं 'यः सन्देहविपर्यासविषये' (तत्त्व० २९३८) इत्यादिना प्रदर्शितमिति क्षेपार्थः ।

यत्तु पक्षचतुष्टयमुपन्यस्य पक्षत्रये दोषाभिधानं कृतम्, तत्रापि न काचिद् बौद्धस्य क्षतिः[5], नहि बौद्धैरेषां चतुर्णामेकतमोऽपि पक्षोऽभीष्टः; अनियमपक्षस्येष्टत्वात् । तथा हि—उभयमप्येतत्किञ्चित् स्वतः, किञ्चित् परत इति पूर्वमुपवर्णितम् । अत एव पक्षचतुष्टयोपन्यासोऽप्ययुक्तः, पञ्चमस्याप्यनियमपक्षस्य सम्भवात् ।

अपरे त्वन्यथा प्रतिज्ञार्थं वर्णयन्ति—बोधात्मकत्वं नाम प्रामाण्यम्, तच्च ज्ञानानां स्वाभाविकमेव, न गुणकृतम्; गुणाभावेऽपि विपर्ययज्ञाने बोधात्मकत्व-

---

१. यथा—गा० ।
२. चाज्ञातमूलस्य—पा०, गा० ।
३–३. नन्वपाकृता—पा०, गा० ।
४. चेद्—चै० ।
५. क्षतिः—पा० ।

सम्भवात् । अत स्वत प्रामाण्यमित्युच्यते । गुणैस्तु दोषनिराकरणमेव क्रियत इत्यतस्तन्निर्वर्तिताय प्रामाण्यं गुणानपेक्षते, नात्मप्रतिलम्भायेति ? तदेतदसम्यक्, यतो न बोधात्मकत्वमेव प्रामाण्यं युक्तम्, विपर्ययज्ञानेऽपि सम्भवात् । बोधविशेष प्रामाण्यमिति चेत् ? न तर्हि वक्तव्यम्—तच्च ज्ञानाना स्वाभाविकमेव, न गुणकृतम्, गुणाभावेऽपि विपर्ययज्ञाने सद्भावादिति । तथा हि—यदि बोधविशेष प्रामाण्यमिष्ट स्यात्, तदा तस्यैव गुणकृतत्वे व्यभिचारोपदर्शनं युक्तम्, नान्यस्य । न च विपर्ययज्ञानेऽपि [ G 812 ] सद्भावादित्यनेन बोधविशेषस्य गुणकृतत्वे व्यभिचारो दर्शित, किं तर्हि ? बोधसामान्यस्य । न च परेण बोधसामान्य गुणकृतमिष्यते, किं तर्हि ? बोधविशेष । न च तस्य गुणकृतत्वे व्यभिचार शक्यते प्रतिपादयितुम् । न चाप्यस्माभिर्गुणकृतत्वेन परत प्रामाण्यमिष्टम्, यतस्तन्निषेधेन भवद्भि स्वतो व्यवस्थाप्यते, किं तर्हि ? अनुभूतोऽप्यसौ बोधविशेष क्वचिद् भ्रान्तिनिमित्तसद्भावाद् यथानुभव न निश्चयमुत्पादयतीति । अतस्तन्निश्चयोत्पत्तौ परत इति व्यवस्थाप्यते ।

किञ्च—अप्रामाण्येऽपि शक्यमेव कल्पयितुम्—"बोधात्मकत्व नामाप्रामाण्यम्, तच्च ज्ञानाना स्वाभाविकम्, न दोषकृतम्, दोषाभावेऽपि सम्यग्ज्ञाने सम्भवादित्यत स्वतोऽप्रामाण्यमुच्यते । दोषैस्तु गुणनिराकरणमेव क्रियत इत्यतस्तन्निराकरणायाप्रामाण्य दोषानपेक्षते, नात्मप्रतिलम्भाय" इति । तस्माद्यत्किञ्चिदेतत् ।

उम्वेयकस्त्वाह[1]—"न बोधात्मकत्व नाम ज्ञानाना प्रामाण्यम्, किं तर्हि ? अर्थाविसंवादित्वम् । तथा हि—सत्यपि बोधात्मकत्वे यत्रार्थाविसंवादित्व नास्ति तत्राप्रामाण्यम्, यथा शुक्तिकाया रजतज्ञानस्य । विनापि बोधकत्व[2] यत्रार्थाविसंवादित्वमस्ति तत्र प्रामाण्यम्, यथा—अग्नौ धूमस्य । तस्मादन्वयव्यतिरेकाभ्यामविसंवादित्वमेव प्रामाण्यं सिद्धम् । तच्च ज्ञानमात्मीयादेव हेतो रुपजायते, न सामग्र्यन्तरादित्यत 'स्वत सर्वप्रमाणाना प्रामाण्यम्' इत्युच्यते, स्वशब्दस्यात्मीयवचनत्वात् । स्वत = आत्मीयाद्धेतोरित्यर्थ । "न हि स्वतोऽसती शक्ति"

१ उवेयक॰—पा॰, गा॰ ।
२ बोधात्मकत्व—गा॰ ।

इत्यादिना पश्चादर्द्धेन सामग्र्यन्तराद् भावनिषेधे हेतुरुक्तः। न हि स्वतोऽसती कर्तुमन्येन विज्ञानसामग्र्यन्तराविरिक्तेन शक्यत इत्यर्थः।

स्यादेतत्— विज्ञानहेतवोऽपि प्रमाणाप्रमाणसाधारणाः, तत कथं विज्ञानहेतुमात्रप्रतिबद्धं प्रामाण्यं स्यात्, तस्मात् सामग्र्यन्तरजन्यमेव प्रामाण्यम्, न तु ज्ञानहेतुमात्रजन्यम्। तच्च सामग्र्यन्तरं गुणसहितमेवेन्द्रियादि[1]। यथोक्तम्[1]— "इन्द्रियादिगुणाश्चास्य कारणम्" (        ) इति। शाब्दे चाप्तप्रणीतत्वमेव कारणगुणत्वेन व्यवहारान्निश्चितम्। वेदे च तदभावादप्रामाण्यं[2] प्रसक्तमिति? नैष दोषः; सामग्र्यन्तरजन्यत्वासिद्धत्वात्। न हि विधिमुखेन गुणानां प्रामाण्याख्यकार्योत्पत्तौ व्यापारः प्रतीतः सम्भवति। इन्द्रियादिरूपमेव[3] ह्यन्यनिरपेक्षमर्थाविसंवादिज्ञानोत्पादकम्। अञ्जनादीनां तु दोषापगमे व्यापारः, न गुणाधाने।

अथापि स्यात्— इन्द्रियादिस्वरूपमप्रामाण्येऽप्यस्तीति सर्वत्र प्रामाण्योत्पत्तिप्रसङ्गः; अविकलकारणत्वात्! नैतदस्ति; दोषसमवधाने तु सामग्र्यन्तराद् विलक्षणकार्योत्पत्तिर्भविष्यति।

स्यादेतत्— विपर्ययः कस्मान्न [G. 813] विज्ञायते— इन्द्रियादिस्वरूपमेवान्यनिरपेक्षं व्यभिचारिज्ञानोत्पादकम्, गुणसमवधाने तु सामग्र्यन्तरमर्थाविसंवादिज्ञानोत्पादकमिति? सत्यमेवमेतत्; अन्वयव्यतिरेकाभ्यां तु विज्ञानोत्पादकमेव त्रैरूप्यमनुमानादौ प्रामाण्योत्पादकं दृष्टमिति प्रत्यक्षेऽपि च सम्भवात् तदेवोत्पादकं कल्प्यते। विपर्ययज्ञानरूपं तु कार्यमिन्द्रियादिस्वरूपादनुत्पद्यमानं सामग्र्यन्तरं कल्पयतीत्यनवद्यम्" इति।

तदेतत् सर्वं नानवद्यम्; तथा हि यत् तावदुक्तम्— 'अर्थाविसंवादित्वमेव ज्ञानस्य प्रामाण्यम्, तच्चात्मीयादेव हेतोस्तस्योपजायते' इति, अत्र सिद्धसाध्यता, यत इष्यत एवास्माभिः 'प्रमाणमविसंवादिविज्ञानम्' इति वचनादर्थाविसंवादित्वं ज्ञानस्य प्रामाण्यम्। किन्तु 'ज्ञानम्' इति विशेषणोपादानाद् धूमादेरज्ञानस्वभावस्य मुख्यतः प्रामाण्यं नेष्टमित्यर्थाविसंवादित्वमात्रं प्रामाण्यमसिद्धम्; ज्ञानस्यैव हेयोपादेयवस्तुनि

1-1. पा०, गा० पुस्तकयोर्नास्ति। 2. तदभावा०— गा०।
3. स्वरूपमेव— पा०, गा०।

प्रवृत्तौ प्राधान्यात् । तथा हि—सत्यप्यविनाभाविनि धूमादौ न तावत् पुरुषस्यार्थे प्रवृत्तिर्भवति यावद्विज्ञानोत्पादो न भवति । तस्मात् प्रवृत्तौ ज्ञानस्याव्यवहितं कारकत्वमिति तदेव प्रमाणम् । यदाह—

"धीप्रमाणता ।

प्रवृत्तेस्तत्प्रधानत्वाद्धेयोपादेयवस्तुनि ॥" (प्र० वा० १.५) इति ।

यच्चाविसंवादित्वं[1] ज्ञानस्यार्थप्रापणशक्तिलक्षणम्, तत्तत्र्यप्रापणमेव; प्रतिबन्धादिसम्भवात् । शक्तिश्च पदार्थानामात्मभूतैवेति कस्तस्या अर्थान्तरादुत्पत्तिमिच्छेद्, येन सा निषिध्येत । न हि तन्निष्पत्तावनिष्पन्नो धर्मस्तत्स्वभावो युक्तः; अतिप्रसङ्गात् । सा च प्रमाणस्यात्मभूताऽपि सती भ्रान्तिकारणसद्भावादनधिगतकार्यैस्वसात्तु[2] न पार्यत इति परतोऽर्थक्रियाज्ञानात्स्यात् कार्यान्निश्चीयते[3] । अतो निश्चयापेक्षया परत प्रामाण्यमित्युच्यते, नोत्पत्त्यपेक्षया । तेन कारणान्तरादुत्पादप्रतिषेधवैयर्थ्यम्; विवादाभावात् । निश्चयस्तु शक्तीनां परतो भवद्भिरपीष्यत एव । यथोक्तम्—"शक्तयः सर्वभावानां कार्यार्थापत्तिसाधना." ( श्लो० वा०, चो० सू० २०० ) इति । यश्च—"न हि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते" ( तत्त्व० २८१२ ) इत्येष सामग्र्यन्तराद् भावनिषेधाय हेतुरुपवर्ण्यते, अप्रामाण्येऽपि समान इति तदपि स्वत एव प्रसज्येत । न वा स हेतुः; व्यभिचारात् ।

यच्चोक्तम् —'न हि विधिमुखेन गुणानामप्रामाण्योत्पत्तौ व्यापार. प्रतीत सम्भवति' इति, एतदप्यनर्थवचनमनुन्मीलितार्थं[4] न ज्ञायते । कोऽयं विधिमुखेन व्यापारो नामेति ? यदि तावद् 'इदं चैव करिष्यामि' इति कार्याभिसंधाय बुद्धिपूर्वा प्रवृत्तिः, [illegible] नैन्द्रियादिष्वपि सम्भवति । न हि भावानां प्रेक्षापूर्वकारिताऽस्ति; सर्वभावानां क्षणिकत्वेन समीहाव्यापारयोरसम्भवात् । ततश्चेन्द्रियादेरपि विधिमुखेन व्यापारासम्भवात् कारणत्वं न स्यात् । अथेन्द्रियादि विनापि क्रियास्य-व्यापारसमावेशं [ G. 814 ] सत्तामात्रेण कार्योत्पत्तौ व्याप्रियत इति कारण-

१ तच्चा०—जै० । २ त्वसात्तु—पा०, गा० ।
३. कार्यं निश्चीयते—पा०, गा० । ४. ०प्यनर्थवचन०—पा०, गा० ।

मिष्यते, तदेतद् गुणेष्वपि समानम् । न हि सर्वकारणानां कार्योत्पत्तौ नियतः स्वसत्तासन्निधानव्यतिरेकेणान्यो व्यापारः प्रतीतः सम्भवति ।

अथ गुणसन्निधाने दोषनिवृत्तौ सत्यां प्रामाण्यमुपजायत इति दोषनिवृत्त्या व्यवहृतत्वान् साक्षाद्विधिमुखेन गुणानां व्यापारो न सम्भवतीत्युच्यते ? तदेतद्दोषेष्वपि समानम् । तथा हि—दोषसन्निधानेऽपि गुणनिवृत्तौ सत्यामप्रामाण्यमुपजायत इति दोषाणामपि विधिमुखेनाप्रामाण्योत्पत्तौ व्यापारो न स्यात् । ततश्चाप्रामाण्यमपि स्वतः प्रसज्येत; अविशेषात् । न हि दोषा गुणान्निराकृत्य साक्षादप्रामाण्ये व्याप्रियमाणाः समालक्ष्यन्ते । तस्मात् तद्भावाभावानुविधानव्यतिरेकेण नान्यः कार्यकारणभावः सम्भवतीति दोषवद् गुणानामपि कारणत्वं समानम् ।

यथोक्तम्—'इन्द्रियादिरूपमेवान्यनिरपेक्षमर्थाविसंवादिज्ञानोत्पादकम्' इति, तदप्ययुक्तम्; अविकलकारणत्वेन सर्वज्ञानानां प्रामाण्यप्रसङ्गात्, बोधरूपतावत् । यथा बोधरूपता ज्ञानानां समनन्तरप्रत्ययमनिरुद्धा सती दोषादिसमवधानेऽप्यविकलकारणतया सर्वत्र ज्ञाने भवति, तथार्थाविसंवादित्वमपि स्यात् ।

स्यादेतत्—दोषैरप्रामाण्यस्योत्पादे सामग्र्यमविकलकारणमपि नोपजायते, प्रामाण्येतरयोरेकत्र ज्ञाने विरुद्धयोरयोगात्, बोधरूपता तु निष्प्रतिद्वन्द्वा सर्वत्र भवत्येवेति ? यद्येवम्, न तर्हीन्द्रियरूपमेवान्यनिरपेक्षं[1] कारणं सिद्ध्यति, सत्यपि तस्मिन्नविकले प्रामाण्याख्यकार्यानुत्पत्तेः । न ह्यन्यनिरपेक्षस्य कदाचिदजनकत्वं युक्तम् । नापि यदस्मिन् सत्यपि न भवति तत्तन्मात्रकारणं युक्तम्; अतिप्रसङ्गात् ।

किञ्चेदं तावच्च भवान् वक्तुमर्हति—यद्यविकलकारणं प्रामाण्यम्, किमिति दोषसन्निधानेऽपि नोत्पद्यत इति, स्वविरुद्धकारणस्य दोषस्य सन्निहितत्वादिति चेत् ? अप्रामाण्येऽपि तुल्यम्; तस्यापि तदानीं स्वविरुद्धकारणमिन्द्रियादि सन्निहितमित्युत्पत्तिर्मा भूत् ।

किञ्च—यदि नाम विरुद्धकारणाद् दोषाद् बिभ्यत प्रामाण्यस्यानुत्पत्तुमिच्छा स्यात्, स्वकारणं त्वप्रतिहतसामर्थ्यं सत् तदानीं किमिति तदुपेक्षेत ? एवं हि तेनात्मनोऽप्रतिहतशक्तिता प्रकटिता स्याद्, यदि स्वकार्यमुत्पत्तुमनिच्छदपि हठादु-

1. ॰न्द्रियस्वरूप॰—गा॰ ।

त्पादयेत् । दोषैरुपहतशक्तित्वादुपेक्षित[1] इति चेत् ? न, ऐन्द्रिये च प्रामाण्ये कारणस्याप्युपहतशक्तित्वप्रसङ्गात्, विशेषाभावाज्ज्ञानस्याप्यनुत्पत्तिप्रसङ्गाच्च । तथा हि—यथा दोषैरुपहतशक्तित्वादैन्द्रिय[1] प्रामाण्यं न जनयेत्, विज्ञानमपि नैव जनयेद्, असामर्थ्यात् । अन्यथा विज्ञानहेतुमात्रजन्यं प्रामाण्यं न सिद्ध्येद्, तदुत्पत्तावप्यनुत्पत्तेः । यो हि यदुत्पत्तावपि नियमेन नोत्पद्यते, नासौ तेन सहैककारणः, यथा कोद्रवाङ्कुरोत्पत्तावप्यनुत्पद्यमानः शाल्यङ्कुरः । नोत्पद्यते च विज्ञानोत्पत्तावपि प्रामाण्यं नियमेनेति व्यापकानुपलम्भः । [ G 817 ] नापि तत्स्वभावमक्षण्डयत्पात्मभूता शक्तिं कश्चिदुपहन्तुं शक्नुयात् । ततश्चेयमपि शक्यते पठितुम्—

स्वतः सर्वोपलब्धीनां प्रामाण्यमिति गृह्यताम् ।
न हि स्वतः सती शक्तिर्हन्तुमन्येन पार्यते ॥ इति ।

स्यादेतत्—नेन्द्रियादिमात्रं प्रामाण्यकारणमिष्टम्, किं तर्हि ? विशिष्टमेव यद् दोषरहितम्, तेन यथोक्तदोषप्रसङ्ग इति ? यद्येवम्, सामग्र्यन्तरमेव गुणसहितमिन्द्रियादिप्रामाण्यकारणमिति प्राप्तम्, गुणसहितस्यैव दोषरहितत्वसम्भवात् । ततश्च न वक्तव्यम्—'सामग्र्यन्तरमन्यत्वासिद्धे' इति । दोषापगमे गुणानां व्यापारो न प्रामाण्योत्पत्ताविति चेत् ? तन्न, अपगमस्यावस्तुत्वात् तत्र कस्यचिद् व्यापारो युक्तः । न ह्यवस्तुनि शशविषाणादाववस्तुत्वावस्थभावे कस्यचिद् व्यापारः सम्भवति ।

यच्चोक्तम्—'विज्ञानोत्पादकमेव त्रैरूप्यमनुमानादौ प्रामाण्योत्पादकं दृष्टम्' इति, एतदप्यसिद्धम्, न हि त्रैरूप्यमेव केवलमनुमानस्योत्पादकम्, किं तर्हि ? प्रतिपत्तृगता[2] अप्यमृष्टसम्बन्धस्मृतसंस्कारा गुणाः । तथा हि—सत्यपि त्रैरूप्ये प्रभ्रष्टसम्बन्धस्मृतिसंस्कारस्य, अप्रतीतसम्बन्धस्य च[3] प्रतिपत्तुर्नोपजायतेऽनुमानमित्यतोऽन्वयव्यतिरेकाभ्यां विज्ञानोत्पादकमेव प्रामाण्योत्पादकमित्येतदसिद्धम् । अतो विपर्ययो दुर्निवार एव व्यवस्थितः ।

१-१ •शक्तित्वादिन्द्रियम्—इत्यत्र पाठः पा० गा० पुस्तकयोः ।
२. प्रतिपत्तिर्गता—पा० । ३ प्रतिपत्तिर्नो•—पा० ।

## अतीन्द्रियार्थदर्शिपरीक्षा

### अतीन्द्रियार्थदर्शिनोऽनायासेनैव सिद्ध्युपपादनम्

एवं सर्वप्रमाणानां प्रमाणत्वे स्वतोऽस्थिते ।
अतीन्द्रियार्थवित्सत्त्वसिद्धये न प्रयत्यते ॥ ३१२३ ॥
वेदस्यापि प्रमाणत्वं यस्मात् पुरुषतः स्थितम् ।

---

यच्चोक्तम्—'विपर्ययज्ञानरूपं कार्यमिन्द्रियादिस्वरूपान्नोत्पद्यते' इति, तदप्यतिसाहसम्; इन्द्रियानपेक्षस्यापि विपर्ययज्ञानस्योत्पत्तिप्रसङ्गात् । न हि यो यतः स्वभावान्नोत्पद्यते, तस्य तदपेक्षा युक्ता, अतिप्रसङ्गात् । न चेन्द्रियनिरपेक्षं तैमिरिकादिद्विचन्द्रादिज्ञानमुत्पद्यते ।

किञ्च—यद्यर्थाविसंवादित्वं प्रामाण्यमुपवर्ण्यते, तदा चोदनाजनितायाः बुद्धेः कथमर्थाविसंवादित्वमवगतम्, येन तत्र भवतामर्वाग्दर्शिनां प्रामाण्यव्यवहारः स्यात् ? न ह्यविदिततत्कार्यैस्तच्छक्तिरवधारयितुं शक्यते; अतिप्रसङ्गात् । ततश्च यस्यैव वेदस्य प्रामाण्यस्थिरीकरणप्रत्याशया सर्वमेतद् वाग्जालमुपरचितम्, तस्यैव तत्र प्रसिद्धमिति केवलं तण्डुलार्थिना[1] तुषकण्डनमेतत् कृतमित्यलमतिप्रसङ्गेन ॥ ३१२२ ॥

इति स्वतःप्रामाण्यपरीक्षा

"अनल्पकल्पासङ्ख्येयसात्मीभूतमहादय ॥
यः प्रतीत्यसमुत्पादं जगाद वदतां वरः ।
तं सर्वज्ञं प्रणम्यायं क्रियते तत्त्वसङ्ग्रहः" ॥ (तत्त्व० ५-६)

इत्यनेन यत् सर्वज्ञोपदिष्टत्वं प्रतीत्यसमुत्पादस्य विशेषणमुक्तम्, तत्समर्थनार्थं प्रस्तावमात्रं रचयन्नाह—एवमित्यादि [G 816] । एवमनन्तरोक्तेन न्यायेन यदा सर्वेषामेव प्रमाणानां न स्वत एव प्रामाण्यमिति स्थितम्, अतोऽयत्नेनैवातीन्द्रियार्थदर्शी पुरुषः सिद्ध इति न तत्सिद्धये पृथक् प्रयत्नान्तरमास्थीयते ॥ ३१२३ ॥

स्यादेतत्, कथं यत्नमन्तरेण सिद्ध्यति ? इत्याह—वेदस्यापीत्यादि ।

---

1. तन्दुलार्थिना—पा० ।

तस्य चातीन्द्रियज्ञत्वे ततस्तस्मिन् प्रमाणता ॥ ३१२४ ॥
अन्यथाऽज्ञानसन्देहविपर्यासानुषङ्गिणि ।
पुंसि कर्त्तरि नैवास्य प्रामाण्यं स्यात् तदन्यवत् ॥ ३१२५ ॥
स्वर्गयागादिसम्बन्धो ज्ञात्वा तद् येन भाषितः ।
विस्पष्टातीन्द्रियज्ञानः सोऽभ्युपेयः परैरपि ॥ ३१२६ ॥

तस्य चेति पुरुषस्य। तत इति पुरुषात् कर्तुः। तस्मिन्निति वेदे। प्रमाणतेत्येनदपेक्षाऽधिकरणसप्तमी चेद[1] इति[1]। प्रमाणतेति। अविपरीतातीन्द्रियार्थप्रतिपादकत्वम्। एतच्च परमतापेक्षयाऽभिहितम्। एतदुक्तं भवति— यदि भवद्भिरवश्यं वेदस्य प्रामाण्यमभ्युपेयते, तदाऽस्य पुरुषादेव कर्तुः प्रामाण्यं युक्तम्, न स्वत इति। एतच्च पूर्वं प्रतिपादितम्। स च वेदस्य कर्ता यद्यतीन्द्रियदृग्भवति, तदाऽस्य ततः कर्तुरपि प्रमाणता युक्ता, नान्यथा[2]। अन्यथा हि विपरीतसंशयज्ञानादियुक्ते कर्त्तरि सत्युन्मत्तादिवाक्यवद् वेदोऽप्रमाणतामेवाऽऽस्नुवीत। तस्माद् योऽसौ वेदकर्त्ता पूर्वं श्रुतिपरीक्षायां प्रसाधितः, परैरपि मीमांसकैरतीन्द्रियार्थदर्शी सामर्थ्यादभ्युपगन्तव्य इति, तत्प्रतिक्षेपो न कार्यः।

तथा हि—सर्वेषामेव पुंसां रागादिदोषतिमिरोपहतबुद्धिलोचनतया नातीन्द्रियार्थदर्शित्वमस्तीत्यवगम्य तत्प्रतीतेष्वागमेष्वप्रतिष्ठितप्रामाण्यप्रत्याशो धर्माधर्मावगमार्थी नरस्तीरदर्शीव शकुनिर्वेदमेव किल प्रमाणयिष्यतीति मन्यमानैर्भद्रा गुणद्वेषिणस्तारिद्रयोपहताभिमोक्षतया[3] जैमिनीयैरतीन्द्रियार्थदृक् प्रतिक्षिप्यते— सर्व एव हि पुरुषा रागादिभिरविद्यया च तदुपशमोपायवैकल्याद् विप्लुताः, तस्मान्नास्त्यतीन्द्रियार्थदर्शी कश्चिदिति चोदनालक्षण एवार्थो धर्मः, नेन्द्रियादिलक्षणः, चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुम्, नान्यत् किञ्चनेन्द्रियमिति।

प्रमाणयन्ति चात्र— य प्रमाणपञ्चकानिरहस्वभावाभावप्रमाणविषयीकृतनिमहः, स विदुषामभावव्यवहारगोचरतामेवाऽवतरति, [ G 81 / ] यथा गगननलिनम्।

1–1. पा०, गा० पुस्तकयोर्नास्ति। 2 पा०, गा० पुस्तकयोर्नास्ति।
3. ०हताभिमोक्ष०—पा०, ०हतामिमोक्ष०—गा०।

सुगतस्य सर्वज्ञत्वप्रतिषेधे मीमांसकमतानुवादः

धर्मज्ञत्वनिषेधश्चेत् केवलोऽत्रोपयुज्यते ।
सर्वमन्यद् विजानानः पुरुषः केन वार्यते ॥ ३१२७ ॥
सर्वशब्दश्च सर्वत्र प्रकृतापेक्ष इष्यते ।
ततः प्रकृतसर्वज्ञे सति किं नोऽवहीयते ॥ ३१२८ ॥
अर्थे चासम्भवात् कार्यं किञ्चिच्छब्देऽपि कल्प्यते ।
तत्र यः सर्वशब्दज्ञः स सर्वज्ञोऽस्तु नामतः ॥ ३१२९ ॥

---

अभावप्रमाणविषयीकृतविग्रहश्च सर्वदर्शी पुरुष इति स्वभावहेतु, व्यवहारयोग्यतायाः साध्यत्वात् । अभावस्त्वभावप्रमाणत एव सिद्धः ॥ ३१२४-३१२६॥

ननु चैतावदेव सर्वं प्रमेयं वस्तु, यदुत पञ्चविषया रूपादयः, तांश्च जानन्तो नरा लोकेऽतिप्रतीता एवेति, ततश्च प्रतीतिबाधा प्रतिज्ञायाः[1] इत्येतदाशङ्क्याह—धर्मज्ञत्वनिषेध इत्यादि । अत्र हि वेदप्रामाण्यसिद्धौ धर्मात्मविश्वपरिज्ञातृत्वनिषेधमात्रं विवक्षितम्, न तु सर्वशब्दाभिधेयमात्रपरिज्ञातृत्वनिषेधः, तेन धर्माधर्मव्यतिरिक्ताशेषपदार्थपरिज्ञानापेक्षया यः क्वचित्[1] पुंसि सर्वज्ञव्यवहारो लोकस्य सम्भवत्येवेति[2] न तस्य प्रतिषेधोऽस्माभिः क्रियते, अतो न प्रतीतिबाधा सम्भवतीति भावः ॥ ३१२७ ॥

किञ्च— यदि भवद्भिरपि बौद्धैर्धर्माधर्मज्ञव्यतिरेकेणान्यस्मिन् पुंसि सर्वज्ञत्वं प्रसज्यते, तदा सिद्धसाध्यतेति दर्शयन्नाह—सर्वशब्दश्चेत्यादि ॥ ३१२८ ॥

किञ्च तत्प्रकृतं सर्वमित्युच्यते[?] इति दर्शयति—अर्थे चेत्यादि । यथा हि—व्याकरणे "अश्मनो विकारे टिलोपो वक्तव्यः"... "अग्रेर्ढक्[3]" (पा० सू० ४ २ ३३) इत्यादिना लक्षणेन प्रत्यया गमादि कार्यं विधीयमानमर्थे न सम्भवतीति सामर्थ्यादर्थवाचिनि शब्देऽवगम्यत इति वैयाकरणैर्वर्ण्यते, तद्वद्यदि भवद्भिरपि सर्वस्य केनचित् परिज्ञातुमशक्यत्वादिति कृत्वा स्वसिद्धान्तपरिपठितस्य[4] सर्वज्ञशब्दस्य यत् सर्वपदं तस्य स्वरूपप्रधानतामाश्रित्य सर्वशब्दं यो वेत्ति स सर्वज्ञ इत्येव वर्ण्यते, तदास्तु = भवतु, नामतः

---

१ कस्मिंश्चित्—पा०, गा० ।
२ सम्भवति—पा०, गा० ।
३ अग्निर्ढक्—पा० ।
४. स्वसिद्धान्त०—जै०, पा० ।

अथापि प्रकृतं किञ्चित् तैलोदकघृतादिवत्[1] ।
तेन सर्वेण सर्वज्ञस्तथाप्यस्तु न वार्यते ॥ ३१३० ॥
भावाभावस्वरूपं वा जगत् सर्वं यदोच्यते ।
तत् संक्षेपेण सर्वज्ञः पुरुषः केन नेष्यते ॥ ३१३१ ॥
एवं ज्ञेयप्रमेयत्वसंक्षेपेणापि सर्वताम् ।
आश्रित्य यदि सर्वज्ञः कस्तं वारयितुं क्षमः ॥ ३१३२ ॥
पदार्था यैश्च यावन्तः सर्वत्वेनावधारिताः[2] ।
तज्ज्ञत्वेनापि सर्वज्ञाः सर्वे तद्ग्रन्थवेदिनः ॥ ३१३३ ॥

---

= संज्ञामात्रात् । न हि यथेष्टं नाम कुर्वाणस्य कस्यचित् कश्चित् प्रतिरोद्धा; स्वतन्त्रेच्छामात्रप्रभवत्वान्नाम्न इति भावः ॥ ३१२९ ॥

[ G 818 ] अथापि धर्माधर्माभ्यां यदन्यत् तैलोदकघृतादि सर्वत्वेन विवक्षितम्, तेन सर्वेण विषयीकृतेन सता सर्वज्ञ इतीष्यते, तथापि सिद्धसाध्यता ॥ ३१३० ॥

किञ्च—सामान्याकारतः विश्वस्य जगतः संक्षेपपरिज्ञानाद्वा सर्वज्ञ इष्टः, आहोस्विद् विशेषप्रकारेण विस्तरपरिज्ञानात् ? तत्राद्ये पक्षे सिद्धसाध्यतेति दर्शयति—भावाभावेत्यादि । सर्वमेव हि जगदितरेतराभावादिस्वभावत्वादभावस्वभावम्, विधिरूपतया व्यवस्थितत्वात् भावस्वभावमिति यदेतदस्माभिर्भावाभावस्वभावत्वं सर्वजगद्व्यापी सामान्यधर्मो वर्णितः, तेन रूपेण सर्वजगत्परिज्ञानाद् यदि सर्वज्ञः प्रसाध्यते, तथापीष्टमेव; न ह्येतावता धर्मज्ञत्वं प्रसिद्ध्यति कस्यचित् । तत्संक्षेपेणेति । तदेव भावाभावरूपत्वं जगतः संक्षेपः, संक्षिप्यतेऽनेनेति कृत्वा । एवं प्रमेयत्वादिभिः सामान्यधर्मैः परिज्ञानेऽपि सिद्धसाध्यता ॥ ३१३१-३१३२ ॥

अथापि स्याद्—यैः स्वस्मिन् स्वस्मिन् शास्त्रे यावन्तः पदार्थाः सर्वत्वेनावधार्य निर्दिष्टाः—यथा बौद्धैः पञ्च स्कन्धाः, वैशेषिकैः षट् पदार्थाः, नैयायिकैः प्रमाणप्रमेयादयः षोडश, साङ्ख्यैः प्रकृतिमहदादयः पञ्चविंशतिः—इत्येवमादि;

---

१. घृतादि यत्–गा० ।　　२. सर्वज्ञत्वेना०–पे० ।

तथा षड्भिः प्रमाणैर्यः षट्प्रमेयविवेकवान्[1] ।
सोऽपि संक्षिप्तसर्वज्ञः कस्य नाम न सम्मतः ॥ ३१३४ ॥
विशेषेण तु सर्वार्थसाक्षात्प्रत्यक्षदर्शिनम् ।
यः कल्पयति तस्यासौ मुधा मिथ्या च कल्पना ॥ ३१३५ ॥

त्परिज्ञानात् सर्ववित् प्रसाध्यत इति ? एवं सत्यतिप्रसङ्गः; तद्ग्रन्थार्थवेदिनोऽन्ये येऽध्येतारः ते सर्वज्ञाः प्राप्नुवन्ति ॥ ३१३३ ॥

अथापि स्याद्—यो हि प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यभावाख्यैः षड्भिः प्रमाणैर्यथास्वमेषां विषयषट्कं विवेकेन परिजानाति स सर्वज्ञ इति ? अत्रापि सिद्धसाध्यता । तथा हि—प्रत्यक्षं रूपादिविषयपञ्चकनियतत्वान्न धर्माधर्मविषयम् । अनुमानमपि [ G. 819 ] प्रत्यक्षगृहीतलिङ्गसम्बन्धलिङ्गिविषयत्वान्न तद्विषयम्, धर्मादेरतीन्द्रियत्वेन केनचित् सम्बन्धस्य गृहीतुमशक्यत्वात् । शाब्दं यद्यपि सर्वं परोक्षविषयम्, तथापि न तेन ज्ञानेनातीन्द्रियार्थदर्शी भवितुमर्हति, तस्य ज्ञानस्य [2]परोक्षार्थविषयत्वेनाप्रत्यक्षत्वात् । न चाप्रत्यक्षज्ञानात् समक्षी पुरुषः साक्षाद्दर्शी युज्यते । उपमानमपि सादृश्यतदुपाधिविषयत्वान्न धर्माधर्मादिविषयम् । यथोक्तम्—

"तस्माद्यत् स्मर्यते तत् स्यात् सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदाश्रितम् ॥"
( तत्त्व० १५३४ ) इति ।

अर्थापत्तिरपि दृष्टश्रुतार्थान्यथानुपपत्तिपरिकल्प्यार्थान्तरविषया, नासौ धर्मादिगोचरा । न हि कश्चिद् दृष्टः श्रुतो वार्थोऽस्ति यो धर्मादिना विना नोपपन्नः । भवतु वा धर्मादिविषयत्वमर्थापत्तेः, तथापि तस्या अप्रत्यक्षस्वभावत्वान्न तत्समक्षी[3] धर्मादिसाक्षाद्दर्शी सिद्ध्यति । अभावस्य तु प्रमेयाभावविषयत्वादेवायुक्तं धर्मादिविषयत्वम् ॥ ३१३४ ॥

एवं तावत् संक्षिप्तसर्वज्ञप्रसाधने सिद्धसाध्यतेति प्रतिपादितम् । इदानीं विस्तरेणाशेषजगत्परिज्ञानात् सर्वज्ञत्वसाधने दोषमाह—विशेषेणेत्यादि । मुधेति निष्फला, पुरुषार्थसिद्धावनुपयोगात् । मिथ्येति असम्भावनीयार्थविषयत्वाद्वितथा ॥३१३५॥

1. ०विवेकवत्—बौ० । 2. परोक्षवि०—पा० ।
3. तत्समक्षी—पा०, गा० ।

एकस्यैव शरीरस्य यावन्तः परमाणवः ।
केशरोमाणि यावन्ति कस्तानि ज्ञातुमर्हति ॥ ३१३६ ॥
समस्तावयवव्यक्तिविस्तरज्ञानसाधनम् ।
काकदन्तपरीक्षावत् क्रियमाणमनर्थकम् ॥ ३१३७ ॥
यथा च चक्षुषा सर्वान् भावान् वेत्तीति निष्फलम् ।
सर्वप्रत्यक्षदर्शित्वप्रतिज्ञाऽप्यफला तथा ॥ ३१३८ ॥
स्वधर्माधर्ममात्रज्ञसाधनप्रतिषेधयो ।
तत्प्रणीतागमग्राह्यहेतुत्वे हि प्रसिद्धयत ॥ ३१३९ ॥

---

तदेव सम्भावनीयविषयत्वमस्या दर्शयति—एकस्यैवेत्यादि । एकशरीरान्तर्गताशेषपरमाणुप्रविभागपरिज्ञानमेव तावत् खलु पुंसामसम्भाव्यम्, किमुताशेषजगद्गतसूक्ष्मादिविशेषपरिज्ञानं भविष्यति ॥ ३१३६ ॥

मुधात्वं फलाभावं दर्शयन्नाह—समस्तावयवेत्यादि । अवयवाश्च पाण्यादय, व्यक्तयश्च घटपटादयः इत्यवयवव्यक्तयः, समस्ताश्च ता अवयवव्यक्तयश्चेति विग्रह, तासामणुमेयपत्रादिलक्षणं विस्तरं जानातीति तथोक्तम् । "कृत्यल्युटो बहुलम्" (पा० सू० ३ ३ ११३) इति कर्तरि ल्युट् । तस्य साधनम् = प्रतिपादनम्[1] । [G 820] तदनर्थकम् असङ्गतत्वेन धर्माधर्मादिविषयत्वेन च[2] पुरुषार्थं प्रत्यनुपयोगित्वादिति भावः ॥ ३१३७ ॥

एतदेव दृष्टान्तेनोपपादयन्नाह—यथेत्यादि । एतेन सिद्धसाध्यत्वं प्रतीतिबाधितत्वं च प्रतिज्ञाया यथायोगमुक्तं भवति ॥ ३१३८ ॥

यत्र तु विवादः, यत्साधने च पुरुषार्थोपयोगित्वं तद्दर्शयति—स्वधर्मेत्यादि । स्वकीयश्चासौ धर्माधर्ममात्रज्ञश्चेति तथोक्तः, तस्य साधनप्रतिषेधाविति विग्रहः । सतिसप्तमीयम्[3] । तत्प्रणीतस्यागमस्य ग्राह्यत्वहेतुत्वे हि प्रसिद्धयत इति यथाक्रमं सम्बन्धः । एतदुक्तं भवति—यदि साधनवादी स्वकीयशास्तारं धर्माधर्मज्ञं साधयति, तदा तस्य साधने कृते सति तत्प्रणीतागमस्य ग्राह्यता सिध्यति ।

१ प्रतिपादनम्—पा०, गा० । २ तु—पा०, गा० ।
३. सप्तमीयम्—पा०, गा० ।

तत्र . सर्वजगत्सूक्ष्मभेदज्ञत्वप्रसाधने ।
अस्थाने क्लिश्यते लोकः संरम्भाद् ग्रन्थवादयोः ॥ ३१४० ॥
सर्वप्रमातृसम्बद्धप्रत्यक्षादिनिवारणात् ।
केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः ॥ ३१४१ ॥
एतावतैव मीमांसापक्षे सिद्धेऽपि यः पुनः ।
सर्वज्ञवारणे यत्नस्तत्कृतं मृतमारणम् ॥ ३१४२ ॥

---

दूषणवादी च यदि पराभ्युपगतं स्वधर्माधर्ममात्रज्ञं प्रतिषेधति तदा तस्य निषेधे कृते सति दूषितधर्माधर्मज्ञप्रणीतस्यागमस्य हेयत्वं प्रसिध्यति । यत्पुनर्धर्माधर्मविषयां चिन्तामपहाय[1] स्वपरप्रसिद्धस्य सर्वज्ञस्य सकलजगद्गतः सूक्ष्मादिभेदज्ञत्वाभ्य- साधनाय साङ्ख्य-बौद्धादिभिर्ग्रन्थरचनायां वादे वा संरम्भः क्रियते, स केवलमेषां संक्लेशफल एव । सर्वजगत्सूक्ष्मभेदज्ञत्वप्रसाधन इति निमित्तसप्तमी । ग्रन्थ- वादयोरित्यत्र तु संरम्भापेक्षाऽऽधारसप्तमी॥ ३१३९-३१४० ॥

स्यादेतद्—यदि न कश्चिद् धर्मादिपरिज्ञाताऽस्ति नरः, तदा लोके कथं पुण्यापुण्यावगतिर्भवति ?—इत्याशङ्कायामाह[2]—सर्वप्रमातृसम्बद्धेत्यादि । [G 821] केवलागमगम्यत्वमिति । आगममात्रगम्यत्वमित्यर्थः । यद्यप्या- गमशब्दः सामान्यवचनः, तथाप्यर्थादपौरुषेयागमनिष्ठ एव द्रष्टव्यः ।

**एतावतैवे**ति। धर्मज्ञत्वनिषेधमात्रेण "चोदनालक्षणोऽर्थो धर्मः" (मी० द० १.१.२)इत्यस्मिन् मीमांसापक्षे सिद्धेऽपि योऽस्माभिर्वक्ष्यमाणो भूयः सर्वज्ञपुरुष- निषेधाय यत्नः क्रियते, सोऽभिमतफलसिद्धेर्निष्पादितत्वात् प्राप्तफलस्य मृतमारणवन्नि- ष्फलः । यस्तु बौद्धादीनां धर्मज्ञेऽभावप्रमाणेन हते सति सर्वज्ञसाधनाय यत्न, सोऽपि समीहितफलाभावात् तुषकण्डनं तण्डुलार्थिन[3] केवलमायासमात्रफल एव । यथा तुषान्तर्गततण्डुलपरित्यागेन तण्डुलार्थिनः केवलं तुषकण्डनम्, एवं बौद्धादेः[4]

---

१. चिन्तामप०—पा० ।
२. आशङ्का०—पा० ।
३. तन्दुला०—पा०; एवमुपरि पि ।
४. बौद्धादौ—पा०, गा० ।

येऽपि विच्छिन्नमूलत्वाद् धर्मज्ञत्वे हृते सति ।
सर्वज्ञाद् पुरुषानाहुस्तैः कृतं तुषकण्डनम् ॥ ३१४३ ॥
साक्षाद् प्रत्यक्षदर्शित्वाद् यस्याशुचिरसादयः ।
स्वसंवेद्याः प्रसज्यन्ते को नु तं कल्पयिष्यति ॥ ३१४४ ॥
न च वेदोपवेदाङ्गप्रत्यङ्गाद्यर्थबोधनम् ।
बुद्धादेर्दृश्यते वाक्यं स सर्वज्ञः कथं मुधा ॥ ३१४५ ॥
स्वग्रन्थेष्वनिबद्धोऽपि विज्ञातोऽर्थो[1] यदीष्यते ।
सर्वज्ञाः कवयः सर्वे स्युः स्वकाव्यनिबन्धनात् ॥ ३१४६ ॥

---

स्वतः प्रधानभूतधर्मज्ञपरित्यागेनानुपयुज्यमानाशेषजगद्गतसूक्ष्मादिभेदज्ञसाधनमित्येतत् तुषकण्डनसाधर्म्यम् । विच्छिन्नमूलत्वादिति । विच्छिन्नं मूलं प्रधानधर्मात्मकवस्तुपरिज्ञानं येषां ते तथोक्ताः, तद्भावस्तत्त्वम् ॥ ३१४१–३१४३ ॥

न केवलमेषां बौद्धादीनां सर्वज्ञं साधयतामभीष्टफलासिद्धिः, अपि त्वनिष्टापत्तिरपीति दर्शयति—साक्षादित्यादि ॥ ३१४४ ॥

स्यादेतत्—सुगतादीनां सकलपदार्थराशितत्त्वोपदेशादनुमितः सर्वज्ञभावः—इत्यनुमानबाधितत्वं प्रतिज्ञायाः, हेतोश्चासिद्धत्वम् ? इत्याशङ्क्याह—न चेत्यादि । वेदाः = ऋग्यजुःसामसंज्ञकाः, उपवेदाः = आयुर्वेदधनुर्वेदादयः, अङ्गानि = वेदानां षट्—शिक्षा कल्पो व्याकरणं छन्दो निरुक्तं ज्योतिषमिति, प्रत्यङ्गानि = तदवयवा पादादयः । आदिशब्देन तत्परिकरस्य भाष्यादेः परिग्रहः । एषामर्थः = अभिधेयः, तस्य बोधनम् = प्रतिपादकं वचनं तदात्मकं वाक्यं बुद्धादेर्न दृश्यते, यद् वेदाद्युपदिष्टमर्थं प्रतिपादयतीत्यर्थः । न हि कस्यचिदखिलपदार्थराशिप्रतिपादकशास्त्रप्रणयनं दृश्यते; सर्वशास्त्राणां भिन्नाभिधेयत्वदर्शनात् ॥ ३१४५ ॥

[ G 822 ] अथापि स्यात्—किञ्चिन्मात्रपदार्थोपदेशदर्शनात् बुद्धादेरन्योऽपि स्वग्रन्थानुपदिष्टोऽर्थो विज्ञातत्वेनानुमास्यते[2]; परिज्ञानशक्तिदर्शनात्, ततश्च तदवस्थ एव दोषः ? इत्याह—स्वग्रन्थेष्वित्यादि । यदि ग्रन्थेषु अनिबद्धोऽपि =

---

१. स्वज्ञातो०—पा०, गा० ।
२. ०नात्रमीयते—पा०, गा० ।

सर्वज्ञेषु च भूयस्सु विरुद्धार्थोपदेशिषु ।
तुल्यहेतुषु सर्वेषु को नामैकोऽवधार्यताम् ॥ ३१४७ ॥
सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ।
अथोभावपि सर्वज्ञौ मतभेदस्तयोः कथम् ? ॥ ३१४८ ॥
गणिताद्येकदेशे[1] तु सर्वेषां सत्यवादिता ।
जिनबुद्धादिसत्त्वानां विशेषो नावधार्यते ॥ ३१४९ ॥

अनुपदिष्टोऽपि योऽर्थः स तैर्विज्ञात इष्यते, अनुमानबलात्, तदा स्वोत्प्रेक्षितकथाप्रबन्धकारिणोऽपि कवयः परिज्ञानशक्तिदर्शनात् सर्वज्ञाः कल्प्याः स्युः, अविशेषादित्यनैकान्तिकता हेतोः ॥ ३१४६ ॥

स्यादेतद्—बुद्धादीनामतीन्द्रियपदार्थोपदेशो दृश्यते, न तु कवीनाम्, तेन तेषामेवाशेषातीन्द्रियार्थपरिज्ञानमनुमीयते, नान्येषाम् । अन्यथा हि यस्याशेषातीन्द्रियार्थपदार्थपरिज्ञानसामर्थ्यं नास्ति, तस्य कियन्मात्रातीन्द्रियार्थपरिज्ञानमपि न स्याद्, अविशेषात् । तेनातीन्द्रियार्थपरिज्ञातृत्वे सतीति सविशेषणत्वाद्धेतोर्न कविभिर्व्यभिचारः ? इत्याशङ्क्याह—सर्वज्ञेष्वित्यादि । बहुतरेषु सुगत-कपिल-कणभक्षाक्षपादादिषु तद्भक्तैः सर्वज्ञत्वेनोपकल्पितेषु साध्येषु कतम एकोऽत्र सर्वज्ञत्वेनावधार्यताम् = निश्चीयताम्; सर्वेषामतीन्द्रियार्थोपदेष्टृत्वस्य सर्वज्ञनिश्चयहेतोस्तुल्यत्वात् । न च सर्व एव सर्वज्ञा इत्यवधारयितुं युक्तम्; सर्वेषां परस्परविरुद्धार्थोपदेष्टृत्वात् । न हि परस्पराहतोपदेष्टारः[2] सर्व एव तत्त्वदर्शिनो युक्ताः; वस्तुनोनेकरूपत्वेन परस्परविरुद्धानेकस्वभावसंसर्गाभावात् ॥ ३१४७ ॥

सुगत एकोऽवधार्यत इति चेद् ? आह—सुगतो यदीत्यादि । द्वावपि तर्हि सर्वज्ञौ भवेतामिति चेद् ? आह—अथोभावपीत्यादि ॥ ३१४८ ॥

अथापि स्यात्—यस्य वचनं सत्यार्थमुपलब्धमेकदा, तस्यैवाविपरीताशेषपदार्थतत्त्वापरिज्ञानमनुमीयते ? इत्याह—गणितेत्यादि[3] । [G 823] सर्वेषां

[1]. गणिता°—जै° ।
[2]. परस्परविहतोप°—पा°, गा° ।
[3]. गणितेत्यादि—जै° ।

येनैव हेतुनैकस्य सर्वज्ञत्वं प्रसाध्यते ।
स्वपक्षप्रीतिमात्रेण सोऽन्यस्याप्युपतिष्ठते ॥ ३१५० ॥
दूषणानि ससंरम्भा सर्वज्ञजिनसाधने ।
शाक्या यान्येव जल्पन्ति जैनास्तान्येव युञ्जते ॥ ३१५१ ॥
तत्रानवस्थितैस्तेषां भिन्नैः साधनदूषणैः ।
प्रतिबिम्बोदयप्रस्तैर्निर्णयः क्रियते कथम् ? ॥ ३१५२ ॥

---

हि जिनबुद्धादीनां देहिनां गणितादेकदेशेषु क्वचिदविसंवादि वचो दृश्यत एव । न ह्यनन्त मस्त्यसाम्¹ न किंचित् सत्यार्थं भवेत्, यथोक्तम्—"न ह्येक नास्ति सत्यार्थं पुरुषे बहुभाषिणि" ( ) इति । ततश्च तुल्यहेतुत सर्वेषामेव विशेषानवधारणात् सर्वज्ञता प्राप्नोति, न चैतद्युक्तम्, 'परस्परविरुद्धार्थोपदेशात्' इति पूर्वमुक्तत्वात् ॥ ३१४९ ॥

अथापि स्यात्–यस्य वचनं सर्वत्र प्रमाणैर्निर्बाधमण्य व्याहर्तुं न पार्यते, स एव सर्वज्ञो भविष्यति ? इत्याह—येनैवेत्यादि । यो हि हेतुः सुगतसर्वज्ञसाधनायोपादीयते² सुगतस्तुते, यथा—साक्षाद् विदितसकलार्थतत्त्व सुगत, अश्रुतानुमितविपरीतार्थोपदेष्टृत्वात्, यथा प्रत्यक्षावगतसलिलादिस्वदुपदेष्टेति, अयमेव च³ दिगम्बराणां जिनसर्वज्ञसाधनाय⁴ हेतुरुपतिष्ठते, ततश्च तदवस्थ एव संदेहः । तथा जिनसर्वज्ञसाधनाय⁴ दिगम्बरैः साधने कृते यानि दूषणानि शाक्यैरुपादीयन्ते—तदुपदिष्टानां स्याद्वादादीनामयोगात्नासौ सर्वज्ञ इति, तानि शाक्यैः सुगतसर्वज्ञसाधने कृते जैना अभ्युपाददते—नासौ सर्वज्ञः, तदुपदिष्टानां क्षणभङ्गादीनामयोगादिति । ततश्च यथा बिम्बसन्निधानानन्तरं प्रतिबिम्बोदयः, एवमेषां साधनदूषणानन्तरं परस्परप्रत्यनीकभूतानि साधनदूषणान्युपतिष्ठन्त इति तत् कथमेभिः साधनदूषणैरनवस्थितैः प्रतिबिम्बोदयेनैव प्रस्तैर्निर्णयः क्रियते कस्यचित् सर्वज्ञत्वेन ॥ ३१५०–३१५२ ॥

---

१ प्रत्यक्षता—गा० । २ सुगतसर्वज्ञता०—गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति । ४ जिनसर्वज्ञता०—गा० ।

एवं सर्वज्ञकल्पेषु निहतेषु परस्परम् ।
अल्पशेषीकृतान् सर्वान् वेदवादी हनिष्यति ॥ ३१५३ ॥
यथा नकुलदन्ताग्रस्पृष्टा या काचिदौषधिः ।
सर्वं सर्पविषं हन्ति क्रीडद्भिरपि योजिता ॥ ३१५४ ॥
वेदवादिमुखस्यैवं युक्तिर्लौकिकवैदिकी ।
या काचिदपि शाक्यादिसर्पज्ञानविषापहा ॥ ३१५५ ॥
यस्य ज्ञेयप्रमेयत्ववस्तुसत्त्वादिलक्षणाः ।
निहन्तुं हेतवः शक्ताः को नु तं कल्पयिष्यति ॥ ३१५६ ॥
एकेनैव प्रमाणेन सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ॥ ३१५७ ॥

---

स्यादेतत्—यस्य न केनचित् परमार्थतो दूषणं शक्यते कर्तुम्, स एव सर्वज्ञत्वेन विज्ञास्यते ? इत्याह—एवमित्यादि ॥ ३१५३ ॥

[G. 824] आत्मानमुत्कर्षयन्नाह—यथा नकुलेत्यादि ॥ ३१५४–३१५५ ॥

का पुनरसौ या काचिद्युक्तिः ? इत्याह—यस्येत्यादि । यस्य हि ज्ञेयत्वादयः सपक्षविपक्षसाधारणत्वेनाप्रतीता अपि[1] सन्तो बाधका भवन्ति, सोऽत्यन्तासम्भवीति न प्रेक्षावताऽभ्युपेयः । तथा हि शक्यमिदं वक्तुम्—सुगतोऽसर्वज्ञः, ज्ञेयत्वप्रमेयत्ववस्तुत्वसत्त्ववक्तृत्वपुरुषत्वादिभ्यः, रथ्यापुरुषवदिति । न चाप्येतेऽनैकान्तिका भवन्ति । तथा हि—सर्वपदार्थज्ञानात् सर्वज्ञ इष्यते, तच्च सकलवस्तुपरिज्ञानं कदाचिदिन्द्रियज्ञानेन वा भवेत्, मनोज्ञानेन वा ? न तावदिन्द्रियज्ञानेन; तस्य प्रतिनियतार्थविषयत्वादयुक्तमशेषार्थविषयत्वम् । तथा हि—चक्षुरादिज्ञानानि प्रतिनियतविषयग्रहणस्वभावान्येव स्वकारणैरिन्द्रियैर्नियामकैर्जनितानि, ततश्चानतिक्रान्तस्वविषयमर्यादानि लोकेऽपि प्रतीतानीति न युक्तमेतैरशेषार्थग्रहणम्; अन्यथा ह्यनेकेन्द्रियवैयर्थ्यप्रसङ्गः स्यात् । ततश्चैकेनैव ज्ञानेन सर्वधर्मान् भिन्ने-

---

१. पा॰, गा॰ पुस्तकयोर्नास्ति ।

यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।
दृष्टं सम्प्रति लोकस्य तथा कालान्तरेऽप्यभूत् ॥ ३१५८ ॥
येऽपि सातिशया दृष्टाः प्रज्ञामेधाबलैर्नराः ।
स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात् ॥ ३१५९ ॥

---

न्द्रियग्राह्यानपि रसरूपादीन् जानातीत्येव येन बौद्धेन कल्प्यते, "एकेन सर्वं जानाति सर्वमेकेन पश्यति" इति वचनात्, स वादी बौद्धश्चक्षुषा करणभूतेन तद्द्वारप्रवृत्तेन ज्ञानेन सर्वधर्मान् रसादीनवगच्छतीति प्राप्तम् । न चैतच्छक्यते वक्तुम्—मा भूदेकेन ज्ञानेन युगपदशेषार्थस्य ग्रहणम्, अनेकेन भविष्यतीति, यतो युगपदनेकविज्ञानासम्भवात् । सम्भवेऽपि न सर्वपदार्थग्रहणमस्ति, परचित्तस्ये न्द्रियज्ञानाविषयत्वात्, अगोचरप्राप्तस्य च दूरसूक्ष्मव्यवहितादेरर्थस्य तेन ग्रहीतुम शक्यत्वात् ॥ ३१५६ ३१५७ ॥

स्यादेतत्—यदि नाम चक्षुरादिज्ञानाना विजातीयार्थग्रहणमिदानीं न दृश्यते, [ G 825 ] तथापि कालान्तरे कदाचिद् विजातीयार्थग्रहणमभूत् कस्य चिदिति सम्भाव्यते । इत्याह—यज्जातीयैरित्यादि । हेतुप्रतिबद्धो हि भावाना स्वभावप्रतिनियम, नाकस्मिक, अन्यथा सर्वस्य सर्वस्वभावत्वप्रसङ्ग, ततश्च तथाविधहेतुप्रतिबद्धात्मलाभस्य कथमन्यथात्वं कदाचिदपि सम्भाव्यम् । न हि धूमकेतुप्रतिबद्धात्मसंस्थितेरन्यतो धूमस्योद्भव सम्भाव्यत इति भाव ।

नापि मनोज्ञानेनेति पक्ष । तथा हि—यद्यपि तत् सर्वार्थविषयम्, तथापि न तस्य स्वातन्त्र्येणार्थग्रहणव्यापारोऽस्ति, अन्धबधिराद्यभावप्रसङ्गात् । पारतन्त्र्ये चेन्द्रियज्ञानपरिगृहीतार्थविषयत्वाद् दूरसूक्ष्मव्यवहितपरचित्तादेरर्थस्येन्द्रियज्ञाना विषयीकृतस्य[1] तेन परिच्छेदो न प्राप्नोति ॥ ३१५८ ॥

स्यादेतत्—प्रज्ञादीनामभ्यासात् प्रतिपुरुषं तारतम्यभेददर्शनादत्यन्तप्रकर्षोऽपि सम्भाव्यते । इत्यत्राह—येऽपीत्यादि । न हि कस्यचिदभ्यासेऽप्यतीन्द्रियार्थदर्शित्वमुपलब्धम् । तथा हि—नरोऽतिप्राज्ञोऽपि निपुणबुद्धिगम्यतया सूक्ष्मानर्थानुपलब्धुं समर्थोऽपि स्वजाती = मनुष्यजातिभाविनो प्रकृतीरदिव्यचक्षुष्ट्वादिलक्षणा

---

१ •ज्ञान विषयी•—पा• ।

प्राज्ञोऽपि हि नरः सूक्ष्मानर्थान् द्रष्टुं क्षमोऽपि सन् ।
स्वजातीरनतिक्रामन्नतिशेते परान् नरान् ॥ ३१६० ॥
श्रोत्रगम्येषु शब्देषु दूरसूक्ष्मोपलब्धिभिः ।
पुरुषातिशयो दृष्टो न रूपाद्युपलम्भनात् ॥ ३१६१ ॥
चक्षुषापि च दूरस्थसूक्ष्मरूपप्रकाशनम् ।
क्रियतेऽतिशयप्राप्त्या न तु शब्दादिदर्शनम्[1] ॥ ३१६२ ॥
एवं शास्त्रविचारेषु दृश्यतेऽतिशयो महान् ।
न तु शास्त्रान्तरज्ञानं तन्मात्रेणैव[2] लभ्यते ॥ ३१६३ ॥
ज्ञात्वा व्याकरणं दूरं बुद्धिः शब्दापशब्दयोः ।
प्रकृष्यते न नक्षत्रतिथिग्रहणनिर्णये ॥ ३१६४ ॥

---

अनतिवर्तमान एताभ्यां नरानतिशयानो दृश्यते, न तु दिव्यचक्षुष्ट्वादिना युक्तः कश्चिद् दृश्यते इति यावत् । ततश्च—"स पश्यति दिव्येन चक्षुषा सुविशुद्धेनातिक्रान्तमानुष्यकेन सत्त्वान्सुगतिमपि गच्छतो दुर्गतिमपि गच्छत." (दी० नि० १.२.५) इत्यादि यद् बौद्धैरुद्घोष्यते, तत्किल नोपपद्यत इति भाव. ॥३१५९–३१६०॥

भवतु नामाभ्यासादिभिरतिशयः सर्वासां बुद्धीनाम्, तथाप्येता अविचलितस्वविषयसीमान एव सत्योऽतिशेरत[3] इति विस्तरेण प्रतिपादयन्नाह—श्रोत्रगम्येष्वित्यादि । [G. 826] दूरसूक्ष्मेषूपलब्धयः—शब्दानि, ताभिरिति "इत्थम्भूतलक्षणे" (पा० सू० २.३.२१) तृतीया, कश्चिद् दूरसूक्ष्मोपलब्धिमत इति यावत्, ततो हेतौ पञ्चमी विभाषागुणेऽस्त्रियामिति (पा० सू० वा० ५.४.४४) विधेयः । न तु शब्दादिदर्शनम्, चक्षुषा क्रियत इति सम्बन्धः ॥ ३१६१–३१६२ ॥

एतावतेन्द्रियधियां स्वविषयमर्यादानतिक्रमो दर्शित, साम्प्रतं मनोविज्ञानस्याभ्यस्यमानविषयानतिक्रमेणैवातिशयो दृश्यते इति प्रतिपादयति—एवमित्यादि ॥ ३१६३ ॥

एतदेव स्पष्टयन्नाह—ज्ञात्वेत्यादि । ज्योतिर्वेत्तीति ज्योतिर्वित् । वेदेति-

---

१. ॰दर्शनम्—पा०, गा० । २. तस्मान्मात्रेणैव—गा० ।
३. सत्यातिशेरते—जै० ।

ज्योतिर्विच्च प्रकृष्टोऽपि चन्द्रार्कग्रहणादिकम्[1] ।
न भवत्यादिशब्दाना साधुत्व ज्ञातुमर्हति ॥ ३१६५ ॥
तथा वेदेतिहासादिज्ञानातिशयवानपि ।
न स्वर्गदेवताऽपूर्वप्रत्यक्षीकरणक्षमः[2] ॥ ३१६६ ॥
दशहस्तान्तर व्योम्नो यो नामोत्प्लुत्य गच्छति ।
न योजनमसौ गन्तु शक्तोऽभ्यासशतैरपि ॥ ३१६७ ॥
तस्माद् अतिशयज्ञानैरतिदूरगतैरपि ।
किञ्चिदेवाधिक ज्ञातु शक्यते न त्वतीन्द्रियम् ॥ ३१६८ ॥
एकापवरकस्थस्य प्रत्यक्षं यत् प्रवर्त्तते ।
शक्तिस्तत्रैव तस्य स्यान्नैवापवरकान्तरे ॥ ३१६९ ॥
ये चार्था दूरविच्छिन्ना देशपर्वतसागरैः ।
वर्षद्वीपान्तरैर्वा कस्तान् पश्येदिहैव सन् ॥ ३१७० ॥

हासादिषु ज्ञानानि तेषामतिशय स विद्यते यस्येति विग्रह । अपूर्वशब्देन धर्माधर्मावुच्यते ॥ ३१६४–३१६६ ॥

किञ्च—स्वविषयमर्यादातिक्रमेणाप्यतिशयो भवन्नात्यन्तप्रकर्षनिष्ठा गच्छति, अपि तु कियन्मात्रविशेषावधिरेव दृश्यत इत्येतद् दर्शयन्नाह—दशहस्तान्तरमित्यादि । तथाहि—यदि नाम केचिदुपचितश्लेष्मवपुषो हस्तमात्रव्योमोत्प्लवनासमर्था पश्चादभ्यासक्रमेण समासादितगात्रलाघवा दशहस्तान्तरगगनविलङ्घिनो जाता, तथापि न ते योजनमेकमपि सगगनमुत्पतितु समर्था प्रयत्नशतेनापि भवन्ति ॥ ३१६७ ॥

तस्मादित्यादिनोपसहरति—[ G 827 ] अतिशयेन प्रकर्षेण ज्ञानानि अतिशयज्ञानानि, 'तृतीया[3]' ( पा० सू० २.१.३० ) इति[3] योगविभागात् समास, तैरिति करणतृतीया ॥ ३१६८ ॥

एतदेव स्पष्टीकुर्वन्नाह—एकेत्यादि । वर्षम् = लोकविशेष । यथा भारत-

1 ग्रहणादिवित्—पा० । 2 स्वर्गदेवता०—पा०, गा० ।
3–3 तृतीया5ऽपि—पा० ।

नलर्तुपर्णयोश्चासावश्वाक्षहृदयज्ञयोः ।
संवाहे गच्छतोर्वाक्यमृतुपर्णेन भाषितम् ॥ ३१७१ ॥
"सर्वः सर्वं न जानाति सर्वज्ञो नोपपद्यते ।
नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित्"-॥ ३१७२ ॥

---

लोकः 'भारतवर्षम्' इत्युच्यते ॥ ३१६९-३१७० ॥

अन्यैरप्यत्रास्माकं स्वहस्तो दत्त इति दर्शयन्नाह—नलेत्यादि । संवाह इति रथे ।

तथा हि किल श्रूयते—नलो नाम राजा बभूव । स किलाक्षहृदयानभिज्ञतया सकलमेव राज्यं द्यूतेन हारयामास । तस्य च राज्ञी दमयन्ती नाम बभूव । सोऽपहृतसकलराज्यस्तया देव्या केवलया सार्धमरण्यमुपजगाम । तत्रागतस्यापि तस्य दैववशात् तया राज्ञ्या सह वियोगोऽभूत् । सोऽतीव समुपजातप्रियाविरहशोकाश्रुदुर्दिनवदनश्चिन्ताजलधिमवगाहमानोऽतिशयसञ्जातशरीरकृशिमा परिभ्रमन् इतस्ततः कथमपि संक्षेपाद् ऋतुपर्णस्य राज्ञोऽनुजीविवृत्तिमास्थायाविदितस्थितोऽभूत् । सा च तस्य राज्ञी कथं कथमपि पितृगृहमनुप्राप्ता बभूव । तस्याश्च पिता तत्स्वामिनस्तत्रागमनाय सर्वदेशेषु दमयन्त्याः स्वयंवरमुद्घोषयामास । श्रुतमृतुपर्णेन राज्ञा—यथा किल दमयन्ती स्वयंवरेति । स श्रुत्वा नलेन सारथिना तत्र गन्तुमभिप्रतस्थे । ऋतुपर्णश्चाक्षहृदयज्ञः, नाश्वहृदयवेदी, नलस्त्वश्वहृदयज्ञः, नाक्षहृदयाभिज्ञः । परिज्ञातमृतुपर्णेन—यथाऽयमश्वहृदयज्ञ इति । ज्ञात्वा तेनाभ्यधायि—'भोः कथय मेऽश्वहृदयम्' इति । नलोऽप्यभिहितवान्—"कथयामि यदि नाम त्वमप्यक्षहृदयं कथयसि" इति । [ G. 828 ] तत्र हृदयमृतुपर्णेन कीर्तितम्—सर्वः सर्वं न जानातीत्यादि । ततो नलेन राज्ञाऽक्षहृदयमृतुपर्णतो विदित्वा पुनरपि तद्राज्यं जित्वा प्रत्यानीतमिति वार्ता ॥३१७१—३१७२ ॥

किञ्च—सर्वज्ञेन सताऽवश्यमतीतानागतं वस्तु ज्ञातव्यम्, अन्यथा हि प्रत्युत्पन्नमात्रपरिज्ञाने प्रदेशज्ञः स्यात् न सर्वज्ञः, न चानागतादिपरिज्ञानं सम्भवतीति

अनागतेन दृष्टं च प्रत्यक्षस्य मनागपि ।
सामर्थ्यं नानुमानादिजन्म लिङ्गादिभिर्विना ॥ ३१७३ ॥
तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टा न विद्यते ।
वचनेन तु नित्येन यः पश्यति स पश्यति ॥ ३१७४ ॥
एतदक्षममाणो यः पौरुषेयागमान्तरात् ।
अतीन्द्रियार्थविज्ञानं बुद्धादेरपि मन्यते ॥ ३१७५ ॥
तस्य तेनैव तुल्यत्वात् तद्वाक्यस्याप्रमाणता ।
पुरुषस्य च वक्तव्या पूर्वोक्तैरेव हेतुभिः ॥ ३१७६ ॥

---

दर्शयन्नाह—अनागत इत्यादि । प्रत्यक्षस्य वस्तुसामर्थ्यबलेनोत्पत्तेरनागतस्य चावस्तुत्वान्न तत्र प्रत्यक्षव्यापारः । नाप्यनुमानस्य, लिङ्गाभावात् । न ह्यनागतवस्तुसम्बद्धं क्वचिद् विदितं लिङ्गमस्ति, अनागतस्याभावात् । आदिशब्देन दृष्टान्तपरिग्रहः । अनागतग्रहणमुपलक्षणम्, अतीतस्यापि ग्रहणं द्रष्टव्यम् । अतीतस्याप्यवस्तुतया न प्रत्यक्षव्यापारोऽस्ति । तस्मात् सिद्धा प्रमेयत्वादिहेतुगणस्य व्याप्तिः । अत एव पूर्वोक्तस्य 'अभावप्रमाणविषयीकृतविग्रहत्वात्' इत्येतस्य हेतोर्व्याप्तिरुक्ता भवति ॥ ३१७३ ॥

तदेवं हेतूनां व्याप्तिं प्रसाध्योपसंहरन्नाह[१]—तस्मादित्यादि ॥ ३१७४ ॥

स्यादेतत्—न नित्येनैव वचनेन सर्वं पश्यति । तथा हि—कनककाश्यपमुनिप्रभृतिप्रणीतात् वाक्यादागमात् मुनिः पश्यति, अतोऽप्यन्य इति । अत्राह—एतदित्यादि । एतत् = अनन्तरोक्तम्—"वचनेन तु नित्येन यः पश्यति स पश्यति" इति, अक्षममाणो य एवं मन्यते बौद्धादिः—"न नित्येन वचनेन सर्वं पश्यति, किन्तु पुरुषान्तरकृतेन, तद्यथा कनककाश्यपादिप्रणीतेनागमेन शाक्यमुनिः" इति, तस्यैववादिनस्तद्वाक्यस्याप्रमाणता [ 829 ] वक्तव्या । तस्य पुरुषान्तरस्य वाक्यं तद्वाक्यम्, तेनैव दृष्टाभिमतपुरुषवाक्येन तुल्यत्वात् कारणात् । पुरुषस्य चागमकर्तुरप्रमाणता वक्तव्येति पुरुषकृतेन[२] सम्बन्धः । कथं? पूर्वोक्तैः प्रमेयत्वादिभिर्हेतुभिः ॥ ३१७५ ३१७६ ॥

---

१ प्रसाध्योप०—पा० ।   २ पा०, गा० पुस्तकयोर्नास्ति ।

कर्तृकृत्रिमवाक्यानामुच्यते या त्वनादिता ।
अप्रमाणद्वयाधारा न सा प्रामाण्यसाधनी ॥ ३१७७ ॥
न शौद्धोदनिवाक्यानां पारतन्त्र्यात् प्रमाणता ।
अपश्यतः स्वयं धर्मं तथा शौद्धोदनेरपि ॥ ३१७८ ॥
ईदृशां पुद्गलानां च कल्प्यमानाप्यनादिता ।
अप्रामाण्यपदस्थत्वान्न तस्मादतिरिच्यते ॥ ३१७९ ॥
अतोऽनादित्वसामान्यं बुद्धानामभिधीयते ।
मीमांसकायमानैस्तैर्यद् वेदाध्यायिनामिव ॥ ३१८० ॥
तद्विज्ञानविशेषत्वान्न तेषां याति तुल्यताम् ।
प्रमाणत्वाप्रमाणत्वे स्यातामेवं ह्यनादिनी ॥ ३१८१ ॥

---

ननु चानादिर्बुद्धपरम्परा, तत्प्रणीतोऽपि सिद्धान्तोऽनादिरेव, ततश्च वेदाभियुक्तपुरुषपरम्परावद्[1], वेदबुद्धानयोरप्यनादित्वाददोषत्वमेव । इत्यत्राह—कर्तृकृत्रिमवाक्यानामित्यादि ॥ ३१७७ ॥

एतदेव दर्शयन्नाह—न शौद्धोदनिवाक्यानामित्यादि । यथा शौद्धोदने, तद्वाक्यस्य चाप्रामाण्यम्; तथा अन्येषां कनककाश्यपादीनां तद्वचसां चेति ॥ ३१७८ ॥

एतच्चेदृशां पुद्गलानां तद्वाक्यानां चानादिता कल्पितापि सती न[2] तस्मादप्रामाण्यादतिरिच्यते = दूरीभवति, अप्रामाण्यपद एव स्थितत्वात् ॥ ३१७९ ॥

तत्र यदि नामानादित्वमात्रेण बुद्धादेर्वेदाध्यायिभिः सह साम्यमुपवर्णितम्, तथापि नाऽनादित्वात् प्रामाण्यं सिद्ध्यति; प्रामाण्याप्रामाण्ययोरनादित्वाविरोधात् । केवलं वेदाध्यायिनां बुद्धादीनां च प्रमाणत्वाप्रमाणत्वे यथाक्रममनादिनी स्याताम् । न तु द्वयोरनादित्वात् प्रमाणत्वमेव वा, अप्रमाणत्वमेव वा सिद्ध्यतीति समुदायार्थः ॥ ३१८०-३१८१ ॥

---

१. °युक्तपरम्परा°—पा°, गा° ।
२. पा° पुस्तके नास्ति ।

ये प्रमाणतदाभासगुणदोषा ह्यनादयः ।
न तेऽनादित्वमात्रेण सर्वे गच्छन्ति तुल्यताम् ॥ ३१८२ ॥
सुवर्णं व्यवहाराङ्गमनाद्यन्तं यथास्थितम् ।
मायासुवर्णमप्येवमिति किं तेन तत्समम् ॥ ३१८३ ॥
सर्वज्ञत्वं च बुद्धादेर्या च वेदस्य नित्यता ।
तुल्ये जल्पन्ति ये तेभ्यो विशेषः कथ्यतेऽधुना ॥ ३१८४ ॥
सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योऽनुमापयेत् ॥ ३१८५ ॥

---

एतदेव दृष्टान्तेन स्पष्टीकुर्वन्नाह—ये इत्यादि । [G 830] प्रमाणतदाभासयोर्गुणदोषा इति विग्रहः ॥ ३१८२-३१८३ ॥

इदानीमभावप्रमाणविषयीकृतविग्रहस्यासिद्धतापरिहारेण[1] सर्वज्ञस्याभावं[2] प्रख्यापयन्[2] वेदस्य ततो विशेषमाह—सर्वज्ञत्वमित्यादि । तुल्ये जल्पन्तीति । सम्यक् प्रतिपत्तिहेतुत्वेन द्वयोरपि साम्यात्—नित्यवेदद्वारेण चातीन्द्रियार्थप्रतीतिः, सर्वज्ञवचनद्वारेण चेति न कश्चिद् विशेष इति य एव जल्पन्ति, तेभ्य एववादिभ्यो वेदस्य विशेषः कथ्यते ॥ ३१८४ ॥

तथा हि— सर्वदर्शी प्रत्यक्षानुमानशाब्दोपमानार्थापत्तीनां मध्ये नैकेनापि प्रमाणेन सिद्धः, तत् कथमभावप्रमाणग्रासीकृतमूर्तेरसतस्तस्य प्रमाणभूतेनागोपालाङ्गनादिप्रतीतेन वेदेन साम्यं भविष्यतीति मन्यमानः सर्वज्ञ इत्यादिना प्रत्यक्षादिप्रमाणपञ्चकप्रसिद्धतामस्य निराकरोति ।

न तावत् प्रत्यक्षेणास्मदादिभिरर्वाग्दर्शिभिः सर्वज्ञो दृश्यते, तथा हि— अर्वाग्दर्शिनः प्रत्यक्षं त्रिविधम्—इन्द्रियज्ञानम्, मानसम्, सर्वचित्तचैत्तानामात्मसंवेदनं चेति । तदेतत् त्रिविधमपि न सर्वज्ञमवगमयितुमलम्, अतद्विषयत्वात् । इन्द्रियज्ञानं हि रूपादिविषयपञ्चकनियतम्, अतो न तेन परसन्तानसमवायिनो बुद्धिधर्मा विषयीक्रियन्ते । नापि मानसेन, तस्य इन्द्रियज्ञानपरिगृहीतविषया-

---

1. ॰विग्रहत्वस्या॰—पा॰ ।
२-२. ॰भाव प्रख्यापयन्—पा॰ ।

न चागमविधिः कश्चिन्नित्यसर्वज्ञबोधकः[1] ।
कृत्रिमेण च सत्येन स कथं प्रतिपाद्यते ॥ ३१८६ ॥

---

न्तरविषयग्राहित्वेनेन्द्रियज्ञानवत् प्रतिनियतरूपादिविषयत्वात् । नापि स्वसंवेदनेन, तस्य स्वसन्तानवर्त्तिवर्त्तमानचित्तचैत्तविषयत्वात्, अतो न तेन परसन्तानवर्त्तिनः स्वसन्तानिकाश्चानागताश्चेतोधर्मा शक्यन्ते वेदयितुम् । योगिज्ञानस्यैव च साध्यत्वान्न तेन ग्रहणाग्रहणचिन्ताऽवतरति ।

नाप्यनुमानेन, तद्धि त्रिविधलिङ्गसमाश्रयमिष्यते सौगतैः । तत्र [G 831] विधिसाधनस्यात्राधिकारान्नानुपलब्धिस्तावदिहाधिक्रियते, नापि कार्यम्, प्रत्यक्षानुपलम्भसाधनत्वात्[2] कार्यकारणभावस्य विप्रकर्षिणा सर्वज्ञेन सह कस्यचित् कार्यकारणभावासिद्धेः । स्वभावोऽपि हेतुर्न सर्वदर्शिनः सत्तां साधयति, तद्प्रत्यक्षत्वे स्वभावस्य तद्व्यतिरेकिणो ग्रहीतुमशक्यत्वात् । तस्माद् दृष्टः = प्रसिद्धो लिङ्गभूत एकदेशः = पक्षधर्मः, स न सम्भवति, निरूप्यमाणो यः सर्वज्ञमनुमापयेत् ।

किञ्च—सर्वज्ञसत्तासाधने सर्वो हेतुस्त्रयीं दोषजातिं नातिवर्त्तते—असिद्धिम्, विरुद्धत्वम्, अनैकान्तिकत्वं च । तथा हि—हेतुरुच्यमानो भावधर्मो वाऽभिधीयेत, अभावधर्मो वा, यद्वोभयधर्मः—इति पक्षत्रयम् । तत्र सर्वज्ञे धर्मिणि न भावधर्मः प्रतिवाद्यसिद्धः सम्भवति, तस्यैव धर्मिणः साध्यत्वेनासिद्धत्वात्[3], सिद्धौ वा अविवादप्रसङ्गात् । यो हि भावधर्मं तत्रेच्छति स कथं वादी तं भाव[4] नेच्छेत्, निराश्रयस्य धर्ममात्रस्य ग्रहीतुमशक्यत्वात् । नाप्यभावधर्मो हेतुः सर्वज्ञसिद्धये युक्तः, तस्य भावविपरीतसाधकत्वेन विरुद्धत्वात् । नाप्युभयधर्मः, तस्यानैकान्तिकत्वात् । कथं हि नाम भावाभावधर्मो भावधर्मसिद्धावभावस्य विपक्षवृत्तित्वच्छेदलभ्यं भावादव्यभिचारित्वलक्षणं[5] हेतुत्वमनुभवेत् । तस्मात् त्रिप्रकारोऽप्येकदेशो लिङ्गभूतो नास्त्यनुमापक इति नानुमानतः सर्वज्ञस्य सिद्धिः ॥ ३१८५ ॥

शब्दादपि न सर्वज्ञावसायोऽस्तीति दर्शयति—न चागमविधिरित्यादि ।

---

१ बोधन—पाठा० । २ प्रत्यक्षोपलम्भ०—गा० ।
३ साध्यत्वेन सिद्ध०—गा० । ४ वाद—पा०, गा० ।
५ भावाद् व्यभि०—पा०, भावाव्यभि०—गा० ।

अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते ।
प्रकल्पेत कथं सिद्धिरन्योऽन्याश्रययोस्तयोः ॥ ३१८७ ॥
सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता ।
कथं तदुभयं सिद्ध्येत् सिद्धान्मूलान्तराद् ऋते ॥ ३१८८ ॥
असर्वज्ञप्रणीतात् तु वचनान्मूलवर्जितात् ।
सर्वज्ञमवगच्छन्तः स्ववाक्यात् किं न जानते[1] ॥ ३१८९ ॥

---

शब्दादसन्निकृष्टेऽर्थे यज्ज्ञायते ज्ञानं तच्छाब्दम्, तच्च द्विविधम्—नित्यशब्दजनितम्, पौरुषेयशब्दनिहेतुकं च । तत्र तथाविधस्य सर्वज्ञप्रतिपादकस्यागमस्य नित्यस्याभावात्र तावदाद्य सम्भवति । यद्योर्वनिषदादौ पठ्यते—"य सत्यवाक् सत्यसङ्कल्प सत्यकाम सोऽन्वेष्टव्य, स विजिज्ञासितव्य" ( ) इत्येवमादि, सोऽप्यर्थवादो द्रष्टव्य । यच्च पौरुषेयं वचनमुच्यते—"स भगवांस्तथागतोऽर्हन् सम्यक्सम्बुद्ध" ( दी० नि० १.२.१ ) इति, तस्याप्रमाणत्वात् कथ तेनासत्येन स प्रमाप्येत ॥ ३१८६ ॥

स्यादेतत्—यत् पुरुषान्तरवचनात् सर्वज्ञोऽस्माभि प्रतीयते । किं तर्हि ? तेनैव भगवतोक्तेन—"सर्वज्ञोऽहं सर्वदर्शी, नास्ति तथागतस्य किञ्चिदज्ञातम्" ( ) इत्यादि, भगवद्वचनादेव प्रतीयते । इत्याह—अथेत्यादि । [O 832] एव सतीतरेतराश्रयदोष प्राप्नोति ॥ ३१८७ ॥

कथम् ? इत्याह—सर्वज्ञोक्ततयेत्यादि । तथा हि—न तावत् तद्वचनस्य प्रामाण्यं निश्चीयते यावत् 'सर्वज्ञोक्तमेतत्' इत्येव नावगम्येत, तस्य च सर्वज्ञस्यावगतिस्तत एव वचनादिति व्यक्तमितरेतराश्रयत्वम् । सिद्धान्मूलान्तरादृत इति । निश्चितात् कारणान्तराद् विनेत्यर्थ ॥ ३१८८ ॥

अथापि स्यात्—अन्यस्मादसर्वज्ञपुरुषादेर्वचनात्[2] सर्वज्ञोऽवसीयते, यदुक्तं तेनैकम्—"सर्वज्ञोऽयं शास्ताऽस्माकम्" इति ? अत्राह—असर्वज्ञप्रणीतात् त्वित्यादि । न ह्यन्यस्य द्विजन्मनस्तथाभूतस्यान्यवाक्यस्य स्ववचनात् कश्चिद्विशेषोऽस्ति,

---

1. जानते—मी०, पा० ।
2. तृणवच्छारि०—पा० ।

सर्वज्ञा बहवः कल्प्याश्चैकसर्वज्ञसिद्धये ।
एकैकोऽप्यसर्वज्ञः स सर्वज्ञं न बुद्ध्यते ॥ ३१९० ॥
सर्वज्ञोऽयमिति ह्येवं तत्कालैरपि बोद्धृभिः ।
तज्ज्ञानज्ञेयविज्ञानशून्यैर्ज्ञातुं न शक्यते ॥ ३१९१ ॥
सर्वज्ञो नावबुद्धश्च येनैव स्यान्न तं प्रति ।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥ ३१९२ ॥

---

येन बौद्धाः स्ववचनादेव सर्वज्ञं न प्रतिपद्यन्ते, अन्यवचनात् प्रतिपन्तीति न किञ्चित् कारणमुत्पश्यामोऽन्यत्र जाड्यात् ॥ ३१८९ ॥

अथ मतम्—अपरिमितास्तथागता अभूवन्, भविष्यन्तश्च; ततश्चैकस्य तदन्यवचनात् सर्वज्ञताऽवसीयते, अन्यस्याप्यन्यवचनात्? इत्यत्राह—सर्वज्ञा बहव इत्यादि। एकसर्वज्ञसिद्धये सर्वज्ञपरम्परामनुसरतः सकलपुरुषायुषसंक्षयेऽपि नार्वाग्दर्शनस्य सर्वज्ञनिश्चयोत्पत्तिसम्भव इति सर्वज्ञाः कल्प्या प्रसज्येरन् ॥ ३१९० ॥

अपि च—आस्तां तावदिदं यदिदानीन्तना. सर्वज्ञमसन्निहितं बोद्धुमसमर्था[1] इति, अपि तु तत्कालसन्निहिता अपि तं ज्ञातुं न शक्नुवन्त्येवासर्वविद इत्येतद् दर्शयन्नाह—सर्वज्ञोऽयमित्यादि। [O. 833] तस्य सर्वज्ञस्य[2] ज्ञानं[2] तज्ज्ञानम्, तदेव ज्ञेयम् = परिच्छेद्यं यस्य विज्ञानस्य तत् तथा। तच्च तद्विज्ञानं चेति तथोक्तम्, तेन शून्याः = रहिताः। अथ वा—तज्ज्ञानस्य यद्विषयं तस्य[3] ज्ञानं[3] तेन शून्याः, असर्वज्ञा इत्यर्थः। न हि शरीरमात्रदर्शनात् सर्वज्ञ इत्येवमवसातुम् पार्यते; विशिष्टज्ञानसम्बन्धग्रहणानन्तरीयकत्वादस्यावसायस्य। तच्च विशिष्टं ज्ञानं सकलपदार्थविषयं साधकम्। सकलपदार्थविषयता तस्य तद्ग्राह्यविषयग्रहणमन्तरेणावसातुं न शक्यते। न हि दण्डिप्रत्ययो दण्डग्रहणमन्तरेण भवति। प्रयोगः—यस्य यद्ग्रहणोपाधिरवग्रहः, तस्य तदुपाधिग्रहणाभावे ग्रहणं न भवति,

---

१. ०मसमर्था—पा० ।
२–२. सर्वज्ञज्ञानं—पा० ।
३–३. पा०, गा० पुस्तकयोर्नास्ति ।

सर्वशिल्पैरपि ज्ञातानर्थान् संवादयन्नपि ।
न सर्वज्ञो भवेदन्यलोकज्ञातार्थवर्जनात् ॥ ३१९३ ॥
न च सर्वनरज्ञातज्ञेयसंवादसम्भवः ।
कालत्रयत्रिलोकस्थैर्नरैर्न च समागमः ॥ ३१९४ ॥

तद्यथा दण्डग्रहणोपाधिर्दण्डिग्रहणं[1] न दण्डिरूपाग्रहे[2] भवति । नास्ति च सर्वज्ञज्ञानग्रहणस्य ज्ञेयग्रहणोपाधिर्ज्ञेयरूपोपाधिग्रहणमर्वाग्दर्शिनामिति व्यापकानुपलब्धिः, उपाधिग्रहणेनोपाधिमद्ग्रहणस्य व्याप्तत्वात् । तस्य चेहाभावः । ततश्च तदानीं सन्निहितेनाप्यसर्वविदा येनैव सर्वज्ञो नावधार्यते, तं प्रति सर्वज्ञवाक्यानामपि सतामनिश्चितत्वादप्रामाण्यमेव, मूलस्य प्रामाण्यनिश्चयकारणस्य सर्वज्ञज्ञाननिश्चयस्याभावात् । अन्यथास्यपदिति[4] । रथ्यापुरुषवाक्यस्येव ॥ ३१९१–९२ ॥

अथ मतम्—अशेषशिष्यजनधर्मस्यानेकविधचित्तचरितादिपरिज्ञानाद् देशनादिप्रातिहार्येण विनेयजनमनांस्यावर्जयन्नसावात्मनः सर्वज्ञतामयत्नेन तेभ्यः प्रतिपादयति । इत्यत्राह—सर्वशिल्पैरपीत्यादि । यदि[5] नाम[5] तत्कालसन्निहितकियन्मात्रजनपरिज्ञातानर्थान् परिज्ञातवान्, तथापि न सर्वज्ञो भवति, तत्कालासन्निहितान्यलोकपरिज्ञातान्यलोकपरिज्ञातस्यार्थस्यापरिज्ञानात् । न ह्येकदेशपरिज्ञानेन सकलज्ञो भवति, अतिप्रसङ्गात् । नापि तत्कालसन्निहिताशेषजनपरिज्ञातार्थसंवादः सम्भवति, दूरस्थानामनर्थिना च संवादाभावात् । स्यादेतत्—यदा सर्व एव जनास्तथागतं युगपदुपेत्य यथाप्रश्नयन्ति तदा स भगवांस्तदैव[6] व्याकरोतीत्यतोऽस्त्येव [ C 834 ] सर्वनरज्ञातज्ञेयसंवाद इत्यत्राह—कालत्रयत्रिलोकस्थैरिति । न ह्यतीतानागतवर्तमानकालवर्तिनां नृणां समागमः क्वचिदपि सम्भवी, नापि स्वर्गपातालमर्त्यात्मकलोकत्रयस्थानाम् । यद्वा—लोकत्रयं कामरूपारूप्यधातुत्रयात्मकं[7] बोद्धव्यम् ॥ ३१९३–३१९४ ॥

१ ॰ग्रहण॰—पा॰ गा॰ ।
२ ॰दण्डग्रहण—पा॰ ।
३ दण्डरूपोपाध्यग्रहे—गा॰ ।
४ तदन्यथास्य॰—जै॰ ।
५–५ यथाम—पा॰, गा॰ ।
६ ॰स्तदैव—पा॰, गा॰ ।
७ ॰ध्यात्मक॰—पा॰, गा॰ ।

किञ्चिज्ज्ञोऽपि हि शक्नोति लोकान् भ्रमयितुं नरान् ।
सर्वज्ञं येन गृह्णीयुस्ते नरा भ्रान्तचेतसः ॥ ३१९५ ॥
भुक्तचिन्तितमुष्टिस्थद्रव्यसंवादनक्षमाः ।
केचित् कुहकविज्ञानैर्धर्मादिज्ञानवर्जिताः ॥ ३१९६ ॥
तथा मायेन्द्रजालादिकुशलाः केचिदञ्जसा ।
भ्रामयन्ति जनं येन सर्वज्ञाः प्रतिभान्ति ते ॥ ३१९७ ॥
इतिहासपुराणेषु ब्रह्मादिर्योऽपि सर्ववित् ।
ज्ञानमप्रतिघं यस्य वैराग्यं चेति कीर्तितम् ॥ ३१९८ ॥
गौणत्वेनैव वक्तव्यः सोऽपि मन्त्रार्थवादवत्[1] ।
यद्वा—प्रकृतधर्मादिविज्ञानात् प्रतिघतोच्यते[2] ॥ ३१९९ ॥
धर्मार्थकाममोक्षेषु प्रकृतेषु चतुर्ष्वपि ।
ज्ञानमप्रतिघं तस्य न तत् सर्वार्थगोचरम् ॥ ३२०० ॥

---

स्यादेतत्—यदि समस्तलोकपरिज्ञातार्थपरिज्ञानसामर्थ्यं तस्य न स्यात्, तदा कियन्मात्रपरिज्ञातार्थसंवादोऽपि कथं स्यात्, भवति च; तेन मन्यामहे—अस्त्येवास्य सकलपदार्थपरिज्ञानसामर्थ्यमिति ? अत्राह—किञ्चिज्ज्ञोऽपीत्यादि । न हि किञ्चिन्मात्रातीन्द्रियपदार्थपरिज्ञानमात्रेण धर्माधर्मादिपरिज्ञानं तस्य सिद्ध्यति; कुहकज्ञानिभिरिन्द्रजालादिकुशलैश्चानैकान्तात् । तथा हि—मन्त्रौषधादिप्रयोगेण यथाभुक्तम् = अन्नव्यञ्जनादि, यथाचिन्तितं च मनसा वस्तु, मुष्टिस्थं च द्रव्यं संवादयन्त्येव; न चैतावता ते धर्मादिविदो[3] भवन्ति । तथा केचिदिन्द्रजालकुशला विचित्रोद्यानविमानाप्सरोगणदेवपुत्रादिकमाकाशे दर्शयन्तीत्यनेकान्तः ॥ ३१९५–३१९७ ॥

ननु चेतिहासपुराणेषु ब्रह्मादिः सर्वज्ञः कीर्तितः, तथा हि—"ब्रह्मणो ज्ञानमप्रतिघं वैराग्यं च" इति तत्र पठ्यते, तत् कथमागमात् सर्वज्ञो न सिद्धः ? इत्याह—इतिहासेत्यादि । [G. 835] यथा मन्त्रेष्वर्थवादनिर्देशो भवति, तथेतिहास-

---

१. ०र्थवादवत्—पाठा० । २. प्रति…घोऽच्यते—पा० । ३. ०न—पौ० ।

न ह्यप्रतिघतामात्रात् सर्वगोचरतोच्यते ।
स्वार्थेष्वप्यप्रतीघाताद् भवत्यप्रतिघं हि तत् ॥ ३२०१ ॥
एतच्च फलवज्ज्ञानं[1] यावद् धर्मादिगोचरम्[2] ।
न तु वृक्षादिभिर्ज्ञातैः सर्वैः किञ्चित् प्रयोजनम् ॥ ३२०२ ॥
यावदौपयिकज्ञानं न चैतत् प्रतिहन्यते ।
तेनाप्रतिघविज्ञानव्यपदेशोऽस्य लभ्यते ॥ ३२०३ ॥
यद्वाऽऽत्मन्येव तज्ज्ञानं ध्यानाभ्यासप्रवर्तितम् ।
तस्यैवाप्रतिघातेन ज्ञानाप्रतिघतोच्यते ॥ ३२०४ ॥

द्विष्वपि प्रवादे सर्वज्ञत्वमर्थवादाद् बोद्धव्यम् । अन्यार्थो हि शब्दोऽन्यमर्थं वदतीति कृत्वाऽर्थवाद उच्यते । अथ वा—प्रकृतेषु धर्मार्थकाममोक्षेषु ज्ञानस्याप्रतिघत्वादस्य ब्रह्मादेर्ज्ञानार्थमप्रतिघता निर्दिष्टा, न तु सर्वार्थेष्वप्रतिघातात् ॥ ३१९८-३२०० ॥

ननु च यदि तस्य धर्मादिरन्यत्र वस्तुविज्ञानं प्रतिहन्येत, तत् कथमप्रतिघमित्युच्येत ? इत्यत[3] आह—न हीत्यादि ॥ ३२०१ ॥

यद्येवम्, यदि स्वार्थाप्रतिघातादप्रतिघमुच्यते, तदा सर्वेषामेव पुंसां ज्ञानं स्वार्थाप्रतिघातीति तत् को विशेषो ब्रह्मादेर्येन तस्यैवाप्रतिघं ज्ञानमुच्यते, नान्येषाम् ? इत्यत आह—एतच्चेत्यादि । एतदाचष्टे—पुरुषार्थोपयोगिषु धर्मादिषु तस्यैव ब्रह्मणो ज्ञानमप्रतिघं प्रवर्तते, नान्येषामित्येवद्विशेषख्यापनाय ब्रह्मादेरेव स्वार्थाप्रतिघातादप्रतिघानि ज्ञानमुक्तम्, नान्येषाम् । औपयिकज्ञानमिति । औपयिके = पुरुषार्थोपयोगिनि धर्मादौ ज्ञानमौपयिकज्ञानम् । यावदिति यावदशेषम्[4] । औपयिकज्ञानविशेषणं चैतत् ॥ ३२०२-३२०३ ॥

यद्वेति पक्षान्तरमाह । आत्मनीति पुंसि । तस्यैवेति आत्मविषयस्य ज्ञानस्य ॥ ३२०४ ॥

१. फलवज्ज्ञान—पा०, गा० । २ धर्म गोचरम्—पा० ।
३ इत्यत्र—पा०, गा० ।
४. निःशेषम्—पा०, निरविशेषम्—गा० ।

ज्ञानं वैराग्यमैश्वर्यमिति योऽपि दशाव्ययः।
शङ्करः श्रूयते सोऽपि ज्ञानवानात्मवित्तया॥ ३२०५॥
एतदेव हि तज्ज्ञानं यद् विशुद्धात्मदर्शनम्।
अशुद्धे तन्निमित्ते च यद् तदज्ञानमुच्यते॥ ३२०६॥

ननु चेश्वरस्य ज्ञानादयो दशाव्यया गुणाः पठ्यन्ते, तत् कथमसावव्ययज्ञानयोगात् सर्वज्ञो न भवति? इत्याह—ज्ञानमित्यादि। [G 836] ज्ञानम् = तत्त्वावबोधः, वैराग्यम् = विषयवैमुख्यम्, ऐश्वर्यमष्टविधम् = अणिमा, लघिमा, महिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वम्, वशित्वम्, यत्रकामावसायिता च—इत्येते दश ज्ञानादयोऽव्यया अनुयायिनो यस्यासौ दशाव्ययः। तत्राणिमा = यदणुशरीरो भूत्वा सुखं लोकं सञ्चरति सर्वभूतैरदृश्यः। लघिमा = यो लघुत्वाद् वायुवद् विचरति। महिमा = यद् पूजितः सर्वलोकेषु वन्दितोऽर्चितश्च महद्भ्योऽपि महत्तमो भवति। प्राप्तिः = यद्यन्मनसा चिन्तयति तत्तत् प्राप्नोति। प्राकाम्यम् = यद् प्रचुरकामो भवति, विषयान् भोक्तुं शक्नोतीत्यर्थः। ईशित्वम् = यत् त्रैलोक्यस्य प्रभुर्भवति। वशित्वम् = यद् भूतानि स्थावरजङ्गमानि वशं नयति, वश्येन्द्रियश्च[1] भवति। यत्रकामावसायिता = यद् ब्राह्मप्राजापत्यदैवगान्धर्वयाक्ष्यराक्षस्यपैत्रपैशाचेषु मनुष्येषु तैर्यग्योन्येषु[2] च स्थानान्तरेषु यत्र यत्र कामयते तत्र तत्रावसति। आत्मवित्तयेति आत्मवेदितया। स ज्ञानवान्, न तु निरवशेषपदार्थपरिज्ञानवत्त्वयेत्यर्थः॥ ३२०५॥

कस्मात् पुनरेकदेशपरिज्ञानेऽपि स एक शङ्करो ज्ञानवानुच्यते, नान्यः? इत्याह—एतदेव हीत्यादि। विशुद्धश्चासावात्मा[3] चेति तथोक्तः, तस्य दर्शनमिति समासः। तन्निमित्त इति। तस्य शुद्धात्मदर्शनस्य निमित्तं तन्निमित्तम्, किं तत्? आत्मैव। तस्मिन् शुद्धे तन्निमित्ते आत्मनि सति यदात्मदर्शनमविशुद्धं प्रवर्तते तदज्ञानमुच्यते; कुत्सितत्वात्॥ ३२०६॥

१. वश्येन्द्रिय—पा०, गा०।
२. तैर्यग्योन्येषु—चै०।
३. शुद्धश्चा०—चै०।

### ब्रह्मादीनां वेददेहत्वप्रतिपादनम्

अथापि वेददेहत्वाद् ब्रह्मविष्णुमहेश्वराः ।
सर्वज्ञानमयाद् वेदात् सर्वज्ञा मानुषस्य किम् ॥ ३२०७ ॥
क च बुद्धादयो मर्त्याः क च देवोत्तमत्रयम् ।
येन तत्स्पर्धया तेऽपि सर्वज्ञा इति मोहदृक् ॥ ३२०८ ॥
नित्येऽपि चागमे वेदे ब्रह्मादित्रयकीर्त्तनम् ।
तन्नित्यत्वाच्च वेदानां नित्यत्वं न विहन्यते ॥ ३२०९ ॥
ते हि नित्यैर्गुणैर्नित्य कर्मभिश्च समन्विताः ।
नित्यवेदाभिधायित्वसम्भवान्न विरोधिनः ॥ ३२१० ॥

---

ननु यदि ध्यानाभ्यासाद् ब्रह्मादेर्विशुद्धज्ञानसम्भवोऽभ्युपगम्यते, तदा क प्रद्वेषो बुद्धादिषु, येन तेषामपि ज्ञानमप्रतिघ विशुद्धं च नेष्यते '— इत्याशङ्क्य पक्षान्तरोपदर्शनेन ब्रह्मादीना विशेष दर्शयन्नाह— अथापीत्यादि । आत्मीभूतवेदत्वाद् वेददेहा उच्यन्ते । सर्वपदार्थज्ञानकारणत्वात् सर्वज्ञानमयो वेद । [G 837] एतदुक्त भवति— न हि ब्रह्मादीना स्वातन्त्र्येण धर्मादिषु ज्ञानमप्रतिघ प्रवर्त्तते, किं तर्हि ? वेदद्वारेण । न चैव बुद्धादीना भवद्भिरिष्यते; तेषा स्वायत्तज्ञानत्वात्[1] ।

किञ्च— ब्रह्मादीना ध्यानाभ्यासाद् विशुद्धज्ञानसम्भवो युज्यत एव, तेषा देवत्वेन सर्वजनोत्कृष्टत्वात्, वेदे पठितत्वाच्च । मनुष्यस्य तु न कदाचिदीदृशं सामर्थ्यं सम्भाव्यम्; तस्य तद्विपरीतत्वात् । तस्मान् मनुष्या अपि सर्वज्ञा इति मोहदृक् मोहदर्शनमेतद् भवताम् ॥ ३२०७-३२०८ ॥

स्यादेतद्— यदि ब्रह्मादयो वेदे पठ्यन्ते, तदा कथमनित्याभिधेयसम्बन्धात् वेदस्याप्यनित्यत्व न प्रसज्येत, अथ वेदाना नित्यत्वमिष्यते, तदा ब्रह्मादीना नित्यवेदाभिधेयत्व विरुध्यते, तेषामनित्यत्वात्, अथ तदविरुद्धम्, तदा बुद्धादीनामपि तदभिधेयत्वाविरोध ? इत्येतदाशङ्क्याह— नित्येऽपीत्यादि ।

ते हीत्यादिना एतदेव स्पष्टीकरोति । न नित्यागमगम्यतेति । शब्दार्थ-

---

१. स्वय तु ज्ञानत्वात्— पा० ।

अनित्यस्य तु बुद्धादेर्न नित्यागमगम्यता ।
नित्यत्वे चागमस्येष्टे वृथा सर्वज्ञकल्पना ॥ ३२११ ॥
सर्वज्ञज्ञापनात् तस्य वरं धर्मावबोधनम् ।
वेदबोधितसर्वज्ञज्ञानाद् धर्मात् तिरोहितात् ॥ ३२१२ ॥
अतिरोहितधर्मादिज्ञानमेव विशिष्यते ।
एवमागमगम्यत्वं न सर्वज्ञस्य लभ्यते ॥ ३२१३ ॥
सर्वज्ञसदृशः कश्चिद् यदि दृश्येत सम्प्रति ।
तदा गम्येत सर्वज्ञसद्भाव उपमाबलात् ॥ ३२१४ ॥
नरान् दृष्ट्वा त्वसर्वज्ञान् सर्वानेवाधुनातनान् ।

---

सम्भवस्यानित्यत्वप्रसङ्गात्, नित्यस्य चागमस्य परैरभ्युपगमात्, अभ्युपगमे वा सर्वज्ञकल्पनाया वैयर्थ्यप्रसङ्गात् ॥ ३२०९-३२११ ॥

एतदेव दर्शयति—सर्वज्ञज्ञापनात् तस्येति । नित्यस्यागमस्य सर्वज्ञज्ञापनात् सकाशाद् वरं धर्मावबोधनमेवेष्टम् । कथं तद् वरम्? इत्याह—वेदबोधितेत्यादि । [G 838] वेदाश्रयेण हि धर्मज्ञानं भवदतिरोहितं भवति, आ[1] लोकस्थितेरविशेषेण सर्वेषामेव सम्भवात् । तिरोहितस्तु वेदबोधितसर्वज्ञज्ञातो धर्मः; तस्य निर्वाणं[2] गतस्याप्रकटत्वात्[2] । अनिर्वाणावस्थायामप्यनिच्छया तदुपदेशाभावात् । उपदेशेऽपि सर्वत्र सर्वदा सर्वेषां श्रवणाभावात् ॥ ३२१२-३२१३ ॥

नाप्युपमानप्रमाणसमधिगम्यः सर्वज्ञ इति दर्शयति—सर्वज्ञसदृश इत्यादि । उपमानं हि सादृश्यतदुपाधिविषयत्वात् सदृशपदार्थग्रहणान्तरीयकमसन्निकृष्टार्थगोचरम्, यथा—गवयग्रहणद्वारेण गोः स्मरणम्, न च सर्वज्ञसदृशः कश्चित् प्रतीतः सम्भवतीत्यतः सदृशपदार्थग्रहणाभावान्न प्रवर्त्तते । प्रयोगः—यस्य सदृशग्रहणं नास्ति, न स उपमानगम्यः, यथा वन्ध्यासुतः । नास्ति च सदृशग्रहणं सर्वज्ञस्येति व्यापकानुपलब्धिः ॥ ३२१४ ॥

किञ्च—उपमानान्न केवलं सर्वज्ञाधिगमोऽसम्भवी, अपि तु सर्वेषामेव पुंसामुपमानादसर्वज्ञत्वमेव युक्तं प्रत्येतुमित्यादर्शयति—नरानित्यादि ॥३२१५॥

---

1. अन्यथा—पा० । २-२. निर्वाणे गतस्या०—जै०; निर्वाण गतस्या०—पा० ।

सादृश्यस्योपमानेन शेषासर्वज्ञनिश्चय ॥ ३२१५ ॥

उपदेशो हि बुद्धादेर्धर्माधर्मादिगोचर ।
अन्यथा नोपपद्येत सर्वज्ञो यदि नो भवेत् ॥ ३२१६ ॥
प्रत्यक्षादौ निषिद्धेऽपि सर्वज्ञप्रतिपादके ।
अर्थापत्त्यैव सर्वज्ञमित्थ य प्रतिपद्यते ॥ ३२१७ ॥
यद्वा–सामान्यतो दृष्ट प्रवृत्तमिह साधनम् ।
सर्वज्ञस्योच्यतेऽन्यत्र ज्ञानपूर्वत्वदर्शनात् ॥ ३२१८ ॥
य कश्चिदुपदेशो हि स सर्वो ज्ञानपूर्वक ।
यथाऽभयादिशक्तीनामुपदेशस्तथाविध ॥ ३२१९ ॥
धर्माधर्मोपदेशोऽयमुपदेशश्च तत्कृत ।
तद्वीयज्ञानपूर्वत्व तस्मादस्यानुमीयते ॥ ३२२० ॥

---

न चाप्यर्थापत्त्या सर्वज्ञ सिद्ध्यतीत्येतत् प्रतिपिपादयिषु परमत तावदाशङ्कते—उपदेशो हीत्यादि । योऽय बुद्धादेर्धर्माद्युपदेश, सोऽन्यथा नोपपद्यते, यदि धर्मादयस्तेन साक्षान्न विदिता भवेयु । तस्माद् यद्यपि प्रत्यक्षादि सर्वज्ञप्रतिपादक निषिद्धम्, तथाप्यर्थापत्त्या सर्वदर्शी पुमान् सिद्ध —इत्येव य प्रतिपद्यते, सोऽयुक्त प्रतिपद्यते, वक्ष्यमाणान्न्यायादिति भाव ॥ ३२१६ ३२१७ ॥

यद्वा—अनुमानमेवेदम्, नार्थापत्ति, त्रैरूप्यसम्भवादिति दर्शयति—यद्वेत्यादि । [ G 835 ] सामान्यतो दृष्टमित्यनेन विशेपतो दृष्टस्यासम्भव माह । ययोरेव हि लिङ्गलिङ्गिनो प्रत्यक्षेण सम्बन्धो दृष्ट, स एव लिङ्गी तेनैव लिङ्गेन कालान्तरे संशयव्यवच्छेदाय यदानुमीयते, तदा विशेपतो दृष्टमनुमानमुच्यते । न च सर्वज्ञेन सह धर्माद्युपदेशस्य क्वचित् सम्बन्धो गृहीत इत्यत सामान्यतो दृष्टमेवैतत् । तथा हि—सामान्येनोपदेशस्यान्यत्र स्वसन्ताने ज्ञानपूर्वकत्व दृष्टम्, अतो यथा देवदत्तस्य गतिपूर्विका देशान्तरप्राप्तिमुपलभ्याऽऽदित्यस्य देशान्तरप्राप्त्या गतिरनुमीयते, एव बुद्धादेरपि भगवतो धर्माद्युपदेशात् तज्ज्ञानमनुमास्यते । प्रयोग —य कश्चिदुपदेश स वक्तृज्ञानपूर्वक, यथा हरीतक्यादिशक्त्युपदेश । उपदेशश्चायं बुद्धादीना धर्माद्युपदेश इति स्वभाव

अन्यथाप्युपपन्नत्वान्नार्थापत्तिरियं क्षमा ।
अत एवानुमाप्येषा न साध्वी व्यवतिष्ठते ॥ ३२२१ ॥
उपदेशो हि बुद्धादेरन्यथाप्युपपद्यते ।
*स्वप्नादिदृष्टव्यामोहात्*[1] *वेदाद्वावितथश्रुतात्*[2] ॥ ३२२२ ॥
ये हि तावदवेदज्ञास्तेषां वेदादसम्भवः ।
उपदेशकृतो यस्तैर्व्यामोहादेव केवलात् ॥ ३२२३ ॥
शिष्यव्यामोहनार्थं वा व्यामोहाद् वाऽऽत्तवाश्रयात् ।
लोके दुष्टोपदेष्टृणामुपदेशः प्रवर्त्तते ॥ ३२२४ ॥
यद्यसौ वेदमूलः स्याद् वेदवादिभ्य एव तु ।
उपदेशं प्रयच्छेयुर्यथा मन्वादयस्तथा ॥ ३२२५ ॥
यतस्तु मूर्खशूद्रेभ्यः कृतं तैरुपदेशनम् ।
ज्ञायते तेन दुष्टं तद् सांवृतं कूटकर्मवत् ॥ ३२२६ ॥

---

हेतुः ॥ ३२१८-३२२० ॥

अत्रोत्तरमाह—अन्यथापीत्यादि । अन्यथापि हि व्यामोहादिनोपदेशस्य सम्भवादुभयोरप्यनुमानार्थापत्त्योरनैकान्तिकत्वम् । कथमन्यथापि सम्भवति ? इत्याह—स्वप्नादीत्यादि । यथोक्तं शाबरे भाष्ये—'उपदेशो हि व्यामोहादपि भवति, असति व्यामोहे वेदादपि भवति" ( मी० द०, शा० भा० १. १. २ ) इति । तत्र व्यामोहाद् भवन् दृष्टो यथा स्वप्नोपलब्धस्यार्थस्य, वेदाद् दृष्टो यथा मन्वादीनाम् ॥ ३२२१-३२२२ ॥

ये तु सुगतादयो वेदानभिज्ञा, तेषां व्यामोहात् परवञ्चनार्थं वोपदेशः सम्भाव्यत इत्येतत् प्रतिपादयति—ये हीत्यादि । [G 840] अतदाश्रयादिति अवेदाश्रयात् ॥ ३२२३-३२२४ ॥

कथमिदमवगतम्—न वेदाश्रयोऽसावुपदेश इति ? आह—यद्यसावित्यादि । यदि हि बुद्धादीनां धर्माद्युपदेशो वेदमूलः स्यात्, तदा ब्राह्मणेभ्य एव

1 °व्यामोहा"'—पा०; स्वप्नादिदृष्ट°—गा० ।
2. वादितथ°—पा०, वेदाच्चावितथ°—गा० ।

सादृश्यस्योपमानेन शेषासर्वज्ञनिश्चयः ॥ ३२१५ ॥
उपदेशो हि बुद्धादेर्धर्माधर्मादिगोचरः ।
अन्यथा नोपपद्येत सर्वज्ञो यदि नो भवेत् ॥ ३२१६ ॥
प्रत्यक्षादौ निषिद्धेऽपि सर्वज्ञप्रतिपादके ।
अर्थापत्त्यैव सर्वज्ञमित्थं यः प्रतिपद्यते ॥ ३२१७ ॥
यद्वा—सामान्यतो दृष्टं प्रवृत्तमिह साधनम् ।
सर्वज्ञस्योच्यतेऽन्यत्र ज्ञानपूर्वत्वदर्शनात् ॥ ३२१८ ॥
यः कश्चिदुपदेशो हि स सर्वो ज्ञानपूर्वकः ।
यथाऽभयाविशक्तीनामुपदेशस्तथाविध ॥ ३२१९ ॥
धर्माधर्मोपदेशोऽयमुपदेशश्च तत्कृतः ।
तदीयज्ञानपूर्वत्वं तस्मादस्यानुमीयते ॥ ३२२० ॥

---

न चाप्यर्थापत्त्या सर्वज्ञः सिद्धयतीत्येतत् प्रतिपिपादयिषुः परमतं तावदाशङ्कते—उपदेशो हीत्यादि । योऽयं बुद्धादेर्धर्माद्युपदेशः, सोऽन्यथा नोपपद्यते, यदि धर्मादयस्तेन साक्षान्न विदिता भवेयुः । तस्माद् यद्यपि प्रत्यक्षादि सर्वज्ञप्रतिपादकं निषिद्धम्, तथाप्यर्थापत्त्या सर्वदर्शी पुमान् सिद्धः—इत्येवं यः प्रतिपद्यते, सोऽयुक्तं प्रतिपद्यते, वक्ष्यमाणान्न्यायादिति भावः ॥ ३२१६-३२१७ ॥

यद्वा—अनुमानमेवेदम्, नार्थापत्तिः, त्रैरूप्यसम्भवादिति दर्शयति—यद्वेत्यादि । [ G 839 ] सामान्यतो दृष्टमित्यनेन विशेषतो दृष्टस्यासम्भवमाह । ययोरेव हि लिङ्गलिङ्गिनोः प्रत्यक्षेण सम्बन्धो दृष्टः, स एव लिङ्गी तेनैव लिङ्गेन कालान्तरे सन्देहव्यवच्छेदाय यदानुमीयते, तदा विशेषतो दृष्टमनुमानमुच्यते । न च सर्वज्ञेन सह धर्माद्युपदेशस्य क्वचित् सम्बन्धो गृहीत इत्यतः सामान्यतो दृष्टमेवेदम् । तथा हि—सामान्येनोपदेशस्यान्यत्र स्वसन्ताने ज्ञानपूर्वकत्वं दृष्टम्, अतो यथा देवदत्तस्य गतिपूर्विका देशान्तरप्राप्तिमुपलभ्यादित्यस्य देशान्तरप्राप्त्या गतिरनुमीयते, एवं बुद्धादेरपि भगवतो धर्माद्युपदेशात् तज्ज्ञानमनुमास्यते । प्रयोगः—यः कश्चिदुपदेशः स वक्तृज्ञानपूर्वकः, यथा हरीतक्यादिव्याध्युपदेशः । उपदेशश्चायं बुद्धादीनां धर्माद्युपदेश इति स्वभाव-

सिसाधयिषितो योऽर्थः सोऽनया नाभिधीयते ।
यत् तूच्यते न तत्सिद्धौ किञ्चिदस्ति प्रयोजनम् ॥ ३२३० ॥
यदीयागमसत्यत्वसिद्धयै सर्वज्ञतोच्यते ।
न सा सर्वज्ञसामान्यसिद्धिमात्रेण लभ्यते ॥ ३२३१ ॥
यावद् बुद्धो न सर्वज्ञस्तावत् तद्वचनं मृषा ।
यत्र क्वचन सर्वज्ञे सिद्धे तत्सत्यता कुतः ॥ ३२३२ ॥
अन्यस्मिन् न हि सर्वज्ञे वचसोऽन्यस्य सत्यता ।

---

शास्तुः सर्वज्ञत्वं साधयितुमिष्टम्, न सामान्येन । तथा हि—न व्यसनितया सर्वज्ञोऽन्विष्यते प्रेक्षावता, किं तर्हि ? 'तद्वचनाद् धर्माधर्मौ ज्ञात्वा प्रवर्तिष्ये निवर्तिष्ये वा' इति प्रवृत्तिनिवृत्तिकामतया, न च सामान्येन सिद्धेनापि तेन प्रवृत्तिं प्रति पुरुषस्य कश्चिदुपयोगोऽस्ति; विशेषपरिज्ञानमन्तरेण तद्वचना-निश्चयात् । तस्मात् स एव विशेषः प्रवृत्तिकामेन साधनीय इति सामान्यप्रतिज्ञानं प्रतिज्ञान्यूनमेव ।

सिसाधयिषितो योऽर्थ इति । साधयितुमिष्टो योऽर्थः । स इति विशेषः, स्वशास्ता । अनयेति प्रतिज्ञया । यत्तूच्यत इति । विशेषासंस्पर्शेन कोऽप्यस्ति नरः सर्वज्ञः क्वचिदस्ति सर्वज्ञत्वमिति, तेन सिद्धेनापि न किञ्चित् प्रयोजनम् ॥ ३२२९-३२३० ॥

कथम् ? इत्याह—यदीयेत्यादि । सेति[1] यदीयागमसत्यत्वसिद्धिः[2] ॥ ३२३१ ॥

कस्मान्न लभ्यते ? इत्यत्राह—यावदित्यादि । तथा हि—यावद् बुद्धस्य सर्वज्ञत्वं न सिद्ध्यति, तावत् तद्वचनस्यापि न सत्यत्वनिश्चयोऽस्ति । [G 812] न च सामान्येन सर्वज्ञसिद्धौ बुद्धवचनस्य सत्यत्वं सिद्ध्येत; प्रतिबन्धा-भावात् ॥ ३२३२ ॥

एतदेव दर्शयति—अन्यस्मिन्नित्यादि । कश्च नाम तयोः प्रतिबन्धो न[3]

---

१. सति—पा० । २. सदीयागम० —गा० ।
३. गा० सम्पादको न पाञ्जकीयं नेति पदम् ।

सामानाधिकरण्ये हि तयोरङ्गाङ्गिता भवेत् ॥ ३२३३ ॥
यत्सर्वं नाम लोकेऽस्मिन् प्रत्यक्षं तद्धि कस्यचित् ।
प्रमेयज्ञेयवस्तुत्वैर्दधिरूपरसादिवत् ॥ ३२३४ ॥
ज्ञानमात्रेऽपि निर्दिष्टे पक्षन्यूनत्वमापतेत् ।
सर्वज्ञ इति योऽभीष्टो नेत्थं स प्रतिपादितः ॥ ३२३५ ॥
यदि बुद्धातिरिक्तोऽन्यः कश्चित् सार्वज्ञतागतः ।
बुद्धवाक्यप्रमाणत्वे तज्ज्ञानं क्वोपयुज्यते ॥ ३२३६ ॥
दशभूमिगतश्चासौ सर्वरागादिसंक्षये ।
शुद्धस्फटिकतुल्येन सर्वं ज्ञानेन बुद्ध्यते ॥ ३२३७ ॥
ध्यानापन्नश्च सर्वार्थविषयां धारणां वहन् ।
तथा व्याप्तश्च सर्वार्थैः शक्तो नैवोपदेशने ॥ ३२३८ ॥

भवति ? इत्याह—सामानाधिकरण्ये हीत्यादि । सामानाधिकरण्यम् = एकपुरुषाश्रितत्वम् । तयोरिति सर्वज्ञत्वसत्यवचनयोः[1] । अङ्गाङ्गिता हेतुफलता । एतदुक्तं भवति—एकाश्रयत्वे सति सत्यस्य वचसः सर्वज्ञत्वं कारणं भवेत्, नान्यथा; अतिप्रसङ्गात् ॥ ३२३३ ॥

यदप्यपरैः[2] सर्वज्ञसिद्धये साधनमुपरचितम्, तदप्येतैरेव प्रतिव्यूढमिति दर्शयितुमाह—यत्सर्वमित्यादि । यत् प्रमेयत्ववस्तुत्वादियोगि तत् कस्यचित् प्रत्यक्षम्, यथा दधिरूपरसादिकम् । सर्वं च पदार्थजातं प्रमेयादिरूपमिति स्वभावहेतुः । अत्रापि पूर्ववत् प्रतिज्ञान्यूनत्वम्, हेतोश्चानैकान्तिकत्वं वक्तव्यम् । तस्मान्न विशेषेण, नापि सामान्येन सर्वज्ञस्य[3] सिद्धिः सम्भवति । अतो नास्ति सर्वज्ञ इति सिद्धम् । तदभावात् तद्वचनस्याभाव इति न तद्वचनात् प्रवृत्तिः सम्भवति कस्यचित् ॥ ३२३४-३२३६ ॥

अथ वा—सम्भवतु नाम सर्वज्ञः पुरुषः, तथापि सर्वज्ञप्रणीतं वचनं न सम्भवत्येव, यतः प्रवृत्तिर्भविष्यति भवतामित्येतत् प्रतिपादयन्नाह—दशभूमीत्यादि ।

1 सर्वज्ञत्वसत्यवचनयोः—जै०, पा० ।  2 ०प्यमरै०—पा० ।
3 सर्वज्ञत्वस्य—भा०, पा० ।

यदा चोपविशेदेकं किञ्चित् सामान्यवत्कृवत् ।
एकदेशज्ञगीतं तन्न स्यात् सर्वज्ञभाषितम् ॥ ३२३९ ॥
तस्मिन् ज्ञानसमापन्ने[1] चिन्तारत्नवदास्थिते ।
निश्चरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥ ३२४० ॥
ताभिर्जिज्ञासितानर्थान् सर्वान् जानन्ति मानवाः ।
हितानि च यथाभव्यं क्षिप्रमासादयन्ति ते ॥ ३२४१ ॥
इत्यादि कीर्त्यमानं तु श्रद्दधानेषु शोभते ।
वयमश्रद्दधानास्तु, ये युक्तीः प्रार्थयामहे ॥ ३२४२ ॥

[G 843] तथा हि किल दशभूमिपतिष्ठितोऽशेषरागादिमलकलङ्कापगमाच्छुद्ध-स्फटिकतुल्येन ज्ञानेन सकलं ज्ञेयमवबुध्यत[2] इत्येवं भवद्भिर्वर्ण्यते, ततश्चास्यां तावदवस्थायां धारणां चित्तस्यैकाग्रतां दधदर्थबोध एव व्यापृतत्वान्नासौ शक्नोति धर्ममुपदेष्टुम्, न हीयतो व्यापारान् कश्चित् कर्तुं समर्थः ॥३२३७–३२३८॥

व्युत्थाय देशयति चेद् ? इत्याह—यदा चेत्यादि । न ह्यवितर्का वचन-प्रवृत्तिरस्तीति सविकल्पचेतोऽवस्थितेनैवानेन धर्मो देशनीयः, ततश्चास्या-मवस्थायां बालपण्डितयोरविशेषादसर्वज्ञ एवासाविति तद्भाषितमसर्वज्ञभाषितमेव स्यात् ॥ ३२३९ ॥

स्यादेतत्—नैवासावुपदिशति किञ्चित्, सर्वदा निर्विकल्पसमाधिस्थित-त्वात्, किन्तु तदाधिपत्येन विचित्रधर्मदेशनाप्रतिभासा विज्ञप्तयो भव्यानां भवन्ति। यथोक्तम्—"यस्यां रात्रौ तथागतोऽभिसम्बुद्धो यस्यां च परिनिर्वृत, अत्रान्तरे तथागतेन एकमप्यक्षरं नोदाहृतं न प्रव्याहृतम्, तत्कस्य हेतोः ? सततसमाहितो हि तथागतः, अपि तु ये अक्षरस्तद्देशना वैनेयिकास्ते तथागतस्य मुखादुष्णीषा-दूर्णायाः शब्दं निश्चरन्तं[3] शृण्वन्ति" ( ) इत्यादि, तत्राह—तस्मिन् ध्यानसमापन्न इत्यादि । चिन्तारत्नम् = चिन्तामणिः । अयमत्र समुदायार्थः—ये श्रद्धालवस्तान् प्रतीदमप्रमाणमुपवर्ण्यमानं शोभेत, ये तु पुनरस्मद्विधाः

1. ध्यानसमापन्ने—पा०, गा० ।  2. °वबुध्यत–पा०, गा० ।
3. निःसरन्त–पा० गा० ।

कुड्यादिनिःसृतानां[1] च न स्यादाप्तोपदिष्टता ।
विश्वासश्च न तासु स्यात् केनेमाः कीर्तिता इति ॥ ३२४३ ॥
किं नु बुद्धप्रणीताः स्युः किं नु ब्राह्मणवञ्चकैः ।
क्रीडद्भिरुपदिष्टाः स्युर्दूरस्थप्रतिशब्दकैः ॥ ३२४४ ॥
किं वा क्षुद्रपिशाचाद्यैरदृष्टैरेव कीर्तिताः ।
तस्माच्च तासु विश्वासः कर्तव्यः प्राज्ञमानिभिः ॥ ३२४५ ॥
एवं सर्वज्ञता पुंसां स्वातन्त्र्येण निरास्पदा ।

सामट-यज्ञटयोर्मते सर्वज्ञतादूषणम्

इदं च चिन्त्यते भूयः सर्वदर्शी कथं मतः ॥ ३२४६ ॥
युगपत्, परिपाट्या वा, सर्वं चैकस्वभावतः ।
जानन् यथाप्रधानं वा, शक्त्या वेष्येत सर्ववित् ॥ ३२४७ ॥

---

प्रमाणोपपन्नार्थमादित्या युक्तिमेव मार्गयन्ते ते कथमेतदुच्यमानमप्रमाणकं गृहीष्यन्ति ॥ ३२४०–३२४२ ॥

किञ्च—भवतु नामैवं कल्पना, तथापि कुड्यादिनिर्गतासु देशनासु सर्वज्ञाधिपत्यप्रभवत्वं सन्दिग्धमेवेति न तत्र प्रमाणत्वेन प्रेक्षावतां विश्वासो युक्त इति दर्शयति—कुड्यादिनिःसृतानामित्यादि[2] । [G. 814] सर्वं सुबोधम् ॥ ३२४३–३२४५ ॥

एवावत् कुमारिलेनोक्तं पूर्वपक्षीकृतम् । साम्प्रतं सामट-यज्ञटयोर्मतेन पुनरपि सर्वज्ञदूषणमाह—इदं चेत्यादि । [G. 815] किं युगपदशेषपदार्थपरिज्ञानात् सर्ववित्, आहोस्वित् परिपाट्या = क्रमेण, यद्वा सर्वस्य जगत एकेन = नित्यादिना रूपेण ज्ञानात्, यथा प्रधानावगमाद्वा = यदेव हि पुरुषार्थोपयोगि कर्मफलादि तस्यैव ज्ञानात्, यद्वा सर्वपदार्थपरिज्ञानसामर्थ्ययोगात् सर्वविदुच्यते = यथा अग्निः सर्वं भक्षयितुं शक्तः सर्वभुगिति ।
तत्र प्रथमे पक्षे कल्पनाद्वयम्—एकया वा धिया युगपदशेषं जानीयाद्, अनेकया वा ? न तावदेकया; परस्परविरुद्धानां शुच्यशुच्यादीनामर्थानां

---

1. °निःसृताना-पा० । 2. निःसृताना०-पा० ।

युगपच्छुच्यशुच्यादिस्वभावानां विरोधिनाम् ।
ज्ञानं नैकधिया दृष्टं भिन्ना वा गतयः क्वचित् ॥ ३२४८ ॥
भूतं भवद् भविष्यच्च वस्त्वनन्तं क्रमेण कः ।
प्रत्येकं शक्नुयाद् बोद्धुं वत्सराणां शतैरपि ॥ ३२४९ ॥
स्वभावेनाविभक्तेन यः सर्वमवबुध्यते ।
स्वलक्षणानि भावानां सर्वेषां न स बुध्यते ॥ ३२५० ॥
बोद्धा सामान्यरूपस्य सर्वज्ञेनापि तेन किम् ।
अन्याकारेण बोधेन नैव वस्त्ववगम्यते ॥ ३२५१ ॥
तदेकाकारविज्ञानं सम्यङ् मिथ्यापि वा भवेत् ।
सम्यक्त्वे दृष्टबाधेयं प्रसक्तं सर्वमद्वयम् ॥ ३२५२ ॥

---

युगपदेकज्ञानेन ग्रहणादर्शनात् । स्यादेतद्—विरुद्धानेकपदार्थविषया बह्व्यो बुद्धयस्तस्य सकृद् वर्त्तन्ते ? इत्याह—भिन्ना वा गतय इति । न दृष्टा इति विभक्तिविपरिणामेन सम्बन्धः । न हि युगपद् भिन्नगतयो दृष्टा एकविज्ञानसन्ततयः सत्त्वा *इति सिद्धान्तितत्वात् । तस्मान्नैकधियापि युगपद्ग्रहणं न युक्तम् ।

परिपाट्येति पक्षोऽपि न युक्तः; भूतं भवद् भविष्यच्च वस्तु अनन्तत्वात् वर्षशतैरपि ज्ञातुमशक्यत्वात् । वर्षशतग्रहणमत्रोपलक्षणम्, शतसहस्रकल्पैरपि तदशक्यमेवेति यावत्; अन्यथा तस्य स्वातन्त्र्यं हीयेत । एकस्वभावेनापि सर्वं वस्तु परिज्ञातुं न शक्यते; स्वलक्षणस्याप्यग्रहणप्रसङ्गात् । यस्य गृहीतत्वेन तेषां गृह्यमाणपरस्परभिन्नवस्तुस्वभावानामेकस्वभावो न विद्यते । स्वलक्षणाधीनाचार्थक्रिया-सिद्धिः, तया हि अनर्थक्रियाकारिसामान्याकारेण तद्बोधेन बोद्धुं सर्वज्ञस्य अवनोपने न किञ्चिदपि प्रयोजनमस्ति; स्वलक्षणस्यापरिज्ञानत्वात् ॥ ३२४६–३२५० ॥

तेन सामान्याकारेण स्वलक्षणानि अवगम्यन्ते इति चेत् ? आह—अन्याकारेणेत्यादि । रूपज्ञानेनापि रसग्रहणप्रसङ्गात् । किञ्च—एकस्वभाव-ग्राहि तद् ज्ञानं सत्यार्थकम् ? अथ वा विपरीतार्थकं भवेत् ? तत्र यदि सत्यार्थकं

---

* इत आरभ्य–३२६२कारिकाव्याख्यानं यावत् त्रिपञ्चादर्शपुस्तकेषु विगलिता पङ्क्तिः अस्माभिर्भोटभाषानुवादतः संस्कृत्यात्र स्थापितेति ध्येयम् ।

ततश्च शिष्यसर्वज्ञधर्माधर्मतदुक्तयः ।
न स्युर्वा मिथ्यारूपत्वे स्वभावानवधारणात् ॥ ३२५३ ॥
मृषात्वे त्वेकबोधस्य भ्रान्तः प्राप्नोति सर्ववित् ।
न श्रद्धेयं वचस्तस्य तदोन्मत्तादिवाक्यवत् ॥ ३२५४ ॥
सहेतु सकलं[1] कर्म ज्ञानेनालौकिकेन यः ।
समाधिजेन जानाति स सर्वज्ञो यदीष्यते ॥ ३२५५ ॥
प्रत्यक्षमनुमानं वा शाब्दं वा तदसत्कृतम् ।

---

स्यात्, प्रतिज्ञाया प्रत्यक्षबाधा प्राप्ता। कथमिति चेत्? 'सर्वज्ञो न भवति' इत्युक्तम्, तथा हि—यदि सर्वेषां वस्तूनामेकविषयित्वमेकाकारज्ञानं सत्यकतया स्वीक्रियते, तदा बलात् सर्वाणि वस्तूनि एकत्वेनाङ्गीक्रियमाणानि स्युः। अन्यथा कथमेकाकारज्ञानं सत्यार्थकं भवेत्। यदि तेन गृह्यमाणवस्तूनि एकस्व-भावत्वेन सत्यानि न स्युः, कथमेकाकारज्ञानं सत्यार्थकं भवेत्। एषापि दृष्टबाधा भवति, विषयकारणस्य भावभिन्नत्वेन वस्तूनां स्वभावभिन्नत्वस्य ज्ञातत्वात्, अन्यथा सर्वमपि जगदद्वयं भवेत्। द्वयम्—द्रष्टव्यम्, द्रष्टा च, शासनम्, शास्ता चेत्यादि तद् यस्य भवति तदेव कथ्यते। एवं सति शिष्यादीनां विभागो न भवेत्, अनिश्चितस्वभावानवधारणात्।

किञ्च—यदि विपरीतार्थक इति पक्षः, तदा एकस्मिन्नेव विकल्पे स्वीक्रि-यमाणे सर्वज्ञो भ्रान्तः स्यात्, विपरीतज्ञानयुक्तत्वात्। तत्र को दोष इति चेत्? आह—उन्मत्तादीत्यादि। यदि भ्रान्तः स्यात्, तदा यथापदार्थवत् प्रतीत्यु-पार्जनपेक्षावताऽनादरणीयः स्यात्, उन्मत्तादिवाक्यवत्।

"यथा प्रधानं वा" (तत्त्व० ३२४७) इत्यत्र यदि समाधिजेनेत्याद्युक्तम्। अलौकिकेनेति समाहितेन, अनास्रवेण वा ॥ ३२५१–३२५५॥

इत्यम्भूतस्यास्य साधकस्य प्रत्यक्षादिपञ्चप्रमाणानि न सन्तीति पूर्वं विस्तरेण प्रतिपादितम्। अत एवेदृश पुरुषार्थत्वेन प्रधानं ज्ञानवन्नास्ति। वस्तुतः सकल-

---

[1] सकलं—बौ० पुस्तक पाठः।

प्रमाणमस्य सद्भावे नास्तीति नास्ति तादृशः ॥ ३२५६ ॥
युगपत् परिपाट्या वा कथं कार्याद् विनाऽनुमा ।
सामर्थ्यमपि नैवास्ति समर्थे सर्वमेव वा ॥ ३२५७ ॥
सर्वे सर्वावबोधे च क्षेत्रज्ञाः प्रभविष्णवः ।
उपायविकलत्वात्[1] तु बुध्यन्ते निखिलं न ते ॥ ३२५८ ॥

---

विशेषाग्रहणे प्रधानार्थस्य प्रतीतिरप्यसम्भवा । प्रधानस्याप्रधानस्य च परस्परपरिहारहारेण स्थितत्वात् अवश्यमेव तेनाप्रधानस्य विविच्य प्रधानस्य स्वभावो ज्ञातव्यः; अन्यथा कथं प्रधानं स्वस्वभावमसङ्करत्वेन जानीयात् । एवं सति 'इदं पुरुषार्थे उपयोगि, इदं च न' इत्येवं विविच्य प्रधानस्यावश्यमेवावधारणात्, कथमप्रधानस्य नावधारणं स्यात् । शक्तेः पक्षोऽपि न भवतीति पूर्वं दर्शितत्वात् युगपत् परिपाट्या चेत्याद्युक्तम् ; वस्तूनां शक्त्यैव फलस्यानुमानं स्यात्, येनेदमनुमेयं हि सर्वज्ञस्याशेषाखिलविषयिज्ञानत्वेन स्यात् । तदपि युगपत् परिपाट्या वा न सम्भवतीति इष्टम् । अत एव युगपत् परिपाट्या वा यत् शक्यफलम्, तन्नास्ति । तेन यदि न स्यात्, किमनुमातुं शक्यत इति शेषः । असम्भव एवेत्यर्थः । युगपत्परिपाट्या चेत्युपलक्षणम्, एका प्रकृतिः, प्रधानं च यथावत् इत्यपि द्रष्टव्यम् । अत एवादोषवस्तुपरिज्ञानस्य शक्तिः काचिदपि न सम्भवति; तादृशफलाकारस्यासम्भवात् । किञ्च—यदि फलस्याकारणेऽपि सामर्थ्यं स्यात्, सर्वं सर्वफलेषु समर्थं स्यात्—इत्येतद् दर्शयन्नाह—समर्थे सर्वमेव चेत्यादि ॥ ३२५६-५७ ॥

अस्य विधेः सर्वज्ञसाधने सिद्धसाध्यतेति दर्शनाय सर्वे सर्वावबोधे चेत्याद्याह । एवं सर्वक्षेत्रज्ञो हि आत्मा सर्वभावबोधने समर्थ इतीष्यते, तर्हि सर्वभावबोधनस्योपायाभावत्वात् 'कोऽपि पुरुषः सर्वज्ञो नास्ति' इतीच्छामात्रमेव, नास्ति किञ्चित् प्रमाणम् । तेन वस्तुतः 'सर्ववस्तुवित् पुरुषो भवति'—इतीदं निष्प्रमाणकत्वात् यत् पञ्चप्रमाणविकल्पवस्तुस्वभावप्रमाणविषयङ्गतस्वरूपम्, तद् वन्ध्यापुत्रवत्, व्योमाब्जवद् भवतीत्ययं सिद्धः ।

---

1. उपायविफलत्वात्—पा०, गा० ।

लब्धासाधारणोपायोऽशेषपुंसां विलक्षणः ।
तत्रैकः सर्ववित् कश्चिदित्येवं निष्प्रमाणकम् ॥ ३२५९ ॥
इत्थं यदा न सर्वज्ञः कश्चिदप्युपपद्यते ।
न धर्माधिगमे हेतुः पौरुषेयं तदा वचः ॥ ३२६० ॥

मीमांसकोक्तयुक्तिजालनिरसनमुखेन
सुगतसर्वज्ञत्वसमर्थनम्

इति मीमांसकाः प्राहुः स्वतन्त्रश्रुतिलालसाः ।
विस्तरेण च वेदानां साधिता पौरुषेयता ॥ ३२६१ ॥
तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टेव विद्यते ।
न तु नित्येन वचसा कश्चित् पश्यत्यसम्भवात् ॥ ३२६२ ॥

---

पुनरपि किं निराकारज्ञानेन सर्वं ज्ञायते ? अथ वा साकारेण ?—इत्यपि वक्तव्यम् । प्रथमपक्षे हानोपादेयभावौ विविच्य न परिच्छेदमाप्नुत, तज्ज्ञानस्य सर्वज्ञेये प्रत्येकसमानकर्मणि विभागासम्भवात् । तद्विभक्तमपि कथं भिन्नविषयव्यवस्थं स्यात्, तत्कारणस्य प्रतीतिभिन्नत्वात् । नापि साकारपक्ष, स्वविज्ञानेनात्मैव विज्ञातत्वाद् विज्ञानस्वरूपभूताद् भिन्नार्थस्याविज्ञातत्वात् । ज्ञानमात्रेण ज्ञाता तु न सर्वज्ञो भवति, आकारग्रहणेनार्थानां दर्शनादिव्यवहारे क्रियमाणे भ्रान्त्यापत्ते । यतो हि अन्यस्य दर्शनाश्रयेण आत्मा दृष्ट इति तत्प्रतीति कथं भ्रान्ता न स्यात् । उक्तद्विविधातिरिक्तं च किञ्चिदपि ज्ञानार्थग्रहणं नास्ति—इत्येवमिन्द्रियातीतार्थदर्शनं किञ्चिदपि नास्तीति सिद्धम् ॥ ३२५८–३२५९ ॥

इत्थमित्यादिना सर्वज्ञसिद्धिपूर्वपक्ष उपसंह्रियते ॥ ३२६० ॥

"धर्मज्ञत्वनिषेध" ( तत्त्व० ३१२७ ) इत्यादिना दूषणमारभ्य यावद्—

"तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टा न विद्यते ।
वचनेन तु नित्येन यः पश्यति स पश्यति ॥" ( तत्त्व० ३१७४ )

इति धर्मज्ञानं प्रतिषिध्य यः स्वपक्षः स्थापित, स न युक्त—इति दर्शनाय—वेदानामित्याद्याह । पूर्वं श्रुतिपरीक्षायां वेदानां पौरुषेयता साधिता, तेन नित्यस्य वचसोऽसम्भवादतीन्द्रियाणां विशिष्टप्रतीतिराश्रयत्वेन न सिद्धा ? इत्याह—तस्मादित्यादि । [ G 840 ] तेन साक्षादेवातीन्द्रियार्थानां द्रष्टा

नित्यस्य वचसः शक्तिर्न स्वतो वापि नान्यतः ।
स्वार्थज्ञाने समुत्पाद्ये क्रमाक्रमविरोधतः ॥ ३२६३ ॥
स्वर्गयागादयस्तस्मात् स्वतो ज्ञात्वा प्रकाशिताः ।

---

विधते, न तु नित्यवचनद्वारेण; तस्य नित्यस्य वचसोऽसम्भवात् । द्रष्ट्रैवेत्यवधारणं भिन्नक्रमं साक्षादित्यस्यानन्तरं द्रष्टव्यम् ॥ ३२६१–३२६२ ॥

भवतु नाम नित्यस्य वचसः सम्भवः, तथापि न तस्यातीन्द्रियार्थप्रतिपत्तिं प्रति कारणभावो युक्त इत्येतत् प्रतिपादयन्नाह—नित्यस्येत्यादि । तत्र स्वार्थः स्वकीयमभिधेयम् । यद्वा—स्व = आत्मा, शब्दस्य स्वभावः, अर्थः = अभिधेयः, स्वश्चार्थश्च स्वार्थौ, तयोर्ज्ञानम्, तस्मिन् समुत्पाद्ये । तत्समुत्पादनाय नित्यस्य वचसः शक्तिः स्वतो वा भवेन्निसर्गसिद्धा ? अन्यतो वा सहकारिकारणात् ? तत्र न तावत् स्वतः, कुतः ? क्रमाक्रमाभ्यां कार्योत्पादनं प्रति नित्यस्य विरोधात् । न हि क्रमयौगपद्याभ्यामन्यः प्रकारः सम्भवति, येनार्थक्रिया भवेत्; अन्योऽन्यव्यवच्छेदस्थितलक्षणत्वादनयोः । तेन क्रमयौगपद्याभ्यामेवार्थक्रिया व्याप्ता । न च नित्यस्य वचसः क्रमेण स्वार्थज्ञानोत्पादकत्वं युक्तम्; प्रथमकार्योत्पादावस्थायामुत्तरकालभाविज्ञानकार्योत्पादकस्वभावाप्रच्युतेस्तत्कालभावीनि कार्याणि युगपदेव स्युः । नापि क्रमेण युक्तम्; उत्तरकालमपि प्रथमकार्योत्पादावस्थावत् कार्यकरणसमर्थाविकलस्वभावानुवृत्तेरजनकत्वविरोधात् । प्रयोगः—यो यद्व्यापकधर्मरहितः स तद्व्याप्यधर्मविकलः, यथा वृक्षत्वधर्मशून्यो घटादिस्तद्व्याप्यशिंशपात्वधर्मविकलः । अर्थक्रियासामर्थ्यधर्मव्यापकक्रमाक्रमधर्मरहितं च नित्यं वेदाख्यं वचनमिति स्वभावतो व्यापकानुपलब्धिः । अतो न स्वतो नित्यवचसः शक्तिसम्भवः । नाप्यन्यतः; सहकारिकारणात् । तेन शक्तेस्तत्स्वभावाव्यतिरिक्तायास्तत्स्वभाववत् कर्तुमशक्यत्वात् । अर्थान्तरत्वेऽपि सम्बन्धासिद्धेरिति बहुधा चर्चितमेतत् । तस्मादतीन्द्रियार्थपरिज्ञानस्य नित्यवचनाश्रयत्वमनुमानबाधितत्वादयुक्तम् ॥ ३२६३ ॥

यच्चोक्तम्—'अभावप्रमाणविषयीकृतविग्रहत्वान्नास्ति धर्मज्ञः' इति, तत्र धर्मज्ञाभावप्रतिज्ञाया [G 847] अर्थापत्तिप्रमाणबाधितत्वम्, हेतोश्चासिद्धत्वं पराभ्युपगमेनैव प्रतिपादयन्नाह—स्वर्गयागादयस्तस्मादित्यादि । स्वत इति स्वातन्त्र्येण ।

वेदकारस्तवाप्यस्ति तादृशोऽतीन्द्रियार्थदृक् ॥ ३२६४ ॥
प्रधानपुरुषार्थज्ञः सर्वधर्मज्ञ एव वा ।
तस्यानुपगमे न स्याद् वेदप्रामाण्यमन्यथा ॥ ३२६५ ॥
तेनार्थापत्तिलब्धेन धर्मज्ञोपगमेन तु ।
बाध्यते तन्निषेधोऽयं विस्तरेण कृतस्त्वया ॥ ३२६६ ॥
किञ्चाकारणमेवेदम् उक्तमाज्ञाप्रभावितम्[1] ।
केशरोमाणि यावन्ति[2] कस्तानि ज्ञातुमर्हति ॥ ३२६७ ॥
यस्मान्निर्मलनिष्कम्पज्ञानदीपेन कश्चन ।

---

वेदानपेक्षेण ज्ञानेनेत्यर्थः । तादृश इति यादृशो भवद्भिः प्रतिक्षिप्यते । अर्थापत्तिलब्धेनेति वेदप्रामाण्याभ्युपगमसामर्थ्यलब्धेन । अत एवाभावप्रमाणविषयीकृतविग्रहत्वमप्यसिद्धम्, अर्थापत्त्या विषयीकृतत्वात् ॥ ३२६४–३२६६ ॥

यच्च सर्वशब्दस्य प्रकृतार्थापेक्षित्व[3] बहुधा विकल्प्य दूषणमुक्तम्, तन्नावतरत्येव, अस्य पक्षस्यानभ्युपगमात् । न ह्यस्माभिर्धर्मादिव्यतिरिक्तविवक्षिताशेषार्थाभिज्ञतया सर्वज्ञोऽभ्युपगम्यते, येन तत्र दूषणमासज्येत, किं तर्हि ? यस्य सकलक्लेशज्ञेयावरणमलव्यपगतेन चेतसा सकलमेव धर्मादिकं ज्ञेयमवभासते, स सर्वज्ञोऽभीष्टः । स च भवता न किञ्चिद् बाधकं प्रमाणमभ्यधायि ।

यच्चोक्तम्—"एकस्यैव शरीरस्य यावन्तः परमाणवः" ( तत्त्व० ३११६ ) इत्यादि, तत् केवलं प्रतिज्ञामात्रमप्रमाणकमुक्तम् । न च प्रतिज्ञामात्रादुपपत्तिशून्यादर्थसिद्धिः सम्भवति, सर्वस्य सर्वार्थसिद्धिप्रसङ्गादित्येतत् सर्वमाशङ्क्याह—किञ्चेत्यादि । अकारणमिति । न विद्यते कारणम् = उपपत्तिः, त्रिरूपलिङ्गाख्यानं यस्य तत् तथोक्तम् । क्लेशज्ञेयावरणमलविविक्तत्वान्निर्मलं मारतीर्थिकपरिवादसमीरणाकम्प्यत्वादकम्प्यं यदेव ज्ञानं तदेव दीपः, प्रकाशसाम्यात् । द्योतितम् = विषयीकृतमखिलं धर्मादिकं [ G 848 ] वस्तु येन स तथोक्तः । सापेक्षत्वेऽपि गम

---

1 °मज्ञप्रभावितम्—गा० ।
2 या यानि—जै० पुस्तक पाठा० ।
3. प्रकृतार्थापेक्षित्व—गा० ।

द्योतिताखिलवस्तुः स्यादित्यत्रोक्तं न बाधकम् ॥ ३२६८ ॥

कत्वात् समासः । अत्रोक्तं न बाधकमिति । प्रमाणमिति शेषः । न केवलं नोक्तम्, नाप्यत्र किञ्चिद् बाधकमस्तीति भावः । तथा हि—न तावत् प्रत्यक्षं बाधकम्; तस्यातद्विषयत्वात् । यदेव हि वस्तु प्रत्यक्षेण यथा विषयीक्रियते तत्र प्रत्यक्षप्रसिद्धे विपरीतो धर्मोऽभ्युपगम्यमानः प्रत्यक्षेण बाध्यते, यथा शब्दे धर्मिणि अश्रावणत्वं श्रावणत्वेन; न तु यत्र प्रत्यक्षस्याप्रवृत्तिः । न च परसन्तानवर्तीनि चेतांसि सर्वाणि प्रत्यक्षतोऽसर्वज्ञेन विषयीक्रियन्ते केनचित् । येन तत्र सर्वज्ञत्वं प्रतिज्ञायमानं प्रत्यक्षेण बाध्येत; सर्वेषामेवार्वाग्दर्शित्वात् । विषयीकरणे वा स एव सर्वज्ञ इत्यप्रतिक्षेपः ।

स्यादेतत्—न वयं प्रत्यक्षं प्रवर्त्तमानमभावं साधयतीति ब्रूमः, किं तर्हि ? निवर्त्तमानम् । तथा हि—यत्र वस्तुनि प्रत्यक्षस्य निवृत्तिः, तस्याभावोऽवसीयते, यथा शशविषाणस्य । यत्र प्रवृत्तिस्तस्य भावः, यथा—रूपादेः[1] । न च सर्वज्ञविषयं कदाचित् प्रत्यक्षं प्रवृत्तमित्यतस्तन्निवृत्तेस्तदभावोऽवसीयत इति ? तदेतदसम्बद्धम्; न हि प्रत्यक्षनिवृत्तेर्यो[2] भवति निश्चयः स प्रत्यक्षाद् भवति; अभावभावयोरेकत्रविरोधात् । न च प्रत्यक्षनिवृत्तिर्वस्त्वभावेन[3] व्याप्ता, येनासौ वस्त्वभावस्ततो निश्चीयते । सत्यपि वस्तुनि व्यवहितादौ प्रत्यक्षस्य निवृत्तिदर्शनात् ।

स्यादेतत्—न प्रत्यक्षनिवृत्तेः सकाशादभावनिश्चय[4] इति ब्रूमः, किं तर्हि ? निवृत्तं प्रत्यक्षमभावं साधयतीति ? तदेतच्छब्दान्यत्वं केवलं भवतोच्यते, न त्वर्थभेदः । न च शब्दान्यत्वमात्रादर्थान्यत्वं युक्तम्; अतिप्रसङ्गात् । तथा हि—निवृत्तिर्वस्तुसत्तानिषेध उच्यते । निवृत्तशब्देनापि परमार्थतः स एवाभिधीयते । केवलमेको भेदान्तरप्रतिक्षेपेण तन्मात्रजिज्ञासायां तमाह, अपरस्त्वप्रतिक्षेपेणेति विशेषः । परमार्थतस्तु द्वाभ्यामसत्त्वमेव वस्तुनः प्रतिपाद्यते । न चाऽसतो[5] हेतुभावः सम्भवी, सर्वसामर्थ्यविरहलक्षणत्वात् तस्य । तस्माद् यस्य यदुत्पादकं प्रकाशकं

१. रूपादेः—पा०; अरूपादेः—गा० । २. प्रवृत्तनिवृत्तेर्यो—पा० ।
३. वस्तुभावेन—बौ०, पा० । ४ सकाशात्स्यादभाव०—पा०, गा० ।
५ वास्तो—पा०, गा० ।

वा, तत् तस्योत्पादने प्रकाशने च सन्निहितसत्ताकमेव भवति, न तु निवृत्तस्वभावम्, यथा बीजमङ्कुरस्य, दीपो वा रूपस्य। न हि तौ निवृत्तावङ्कुरघटरूपाद्युत्पादनप्रकाशने समर्थौ भवतः।

अपि च—निवृत्तं प्रत्यक्षमभावं साधयतीति कोऽयमर्थोऽभिमतः? यदि तावद् वर्तमानादध्वनो निवृत्तमित्यर्थः, तदा सामर्थ्यादतीतानागतावस्थमित्येवमुक्तं स्यात्। न चातीतानागतं[1] वस्तु[1] विद्यत इति पूर्वं प्रतिपादितम्। तत् कथमसतो व्यापारः सिद्ध्येत्? अथ वर्तमानमपि सद् यद् यत्र विषये नोत्पद्यते तत् ततो निवृत्तमित्युच्यते? एवमपि नातो वस्त्वभावसिद्धिः, व्यभिचारात्। [G 849] न हि चक्षुर्विज्ञानं गन्धरसादिविषये नोत्पद्यत इत्येतावता तत्रस्तदभावः सिद्ध्येत्। तस्मान्न प्रत्यक्षेण कस्यचिदभावसिद्धिः। यद्येवम्, कथमनुपलम्भाख्यात् प्रत्यक्षात् घटाद्यभावसिद्धिः प्रदेशान्तरे भवद्भिर्वर्ण्यते? नैतदस्ति, न हि तत्राभावविषयीकरणात् प्रत्यक्षमभावं साधयतीत्युच्यते, किं तर्हि? एकज्ञानसंसर्गयोग्ययोरर्थयोरन्यतरस्यैव या सिद्धिः साऽपरस्याभावसिद्धिरिति कृत्वा, यतस्तयोः सतोर्नैकरूपनियता प्रतिपत्तिः सम्भवति, योग्यताया अविशेषात्। न चैव सर्वज्ञत्वस्य केनचित् सार्धमेकज्ञानसंसर्गिता निश्चिता, यस्य केवलस्योपलम्भात् तदभावं व्यवस्याम, तस्य सर्वदैवात्यन्तपरोक्षत्वात्। एवं तावन्न[2] प्रत्यक्षं सर्वविदो बाधकं[3] सम्भवति।

नाप्यनुमानं सर्वज्ञाभावं साधयति, तस्य विधिविषयत्वाभ्युपगमात्। यतोऽभावमेव प्रमाणमभावविषयमुपवर्ण्यते भवद्भिः[4], नान्यत्।

अत एवार्थापत्त्यादीनां त्रयाणामपि बाधकत्वम्[5]।

अथापि स्यात्—नास्माभिः प्रसज्यरूपेण सर्वज्ञाभावः प्रसाध्यते, किं तर्हि? सर्वनरान् पक्षीकृत्य पर्युदासवृत्त्या तेष्वसर्वज्ञत्वं साध्यते, तेनानुमानादीनां व्यापारो भवत्येवेति? भवत्वेवम्, तथाप्यनुमानं नात्र सम्भवति, सर्वनरेष्वसर्व

१-१ °नागतवस्तु—पा°, गा°। २ तावत्—पा°, गा°।
३ न बाधकं—गा°। ४. पा°, गा° पुस्तकयोर्नास्ति।
५. न साधकत्वम्—गा°।

ज्ञत्वाव्यभिचारिलिङ्गाप्रसिद्धेः । यदपि च प्रमेयत्ववक्तृत्वादिकमुक्तम्, तदपि व्यभिचारीति पश्चात् प्रतिपादयिष्यते ।

नाप्यर्थापत्तिरसर्वज्ञत्वं[1] साधयति । प्रत्यक्षानुमानव्यतिरेकेणान्येषां प्रमाणत्वासिद्धेः । सत्यपि वा प्रमाणान्तरत्वे नार्थापत्तिस्त्वसर्वज्ञसाधने पर्याप्ता; यतो दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते इत्यदृष्टपरिकल्पनार्थापत्तिः । न चासर्वज्ञत्वमन्तरेण सर्वनरेषु कश्चिदर्थो दृष्टादिर्नोपपद्यते, यतस्तदर्थापत्त्या कल्प्येत ।

नाप्युपमानं क्षमम्, तथा हि—स्मर्यमाणमेव वस्तु पुरोवर्तिपदार्थसादृश्योपाधि सादृश्यमात्रं वा पुरोवर्तिना स्मर्यमाणवस्तुगतमुपमानेन प्रतीयते । यथानुभूतगोदर्शनस्य पुंसोऽरण्यगतस्य गवयदर्शनात् पूर्वानुभूते गवि तत्साधर्म्यज्ञानम् । यथोक्तम्—"तस्माद्यत् स्मर्यते तत् स्यात् सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥"
(तत्त्व० १५३४) इति ।

तस्मात् स्मर्यमाण एव धर्मो उपमानस्य विषयः, अनुभूतमेव च वस्तु स्मरणेन विषयीक्रियते, नान्यत् । न च सर्वनरसन्तानवर्तीनि चेतांसि केनचित् सर्वविदानुभूतानि, यतः स्मरणेन विषयीक्रियेरन् । न चानुभूयमानस्य वस्तुनः सर्वनरैरसर्वज्ञत्वसाधारणधर्मनिश्चयोऽस्ति, यद्वशादसर्वज्ञत्वं सर्वनरेषूपमीयेत ।

यदपि सत्त्वादिकं क्वचिदसर्वज्ञे दृष्टम्, तदपि नासर्वज्ञत्वसाधारणं सिद्धम् । सर्वज्ञस्यापि [G. 850] सत्त्वाद्यविरोधात् । न हि गवये सत्त्वादिधर्मदर्शनाद् घटादीनामपि गवयसादृश्यमुपमीयते । भवतु नाम सर्वनराणां सत्त्वादिना साधर्म्यम्, असर्वज्ञत्वं तु न सिद्ध्यति । एतेनैव तत् प्रत्युक्तम्, यदुक्तम्—"नरान् दृष्ट्वा" (तत्त्व० ३२१५) इत्यादि ।

नापि शब्दाख्यं प्रमाणं सर्वविदो बाधकमस्ति । यत्तावत् पौरुषेयं तदप्रमाणमेव स्वयं मीमांसकैरतीन्द्रियार्थविषयेऽभ्युपगम्यते । यच्चापौरुषेयं तदप्यप्रमाणमिति निवेदितम् । न चापि किञ्चिद् वैदिकं वचनं सर्वनरासर्वज्ञत्वप्रत्यायकमुपलभ्यते । न च तत्रानुपदेशादर्थान्तराभाव सिद्ध्यति; सर्ववस्तुना शास्त्रोपदेशोऽनधिकृत-

१. रत्नपंज-पा०, गा० ।

न चाप्यदृष्टिमात्रेण तदसत्ताविनिश्चयः ।

त्वात् । अन्यथा हि भवन्मातृविवाहादीनामप्यभावप्रसङ्गः स्यात्; तत्रापाठात् । न चैकदेशे क्वचित् पाठादर्शनात् सर्वत्रापाठनिश्चयो युक्तः, अनेकशाखाशतान्तर्हितश्रवणादन्यत्रापि पाठस्य सम्भाव्यमानत्वात् । निमित्तानि[1] च[1] शाखान्तरे स्फुटतरमेव सर्वज्ञः पठ्यत इति पश्चात् प्रतिपादयिष्यामः ।

नाप्यभावप्रमाणविषयीकृतत्वात् सर्वविदोऽसत्त्वसिद्धिः । तथा हि—यदि प्रमाणनिवृत्तिमात्रं प्रसज्यलक्षणमभावप्रमाणं वर्ण्यते, तदा नासौ कस्यचित् प्रतिपत्तिः, नापि प्रतिपत्तिहेतुरिति न तेन विषयीकरणं युक्तम्; अवस्तुत्वात् । अतो नासौ प्रमाणम् । अथ पर्युदासवृत्त्या प्रमाणाख्याद् भावादन्यो भाव एवाभिप्रेतः ? एवमपि प्रमाणाद् व्यावृत्त्यात्मतया न प्रामाण्यं सिद्ध्येत् । न हि ब्राह्मणादन्यो ब्राह्मण एव युक्तः ।

स्यादेतत्—न सर्वप्रमाणव्यावृत्तोऽसौ वर्ण्यते, किं तर्हि ? विवक्षितप्रमाणपञ्चकव्यतिरेकेणान्यः प्रत्ययविशेष एव । यद्येवम्, किमाकारोऽसाविति वाच्यम्, यस्मात् प्रमाणपञ्चकागोचरस्तस्मादसौ सर्वज्ञो नास्तीत्येवमाकार इति चेत् ? यद्येवम्, आकारो न तर्हि प्रमाणम्; व्यभिचारात् । न हि प्रमाणपञ्चकस्यास्वभावाकारणभूतस्य[2] निवृत्तावप्रतिबद्धं सर्वज्ञादिवस्तु निवर्त्तते, येनायं प्रत्ययः सत्यत्वमश्नुवीत । तस्मान्न किञ्चिद् बाधकं प्रमाणं सर्वज्ञस्यातीति[3] भावः ॥ ३२६७-३२६८ ॥

स्यादेतत्—अनुपलम्भो यो युष्माभिरुपवर्णितोऽनुमानत्वेन, स एव सर्वज्ञस्य बाधको भविष्यति, किमत्रापरेणाऽन्येन प्रमाणेनेति ? सत्यमेतदनुपलम्भः प्रमाणम्; किन्त्विदमिह सम्प्रधार्यम्—किं स्वोपलम्भनिवृत्तिस्त्वया सर्वज्ञाभावसिद्धयेऽनुपलम्भोऽभिप्रेतः ? आहोस्वित् सर्वपुरुषोपलम्भनिवृत्तिर्वा ? अनुपलम्भोऽपि किं निर्विशेषणोऽभीष्ट उपलब्धिलक्षणप्राप्तस्येत्येतस्य विशेषणस्यानाश्रयणात् ? आहोस्वित् सविशेषण [ G 851 ] इति । तत्र न तावन्निर्विशेषणस्यानुपलम्भ[4] प्रमाणं सर्वज्ञाभावसिद्धये युक्त इति दर्शयन्नाह—न चाप्यदृष्टिमात्रेणेत्यादि ।

---

१–१. पा०, गा० पुस्तकयोर्नास्ति । २. ०कस्यास्वस्वभाव०—पा०, गा० । ३. सर्वज्ञस्यास्तीति—जै०, पा० । ४. ०षणस्यानु०—पा० ।

हेतुव्यापकतायोगादुपलम्भस्य वस्तुषु ॥ ३२६९ ॥
कारणव्यापकाभावे निवृत्तिश्चेह युज्यते ।
हेतुमद्व्याप्ययोस्तस्माद् उत्पत्तेरेकभावतः ॥ ३२७० ॥
कृशानुपादपाभावे धूमाम्रादिनिवृत्तिवत् ।
अन्यथाऽहेतुतैव स्यान्नानात्वं च प्रसज्यते ॥ ३२७१ ॥

---

मात्रग्रहणमुपलब्धिलक्षणप्राप्तस्येत्येतद्विशेषणनिरासार्थम् । तदसत्ताविनिश्चय इति । सर्वज्ञसत्ताविनिश्चयः । कस्मात् ? वस्तुषु = वस्तुविषये उपलम्भस्य हेतुव्यापकतायोगात् । न ह्यर्वाग्दर्शनस्योपलम्भो वस्तूनां व्यापकः, वृक्षत्वमिव शिंशपात्वस्य; सत्यपि वस्तुनि देशादिविप्रकर्षेणानुपलम्भसम्भवात् । नापि कारणमग्निरिव धूमस्य, वस्तूनामेवोपलम्भं प्रति कारणत्वाभावात् । न चाकारणाव्यापकभूतस्यान्यस्य निवृत्तावन्यस्य निवृत्तिर्युक्ता; अतिप्रसङ्गात् । या च कार्यानुपलब्धिरुक्ता[1], न सा कारणमात्रस्याभावं गमयति, किं तर्हि ? अप्रतिबद्धसामर्थ्यस्यैव । न चार्वाग्दर्शनोपलम्भं[2] प्रति वस्तूनामप्रतिबद्धसामर्थ्यमस्ति । येन स निवर्तमानो वस्तूनामभावं साधयेत ॥ ३२६९ ॥

कारणव्यापकयोर्निवृत्तावपि कथमन्यस्य निवृत्तिरिति चेद् ? अत्राह—कारणेत्यादि । हेतुर्विद्यते यस्य तद्धेतुमत्, कार्यमित्यर्थः । हेतुमच्च व्याप्तं चेति विग्रहः । तयोर्हेतुमद्व्याप्ययोर्निवृत्तिर्युज्यत इति पूर्वेण सम्बन्धः । अत्र कारणम्—तस्मादुत्पत्तेरेकभावत इति । हेतुनिवृत्तौ हि सत्यां हेतुमान्निवर्तते, ततो हेतोरुत्पत्तेरात्मभावप्रतिलम्भाद्धेतुमतः; यथा कृशानुनिवृत्तौ धूमस्य निवृत्तिः । तथा व्यापकनिवृत्तौ व्याप्यं निवर्तते, तेन व्यापकेन सह तस्यैकभावतः = एकस्वभावत्वात्; यथा वृक्षनिवृत्तौ आम्रखदिरादिनिवृत्तिः, वृक्षविशेषस्यैव आम्रादित्वेन प्रतीतेः; अन्यथा हि यदि कारणनिवृत्तावपि न निवर्तेत तत्कारणमेव न स्यात् । न हि यद् यस्मिन्नसत्यपि[3] भवति तत् तस्य कारणं युक्तम्; अतिप्रसङ्गात् । नापि

---

१. •नुपलब्धिरुक्ता—जा• ।
२. •दर्शनोपलम्भं—पा•; •दर्शिनः उपलम्भं—जा• ।
३. यस्मिन् सत्यपि—पा• ।

स्वोपलम्भस्य चार्थेषु निखिलेषु विनिश्चये।
कुतश्चिद् भवतो ज्ञानाद्धेतुत्वव्यापकत्वयो ॥ ३२७२ ॥
भवानेव तदा सिद्ध सर्वार्थज्ञोऽप्रयत्नत ।
ततश्च स्वात्मनि द्वेप कस्ते सर्वविदि स्वत ॥३२७३ ॥

---

यन्निवृत्तौ यन्न निवर्त्तते स तस्य स्वभावो युक्त, गौरिव गवयस्य। तस्माद् व्यापक एव स्वभावो व्याप्य कारणमेव च [ G 852 ] कार्यं निवर्त्तमान निवर्त्तयेत, नान्यद्, अतिप्रसङ्गात्। यथोक्तम्—

"तस्मात् तन्मात्रसम्बद्ध स्वाभावो भावमेव तु।
निवर्त्तयेत् कारण वा कार्यमव्यभिचारत ॥
अन्यथैकनिवृत्त्याऽन्यविनिवृत्ति कथ भवेत्।
नाश्ववानिति[1] मर्त्त्येन न भाव्य गोमतापि किम्" ॥
( प्र० वा० ३ २२–२३ ) इति ॥ ३२७० ३२७१ ॥

अथापि स्वोपलम्भस्य सर्वार्थान् प्रति हेतुत्व व्यापकत्व चाङ्गीक्रियते, तदा स्ववचनविरोध प्रतिज्ञायामापद्यत इति दर्शयन्नाह—स्वोपलम्भस्येत्यादि। हेतुत्वव्यापकत्वयोरिति। निश्चयापेक्षया षष्ठी। उपलम्भस्य चार्थेष्विति षष्ठीसप्तम्यौ हेतुत्वव्यापकत्वयोरित्येतदपेक्ष्य यथाक्रम सम्बन्धे विषयभावे च योज्ये। एतदुक्त भवति—यदि भवता कुतश्चित् प्रमाणात् स्वोपलम्भस्य सर्वार्थेषु हेतुत्वे व्यापकत्वे निश्चितम्, तदाऽऽत्मनि स्फुटतरमेव त्वया सर्वज्ञत्व प्रतिज्ञात भवति। न ह्यसर्वविदो ज्ञानमशेषज्ञेयव्यापक भवति। सर्वज्ञाभावसिद्धये च साधनोपादानात् तदेव निषिध्यत इति स्ववचनव्याघात ॥ ३२७२ ३२७३ ॥

एव वाग्निर्विशेषण स्वानुपलम्भो न सर्वविदोऽसत्त्वप्रसिद्धये निर्देष्टुमर्हति, नाप्युपलब्धिलक्षणप्राप्तस्य सतोऽनुपलम्भादिति विशेषणात् सविशेषण। तथा हि—स निर्दिश्यमान स्वशब्देन वा निर्दिश्यते, यथा नास्ति क्वचित् प्रदेशविशेषे घट उपलब्धिलक्षणप्राप्तस्यानुपलम्भादिति निर्देश, तथा सर्वज्ञाभावसिद्धये

[1] नास्तवानिति—पा०।

अत एव न दृश्योऽयं सर्वज्ञस्ते प्रसिद्ध्यति ।
तद् दृश्यत्वे हि सार्वज्ञ्यं तथैव स्यादयत्नतः ॥ ३२७४ ॥

---

ऽपि स्यात् । अथार्थान्तरस्य[1] तत्कारणव्यापकात्मन उपलब्धिलक्षणप्राप्तस्याभावोपदर्शनादस्वशब्देन, यथा—नास्त्यत्र धूमो वह्न्यभावात्, नास्त्यत्र शिंशपा वृक्षाभावादिति ! न ह्यप्रतिबद्धस्याहेत्वव्यापकभूतस्यान्यस्य विनिवृत्तावपरस्य नियमेन निवृत्तिर्युक्तेति पूर्वमुक्तम्—अतिप्रसङ्गापत्तेरिति । न [2]चाप्यनिश्चितस्वहेतुव्यापकव्यतिरेकस्यार्थस्य कारणव्यापकयोर्व्यतिरेकाद् व्यतिरेकः सिद्ध्यतीति, अतस्तत्राप्युपलब्धिलक्षणप्राप्तस्येति विशेषणमाश्रयणीयम् । एवं सर्वज्ञेऽपि स्यात् । यद्वा—अर्थान्तरस्य साक्षात् पारम्पर्येण वा विरुद्धस्यैव विधानात् तन्निषेधः, नाविरुद्धस्य; तस्य तत्सहभावसम्भवात् । [G. 851] यथा—नास्त्यत्र शीतस्पर्शो वह्नेरिति साक्षाद्विरुद्धस्य वह्नेर्विधानाच्छीतस्पर्शनिषेधः, तद्वत् सर्वज्ञनिषेधेऽपि स्यात् । पारम्पर्येण तु विरुद्धस्य कदाचिद् तद्व्यापकविरुद्धस्यैव वा विधानात् सर्वविदो निषेधः, यथा—तुषारस्पर्शव्यापकशीतविरुद्धवह्निविधानात् तुषारस्पर्शनिषेधः । तत्कारणविरुद्धविधानाद्वा, यथा—रोमहर्षादिकारणशीतविरुद्धदहनविशेषविधानाच्छीतकार्यरोमहर्षादिनिषेधः । तद्विरुद्धकार्यस्य वा विधानात्, यथा क्वचित् प्रदेशविशेषे शीताद्विविरुद्धवह्न्यादिकार्यस्य धूमादेर्विधानात् शीतस्पर्शनिषेध । तत्कारणविरुद्धकार्योपलम्भाद्वा, यथा—रोमहर्षादिकारणशीतविरुद्धवह्निकार्यधूमोपदर्शनाद् रोमहर्षादिनिषेधः—न[3] रोमहर्षादिविशेषयुक्तपुरुषवानयं[4] प्रदेशो धूमादिति । तद्विरुद्धव्याप्तस्य वा विधानात् तन्निषेध, यथा—ध्रुवभावित्वविरुद्धाध्रुवभावित्वव्याप्तस्य सापेक्षत्वस्य[5] विधानाद् ध्रुवभावित्वनिषेध इति । त एते सर्व एवानुपलब्धिप्रयोगाः सर्वज्ञाभावसिद्धये न सम्भवन्ति; तस्य सर्वविदः सर्वदैवानुपलब्धिलक्षणप्राप्तत्वात् । एषां चोपलब्धिलक्षणप्राप्तानुपलम्भप्रभेदत्वादित्येतद्दर्शयन्नाह[6]—अत एवेत्यादि । अत एव स्ववचनविरोधप्रसङ्गान्न भवता सर्वज्ञः स्वयमुपलब्धि-

---

1. यथार्था०—गा० । 2. चापनिश्चित०—पा० ।
3. पा०, गा० पुस्तकयोर्नास्ति । 4. पुरुषवानाय—गा० ।
5. सापेक्षस्य—पा० । 6. ०लम्भभेदत्वादित्येतद् दर्शयति—पा०, गा० ।

सर्वार्थविषयं ज्ञानं यस्य दृश्यः स ते कथम् ।
सर्वार्थविषयं ज्ञानं तथापि यदि नो भवेत् ॥ ३२७५ ॥
तेनादृष्टिविशेषोऽस्य[1] कारणव्यापकात्मनाम् ।
प्रकृत्या दृश्यरूपत्वात् सर्वज्ञस्य न सिध्यति ॥ ३२७६ ॥
इयं च त्रिविधा दृष्टिविरुद्धरूपा[2] प्रवर्तते ।
तत्तद्विरुद्धाद्यन्तर्गतिगतिभेदप्रयोगतः ॥ ३२७७ ॥
मूलप्रभेदरूपाया अस्या सर्वविदं प्रति ।
साधिते शक्तिवैकल्ये व्यस्ता अन्या अयत्नतः ॥ ३२७८ ॥

लक्षणप्राप्तोऽङ्गीकर्तव्य, अन्यथा हि स्वस्मिन् सर्वज्ञत्वमभ्युपेतं स्यात् ।

कथम् ? इत्याह—सर्वार्थविषयमित्यादि । यदि हि सर्वार्थगोचरम्, तथापि[3] ज्ञानं भवेदेव ते सर्वज्ञ उपलब्धिलक्षणप्राप्तो भवेन्नान्यथा, न ह्यसर्वविदा सर्वविदुपलम्भगोचरो भवति ॥ ३२७४ ३२७५ ॥

स्यादेतत्—मा भूदुपलब्धिलक्षणप्राप्तोऽस्माकं सर्वज्ञ, तथापि किमित्येतेऽनुपलब्धिप्रयोगास्तदभावसिद्धये न सम्भवन्ति ? इत्याह—तेनेत्यादि । यस्मादुपलब्धिलक्षणप्राप्तस्तव न भवति सर्वज्ञ, तेन कारणेन सर्वज्ञकारणव्यापकस्वभावानामदृष्टिविशेष [ G ८३५ ] उपलब्धिलक्षणप्राप्तानुपलम्भो न सिद्ध्यति । स्वभावकारणव्यापकानुपलब्धिप्रयोगा आद्यास्त्रयो न सिद्ध्यन्तीति यावत् ॥ ३२७६ ॥

यद्येवम्, अन्ये तर्हि शेषाः सिद्ध्यन्तु, तथापि सिद्ध [illegible] सर्वज्ञाभाव इति चेद् ? आह—इयं चेत्यादि । इयमेवानन्तरोक्ता स्वभावव्यापककारणानामदृष्टिरेषा प्रपञ्च्यमाना नवधा भिद्यते । कथम् ? इत्याह—तत्तद्विरुद्धाद्यन्तर्गतीत्यादि । तच्छब्देन प्रक्रान्तं स्वभावव्यापककारणाख्यं त्रयमभिसम्बध्यते । तेन स्वभावादिना विरुद्धं तद्विरुद्धम्, तच्च त्रिविधमेव भवति, स्वभावव्यापककारणविरुद्धभेदात्, तद्विरुद्धमादिर्यस्य तद् विरुद्धादि । आदिशब्देन विरुद्धकार्य–कारणविरुद्धकार्य–विरुद्धव्याप्तास्त्रयो गृह्यन्ते । पुनर्द्वितीयेन तच्छब्देन तदेव स्वभावादित्रयं सम्बध्यते ।

1 °विशेषोऽस्य—पा॰ गा॰ । 2 °न्तररूपा—गा॰ ।
3 तथापि—पा॰, गा॰, तथापि—गा॰ ।

॥ कार्यकारणताव्याप्यव्यापकत्वविरोधिताः ।

तच्च तद्विरुद्धादि चेत्[1] तत्तद्विरुद्धादीति । यथाक्रमं तयोरगतिगती तद्विरुद्धाद्यगतिगती । तदगतिस्तद्विरुद्धादिगतिश्चेत्यर्थः[2] । तयोर्भेदस्तेन प्रयोग इति समासः । तत्र तदगत्या साक्षात् त्रिविधा स्वभावकारणव्यापकानुपलब्धिर्निर्दिष्टा । अस्या एव त्रिविधाया अदृष्टेः शेषानुपलब्धयः पारम्पर्येण सूचिका इत्यत इयं त्रिविधानुपलब्धिरासां मूलभेदरूपा भवति । तथा हि—तद्विरुद्धगत्या स्वभावविरुद्धोपलब्धि, व्यापकविरुद्धोपलब्धिः, कारणविरुद्धोपलब्धिश्च निर्दिष्टा । आदिशब्देन विरुद्धकार्योपलब्धिः, कारणविरुद्धकार्योपलब्धिः, विरुद्धव्याप्तोपलब्धिश्च संगृहीताः । एताभिश्च पारम्पर्येण यथायोगं स्वभावव्यापककारणानुपलब्धयः सूच्यन्त इत्यतस्त्रिविधाया मूलप्रभेदरूपायाः सर्वज्ञाभावसिद्धि प्रत्यसामर्थ्यप्रतिपादनात् तच्छाखाभूतानां यत्नमन्तरेणैव प्रतिपादितं भवतीति नास्यां पृथगसामर्थ्यप्रतिपादनाय यत्नः कार्यः, न हि मूले छिन्ने शाखानामवस्थितिर्भवेत् । परमार्थतस्तु स्वभावानुपलब्धिरेव सर्वासां मूलभूता, अर्थान्तरभेदाश्रयणात् तु त्रिविधा मूलत्वेनोक्ता ॥ ३२७७–३२७८ ॥

स्यादेतत्—यदि सर्वज्ञोऽनुपलब्धिलक्षणप्राप्तः, तदा मा भूत्तदनुपलम्भविशेषसिद्धिः, [ G. 855 ] तत्कारणव्यापकयोस्तूपलब्धिलक्षणप्राप्तत्वात् किमिति तदृष्टिविशेषो न सिद्ध्यति, तद्विरुद्धादीनां चोपलभ्यस्वभावत्वादुपलम्भः किमिति न सिद्ध्येद् ? इत्याह—कार्यकारणतेत्यादि । कार्यकारणभावो व्याप्यव्यापकत्वं च[3] विरोधिता चेति द्वन्द्वः । प्रत्यक्षानुपलम्भसाधनो हि कार्यकारणभाव, सर्वज्ञादेरदृश्यत्वान्न तेन सह कार्यकारणभावः सिद्ध्यति । नापि व्याप्यव्यापकभावः; तस्याप्युपलब्धिलक्षणप्राप्तस्यानुपलम्भपूर्वकत्वात् । तथा हि—यन्निवृत्तो यन्नियमेन निवर्त्तते स तेन व्याप्तो व्यपदिश्यते, निवृत्तेश्च नानुपलब्धिलक्षणप्राप्तानुपलम्भमन्तरेण सिद्धिर्भवति । विरोधितापि दृश्ययोरेव वस्तुनो सिद्ध्यति, नादृश्ययोः । तथा हि—सहानवस्थानलक्षणस्तावद्विरोधोऽविकलकारणस्य भवतोऽन्यभावेऽभावाद् दृश्यते । भावाभावौ च नानुपलभ्यस्वभावयोर्वस्तुनोर्निश्चेतुं शक्यौ । परस्परपरिहारस्थित-

1. चेति—पा०, गा० । 2. ०दिगतिश्चे०—पा० ।
3. पा० गा० पुस्तकयोर्नास्ति ।

दृश्यत्वे सति सिद्ध्यन्ति यश्चात्मा सविशेषणः ॥ ३२७९ ॥
सर्वज्ञो न च दृश्यस्ते तेन नैता अदृष्टयः ।

लक्षणोऽपि विरोधो यद्द्वयव्यवच्छेदानान्तरीयको[1] यस्य परिच्छेदस्तयोर्व्यवस्थाप्यते, यथा क्रमाक्रमयोः । परिच्छेदश्च नादृश्ये सम्भवति ।

यद्येवम्, भावाभावादीनां कथं विरोधसिद्धिः, न हि तत्रोभयोर्दृश्यत्वमस्ति ? नैष दोषः; नहि भावाभावौ पृथक्परिच्छिद्य पश्चात्तयोरन्योन्यव्यवच्छेदव्यवच्छेदकभावात् विरोधो व्यवस्थाप्यते, किं तर्हि ? पृथक्परिच्छिन्नयोरेव । तथा हि—एकस्मिन् धर्मिण्येककालं तयोर्विरोधो व्यवस्थाप्यते, न तु धर्म्यन्तरे । न हि गोरभावे अश्वस्य भावविरोधः[2] कश्चित् । नाप्येकत्रधर्मिणि भिन्नकालयोस्तयोर्विरोधः, नहि प्रागभूतस्य[3] वा पश्चाद् भावाभावौ न सम्भवतः । एकस्मिंस्तु वस्तुनि तयोर्युगपत्परिच्छेदाद्विरोधः, न तु तत्रैव; परिच्छिद्य व्यवच्छेदात् । अपरिच्छिन्नस्य कथं व्यवच्छेद इति चेत् ? अत एव । यत एव न परिच्छिद्यते तत्र धर्मिणि तत एव तस्य व्यवच्छेदः सम्भवेत् । अन्यथा तत्र परिच्छिन्नधर्मस्य कथं व्यवच्छेदः शक्यते कर्तुम् । अयमेव हि तदभावव्यवच्छेदो य एव तत्परिच्छेदः, स एवान्याभावस्य तत्र परिच्छेदो य एवान्यव्यतिरिक्तस्य तस्य परिच्छेदः । तस्माद् यस्य धर्मिणोऽभावो व्यवच्छिद्यते, [G 856] भावश्च परिच्छिद्यते, सोऽवश्यं दृश्योऽभ्युपगन्तव्यः । न ह्यदृश्यस्य परिच्छेदः, नापरिच्छिन्नस्य तद्विपरीतधर्मव्यवच्छेदः सम्भवति । न त्वेवं सर्वज्ञे सम्भवति, न हि सर्वे नरा धर्मिणो दृश्याः कस्यचित्, येन तेष्वसर्वज्ञत्वव्यवच्छेदः सिद्ध्येत्; तस्यैव सर्वज्ञत्वप्रसङ्गात् । तस्मादनुपलभ्यधर्मिणि सर्वज्ञासर्वज्ञत्वयोर्विरोधो न सिद्ध्यति । स्वसन्ताने तु सिद्ध्यति, तत्रापि नानागतावस्थायाः तस्यास्तदानीमदृश्यत्वात् । तस्मात् स्थितमेतत्—दृश्यस्यैव कार्यकारणादिभावः सिद्ध्यतीति । यश्चात्मा सविशेषण इति । स सिद्ध्यतीति सम्बन्धः । तत्र आत्मा स्वभावः, सह विशेषणेन वर्तत इति सविशेषणः । तत्र विशेषणं त्रिविधविप्रकर्षरहितत्वम् । एता अदृष्टय इति । कारणाद्यनुपलब्धयः

१. यद्वच्छेदा०—पा०, यद्द्वयवच्छेदानानन्त०—पा० ।
२. ०विरोधः—बौ० ।
३. ०भूतस्य—पा० ।

तन्निराकरणे शक्ता निषेधाङ्गं न चापरम् ॥ ३२८० ॥
यदि त्वदृष्टिमात्रेण सर्ववित् प्रतिषिध्यते ।
तदा मातृविवाहादिनिषेधोऽपि भवेत् तव ॥ ३२८१ ॥
सुताख्यकार्यदृष्टया चेद्धेतोस्तस्यास्तितागतिः ।
तदभावेऽपि तत्कार्यं ननु कस्याश्चिदीक्षते ॥ ३२८२ ॥
अन्योपलम्भतस्तस्य नासत्ता गम्यते यदि ।

---

सर्वज्ञस्य केनचित् सह कार्यकारणभावविरोधव्याप्यव्यापकभावासिद्धेः । सत्स्वन्येषूपलम्भकारणेषु क्वचित् कदाचित् प्रत्यक्षत्वासिद्धेश्च । निषेधाङ्गं न चापरमस्त्यनुपलब्धिविशेषं त्यक्त्वा ॥ ३२७९–३२८० ॥

पुनरपि स्वानुपलम्भस्य निर्विशेषणस्य प्रयोगेऽतिप्रसङ्गापादनेनानैकान्तिकतामुद्भावयन्नाह—यदीत्यादि । मातृविवाहादीत्यादिशब्देन स्वपितुः सुरतोपभोगादिपरिग्रहः तत्रश्च जारजातत्वमापन्नं भवत इति भावः । यथोक्तम्—"यद्यत्र भवतो मन्दचक्षुषोऽनुपलब्धिरर्थानपाकुर्यात् हन्त हतोऽसि, पितृव्यपदेशनिबन्धनस्याप्यप्रवृत्तिप्रसङ्गात्" ( ) इति ॥ ३२८१ ॥

अत्र परस्य परिहारमाशङ्कते— सुताख्येत्यादि । तस्य मातृविवाहादिकस्य हेतोः सुताख्यादिकार्यदर्शनादनुमानप्रमाणतः सिद्धत्वात् तदनुपलब्धिर्न सिद्धेति न तदभावप्रसङ्गः । तदभाव इत्यादिनाऽस्य कार्यहेतोर्व्यभिचारमादर्शयति । तदभाव इति तस्य विवाहस्याभावे । तथा विवाहितभर्त्रा च सह सुरतोपभोगाभावेऽपि कस्याश्चिद् दुष्टयोषितः परपुरुषसङ्गत्या सुताख्यं कार्यमुपलभ्यते, तद्वद् भवतो[1] मातुरपि स्यादित्यसिद्धमनुमानम्, ततश्च भवतो जारजातत्वप्रसङ्गो [G. 857] दुर्निवारः । आचार्यधर्मकीर्तिनाऽपि विशिष्टपितृव्यपदेशनिबन्धनाभावप्रसङ्गापादनस्य विवक्षितत्वाज्जारजातत्वप्रसङ्गापादनमेव कृतम् ॥ ३२८२ ॥

अन्योपलम्भत इत्यादिना परस्योत्तरमाशङ्कते । अन्येषां पुरुषाणामुपलम्भोऽन्योपलम्भः । तस्येति मातृविवाहादेः । नासत्ता गम्यते, किं तर्हि ?

---

1 भवद्—पा० ।

ननु चान्योपलम्भस्ते सिद्धस्तद्विषयः कथम् ॥ ३२८३ ॥
उपदेशान्न सर्वज्ञोऽप्ययं किं वेद्यते तथा ।
इदं च स्वोक्तमपरं किमत्र न समीक्ष्यते ॥ ३२८४ ॥
सर्वदा चैव पुरुषाः प्रायेणानृतवादिनः ।
यथाऽद्यत्वे न विस्रम्भस्तथातीतार्थकीर्तने ॥ ३२८५ ॥
मा वा भूदुपदेशोऽस्य प्रामाण्यं वा तथापि यः ।
कुतोऽयं निश्चयः सर्वैः सर्वविन्नोपलभ्यते ॥ ३२८६ ॥
इत्येवं[1] निश्चयस्तस्मात्[1] सर्वसत्त्वात् प्रदर्शने ।
तद्‌दृष्टौ सर्वविद्भूतो भवानिति च वर्णितम् ॥ ३२८७ ॥

सचैव । अन्यान्योपलम्भसिद्धिमुद्भावयन्नाह[2]—ननु चेत्यादि ॥ ३२८३ ॥

कथमिति पृष्ट सन् पर आह—उपदेशादिति । सिद्ध इति प्रकृतेन सम्बन्ध । [3]अतिप्रसङ्गापादनमुपदेशस्यानैकान्तिकत्वमादर्शयन्नाह—न सर्वज्ञोऽपीति । अयमिति उपदेश । सर्वज्ञे किं न विद्यते, अपि तु विद्यत एव । तत्र यदि मातृविनादावुपदेश प्रमाणीक्रियते, सर्वज्ञोऽस्तीत्ययमस्मदीयोऽप्युपदेश किं न प्रमाणीक्रियेत, विशेषाभावात । किञ्च— स्वनावैवोपदेशस्याप्रामाण्यमुक्त भवतेति दर्शयति—इद चेत्यादि ॥ ३२८४–३२८५ ॥

एव तावत्र स्त्रोपलम्भनिवृत्ति सर्वज्ञाभावसिद्धये प्रमाण युक्ता, निर्विशेषणाया अनैकान्तिकत्वात् सविशेषणायाश्चासिद्धत्वात्र सर्वज्ञसत्त्वसाधने प्रामाण्य युक्तमित्येतद् प्रतिपादयन्नाह—मा वा भूदित्यादि । उपदेश इति । सर्वविदोऽस्तित्वप्रतिपादक इति शेष । अस्य = प्रामाण्यं वेत्युपदेशस्य । [O 858] सर्वसत्त्वात्मदर्शन इति । सर्वसत्त्वस्वभावदर्शने । अस्त्येवास्माक सर्वसत्त्वात्मदर्शनमिति चेद्[2] आह—तद्‌दृष्टावित्यादि । तद्‌दृष्टौ = सर्वसत्त्वात्मदृष्टौ ॥ ३२८६-३२८७ ॥

---

१–१ एव हि निश्चयो हि स्यात्—पा०, गा० ।
२. ०सिद्धि", तदा०—पा०, गा० ।
३. ०प्रसङ्गापादनमुप०—पा०, प्रसङ्गापादानादुप०—गा० ।

अन्यथा संशयो युक्तोऽनुपलम्भेऽपि सत्त्ववत् ।
केचित् सर्वविदः सन्तो विदन्तीति हि शङ्क्यते ॥ ३२८८ ॥
स्वयमेवात्मनाऽऽत्मानमात्मज्योतिः स पश्यति ।
इत्यप्याशङ्क्यतेऽतश्च सर्वादृष्टिरनिश्चिता ॥ ३२८९ ॥
तथा हि सर्वशब्देन सर्वे प्राणभृतो मताः ।
स च सर्वाबहिर्भूत इत्यदृष्टिरनिश्चिता ॥ ३२९० ॥
तदेकपरिहारेण प्रतिबन्धोऽत्र को भवेत् ।
न ह्यन्यैरपरिज्ञानात् स्वरागादि निवर्तते ॥ ३२९१ ॥

अन्यथेति । सर्वसत्त्वात्मदर्शनाभावे । सत्त्ववदिति देशादिविप्रकृष्टस्य वस्तुनः सत्तायामिव सत्त्ववत् । एतदुक्तं भवति—यथा देशादिविप्रकृष्टस्य वस्तुनः सत्यप्यनुपलम्भे तत्सत्तायां संशयो भवति, सत्यपि वस्तुन्यनुपलम्भात्; एवमन्यपुरुषवर्तिनि सर्वज्ञविषयोपलम्भेऽपि संशयो युक्तः ।

अथ वा अयमर्थः—यथा सर्वज्ञसत्तायामनुपलम्भेऽपि संशयः, तथा सर्वज्ञत्वविषयोपलम्भेऽपि संशयः; द्वयोरपि स्वभावविप्रकर्षेणानुपलम्भसम्भवात् । ननु वस्तुसत्त्वे संशयो युक्त; यत सत्यपि वस्तुनि तदनुपलम्भस्य दर्शनात् कदाचित् स्यादिति सम्भाव्यमानत्वात्, न तु सर्वज्ञदर्शनं कस्यचिद्दर्शनस्य सम्भाव्यते, न चासम्भाव्यमाने वस्तुनि प्रेक्षावतः संशयो युक्तः ? इत्यत आह—केचिदित्यादि ।

स्वयमेवेति । परसिद्धान्ताभ्युपगमादुक्तम् । स्वयमेवेत्यस्यैव निर्देश आत्मनेति । आत्मेति पुरुषः । ज्योतिरिति । चिद्रूपत्वेन प्रकाशात्मकत्वादात्मनः ॥ ३२८८-३२८९ ॥

तथा हीत्यादिना इदमेव समर्थयते । स चेति सर्वज्ञ. ॥ ३२९० ॥

स्यादेतद्—अर्वाग्दर्शिन एव सर्वशब्देन विवक्षिता न तु सर्वज्ञः, तेन शङ्का न भविष्यति ? इत्याह—तदेकेत्यादि । यदि हि तस्य सर्वज्ञस्य परिहारेणान्येषामर्वाग्दर्शिनामनुपलम्भोहेतुत्वेनोपादीयते [ B 859 ] तदाऽनैकान्तिकता; तस्य स्वानुपलम्भवत् सर्वज्ञाभावेन सहाविनाभावलक्षणस्य प्रतिबन्धस्याभावात् । न हीत्यादिना तमेव प्रतिबन्धाभावं समर्थयते ॥ ३२९१ ॥

केचिदर्वाग्दृशो यापि [1]प्रपत्स्यन्तेऽनुमानतः ।
काश्चिदेव हि केषाञ्चिन्निपुणा मतयः क्वचित् ॥ ३२९२ ॥
तथा हि वेदभूम्यादेः क्षणिकत्वादिसाधनम् ।
पुरः प्रोक्तं सुविस्पष्टमपि नो लक्षितं जडैः ॥ ३२९३ ॥
तदेवं शङ्कया नास्य ज्ञानाभावोऽपि निश्चितः ।
यतोऽसत्त्व प्रपत्स्यन्ते[1] निर्विशङ्का हि जातय ॥ ३२९४ ॥
अभावेऽप्यनुमानस्य नातोऽसत्ताविनिश्चय ।
असमारब्धधूमादिकार्यवह्न्याविसत्त्ववत् ॥ ३२९५ ॥

---

एवमनुपलम्भाख्यस्य प्रमाणस्यानैकान्तिकत्वम्, असिद्धत्व च प्रतिपादितम्, इदानीमभावप्रमाणविषयीकृतविग्रहत्वादित्यस्यापि हेतो सन्दिग्धासिद्धतेति प्रतिपादयन्नाह—केचिदित्यादि । केचिन्निपुणमतय अर्वाग्दर्शिनोऽपि सन्त कदाचिदनुमानत [2] सर्वज्ञ प्रतिपत्स्यन्त इति सम्भाव्यमानत्वात् सन्दिग्धासिद्धत्वम् 'अभावप्रमाणविषयीकृतत्वात्' इत्यस्य हेतो । तथा हि—वेदध्वनिधरणिगिरितनुतरुआदीना क्षणिकत्वानात्मत्वादि स्फुटतरमपि भवद्भिर्मीमासकपशुभिरनुपलक्षितमपि सत्, अस्माभिर्दृढतरसाधनोपदर्शनेन प्रसाधितम् । तथा सर्वज्ञे यदि नाम साधनमिदानी नोपलभ्यते, तथापि सम्भाव्यमानत्वात् सन्दिग्धमित्यत प्रमाणपञ्चकविरहस्वभावाभावप्रमाणविषयीकृतविग्रहत्वमसिद्धम्, सन्दिह्यमानत्वात् । यत इति मानाभावात् ॥ ३२९२–३२९४ ॥

किञ्च—मा भूत्नामार्वाग्दर्शिना सर्वेषामेव सर्वज्ञसिद्धावनुमानम् । तथाप्यनैकान्तिकता हेतोरिति दर्शयन्नाह—अभावेऽप्यनुमानस्येत्यादि । प्रतिपादित हि पूर्वं यथा न प्रमाण वस्तुनो हेतुर्नापि व्यापकम्, तत् कथमस्य निवृत्तावपि वस्तु निवर्तेत । तथा हि—अयोगोलकवह्न्यादेरनारब्धधूमादिकार्यस्याप्रवरकानुदरान्तर्गतस्य लिङ्गाभावादनुमानमुत्पद्यते । अथ च तस्य सत्त्वमनिवृत्तमिति नासत्त्वानिश्चय, तद्वत् सर्वज्ञाभावसाधने अनुमानाभावे सत्यय । अत इति अनुमानाभावात् ।

1–1 प्रपदन्ते—पा०, गा० ।
2. ०दनुमिते —पा० ।

कदाचिदुपलब्धेऽर्थे सन्देहो ननु युज्यते ।
यथा स्थाणौ तथा ह्येष उभयांशावलम्बकः ॥ ३२९६ ॥
यतः स्थाणुनरौ दृष्टौ कदाचिदिति तद्गतिः ।
संशयो युज्यते तत्र दृष्टस्त्वेवं न सर्ववित् ॥ ३२९७ ॥
ननु मातृविवाहादेरसत्त्वं मुक्तसंशयम् ।
एतेनैव प्रकारेण तव धीमन् प्रसज्यते ॥ ३२९८ ॥
अस्माभिः संशयस्त्वत्र प्रमाणाभावेऽपि वर्ण्यते ।
भावेऽभावे च वस्तूनां प्रमाणविनिवृत्तितः ॥ ३२९९ ॥

---

असमारब्धं धूमादिकार्यं येन वह्न्यादिना स तथोक्तः, असमारब्धधूमादिकार्यश्चासौ वह्न्यादिश्चेति विग्रहः; तस्य सत्तायामिव सत्त्ववत् ॥ ३२९५ ॥

[G 860] कदाचिदुपलब्धेऽर्थे इत्यादिना परः अयोगोलकवह्न्यादिदृष्टान्तसंशयकारणमुपलम्भं दर्शयन्, सर्वज्ञे च तदभावादयुक्तः संशय इति प्रतिपादयन् हेतोरनैकान्तिकतामेव समर्थयते । यो ह्यर्थः कदाचिदुपलब्धपूर्वः, तत्रैव संशयो युज्यते, यथा—स्थाणौ, नान्यत्र; तस्योभयांशावलम्बित्वात्[1] । अन्यथा हि यत् किञ्चिददृष्टं तत् सर्वमालम्ब्येत संशयः, तस्योभयांशावलम्बित्वनियमो न स्यात् । तेनायोगोलकवह्न्यादौ युक्तः संशयः; न तु सर्वज्ञे, तस्य कदाचिदप्यनुपलम्भात् ॥ ३२९६-३२९७ ॥

नन्वित्यादिना प्रतिविधत्ते । यदि कदाचिदुपलब्धेऽर्थे संशयोऽन्यत्राभावनिश्चयः, तदाऽमुना न्यायेन भवतो मातृविवाहादेरसत्त्वमसंशयितं[2] प्राप्नोति । न हि भवता कदाचिन्मातृविवाह उपलब्धपूर्वः, येनात्रापि नाभावनिश्चयो भवेद् भवतः । अत्र च शेषं चोद्यमुत्तरपूर्वकवद् वाच्यम् । धीमन्नित्युपहासवचनम् ॥ ३२९८ ॥

यद्येवम्, निर्निबन्धन एव तर्हि संशयः प्राप्त ? इत्याह— अस्माभिरित्यादि । प्रमाणाभावमात्रस्य हि वस्तुभावाभावयोरपि प्रदर्शनादव्यवस्थितत्वम्,

---

१. ०तयोभयांशा०—पा० ।
२. ०विवाहादेरसत्त्व०—पा० ।

नेत्रादीनां हि वैकृत्ये वस्तुसत्त्वेऽपि न प्रमा ।
तेषामविकलत्वेऽपि वस्त्वभावाद् घटादिवत् ॥ ३३०० ॥
ततश्चानुपलम्भस्य केवलस्य द्विधेक्षणात् ।
तत्प्रमाभावतोऽप्यस्तु सर्वज्ञे संशयो वरम् ॥ ३३०१ ॥
स हि सन्नपि नेक्ष्येत जडैरन्यविकल्पवत् ।
साक्षादयोगुडाङ्गारवह्निवन्न[1] च कार्यकृत् ॥ ३३०२ ॥

अत. सदसत्त्वानिश्चयानुत्पत्तेरेव संशयो वर्ण्यते । यथोक्तम्—"उपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय" (न्या. द. सू. १.१.२३) इति ॥३२९९॥

स्यादेतत्—नैव वस्तुसदसत्त्वयोरुभयत्रापि प्रमाणनिवृत्तिर्दृश्यत इत्याह—नेत्रादीनामित्यादि । [ G 861 ] तथा हि—सत्यपि घटादिके वस्तुनि नेत्रविकलस्य न प्रमाण प्रवर्त्तते । तेषां च नेत्रादीनामवैकल्येऽपि विषयाख्यस्य वस्तुनोऽसन्निहितत्वेनासत्त्वेऽपि न प्रवर्त्तते इति प्रकृतेन सह सम्बन्ध । यथा घटादौ योग्यदेशासन्निहिते । केवलस्येति दृश्यताविशेषणरहितस्य । द्विधेक्षणादिति भावेऽभावे च । तदिति तस्मात् । वरमिति । कुशलमूलप्रतिसन्धानकारणात् । तथा हि—मिथ्यादृष्ट्या समुच्छिन्नकुशलमूलानां कुशलमूलप्रतिसन्धान[2] काक्षाऽस्ति, "दृष्टिभ्यां वर्ण्यते सन्धि काक्षाऽस्ति दृष्टिभ्याम्" इति वचनात् । अत एव तत्र तत्राचार्याः संशयं विदधते—'भावे किं प्रमाणमिति चेदत एव संशयोऽस्तु" ( ) इति ॥ ३३००-३३०१ ॥

स्यादेतत्—यदि सर्वज्ञोऽस्ति किमिति कदाचित् केनचिन्नोपलभ्यते; यदि नामार्वाग्दर्शिनां नित्यानुपलभ्योऽसाविति स्यात्, तथापि तत्कार्यं वा किं न केनचित् गृह्येत, न हि चक्षुरादीनामप्रत्यक्षत्वे तत्कार्यस्यापि ज्ञानस्याप्रत्यक्षत्वेन भवितव्यम् ? इत्यत आह—स हि सन्नपीत्यादि । 'नेक्ष्येत साक्षात्' इति सम्बन्धनीयम् । न हि यावत् किञ्चित् सत्त्वं सर्वमुपलभ्यम्, येनोपलम्भाभावात् सर्वज्ञाभावः स्यात्, यतोऽप्यन्यपुरुषगतस्य विकल्पस्य परैरनुपलम्भात् । नाप्यवश्य

१. गुडाङ्गारवह्निवन्न—पा० ।
२. ॰प्रतिसन्धाने—गा० ।

तत्कार्यं वा यदाऽदृश्यमन्यकल्पजरागवत् ।
कार्ये दृश्येऽपि वा तेन नान्वयोऽस्य प्रतीयते ॥ ३३०३ ॥
सर्वार्थज्ञो यतोऽदृश्यः सदैव जडधीदृशाम् ।
नातोऽनुमानतस्तस्य सत्ता सिद्धिं प्रयास्यति ॥ ३३०४ ॥
अहेत्वव्यापकं चोक्तं प्रमाणं वस्तुनोऽस्य च ।
निवृत्तावस्य भावोऽपि दृष्टस्तेनापि संशयः ॥ ३३०५ ॥
तस्मात् सर्वज्ञसद्भावबाधकं नास्ति किञ्चन ।

---

कारणानि सदैव समारब्धकार्याणि भवन्ति, येन सर्वज्ञस्य कार्यानुपलम्भादसत्त्वं स्यात्; अनारब्धधूमकार्यस्याप्ययोगोलकवह्न्यादेर्दर्शनात् । भवतु नाम सदैव कारणानां कार्यवत्त्वम्, तथापि न तत्कार्याभावनिश्चयः, न हि [ G. 862 ] सर्व-कार्यमुत्पन्नमपि दृश्यत्वेन व्याप्तम्, येन कार्यानुपलब्ध्या तदभावः सिद्ध्येत्; उत्पन्नस्यापि कार्यस्यादर्शनात् । अन्यकल्पजरागवदिति । यथाऽन्यस्य पुरुषस्य करपादयोर्निशोमनस्काराज्जातोऽपि रागो नोपलभ्यते, न चास्याभावः । सत्यपि वा कार्यदर्शने तत्कारणस्यातीन्द्रियत्वादगृहीततदन्वयव्यतिरेकस्य पुंसस्तदनुमाना-नुमानानुत्पत्तिसम्भवात्, तथा सत्यपि 'सर्वज्ञेनानुमानात् सिद्धिर्भवेदिति सम्भा-व्यते । जडधीदृशामिति । धीरेव दृक् धीदृग्, जडा धीदृग् येषां ते तथोक्ताः । अपि च पूर्वमुक्तम्—यथा न प्रमाणं वस्तुनो हेतुः, नापि व्यापकम्, तत् कथमस्यानुमानस्याहेत्वव्यापकभूतस्य[2] निवृत्तावपि वस्तु निवर्त्तेतेति भावः । अहेतुश्च तदव्यापकं चेति तथोक्तम्—न चाप्येतच्छक्यं वक्तुम्; अकारणाव्यापक-भूतस्याप्यनुमानाख्यस्य प्रमाणस्य निवृत्तौ वस्तु निवर्त्तमानं दृष्टमेव[3] । न हि दृष्टेऽनुपपन्नं नामेत्याशङ्क्याह—निवृत्तावस्य भावोऽपि दृष्ट इति । अस्या-नुमानस्य निवृत्तावपि सत्यामस्य वस्तुनो भावोऽपि दृष्टः, यथा—अयोगोलक-वह्न्यादेरिति पूर्वमुक्तम् ॥ ३३०२–३३०५ ॥

---

१. सर्वेनानु—पा० ।
२. •हेत्वव्यापक•—पा० ।
३. दृष्टमेवमिति—पा० ।

सर्वज्ञसद्भावसाधकं प्रमाणम्

प्रमाणं साधकं त्वस्य विस्तरेणाभिधास्यते[1] ॥ ३३०६ ॥
निःशेषार्थपरिज्ञानसाधने विफलेऽपि च ।
सुधियः सौगता यत्नं कुर्वन्त्यन्येन चेतसा ॥ ३३०७ ॥
स्वर्गापवर्गसम्प्राप्तिहेतुज्ञोऽस्तीति गम्यते ।
साक्षान्न केवलं किन्तु सर्वज्ञोऽपि प्रतीयते ॥ ३३०८ ॥
ततश्च बाधकाभावे साधने सति च स्फुटे ।
कस्माद् विप्रतिपद्यन्ते सर्वज्ञे जडबुद्धयः ॥ ३३०९ ॥

---

एवं विस्तरेण सर्वज्ञाभावसिद्धये बाधकप्रमाणासम्भवं प्रतिपाद्योपसंहरति—तस्मादित्यादि । स्यादेतत्—यथास्माकं न किञ्चित् तद्बाधकं प्रमाणमस्ति, तथा भवता[2] तत्साधकमपि ? इत्यत्राह—साधकं त्वस्येति ॥ ३३०६ ॥

यदुक्तम्—"समस्तावयवव्यक्तिविस्तरज्ञानसाधनम्" ( तत्त्व० ३१३७ ) इत्यादि, अत्राह—निःशेषार्थेत्यादि । अन्येन[3] चेतसेति अन्येनाभिप्रायेण[3] ॥ ३३०७ ॥

क्व पुनरसौ ? इत्याह—स्वर्गेत्यादि [G 863] मुख्यं हि तावत् स्वर्गमोक्षसम्प्रापकहेतुज्ञत्वसाधनं भगवतोऽस्माभिः क्रियते । यत्पुनरशेषार्थपरिज्ञातृत्वसाधनमस्य तत्प्रासङ्गिकम्, अन्यत्रापि भगवतो ज्ञानप्रवृत्तेर्बाधकप्रमाणाभावात् साक्षादशेषार्थपरिज्ञानात् सर्वज्ञो भवन् न केनचिद् बाध्यत इति, अतो न प्रेक्षावतां तत्प्रतिक्षेपो युक्तः । किन्तु ये सर्वज्ञत्वाधिगमार्थिनस्तेषां तदर्थप्रवृत्तिर्युक्तैवेति[4] दर्शितं भवति ॥ ३३०८ ॥

ततश्चैवं बाधकप्रमाणाभावे सति वक्ष्यमाणे च परिस्फुटे सर्वज्ञसाधने योऽयं भवता निश्चयैकविषयस्य सर्वज्ञस्य प्रतिक्षेपः—"सर्वे एव पुरुषा रागादिभिरविद्यया[5] चोपद्रुता[5]" इति स केवलं मोहादेवेति दर्शयति—ततश्चेत्यादि ॥ ३३०९ ॥

---

१. ०भिधीयते—जै० पुस्तके पाठः ।
२. भवता न—गा० ।
३-३. अन्येन चेतसेति, अन्येनाभि०—पा० ।
४. ०र्युक्ता चेति—पा०, गा० ।
५-५. ०रविषया नोपद्रुता—पा०, गा० ।

मा भूद् वा साधनं तत्र बाधके त्वविनिश्चिते ।
संशयः स्यादयं त्वेषा निश्चयः किन्निबन्धनः ॥ ३३१० ॥
भूतादिबोधने शक्ता चोदनैवापरं न तु ।
इत्ययं नियमो युक्तो ह्यन्यासत्त्वे विनिश्चिते ॥ ३३११ ॥
प्रधानपुरुषार्थज्ञसर्वार्थज्ञप्रसिद्धये ।
तच्च मानं पुरः प्रोक्तं पश्चादन्यच्च वक्ष्यते ॥ ३३१२ ॥
अतः सर्वजगत्सूक्ष्ममेदज्ञार्थप्रसाधने ।
नास्थाने क्लिश्यते लोकः सरम्भाद् ग्रन्थवादयोः ॥ ३३१३ ॥

---

स्यादेतत्—तथाभूतपुरुषसाधकं प्रमाणं तथाविधं नास्तीत्येवं मन्यमानैरस्माभिः प्रतिक्षिप्यते, न तु मोहादित्याह—मा भूद् इत्यादि । एतच्चाभ्युपगम्योच्यते, साधनं तु वक्ष्यमाणमस्त्येव । अयं निश्चय इति 'नास्ति सर्वज्ञ' इति । एषा[1] मीमांसकानाम् ॥ ३३१० ॥

यच्चोच्यते भवद्भिः—'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुं नान्यत्किञ्चनेन्द्रियम्' ( मी० द०, शा० भा० १.१.२ ) इति, एतदपि केवलं प्रतिज्ञामात्रमप्रमाणकमेवोद्घोष्यते भक्तिवादेनेति दर्शयति—भूतादीत्यादि । अपरमिति सर्वज्ञप्रत्यक्षादि । अन्यासत्त्व इति अन्यस्य सर्वज्ञस्यासत्त्वे विनिश्चिते सत्येव वक्तुम्, नान्यथा, अवधारणस्य नैष्फल्यात् ॥ ३३११ ॥

"तत्र सर्वं जगत्सूक्ष्म" ( तत्त्व० ३१४० ) इत्यादावाह—प्रधानेत्यादि । [ G. 864 ] न ह्यस्माभिः सर्वज्ञविषया चिन्ता मुक्त्वा सर्वज्ञसाधने प्रयत्नः क्रियते, किं तर्हि ? प्रधानभूतधर्मज्ञसाधन एव । तथा च पूर्वम्—'तेनार्थापत्तिलभ्येन धर्मज्ञोपगमेन' (तत्त्व० ३२६६) इत्यादिना धर्मज्ञसाधनेऽर्थापत्त्याख्यं भवन्मतेनैव प्रमाणमुक्तम्, पश्चाच्चानुमानाख्यं प्रमाणमभिधास्यते, तेन नास्थाने क्लेश क्लिश्यते, किं तर्हि ? स्थान एव ॥ ३३१२–३३१३ ॥

---

१. एवं—पा०, गा० ।

भूतार्थभावनोद्भूतमानसेनैव चेतसा ।
अप्राप्ता एव वेद्यन्ते निन्दिता अपि संवृतौ ॥ ३३१८ ॥
यत एव न वेदादिप्रोक्तार्थप्रतिपादकम् ।
तायिनो दृश्यते वाक्यं तत एव स सर्ववित् ॥ ३३१९ ॥

स्यादेतत्—यथा रसनेन्द्रियसम्बन्धादन्येषां मद्यादिसंवित्तो दुःखाद्यनुभवः, तथा मनसा संवेदयतः प्राप्नोतीति? नैतदस्ति; रसनादीन्द्रियसम्बन्धेनानुभूयमाना रसादय इन्द्रियस्यानुग्रहोपघातं कुर्वन्तो दुःखादिहेतवो भवन्ति। ते चाकुशलादिकर्मानुरूपेण विपर्यस्तचेतसां केषाञ्चिदेव तथा दुःखादिहेतुत्वेन प्रख्यायन्ते, न सर्वेषाम्। यथा हि प्रेतानां पूयादिरूपेण सलिलादि। न चैवं[1] भगवतः सर्वमस्ति। तथा हि—मनसैव संवेदनान्नेन्द्रियोपघातादिसम्भवः, अनास्रवधर्मव्यवहारात्मकत्वात् भगवतो नापि सास्रवकर्माधिपत्यसम्भवः, अविपरीतानित्यादिरूपेण संवेदनान्नापि विपर्यस्तत्वम्। अत एव भगवतो मानसस्यापि दौर्मनस्यादिलक्षणस्य दुःखादेरसम्भवः; तस्य मोहजत्वात्। एतच्च सर्वं बाह्यार्थसम्भवे सति चोद्यमवतरति। विज्ञानवादनये तु दूरीकृतावकाशमेतत्। तथा हि—परमार्थतो रूपस्कन्धासम्भवान्न सन्त्येवाशुच्यादयस्तेषाम्, मा भूत् तत्परिकल्पिता वासना; बोधमात्रसमुत्थितत्वात्। अतो न[2] सात्मीकृतपरमार्थदर्शनानां दूरीभूतदोषाशुच्यादिप्रतिभासानां दर्शने प्रतिभासन्ते, यथा तिमिरादिदोषापगमेऽनुपहतचक्षुषां दर्शने, न केशादयः। यथोक्तम्—

"तत्त्वज्ञानेन[3] भासन्ते तस्याशुचिरसादयः।
असंवेद्यास्ततः सिद्धा द्वितीयशशिबिम्बवत्॥" (        ) इति।

यस्य तु विभस्य व्यापितया सकलाशुचिदेशसम्बद्धा वेदध्वनयो वदनोदरान्तवर्तिनः सदैव, स कथमिह लोके न निन्द्यो भवेत्। ॥३३१७–३३१८॥

"न च वेदोपवेदाङ्ग०" (तत्त्व० ३१९५) इत्यादावाह— यत एवेत्यादि।
यदा यैवावस्थितं वस्तु सदादिरूपेण, तस्य तथैव ज्ञानात् सर्वविद्भवति। न च यथा वेदे निर्दिष्टा आत्मादयोऽर्थाः, ते तथैव सन्ति; प्रमाणेन बाध्यमानत्वात्, तत्कथं

१. चैवं—गा०। २. न ते—गा०।
३. तत्त्वज्ञानेन—जै०।

तदभ्यासादियुक्तानां गुणरत्नाकरं परम् ॥ ३३२२ ॥
ईदृक् च परमं तत्त्वं जानन्ति कवयो यदि ।
प्रधानपुरुषार्थज्ञान् सर्वज्ञान् को न मन्यते ॥ ३३२३ ॥
इदं च वर्धमानादेर्नैरात्म्यज्ञानमीदृशम् ।
न समस्त्यात्मदृष्टौ हि निविष्टाः[1] सर्वतीर्थिकाः ॥ ३३२४ ॥
स्याद्वादाक्षणिकत्वादि[2] प्रत्यक्षादिप्रबाधितम्[3] ।
बह्वेवायुक्तमुक्तं यैः स्युः सर्वज्ञाः कथं नु ते ॥ ३३२५ ॥
बाह्लीकादिप्रसिद्धेऽस्मिन् प्रत्यक्षेऽर्थे स्खलन्ति ये ।
कथं सम्भाव्यते तेषामत्यक्षाधिगमः स्फुटः ॥ ३३२६ ॥
असर्वज्ञत्वमेवं तु विस्पष्टमवगम्यते[4] ।
मिथ्याज्ञानानुषङ्गित्वाद् विपरीतप्रकाशनात् ॥ ३३२७ ॥

कथं हिताय तत्प्रभवति येन तदर्थं देशितम् ? इत्याह— ज्ञातमित्यादि । ज्ञातं साक्षात्कृतं सत्क्लेशजन्मादिलक्षणस्याशेषानर्थराशेर्निवर्त्तकं भवति । उत्तरकालमपि तदभ्यस्यमानं "द्रव्यादिनैश्रेयिकगुणाभिनिवर्त्तकमित्येव परमं पुरुषार्थोपयोगि-तत्त्वं यदि कवयोऽधिगच्छन्ति, तेऽपि सन्तु सर्वज्ञाः । न ह्यस्माभिरेकपुरुषाव-धिकमेव सर्वज्ञत्वमभ्युपेयते, किं तर्हि ? य एवं यथोदिततत्त्ववेदी स एव सर्ववि-दिष्यते, नान्यः । न चैवं कवीनामस्ति, तेनातिप्रसङ्गो न भवति ॥३३२२–२३॥

[ G. 867 ] एतेन यदुक्तम्—"स सर्वज्ञेषु च भूयस्सु" ( तत्त्व० ३१४७ ) इत्यादि, तदपि प्रत्युक्तमिति दर्शयन्नाह—इदं चेत्यादि । यथोक्तं तत्त्वज्ञानं यदि वर्धमानकपिलादीनां सम्भवेत्, तदा तेषामपि सर्वज्ञत्वं भवतु, यावता[5] सर्वं एवामी सर्वदोषप्रसवहेतुसत्कायात्मग्रहग्राहगृहीताः प्रत्यक्षादिप्रमाण-बाधिताक्षणिकादिपदार्थानामुपदेष्टारः, तत्कथमाकुमारमतिप्रतीतिपथमुपगतेष्वपि पदार्थेषु प्रस्खलतामेषामतीन्द्रियार्थदर्शनं सम्भावनापथमवतरिष्यति, येनोच्यते—

1. विनष्टाः—पा०, गा० ।
2. ०क्षणिकत्वादि—पा० ।
3. ०प्रबोधितम्—पा० ।
4. असष्ट०—पा०, प्रसष्ट०—गा० ।
5. स्पष्टादि०—पा०, गा० ।
6. यथा—पा०, गा० ।

स्थाणौ नर इति भ्रान्तः प्रतिपत्ता[1] यथा परः ।
सर्वाभिश्च परीक्षाभिर्विज्ञेया हेतुसिद्धता[2] ॥ ३३२८ ॥
सम्यक् सर्वपदार्थानां तत्त्वज्ञानाच्च सर्ववित् ।
हेतावतो न संवेद्या[3] सन्दिग्धव्यतिरेकिता ॥ ३३२९ ॥
आभिप्रायिकमेतेषां स्याद्वादादिवचो यदि ।
तात्त्विकं सर्ववस्तूनां किमेभी रूप्यमिष्यते ॥ ३३३० ॥

---

"कपिलो नेति का प्रमा" ( तत्त्व० ३१४८ ) इति । तथा हि—इयमत्रापमा[4] स्फुटतरमभिधातुं शक्यते—ये मिथ्याज्ञानानुषङ्गिणस्ते सर्वविदो न भवन्ति, यथा स्थाणौ नर इति । समुपजातविभ्रमः पुमान्, मिथ्याज्ञानानुषङ्गिणश्च वर्धमानादय इति विरुद्धव्याप्तोपलब्धिः, सर्वज्ञविरुद्धेनासर्वज्ञत्वेन[5] मिथ्याज्ञानानुषङ्गित्वस्य व्याप्तत्वात् । न चासिद्धो हेतुः यतो विपरीतार्थप्रकाशनात्[6] सिद्धमेषां मिथ्याज्ञानानुषङ्गित्वम् । तदपि[6] विपरीतार्थप्रकाशनमेषां सर्वाभिः परीक्षाभिः प्रतिपादितम् । न चापि सन्दिग्धविपक्षव्यावृत्तितयाऽनैकान्तिकता हेतोः, यतः सम्यगशेषपदार्थपरिज्ञातृत्वेन सर्वज्ञत्वमिष्यते । न च यत्र सम्यग् ज्ञानं तत्र तद्विरुद्धस्य मिथ्याज्ञानस्य सम्भवः ॥ ३३२४–३३२९ ॥

स्यादेतत्—यदि नाम विपरीतार्थप्रकाशनमेषाम्, तथापि मिथ्याज्ञानानुषङ्गित्वमतोऽवसातुं [G 8f8] न शक्यते यतोऽन्यथापि व्यवहाराः शक्यन्ते कर्तुम्, विचित्राभिसन्धित्वात्[7] पुरुषाणाम्, तेन हेतोः सन्दिग्धासिद्धता इत्येतदाशङ्क्याह—आभिप्रायिकमित्यादि । यदि ह्यन्याभिप्रायेण तैरेतत् स्याद्वादादिप्रमाणविरुद्धमप्युक्तमित्यभिधीयते[8] अभिधीयताम्, न ह्यस्माभिः स्वातन्त्र्येण वर्धमानादीनामसर्वज्ञत्वं साधयितुमिष्टम्, किन्तु भवता परस्परविरुद्धमतावस्थितेन कपिलादिषु 'यदि सुगतः सर्वज्ञः, तदा कपिलो नेति का प्रमा' इत्युक्तम्, अत्रा-

---

१ प्रतिपत्त्या—पा०, गा० । २ ०सिद्धिता पा०, गा० ।
३ सम्बोध्या पा०, गा० । ४ ०मत्र प्रमा—पा०, गा० ।
५ सर्वज्ञत्व०—गा० । ६–६ पा०, गा० पुस्तकयोर्नास्ति ।
७ विचित्राभिसन्धित्वात्—पा० । ८ ०विरुद्धमित्युक्त०—पा० ।

अनात्मक्षणिकत्वादि ? यद्येवं सर्वदर्शिनः ।
साक्षात् समस्तवस्तूनां तत्त्वरूपस्य दर्शनात् ॥ ३३३१ ॥
सन्तु तेऽपि समस्तानामैकमत्येन संस्थितेः ।
परस्परविरुद्धार्थं नीतार्थं न हि ते जगुः ॥ ३३३२ ॥
प्रतिपादितरूपस्य सर्ववस्तुगतस्य च ।
साक्षात् तत्त्वस्य विज्ञानात् सुगताः सर्वदर्शिनः ॥ ३३३३ ॥
तेषां चैवंविधे ज्ञाने सुगतत्वं न भिद्यते ।
प्रशस्तज्ञानयोगित्वादेतावत् तस्य लक्षणम् ॥ ३३३४ ॥

---

स्माभिः प्रमाणं भवन्मत्या तेषां मतभेदमङ्गीकृत्याभिधीयते, तेन नासिद्धता हेतोः । तथा हि—यद्येषामाभिप्रायिकं वचो वर्ण्यते, तदा किमेषां पारमार्थिकं वस्तुरूपमिष्टमिति वक्तव्यम् ॥ ३३३० ॥

एवं[1] पृष्टः सन् पर आह—अनात्मक्षणिकत्वादीति । यदि सात्मादीनि ब्रूयात्, तदा मतभेद एवोक्तः स्यादिति नासिद्धता भवेत् ।

यद्येवमित्यादिनोत्तरमाह । न ह्यस्माभिः शपथाह्निकयाऽयमसौ सर्वज्ञ इत्येवं साधयितुमिष्टः, किन्तु सामान्येन । यदि कपिलादीनामेवंविधतत्त्वपरिज्ञानमभ्युपगम्यते, न तर्हि भवता वक्तव्यम्—'मतभेदः कथं तयोः' इति; सर्वेषामैकमत्येन स्थितत्वात् । यस्तु परस्परविरुद्धार्थोपदेशस्तेषां स नेयार्थतया व्यवतिष्ठते । न ह्येकमत्येन स्थिताः परस्परविरुद्धं नीतार्थम् = तात्त्विकं रूपं गदन्तीति युक्तम् । तस्मान्मतभेदमिच्छता नाभिप्रायिकं[2] वचो वाच्यम्, एषां मतभेदाभ्युपगमे च न वक्तव्यम्—'को नामैको निरूप्यताम्' ( तत्त्व० ३१४७ ) इति, यतः सुगत एव यथोक्तज्ञानयोगितया सर्वज्ञत्वेनावधार्यते, नान्य इति निरूपितमेतत् ॥ ३३३१-३३३२ ॥

किञ्च—कपिलादीनां यथोक्तज्ञानाभ्युपगमे सुगतत्वमेवापद्यत इत्येतद् दर्शयन्नाह—प्रतिपादितरूपस्येत्यादि । [G 869] प्रतिपादितम् = प्रसाधितं प्रमाणतो रूपम् = स्वभावो यस्यानात्मादिलक्षणस्य तत्त्वस्य तथोक्तम् । तेषामिति वर्धमानादीनाम् । एतावदिति प्रशस्तज्ञानयोगित्वम् । तस्येति सुगत-

---

१. एवं—पा० । २. नाभिप्रायिक—पा० ।

तत्सम्भव्यपि सर्वज्ञः सामान्येन प्रसाधितः ।
तल्लक्षणाविनाभावात् सुगतो व्यवतिष्ठते ॥ ३३३५ ॥
अनिर्दिष्टविशेषोऽपि सर्वज्ञः कोऽपि सम्भवेत् ।
यो यथावत् जगत् सर्वं वेत्त्यनात्मादिरूपतः ॥ ३३३६ ॥
प्रत्यक्षीकृतनैरात्म्ये न दोषो लभते स्थितिम् ।
तद्विरुद्धतया दीप्ते प्रदीपे तिमिरं यथा ॥ ३३३७ ॥

स्यत्य । यतो नैरात्म्यज्ञानात् प्रशस्तं समस्तक्लेशज्ञेयावरणप्रहाणं गत इति सुगत उच्यते । ॥ ३३३३-३३३४ ॥

किञ्च—सामान्येनापि सर्वज्ञसम्भवे साध्यमाने भगवत्येवावतिष्ठते सामर्थ्यादिति दर्शयति—तत्सम्भव्यपीत्यादि । तदिति तस्मात् । लक्षणाविनाभावादिति । सर्वज्ञलक्षणाविनाभावात् ॥ ३३३५ ॥

ननु विशेषनिर्देशमन्तरेण कथमसौ लभ्यते ? इत्याह—अनिर्दिष्टविशेषोऽपीत्यादि । यो हि सर्वं जगदनात्मादिरूपेण यथावदवगच्छति स सर्वज्ञ—इत्येवं सामान्येन कृतेऽपि सर्वज्ञलक्षणे यत्र तदुपलभ्यते स सामर्थ्याद् विशेषोऽवगम्यत एवेति विशेषोपादानमनर्थकम् । एतच्च सर्वज्ञलक्षणं भगवत्येवोपलभ्यते, नान्यत्र, विचित्रैरुपायैरविकलमतु सत्यलक्षणसाम्युपायहेयोपादेयतत्त्वप्रकाशनादिति भावः । न ह्यविदितं वस्तु तथाभावस्तथावत् तदविपरीतमविकलमुपदेष्टुं शक्यते यथोक्तम्—"परोक्षोपेयतद्धेतोस्तदाख्यानं हि दुष्करम्" ( ) इति ॥ ३३३६ ॥

स्यादेतद्—यदि नामानात्मादिरूपतो जगद्विदितमस्य, तथापि कथमसौ सर्वज्ञः सिद्ध्यति ? इत्याह—प्रत्यक्षीकृतनैरात्म्य इत्यादि । क्लेशज्ञेयावरणप्रहाणतो हि सर्वज्ञत्वम्, तत्र क्लेशा एव रागादयो [ G 870 ] भूतदर्शनप्रतिबन्धाभावात्[1] क्लेशावरणमुच्यते, दृष्टस्यापि हेयोपादेयतत्त्वस्य यत् सर्वाकारापरिज्ञानं प्रतिपादनासामर्थ्यं च तज्ज्ञेयावरणम्[2] । तत्र क्लेशावरणस्य नैरात्म्यप्रत्यक्षीकरणात् प्रहाणिः । ज्ञेयावरणस्य तु तस्यैव नैरात्म्यदर्शनस्य सादरनिरन्तरदीर्घ-

1 बन्धभावात्—पा० ।   2. ज्ञेयवरणम्—पा०, गा० ।

कालाभ्यासात् । तथा हि—अमी रागादयः क्लेशा वितथात्मदर्शनमूलका अन्वयव्यतिरेकाभ्यां निश्चिताः, न बाह्यार्थबलभाविनः; यतः सत्यपि बाह्यार्थे नायोनिशोमनस्कारमन्तरेणोत्पद्यन्ते[1]। विनापि चार्थेनायोनिशोविकल्पसम्मुखीभावे सत्युत्पद्यन्ते[2]। न च यत्[3] सदसत्त्वानुविधायि न भवति तत्तत्कारणं युक्तम्; अतिप्रसङ्गात् । नाप्येते परपरिकल्पितात्मसमवायिनः, तस्यात्मनो निरस्तत्वात् । सत्यपि वा तस्मिन्नित्यं रागादीनामुत्पत्त्यनपायप्रसङ्गात् । उत्पत्तिस्थितिकारणस्याविकलस्यात्मनः सर्वदा सन्निहितत्वात् । परैरनाधेयातिशयस्य तदपेक्षानुपपत्तेश्चेति बहुधा चर्चितमेतत् ।

सदसतोश्चाश्रयणनिषेधादयुक्तमेषां क्वचित् समवायित्वमित्यतो न नित्यहेतुप्रतिबद्धात्मस्थितयः । नापि बाह्यार्थबलभाविनः, किन्त्वभूतात्मदर्शनबलसमुद्भाविनः । तथा हि—अहमित्यपश्यतो नात्मस्नेहो जायते, नापि ममेत्यगृह्णत आत्मसुखोत्पादानुकूल्येनागृहीते वस्तुन्यात्मीयत्वेनाभिष्वङ्गः समुद्भवति । द्वेषोऽपि न हि क्वचिदसक्तस्यात्मात्मीयप्रतिकूल्येनागृहीते वस्तुनि प्रादुर्भावमासादयति; आत्मीयानुपरोधिनि तदुपरोधप्रतिघातिनि च तस्यासम्भवात् । एवं मानादयोऽपि[4] वाच्याः । तस्मादनादिकालिकं[5] पूर्वपूर्वसजातीयाभ्यासजनितमात्मदर्शनमात्मीयग्रहं प्रसूते, तौ चात्मात्मीयस्नेहम्[6], सोऽपि द्वेषादिकम्—इत्यन्वयव्यतिरेकाभ्यामात्मग्रहादात्मात्मीयग्रहमूलत्वमेषां स्फुटतरमागोपालाङ्गनमवसितमेव ।

आत्मदर्शनविरुद्धं च नैरात्म्यदर्शनम्, तद्विपरीताकारालम्बनत्वात् । अनयोर्हि युगपदेकस्मिन् सन्ताने रज्जौ[7] सर्पतज्ज्ञानयोरिव[7] सहावस्थानमैक्यं च विरुद्धम् । अतो नैरात्म्यदर्शनस्यात्मदर्शनविरोधात् तन्मूलैरपि रागादिभिः सह विरोधो भवति; दहनविशेषे[8] शीतकृतरोमहर्षादिविशेषस्य । तेन सर्वदोषविरोधिनि नैरात्म्यदर्शने प्रत्यक्षीकृते सति न तद्विरुद्धो रागादिदोषगणोऽवस्थानं लभते

१ नायोनिशोमनस्कार०—पा०, गा० ।
२. समुत्पद्यन्ते—पा०, गा० ।
३ सत्—गा० ।
४. मानादयोऽपि—गा० ।
५. ०दनादिकालीन—गा० ।
६. चात्मीयस्नेहम्—गा० ।
७–७. रज्जुसर्प०—पा०, गा० ।
८. दहनविशेषेण—पा०, दहनविशेषेणैव—गा० ।

तिमिरवदालोकपरिगते देश इति। अतो नैरात्म्यदर्शनात् क्लेशावरणप्रहाणं भवति। प्रयोग — यत्र यद्विरुद्धवस्तुसमवधानम्, न तत्र तदपरमवस्थितिमासादयति, यथा दीप्रप्रदीपप्रभाप्रसरसंसर्गिणि धरणितले तिमिरम्। अस्ति च दोषगणविरुद्धनैरात्म्यदर्शनसमवधानं प्रत्यक्षीकृतनैरात्म्यदर्शने पुंसीति विरुद्धोपलब्धि ।

स्यादेतत्—यथा नैरात्म्यदर्शनसमाक्रान्ते चेतसि विरुद्धतयाऽऽत्मदर्शनस्योत्पत्तुमनवकाश, तथा [G 871] नैरात्म्यदर्शनस्याप्यात्मदर्शनसमाक्रान्ते मनसि, विरोधस्य तुल्यत्वात्, ततश्च कस्यचिन्नैरात्म्यदर्शनस्यासम्भवादसिद्धो हेतु। सम्भवतु वा[1] नैरात्म्यदर्शनम्, तथाप्यनयोर्विरोधे सत्यपि नात्यन्तं बाध्यबाधकभाव सिद्ध्यति; यथा रागद्वेषयो, सुखदुःखयोर्वा, यतोऽत्यन्तप्रहाणमिह साधयितुमिष्टम्, न तु तावत्कालसमुदाचारमात्रमिति। अतोऽनैकान्तिकता हेतो। दृश्यन्ते[2] च प्रतिदिनमनुमानबलाधारितसमस्तवस्तुगतनैरात्म्यतत्त्वानामपि[2] सता मखण्डितमहिम्नो रागादय समुदयमासादयन्त इत्यतोऽपि हेतोर्नैकान्तिकतेति।

नैतदस्ति, यदि नैरात्म्यविकल्पस्योत्पादोऽप्रहीणक्लेशस्य[3] सन्ताने न सम्भवेत्, तदा न सम्भवेन्नैरात्म्यदर्शनोदयावकाश, यावताऽनुभवसिद्धस्तावन्नैरात्म्यविकल्प सम्मुखीभाव सर्वेषामेव। स एव च भावनया कामिनीविकल्पवत् प्रकर्षगमनसम्भवादन्ते स्फुटप्रतिभासतया, प्रमाणप्रतीतार्थग्राहितया च प्रत्यक्षतामापद्यत इति कथं नैरात्म्यदर्शनोदयासम्भव ।

अपि च—यथाऽन्धकारपरिगते देशे कालान्तरेण प्रकाशोदयावकाशसम्भवस्था, इहापि किं न सम्भाव्यते। न चाप्येवं शक्यं वक्तुम्—सैव तादृशी भावना न कस्यचिद् सम्भवति, या तथाभूतप्रत्यक्षज्ञानफला भवेदिति, यतोऽसम्भवे कारणं वचनीयम्। तथा हि—भावनायामप्रयोगे सर्वेषामेवानर्थित्वं वा कारणं भवेत्, प्रेक्षावत प्रवृत्तेरर्थितया व्याप्तत्वात्। सत्यप्यर्थित्वे प्रहेयस्वरूपापरिज्ञानाद्वा न प्रवर्तते प्रेक्षावान्, अनिर्ज्ञातस्वरूपस्य दोषस्य हातुमशक्यत्वात्। सत्यपि

१. वा न वा—पा०, गा०।
२–२. पा०, गा० पुस्तकयोस्तु 'दृश्यतेऽपि'—इत्येव पाठ।
३. ०प्रहाणक्लेशस्य— पा०, गा०।

तत्स्वरूपज्ञाने नित्यत्वं वा दोषाणां पश्यंस्तत्प्रहाणाय न यत्नमारभते, नित्यस्य प्रहाणासम्भवात् । असत्यपि वा नित्यत्वे[1] निर्हेतुकत्वमेषामवगम्य[1] निवर्त्तते, स्वतन्त्रास्यासम्भवदुच्छेदत्वात् । सत्यपि वा कारणवत्त्वे तत्कारणस्वरूपानिश्चयादपि नाद्रियते भावनायाम्, अविज्ञातनिदानस्य[2] व्याधेरिव प्रहातुमशक्यत्वात् । भवतु वा तत्कारणपरिज्ञानम्, किं तत्कारणं नित्यमवगम्य नोत्सहते तत्प्रहाणाय प्रेक्षापूर्वकारी, अविकलकारणस्य प्रतिबद्धुमशक्तेः । अनित्यत्वेऽपि वा तत्कारणस्य दोषाणां प्राणिधर्मतामवेत्य न प्रयतते, स्वभावस्य हातुमशक्यत्वात् । अस्वभावत्वे वा दोषाणां क्षयोपायासम्भवान् निवर्त्तते, नह्युपायविकलस्योपेयसम्प्राप्तिरस्ति । सत्त्वेऽपि चोपायस्य तदपरिज्ञानादसम्भवत्तदनुष्ठानो भवेत्, अपरिज्ञातस्वरूपस्यानुष्ठानासम्भवात् । परिज्ञानेऽपि वा लङ्घनादिव व्यवस्थितोत्कर्षतया जन्मान्तरासम्भवेन वा भावनाया अत्यन्तप्रकर्षमसम्भावयन्नाभियोगवान् भवति । भवतु वाऽत्यन्तप्रकर्षगमनसम्भवात् प्रतिपक्षोदयेन दोषाणां क्षयः, तथापि ताम्रादिकाठिन्यवत् पुनरपि दोषोदयं[3] [ G. 872 ] सम्भावयन्नाभियोगमारभत इति ।

तत्र न तावदनर्थित्वं सिद्धम् । तथा हि——ये तावज्जात्यादिदुःखोत्पीडितमानसाः संसारादुत्त्रस्तमनसस्तदुपशममात्मनः प्रार्थयन्ते, तेषां श्रावकविशेषनियतानां संसाराद् भयमेव नैरात्म्यभावनार्थित्वनिमित्तम् । ये तु गोत्रविशेषात् प्रकृत्यैव परहितकरणैकाभिरामाः संस्कारादिदुःखतात्रितयपरिपीडितं[4] जगदवेक्ष्य कृपापरतन्त्रतया तद्दुःखदुःखिनः स्वात्मनि व्यपेक्षामपास्य सकलमेव संसारिणमात्मत्वेनाभ्युपगतास्तत्परित्राणाय प्रणिदधते, तेषां करुणैव भावनाप्रवृत्तिनिमित्तम्; परोक्षोपेयतद्धेतोस्तदाख्यानस्य दुष्करत्वात् । परहितकरणेन प्रेक्षावतः किं प्रयोजनमिति चेत् ? न; तदेव प्रयोजनमिष्टलक्षणत्वात्तस्य । न चाप्रेक्षावत्त्वप्रसङ्गः; परिकल्पितात्मग्रहनिबन्धनत्वादात्महितकरणाभिनिवेशस्य सकलसाधुजनसम्मतत्वात्, स्वफलानुबन्धित्वाच्च परहितकारणस्य ।

१–१. नित्यत्वनिर्हेतु०—पा०, गा० । २. अविज्ञात०—पा० ।
३. दोषोदयं—पा०, गा० ।
४. ०दुःखत्रय०—पा०, गा० ।

अपि च—भावनाप्रकर्षावस्थासम्भवोऽत्र प्रतिपादयितुमारब्ध, तद्यदि नामापेक्षावत्त्वं तस्य भवेत् किमियता प्रवृत्तावर्थित्वं तस्य स्यात्। तस्मादिदमेव वक्तव्यम्—परहितकरणाय नैव कश्चित् प्रवर्त्तते प्रयोजनाभावादिति। तत्र चोक्तम्।

अपि च—यथा केचिदुपरम्यन्तेऽतितरामभ्यस्तनैर्घृण्या अकारणमेव परव्यसनाभिरामाः परदुःखसुखिनः, तथा केचिदभ्यस्तकारुण्याः परसुखाभिरामाः परदुःखदुःखिनः प्रयोजनान्तरमन्तरेणापि भवन्तीति किं न सम्भाव्यम्।

नापि दोषस्वरूपापरिज्ञानम्, यतोऽभिष्वङ्गपरिग्रहात्मात्मीयोल्लेखाकारेण रागद्वेषमोहमानमदेर्ष्यामात्सर्यादयः क्लेशोपक्लेशगणा विदितस्वरूपा एवोदयन्ते व्ययन्ते च।

नापि च ते नित्याः, कादाचित्कतया संवेद्यमानत्वात्। अत एव नाहेतुकत्वमेषाम्, अहेतोरनपेक्षितत्वेन देशकालस्वभावनियमायोगात्। अतोऽपि नित्यहेतुकत्वमेषां प्रतिक्षिप्तम्, तत्कारणस्यात्मादेः सदा सन्निहितत्वादनाधेयातिशयस्य परैः सहकारिनिरपेक्षत्वात्। तस्मात्तद्भाविना सर्वदा युगपदुत्पत्तिप्रसङ्गात्[1]। अतः सामर्थ्यादनित्यहेतव एवैते।

अनित्योऽपि हेतुरेषां विदितस्वरूप एव, आत्मात्मीयविपर्यासहेतुकत्वाद् रागादिदोषगणस्य तदन्वयव्यतिरेकानुविधानादिति पूर्वं प्रतिपादितत्वात्।

नापि प्राणिधर्मत्वमेषाम्, तस्यैव धर्मिणोऽसिद्धेः। न हि प्राणी नाम धर्मी विद्यते कश्चित्, यस्यामी रागादयो धर्मा भवेयुः। केवलमिदम्प्रत्ययतामात्रमिदम्, विकल्पसमारोपितत्वाद् धर्मधर्मिव्यवहारस्य। अथ चित्तस्वभावत्वेन तदुत्पत्त्या वा प्राणिधर्मत्वमेषाम्, तथाप्यसिद्धिरनैकान्तिकत्वं च। तथा हि—विषयविषयिभावमिच्छता नियतविषयग्रहणस्वभावमभ्युपेयम्, अन्यथा विषयज्ञानयोर्न विषयविषयिभावः। [C 873] अर्थग्रहणस्वभावत्वेनाङ्गीक्रियमाणे यस्तस्य स्वभावस्तेनैवासावर्थस्तेन गृह्यत इति वक्तव्यम्, अन्यथा कथमसौ गृहीतः स्यात्। यदसताऽऽकारेण गृह्येत, ततश्च विषयविषयिभावो न स्यात्। तथा हि—यदा ज्ञान

१ युगपदुत्पत्ति०—पा०, गा०।

विषयीकरोत्यर्थं न तथा सोऽर्थः, यथा सोऽर्थो न तथा तं विषयीकरोतीति निर्विषयाण्येव ज्ञानानि स्युः। ततश्च सर्वपदार्थासिद्धिप्रसङ्गः। तस्माद् भूतविषयाकारग्राहिताऽस्य स्वभावो निज इति स्थितम्। भूतश्च स्वभावो विषयस्य क्षणिकानात्मादिरूप इति प्रतिपादितमेतत्। तेन नैरात्म्यग्रहणस्वभावमेव[1] चित्तम्, नात्मग्रहणस्वभावम्[1]।

यत् पुनरन्यथास्वभावोऽस्य ख्याति[2], तदा तां स[2] सामर्थ्यादागन्तुकप्रत्ययबलादेवेत्यवतिष्ठते, न स्वभावत्वेन, यथा रज्ज्वां सर्पप्रत्ययस्य। अत एव क्लेशगणोऽत्यन्तसमुद्धतोऽपि नैरात्म्यदर्शनसामर्थ्यमस्योन्मूलयितुमसमर्थः; आगन्तुकप्रत्ययकृतत्वेनादृढत्वात्। नैरात्म्यज्ञानं तु स्वभावत्वात् प्रमाणसहायत्वाच्च बलवदिति तुल्येऽपि विरोधित्वे आत्मदर्शने प्रतिपक्षो व्यवस्थाप्यते। न चात्मदर्शनं तस्य; तद्विपरीतत्वात्।

यस्यापि न बाह्योऽर्थोऽस्तीति पक्ष, तस्यापि मते नैरात्म्यग्रहणस्वभावमेव ज्ञानम्, नात्मदर्शनात्मकम्; तस्यात्मनोऽसत्त्वात्। तथा हि—यदि नाम तेन विषयस्याभावात् तद्ग्रहणात्मकं ज्ञानं नेष्टम्, स्वसंवेदनात्मकं तु तदवश्यमङ्गीकर्त्तव्यम्; अन्यथा ज्ञानस्यापि व्यवस्था न स्यात्। स चात्मा विद्यमानेनैवानात्माद्वयादिरूपेण सवेद्य, नान्यथा; पूर्ववद्दोषप्रसङ्गात्। तस्मात् प्राणिधर्मत्वमेषामसिद्धम्।

नापि तत्रोत्पत्त इत्येतावता स्वभावत्वे परिकल्पिते प्रहाणासम्भव, अनेकान्तात्। तथा हि—रज्ज्वां सर्पज्ञानमुत्पद्यते, अथ च तत्सम्यग्ज्ञानोत्पादान्निवर्त्तते।

नापि क्षयोपायासम्भव; स्वहेतुविरुद्धस्वभावपदार्थाभ्यासस्य क्षयोपायत्वेन सम्भवात्। तथा हि—ये सम्भवत्स्वहेतुविरुद्धस्वभावाभ्यासाः, ते सम्भवदत्यन्तसन्तानविच्छेदाः, तद्यथा शीतादय, तथा चामी रागादय इति सम्भवत्येवैषां क्षयोपायः।

नापि तदपरिज्ञानम्, यतो हेतुस्वरूपज्ञानादेव यत् तद्विपरीतात्मनाकार

1–1. ०मेवेति तथा०—पा०, गा०।
2–2. ख्यातिमुदानास—पा०; ख्यातिमुदानांस—गा०।

वस्तु स तस्य प्रतिपक्ष इति स्फुटमवसीयत एव । नैरात्म्यदर्शनं च तत्र विपरीतालम्बनाकारत्वात् प्रतिपक्ष इति प्रदर्शितमेतत् ।

नापि लङ्घनादिवद् व्यवस्थितोत्कर्षता, पूर्वपूर्वाभ्यासाहितस्य स्वभावत्वेनानपायादुत्तरोत्तरप्रयत्नस्यापूर्वविशेषाधानैकनिष्ठत्वात्, स्थिराश्रयत्वात्, पूर्वसजातीयबीजप्रभवत्वाच्च प्रज्ञादेः । न त्वेवं लङ्घनादिरिति पश्चात् प्रतिपादयिष्यते ।

नापि जन्मान्तरासम्भवः, पूर्वजन्मप्रसरस्य प्रसाधितत्वात् । नापि ताम्रादिकाठिन्यादिवत् पुनरुत्पत्तिसम्भवो दोषाणाम्, [G 871] तद्विरोधिनैरात्म्यदर्शनस्यात्यन्तसात्म्यमुपगतस्य सदाऽनपायात् । ताम्रादिकाठिन्यस्य हि यो विरोधी वह्निस्तस्य कादाचित्कसन्निहितत्वात् काठिन्यादेस्तदभाव एव भवतः पुनस्तदपायादुत्पत्तिर्युक्ता, न त्वेवं मलानाम् । अपायेऽपि वा मार्गस्य भस्मादिभिरनैकान्ता नावश्यं पुनरुत्पत्तिसम्भवो दोषाणाम्, तथा हि—काष्ठादेरग्निसम्बन्धाद् भस्मसाद्भूतस्य तदपायेऽपि न प्राक्तनरूपानुवृत्तिः, तद्वद् दोषाणामपीत्यनैकान्तः । किञ्च—आगन्तुकतया प्राप्यासमर्थाना मलाना पश्चात्सात्मीभूतं तन्नैरात्म्यं बाधितुं कुतः शक्तिः । न हि स्वभावो यत्नमन्तरेण निवर्तयितुं शक्यते । न च प्राप्यपरिहर्तव्ययोर्वस्तुनोर्गुणदोषदर्शनमन्तरेण प्रेक्षावता हातुम्, उपादातुं वा प्रयत्नो युक्तः । [1]न च विपक्षस्यात्मन[1] ऽपरस्य दोषेषु गुणदर्शनम्, प्रतिपक्षे वा दोषदर्शनं सम्भवति, अविपर्यस्तत्वात् । न हि निर्दोषं वस्तु विपर्यस्तधियो दुष्टत्वेनोपाददते, नापि दुष्टं गुणवत्त्वेन । न च नैरात्म्यदर्शनस्य कदाचिद् दुष्टता, सर्वोपद्रवरहितत्वेन गुणवत्त्वात् । तथा हि—न दोषरागादिमलस्यापगमान्न भूतार्थदर्शननिबन्धनोपद्रवः । नापि रागादिविपर्ययस्थानकृत कायचित्तपरिदाहोपद्रवोऽस्ति । नापि जन्मप्रतिबद्धो व्याधिजराद्युपद्रवः[2], जन्महेतोः क्लेशस्याभावात् । नापि साश्रवसुखोपभोगाद् वैरस्योपद्रवः, प्रशमसुखरसस्यैकान्ततयाऽनुद्वेगकरत्वात् । तत्रास्य हानाय यत्नो युक्तः । अपि तु यदि भवेदपरिहाणायैव भवेत्, बुद्धेः प्रकृत्या गुणपक्षपातात् ।

१-१ विपक्षस्यात्म० —शा०, न चात्मदर्शन०—गा० ।
२. व्याधिजराद्यु०—शा०, गा० ।

नापि दोषोपादानाय प्रयत्नः, तेषां सर्वोपद्रवास्पदत्वेन दुष्टत्वात्। तस्मात् सम्भविनी नैरात्म्यभावना। तस्याश्च प्रकर्षपर्यन्तगमनात् स्फुटप्रतिभासज्ञानफलत्वं दृष्टम्, यथा कामिनीं भावयतः कामातुरस्य। तथा हि—तस्य सविभ्रमाः पश्याम्युपगूह इत्येवं वाचः कायव्यापाराश्चाभिप्रायानुरूपाः साक्षात्कारिनिबन्धनाः प्रवर्त्तन्ते। तस्मान्नासिद्धो हेतुः। नाप्यनैकान्तिकः; यतो नैरात्म्यदर्शनस्य भूतार्थविषयत्वेन बलवत्त्वम्; आत्मदर्शनस्य तु विपर्ययाद् विपर्यय इति भवति विपक्षप्रतिपक्षभावः। रागद्वेषयोरप्यभूतात्मग्रहसंस्पर्शेन प्रवृत्तेर्न तयोर्विरुद्धरूपग्रहणनिमित्तो विपक्षप्रतिपक्षभावः।

नापि विपर्यासात्; अविपर्यासकृतोर्द्वयोरपि विपर्यस्तत्वात्। नाप्यनयोर्विरोधः सिद्धः; द्वयोरप्यात्मग्रहैकयोनित्वात्, कार्यकारणभावाच्च। तथा हि—सत्यात्मीयाभिष्वङ्गे तदुपरोधिनि द्वेषो जायते, नान्यथा। न चाभिन्नकारणयोः कार्यकारणभूतयोर्वा बाध्यबाधकभावो युक्तः, यथा वह्निधूमयोरेकेन्धनप्रभवयोः, यथा चात्मग्रहस्नेहयोः; अतिप्रसङ्गात्। युगपदनुत्पत्तिस्तु तदुपादानचित्तस्य युगपत् सजातीयचित्तद्वयाक्षेपासामर्थ्यात्। [G. 873] नापि सुखदुःखयोः परस्परं विरोधः, तथा हि द्विविधे सुखदुःखे—मानसे, विषयजे च। तत्र ये तावन्मानसे, तयोर्द्वयोरप्यनुनयसम्प्रयोगित्वाद् रागद्वेषाभ्यामेकयोगक्षेमतया तद्विपर्यस्तत्वमभिन्नात्मरूपग्रहादित्वमात्मग्रहैकयोनित्वं कार्यकारणभावश्चेति न परस्परं विरोधः सम्भवति। ये च विषयजे, तयोरपि परस्परं कारणभेदाप्रतिनियमान्न विरोधः। तथा हि—यत्र एव सुखमुत्पद्यते तत एवातिसेव्यमानत्वाद्[1] दुःखमपीति नानयोः[2] कारणभेदप्रतिनियमोऽस्ति, न त्वेवं नैरात्म्यदर्शनस्येतरेण। किञ्च—द्वयोरप्यनयोर्विषयबलभावित्वेन तुल्यबलत्वम्, न तु मार्गदोषयोः; मार्गस्यैव भूतार्थविषयत्वेन बलवत्त्वात्, न दोषाणाम्। अपि[3] तु सुखदुःखेऽचिरस्थितिके, न तु पुनरेवं नैरात्म्यदर्शनम्; तस्य सात्मत्वेन सदानपायादिति पूर्वमुक्तम्, अतो न व्यभिचारः। युगपदनुत्पत्तेस्तु कारणमुक्तम्।

---

१. सेव्यमानाद्—पा०, गा०। २. न तयोः—पा०, गा०।
३. अपि च—गा०।

साक्षात्कृतिविशेषाच्च दोषो नास्ति सवासनः ।
सर्वज्ञत्वमतः सिद्धं सर्वावरणमुक्तितः ॥ ३३३८ ॥

यत् पुनरुक्तम्—अनुमानबलावधारितनैरात्म्यानामपि समुत्पद्यन्ते रागादय इति, तदयुक्तम्; यस्माद् भावनामयं स्फुटप्रतिभासवत्या निरात्मकवस्तुसाक्षात्कारिज्ञानमविकल्पकं प्रमाणप्रसिद्धार्थविषयतया साक्षान्न तन्नैरात्म्यदर्शनमात्मदर्शनस्यात्यन्तोन्मूलनप्रतिपक्षो[1] वर्णितं, न श्रुतचिन्तामयम् । यस्मादनादिकालाभ्यासादत्यन्तोपारूढमूलत्वान्मलाना क्रमेणैव विपक्षवृद्ध्याऽपकर्षता क्षय, न तु सकृच्छ्रवणेन । यथा शीतस्पर्शस्य वह्निरूपसम्पर्कमात्रान्न क्षय ।

न चापि श्रुतचिन्तामयनैरात्म्यज्ञानसम्मुखीभावे सति रागादिसमुदय सिद्धो येन व्यभिचार स्यात् । तथा हि—समुत्पन्न रागादिपर्यवस्थानमशुभादिमनस्कारबलेन विनोदयन्त्येव सौगताः । अत एवास्वप्रिहतमहिमत्वमेषामसिद्धम् । विरोधोऽपि नैरात्म्यदर्शनेनैषामत एव व्यवस्थाप्यते, तत्सम्मुखीभावे तत्त्वपकर्षात् । तथा हि यदुपधानादपकर्षधर्माणस्ते तदत्यन्तवृद्धौ निरन्वयसमुच्छित्तिधर्माणो भवन्ति, यथा सलिलादिवृद्धावग्निज्वाला[2] । नैरात्म्यज्ञानोपधाने चापकर्षधर्माणो दोषा इति तदत्यन्तवृद्धौ कथमवस्था लभेरन् । अतो नानैकान्तिकता हेतो । सपक्षे भावाच्च न विरुद्धता ॥ ३३३७ ॥

एवं क्लेशावरणप्रहाणं प्रसाध्य ज्ञेयावरणप्रहाणं प्रतिपादयन्नाह—साक्षात्कृतिविशेषादिति । [ C 876 ] साक्षात्कृति[3] = साक्षात्करणम् । कस्य ? नैरात्म्यस्येति प्रकृतत्वाद् गम्यते । तस्याविशेष = बहुशो बहूपायै[4] कालेन बहुना सर्वाकारेण तत्र तद्विपक्षे न गुणदोषयोरत्यन्तप्रकाशीभाव । अत एव श्रावकादेर्नैरात्म्यदर्शनेऽपि न सर्वज्ञत्वम् । तथाविधान्तराभ्यासविशेषाभावेन ज्ञेयावरणस्याप्रहाणात् । प्रयोग —या सादरनैरन्तर्यदीर्घकालविशेषणा भावना सा करतलायमानभावाभासमानज्ञानफला, तद्यथा कामातुरस्य कामिनीभावना । यथोक्त-

1 ०न्मूलनेन प्रतिपक्षो—पा०, गा० । 2. सलिलाभिवृद्धा०—पा०, गा० ।
3. पा०, गा० पुस्तकयोर्नास्ति । 4 बहूपायै —गा० ।

एतच्च सुगतस्येष्टमादौ नैरात्म्यकीर्त्तनात् ।
सर्वतीर्थकृतां तस्मात् स्थितो मूर्ध्नि तथागतः ॥ ३३३९ ॥

---

विशेषणत्रययुक्ता च सर्वाकारसर्वगतनैरात्म्यभावना[1] कारुणिकस्येति स्वभावहेतुः । न चासिद्धो हेतुः; कारुणिकस्यार्थित्वेन तथा प्रवृत्तिसम्भवस्य प्रतिपादितत्वात् । नाप्यनैकान्तिकत्वम्; यतः सर्वधर्मगतनैरात्म्यालम्बनस्य मनोविज्ञानस्य धर्मिणो यथोक्तविशेषणत्रययुक्तभावनासंस्पृष्टत्वेन हेतुना स्फुटप्रतिभासित्वं साध्यम् ।

एतेन च साध्यधर्म्मेण यथोक्तसाधनधर्म्मस्य व्याप्तिः सिद्धा । कारणान्तरानपेक्षित्वात् स्फुटप्रतिभासित्वस्य । ततश्च सामर्थ्यात् सर्वज्ञत्वेनापि व्याप्तिः सिद्धा । यस्मात् सर्ववस्तुगतनैरात्म्याद्यालम्बनस्य मनसो धर्मिणो[2] यत् स्फुटप्रतिभासित्वं तदेवास्य सर्वज्ञत्वम्, नान्यत् । तथा हि—भाव्यमानवस्तुस्फुटप्रतिभासित्वेन भावनायाः सामान्येन व्याप्तौ सिद्धायां सामर्थ्यात् सर्वज्ञत्वेनापि सिद्धैव; यथोक्तधर्मिण्यन्यस्य स्फुटप्रतिभासित्वस्यासम्भवात् । एतेन ये सत्तासाधने दोषाः प्रोक्तास्ते प्रत्युक्ताः; सर्वज्ञसत्ताया असाध्यत्वात् । प्रसिद्धे मनसि धर्मिणः स्फुटप्रतिभासित्वस्य साध्यत्वात् । एवमनेन प्रकारेण प्रसिद्धात् साक्षात्कृतिविशेषात् कायवाग्बुद्धिवैगुण्यलक्षणाया दोषवासनायाः प्रहाणात् सिद्धमावरणद्वयप्रहाणम् । अतः सर्वावरणविमुक्त्या सिद्धं सर्वज्ञत्वम् ॥ ३३३८ ॥

स्यादेतद्—यदि नाम सामान्येन सिद्धम्, सुगते तु न सिद्धम् ? इत्याह—एतच्चेत्यादि । एतद् = यथोक्तं सर्वज्ञत्वं सुगतस्यैवेष्टम् = सिद्धम्, न कपिलादेः । कस्मात् ? आदौ नैरात्म्यकीर्त्तनात् । एतदुक्तं भवति—येनेदं सर्वपदार्थानां स्कन्धपञ्चकत्वादिदेशनया सर्वाकारमादौ प्रथमतो नैरात्म्यं कीर्त्तितम्, स एवादौ सर्वधर्माणां विचित्रप्रभेदनैरात्म्यकीर्त्तनात् कार्यलिङ्गात् सिद्धः पुरुषविशेषोऽस्माभिः सुगत इत्युच्यते । तस्यानया देशनया साभ्युपायहेयोपादेयतत्त्वस्थिराशेषज्ञानं साध्यते । तेन[3] ज्ञानयोगादेवासौ [ G. 877 ] सर्वज्ञः प्रमाणभूतश्चेति तदुक्तप्रतिपत्तिकामैः साधयितुं युक्तः, न तु कीटसङ्ख्यादिज्ञानात् । किन्तु कीट-

---

१. ॰यनंभव॰—पा॰, गा॰ । २. पा॰, गा॰ पुस्तकयोर्नास्ति ।
३. न—जै॰, पा॰ ।

तेन प्रमाणसंवादितत्त्वदर्शनयोगिना ।
न तुल्यहेतुताऽन्येषां[1] विरुद्धार्थोपदेशिनाम् ॥ ३३४० ॥
प्रमाणगोचरा येषां प्रमाबाधाकुलं वचः ।
तेषामत्यक्षविज्ञानशक्तियोगो हि दूरतः ॥ ३३४१ ॥
सम्बद्धाऽनुगुणोपायं पुरुषार्थाभिधायकम् ।

---

सद्भावादावपि तस्य ज्ञानसम्भवः साध्यते । तत्त्वस्थिराशेषज्ञानं त्वाहत्य । तथा हि—प्रमाणसंवादिनैरात्म्यदर्शनया तत्त्वज्ञानं यस्य सिद्धम्, तस्यैव नैरात्म्यस्य पूर्वापराव्याहतदेशनया स्थिरज्ञानम्, नराङ्गेऽपि शास्त्रप्रवचने प्रियानुविषयायामपि[2] देशनायां दुःखादिलक्षणसत्यदेशनाया एकवाक्यत्वात् । विचित्रैश्चोपायैश्च सत्यप्रकाशनादशेषज्ञानमस्यानुमीयते, शेषस्य सर्वाकारज्ञानप्रतिपादनासामर्थ्यलक्षणस्य प्रहाणात् । न ह्यविदितसर्वाकारगुणदोषस्तत्प्रतिपादनाकुशलश्च तथा प्रतिपादयति । नापि वेदाद् विज्ञाय प्रतिपादयतीति युक्तम्, तस्य पौरुषेयत्वप्रतिपादनादिति भावः । अतोऽशेषतीर्थकरमूर्ध्नि भगवान् ज्ञानातिशययोगात् स्थित इति सिद्धम् ॥ ३३३९ ॥

अत एव यथोक्तज्ञानातिशययोगिना भगवता सहान्येषां न तुल्यत्वमस्तीति दर्शयन्नाह—तेनेत्यादि । न ह्येषां ज्ञानातिशययोगितासाधकः कश्चिद्धेतुरस्ति । तथा हि—हेतुर्भवत् वचनमस्यैव लिङ्गं भवेत्, तच्चैषां प्रमाणविरुद्धार्थप्रतिपादकमिति कथं ततो ज्ञानातिशययोगिताऽमीषां प्रतीयेत ? ॥ ३३४०–३३४१ ॥

सुगतस्यापि वचनं प्रमाणविरुद्धमिति चेत् ? आह—सम्बद्धेत्यादि । सम्बद्धम् = वाक्यानामेकार्थोपसंहारेण परस्परं सङ्गत्या[3], न तु दशदाडिमादिवाक्यवत् परासङ्गतम् । अनुगुणः = शक्यानुष्ठानतया नैरात्म्यभावनादिलक्षण उपायो यस्मिन्नुपदिष्टस्तत् तथोक्तम्, न तु विषप्रशमनाय तक्षकचूडारत्नालङ्कारोपदेशवदशक्योपायम् । पुरुषार्थः = अभ्युदयनिःश्रेयसलक्षणः, तस्याभिधायकम्, न [illegible] काकदन्तपरीक्षावद्-

---

१ तुल्यपयोगता॰—गा॰ ।
२ प्रियानुविष॰—जै॰, पा॰ ।
३ सङ्गतम्—पा॰, गा॰ ।

दृष्टेऽप्ययं प्रमाणाभ्यामीषदप्यप्रबाधितम् ॥ ३३४२ ॥
तापाच्छेदान्निकषाद्वा कलधौतमिवामलम् ।
परीक्ष्यमाणं यन्नैव विक्रियां प्रतिपद्यते ॥ ३३४३ ॥
समस्तकुमतध्वान्तविध्वंसानुगुणोदयम् ।
तथागतवचोरत्नमलभ्यं बहुकल्मषैः ॥ ३३४४ ॥

पुरुषार्थफलम् । ननु चैतदर्थे कश्चिद्विसंवादोऽप्यस्ति ? इत्याह—दृष्टेऽपीत्यादि । [G 878] दृष्टे = प्रत्यक्षानुमानविषयाविषयत्वेनाभिप्रेते[1] । प्रमाणाभ्याम् = प्रत्यक्षानुमानाभ्याम्, अप्रबाधितम्; यथानिर्दिष्टस्यार्थस्य तथाभावात् । तथा हि—नीलादिक्षणिकदुःखादिनिमित्तोद्भवरागादिबुद्धिलक्षणस्य स्कन्धपञ्चकस्य प्रत्यक्षत्वेनाभिमतस्य नान्यथात्वं सम्भवति, अप्रत्यक्षत्वेन चाभिमतानामप्रत्यक्षतैव । यथा परैः प्रत्यक्षाभिमतानां रूपशब्दादिसन्निवेशानां सुखादीनां द्रव्यकर्मसामान्यसंयोगादीनां च । तथा—वस्तुबलप्रवृत्तानुमानविषयत्वेनाभिप्रेतानां तथा भाव एव । तथा चतुर्णामार्यसत्यानामतद्विषयत्वेनेष्टानां चातद्विषयत्वमेव, यथा परैर्वस्तुबलानुमानविषयत्वेनाभिमतानामात्मादीनाम् । अपिशब्माददृष्टेऽपि न विक्रियेति दर्शितम् । तथा हि—अत्र रागादिरूपं साश्रवं वा धर्ममुद्दिश्य तत्प्रहाणाय सन्निदानात्मदर्शनविरोधेन नैरात्म्यदर्शनमेव प्रतिपक्षो देशितः, न तु कपिलादिशास्त्रवत् तद्विरोधाविरुद्धं स्नानाग्निहोत्रादिरुपदिष्टः ॥ ३३४२ ॥

अत एव "विशुद्धसुवर्णवत् परीक्ष्य मामकमेतद्विचक्षणैः" इति भगवतोक्तम् । इत्येतत् सूचयन्नाह—तापादित्यादि । यथा कलधौतम् = सुवर्णम्, अमलम् = सर्वदोषरहितं परीक्ष्यमाणं तापादिभिर्न विक्रियां प्रतिपद्यते, तथा भगवद्वचोरत्नं प्रत्यक्षेण तापसदृशेन वस्तुबलप्रवृत्तानुमानेन, निकषसदृशेनागमापेक्षानुमानेनापि छेददृष्टान्तसूचितेन न विक्रियते । अतः प्रेक्षापूर्वकारिण एवम्भूतादेवागमात् प्रवृत्तिर्युक्ता, नान्यत इत्यभिप्रायः ॥ ३३४३ ॥

रत्नसाधर्म्यमस्य दर्शयन्नाह—समस्तेत्यादि । कुमतमेव ध्वान्तम् = अन्धकारम्, तस्य विध्वंसः = विनाशः, तस्मिन्ननुगुण उदयो [G 879] यस्य

१. ०मानविषयत्वे०—पा०, बा० ।

ततः सुगतमेवाहुः सर्वज्ञमतिशालिनः ।
प्रधानपुरुषार्थज्ञं तं चैवाहुर्मिपश्वरम् ॥ ३३४५ ॥
सुगतस्तेन सर्वज्ञः कपिलो नेति तु प्रमा ।
अनन्तरोदिता व्यक्ताऽप्येषा मूर्द्ध्न लक्षिता ॥ ३३४६ ॥
यथोदितान्तरादेव विशेषोऽप्यवधार्यते ।
ऋषभवर्द्धमानेभ्यः स्मरभङ्गविधायिनः ॥ ३३४७ ॥
को हि निःशेषशास्त्रार्थतत्त्वज्ञं मन्यते जडः ।
समानभोजनस्नानाम्मातृकामात्रवेदनात् ॥ ३३४८ ॥
तद्येन हेतुनैकस्य सर्वज्ञत्वं प्रसाध्यते ।
तद्धेतुवस्तुनोऽसत्त्वान्न सोऽन्यस्योपतिष्ठते ॥ ३३४९ ॥

तथोक्तम् । बहुफलमर्पयति अपुण्यवद्भि । अनन्तरोदितेति यथोक्तवचनाख्यकार्यलिङ्गता ॥ ३३४४–३३४६ ॥

"गणिताद्येकदेशेषु" ( तत्त्व० ३१४९ ) इत्यादावाह—यथोदितान्तरादित्यादि । यथोक्तज्ञानातिशययोगाद्भगवतो मारजितो ऋषभ-वर्धमानादिभ्यो विशेषे सिद्धे सति न युक्त सत्यवचसा भवता वक्तुम्—न विशेषोऽवधार्यत इति[1] समुदायार्थः ॥ ३३४७ ॥

स्यादेतत्—गणिताद्येकदेशार्थेऽविसंवादादुभयेषामस्माभिरविशेष उच्यते इत्याह—को हीत्यादि[2] ॥ ३३४८ ॥

"येनैव हेतुना" (तत्त्व० ३१५०) इत्यादावाह—तद्येनेत्यादि । तदिति तस्मात् । तद्धेतुवस्तुन इति । यदि नाम शब्दमात्रमस्ति—स्याद्वादादीनामविपरीतार्थानां सर्वार्थव्यापिनामुपदेष्टृत्वादिति, तथापि तस्य वस्तुप्रतिबद्धस्य हेतुवस्तुन = हेतुधर्मस्याभावान्नासौ हेतुरन्यस्य कापिलादेरुपतिष्ठते, वस्त्वेव हि वस्तुप्रतिबद्धत्वाद् वस्तु गमयति, न शब्दमात्रम् ॥ २३४९ ॥

---

१. इति इति—पा० ।
२. मातृकामिद्दिरस्तु पञ्जम्—

तद्दूषणान्यसंरम्भाः सर्वज्ञजिनसाधने[1]।
शाक्या यानि वदन्त्येवं तान्यशक्ता दिगम्बराः ॥ ३३५० ॥
यत् सिद्धप्रतिबन्धेन प्रमाणेनोपपादितम् ।
तत्त्वं सौगतसिद्धान्ते सिद्धं नान्यमते तथा ॥ ३३५१ ॥
तेन व्यवस्थितंस्तेषां भिन्नैः साधनदूषणैः ।
प्रतिबिम्बोदयप्रख्यैर्निर्णयः क्रियतामलम् ॥ ३३५२ ॥
सर्वाकारज्ञतायास्तु न कश्चिदपि विद्यते ।
साक्षादितरथा वापि विरोधो ज्ञेयतादिभिः ॥ ३३५३ ॥
अज्ञेयत्वादिविश्लेषात् ज्ञेयत्वादि व्यवस्थितम् ।
न सर्वज्ञत्वविश्लेषात् तत्पुनः स्थितलक्षणम् ॥ ३३५४ ॥

"दूषणानि" ( तत्त्व० ३१५१ ) इत्यादावाह—तद्दूषणानीत्यादि । असंरम्भा इति संरम्भरहिताः । कृपयैव परानुग्रहाय तेषां प्रवृत्तेर्न भवतामिव रोषमानादिभिः । एवमिति । तदुपदिष्टस्य स्याद्वादादेर्दुष्टत्वप्रतिपादनात् ॥ ३३५० ॥

"तत्रान्यस्थिते" ( तत्त्व० ३१५२ ) इत्यादावाह—यदित्यादि । [ G. 880 ] यदिति यस्मात् । सिद्धप्रतिबन्धेनेति । वस्तुबलप्रवृत्तेन[2] सिद्धतादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धेनेत्यर्थः । तेनेति तस्मात् ॥ ३३५१–३३५२ ॥

"यस्य ज्ञेय०" ( तत्त्व० ३१५६ ) इत्यादावाह—सर्वाकारज्ञतायास्त्वित्यादि । अर्थान्तरविधानेनार्थान्तरस्य निषेधं प्रतिपादयितुमिच्छता साक्षात् पारम्पर्येण वा विरुद्धस्यैव विधानात् प्रतिपादनीयः, न विरुद्धस्य; अन्यथा हि यस्य कस्यचिद् विधानेन सर्वस्य निषेधः स्यात् । न च सर्वज्ञत्वस्य ज्ञेयत्वादिभिः सह कश्चित् साक्षात् पारम्पर्येण वा विरोधोऽस्ति । तथा हि—द्विविध एव भावानां विरोधो निरूप्यमाणोऽवतिष्ठते—परस्परपरिहारस्थितलक्षणो वा, यथा भावाभावयोः क्रमाक्रमयोर्वा; सहानवस्थानलक्षणो वा, यथाग्निशीतस्पर्शयोः । तत्राद्यस्तावज्ज्ञेयत्वादिभिः सह सर्वज्ञत्वस्य न सम्भवतीति दर्शयति—अज्ञेयत्वादीत्यादि ।

१. शासने—पा०, गा० । २. ०त्तं—गा० ।

सर्वज्ञत्वं न चाप्येतत् क्वचित् सम्पूर्णकारणम् ।
सत्त्वादिसम्भवे पश्चात् प्राक्प्रवृत्तं निवर्त्तते ॥ ३३५५ ॥
नैःस्वाभाव्येऽस्ववित्तौ[1] च न हि तज्जातु जायते ।
प्राक्प्रवृत्तेः प्रसिद्धेयमेव सर्वज्ञता भवेत् ॥ ३३५६ ॥
नाविरुद्धविधाने च युक्तमन्यनिवर्त्तनम् ।

---

यद्व्यवच्छेदनान्तरीयको यस्य परिच्छेदस्तयोरेव परस्परपरिहारस्थितिलक्षणो विरोध इति पूर्वमुक्तम् । न च ज्ञेयत्वादि सर्वज्ञत्वव्यवच्छेदेन स्थितम्, किं तर्हि ? अज्ञेयत्वादिव्यवच्छेदेन ॥ ३३५३-३३५४ ॥

नापि द्वितीयो विरोधः सम्भवतीति दर्शयन्नाह—सर्वज्ञत्वमित्यादि । यस्य ह्यविकलकारणस्य भवतो यत्सन्निधानादभावस्तयोरेव सहानवस्थानलक्षणो विरोधः, न चैतत् सर्वज्ञत्वमविकलकारणं प्राक् प्रवृत्तं दृष्टम्, येन पश्चात् सत्त्वादिसम्भवे सति निवर्त्तेत इति स्यात् ॥ ३३५५ ॥

कस्मान्न प्रवृत्तम् ? इत्याह—नैःस्वाभाव्य इत्यादि । [ G 881 ] यदि सर्वज्ञत्वं सर्वज्ञेयत्वसद्भावे सति निवर्त्तेत इति भवताऽभ्युपगम्यते, तदा च सति सत्त्वादिसन्निधानात् पूर्वमस्यासत्त्वमज्ञेयत्वं च स्वसंविदापीत्यभ्युपगतं भवेत्, तदथासत्त्वेन नैःस्वाभाव्ये सत्यज्ञेयत्वाच्चास्ववित्तौ सत्यां नैतत् सर्वज्ञत्वं जायते = भवतीति, तत्कथं प्राक्प्रवृत्तं पश्चान्निवर्त्तेत इति स्यात् । न हि निःस्वभावस्योत्पत्तिः सम्भवति । नाप्यनुपलभ्यस्य सत्ताव्यवस्थानिबन्धनमस्ति, ज्ञाननिबन्धनत्वाद् वस्तुसत्ताव्यवस्थायाः । तस्मात् स्ववचनव्याघात इत्यभिप्रायः ।

किञ्च—यदि प्राक्प्रवृत्तिरस्याभ्युपगम्यते, तदा प्रवृत्ते प्रयत्नमन्तरेणैव सर्वज्ञता सिद्धा, अतो न तत्प्रतिक्षेपो युक्तः, अन्यथा स्ववचनव्याहतिः स्यादिति दर्शयन्नाह—प्राक्प्रवृत्तेरित्यादि । प्राक्प्रवृत्ते, सर्वज्ञत्वस्याभ्युपगमे सतीति शेषः ॥ ३३५६ ॥

अथापि स्यात्—मा भूद् विरुद्धं ज्ञेयत्वादि, तथापि सर्वज्ञसत्त्वं गमयति ? इत्याह—नाविरुद्धेत्यादि ॥ ३३५७ ॥

---

१ नैःस्वाभाव्योऽ०—पा० ।

अन्यथा रूपसद्भावाद् रसाभावोऽपि गम्यते ॥ ३३५७ ॥
तदत्रादिपदाक्षिप्ते वक्तृत्वे योऽभिमन्यते ।
निश्चयं व्यतिरेकस्य परस्परविरोधतः ॥ ३३५८ ॥
विकल्पे सति वक्तृत्वं सर्वज्ञश्चाविकल्पतः ।
न ह्याविष्टाभिलापेन वस्तु ज्ञानेन गम्यते ॥ ३३५९ ॥
अत्रापि ये प्रवक्तृत्वं वितर्कानुविधानतः ।
सर्वज्ञस्याभिमन्यन्ते न तैर्वचनसम्भवे ॥ ३३६० ॥
सर्वज्ञ इष्यते नापि विकल्पज्ञानवृत्तितः ।
तस्मिन् क्षणे विकल्पे तु वक्तृत्वं न प्रसिद्ध्यति ॥ ३३६१ ॥

---

यस्तु मन्यते—यद्यपि ज्ञेयत्वादयो न विरुद्ध्यन्ते सर्वज्ञत्वेन, वक्तृत्वं तु विरुध्यत एव; पारम्पर्येणैतत्कारणेन विकल्पेन सर्वज्ञत्वस्य सहानवस्थानात्। तथा हि—'नावितर्क्य नाविचार्य वाचं भाषते' इति न्यायाद्वचनस्य विकल्पो हेतुः, विकल्पानां च सर्वेषामभिलापसंसृष्टतया न वस्तुस्वरूपग्रहणमस्ति; तस्य निर्विकल्पज्ञानगोचरत्वात्। अतो विकल्पावस्थायां वस्तुस्वरूपपरिज्ञानाभावान्न सर्वज्ञत्वमस्तीति सिद्धाख्य वक्तृत्वस्य विपक्षात् सर्वज्ञत्वलक्षणात् कारणानुपलब्ध्या व्यतिरेकनिश्चितिरिति नानैकान्तिकता हेतोः। अयं च वक्तृत्वाख्यो हेतुः 'यस्य ज्ञेयप्रमेयत्ववस्तुसत्त्वादिलक्षणाः' (तत्त्व० ३१५६) इत्यत्रादिशब्देनाक्षिप्त एवेति। तदेतत् तदत्रादिपदाक्षिप्त इत्यादिनाऽऽशङ्क्य, अत्रापि ये प्रवक्तृत्वमित्यापरिहरति।

[G 882] केचिद् भगवतो वक्तृत्वं विकल्पसम्मुखीभावादेवेति प्रतिपन्नाः, अन्ये तु 'पूर्वाविगवशादेवाविकल्पयतोऽपि वचनप्रवृत्तिर्भगवत' इति वर्णयन्ति। तत्र प्रथमे दर्शने यदि विकल्पावस्थायामसर्वज्ञत्वं साध्यते, तदा सिद्धसाध्यता; इष्यत एव तैस्तस्यामवस्थाया भगवतोऽसर्वदर्शित्वम्। अथाविकल्पावस्थायामसर्वज्ञत्वं साधयितुमिष्टम्[2] ! तदा हेतोरसिद्धता। न हि तस्यामवस्थायां वचनप्रवृत्तिरस्ति; समुत्थापकस्य विकल्पस्य तदानीमभावात्॥ ३३५८-३३६१ ॥

---

१. पूर्वविपचजा०—पा०। २. भावयितु०—पा०, गा०।

असर्वज्ञप्रणीतत्वं न चैवं तस्य युज्यते ।
सर्वज्ञतासमाक्षेपादतः संवादनं भवेत् ॥ ३३६२ ॥
अनुभूय यथा कश्चिदौष्ण्यं पश्चात् प्रभाषते ।
तस्माद् वस्त्वविसंवादस्तदर्थानुभवोद्भवात् ॥ ३३६३ ॥
तेन सर्वज्ञताकाले हेतोरस्याप्रसिद्धता ।
व्याहारवृत्तिकाले तु भवेद् सिद्धप्रसाधनम् ॥ ३३६४ ॥

---

ननु यदि विकल्पावस्थायामसर्वज्ञत्वमिष्यते, तदा तद्वचनस्यासर्वज्ञप्रणीतत्वादप्रामाण्यमेव प्राप्नोति ? इत्याशङ्क्याह—असर्वज्ञप्रणीतत्वमित्यादि ॥३३६२॥

यद्यपि तस्यामवस्थायामसर्वज्ञ , तथाप्यसर्वज्ञप्रणीतत्वमस्य न भवति, कुतः ? सर्वज्ञतया समाक्षिप्तत्वात् तस्य । अत एव सर्वज्ञज्ञानबलोत्पन्नविकल्पसमुत्थापितत्वात् तस्य पारम्पर्येण वस्तुनि प्रतिबन्धादनुमानविकल्पवत् प्रामाण्यमपि भवति । अत्रैव दृष्टान्तमाह—अनुभूयेत्यादि । तस्मादिति तथ्यानुभवजन्मभाविनो वचनात् । तदर्थानुभवोद्भवादिति । तस्योष्णार्थस्यानुभवात् पारम्पर्येण विकल्पस्योद्भवादित्यर्थः ।

स्यादेतत्—यदि सर्वज्ञस्य विकल्पसम्भवोऽस्ति, तदा भ्रान्तः प्राप्नोति; विकल्पस्य प्रकृत्या स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन[1] प्रवृत्तेर्भ्रान्तत्वादिति ? नैतदस्ति; यदारोपितस्य तात्त्विकस्य च रूपस्य विभागं न जानीयात्, तदा भ्रान्तो भवेत्, यावता विकल्पविषयमारोपिताकारं निश्चिन्वन् ग्राह्यं च वस्तु निर्विकल्पकज्ञानगोचरं पृथगेव तात्त्विकं तद्विकल्पात्मना पश्यन् कथं विपर्यस्तो नाम ? यद्यविपर्यस्तः, कथमारोपयति विकल्पावस्थायामिति चेत् ? न, शब्दप्रवृत्त्युपायज्ञत्वात् । यतो नान्यमारोपकविकल्पव्यतिरेकेण [G 883] शब्दस्य समुत्पादकं पश्यति, नापि शब्दार्थमारोपितादन्यमुपलभते, अतः शब्दप्रवृत्त्युपायज्ञो जगदनुकम्पया यथावदधिगतं तत्त्वमप्रतिपाद्य परस्मै ख्यापितु[2] समर्थः सन्तत्प्रतिपादयिषया शब्दप्रवृत्त्युपायमारोपकं विकल्पमारोप्यं च शब्दाभिधेयमारचयति । एतच्च पश्चादा-

---

१. ०भासेनार्थेऽर्थां०—गा० ।
२. नास्तितु—पा०, गा० ।

समस्तवस्तुविज्ञानशक्त्यपाकरणेऽपि ते ।
सन्दिग्धव्यतिरेकित्वं तदवस्थं प्रसज्यते ॥ ३३६५ ॥
व्याहारवृत्तिसामर्थ्ये हेतुत्वेनापि सम्मते ।
सन्दिग्धव्यतिरेकित्वदोष एवानुवर्त्तते ॥ ३३६६ ॥
"चक्रभ्रमणयोगेन निर्विकल्पेऽपि तायिनि ।
सम्भारावेगसामर्थ्याद्[१] देशना सम्प्रवर्त्तते" ॥ ३३६७ ॥

---

शङ्कय चोद्यं परिहरिष्यति । अस्माभिस्त्वत्र प्रस्तावागतत्वादित्यभिहितम् । अत एव वक्तृत्वाद् रागित्वानुमानमप्ययुक्तम्; अन्यथापि वचनप्रवृत्तिसम्भवात् । न हि रागादीनामेव कार्यं वचनस्पन्दादय; वक्तुकामतासामान्यहेतुत्वात् । सा[२] च[२] वक्तुकामता वीतरागस्य करुणयापि सम्भवतीति व्यभिचारः । सैव करुणा राग इति चेत् ! न[३]; न नामकरणे[३] किञ्चिदनिष्टमापद्यते । किन्तु नित्यसुखात्मीय-दर्शनाक्षिप्तं सास्रवस्तुविषयं चेतसोऽभिष्वङ्गं रागमाहुः । तत्पूर्वकश्चात्मात्मीयोपरोधिनि प्रतिहतिः = द्वेषः । आत्मात्मीयग्रहश्च मोहः, न चैव कृपा; तस्या असत्यप्यात्मग्रहे दुःखविशेषदर्शनमात्रेणाभ्यासबलेनैवोत्पादात् । तथा हि वीत-रागाणां धर्माद्यालम्बना मैत्र्यादयः शास्त्रे वर्णिता. ॥ ३३६३-३३६४ ॥

स्यादेतद्—यदि सर्वविषयज्ञानाभिमुखीभावमात्रं साध्यते, तथापि सिद्ध-साध्यता भवेद्, यावता समस्तवस्तुतत्त्वविस्तरज्ञानाशक्तता साधयितुमिष्टा, अतो न सिद्धसाध्यता; नापि हेतोरसिद्धता, व्याहारसामर्थ्यमात्रस्य हेतुत्वेन विवक्षितत्वात् ! इत्यत आह—समस्तेत्यादि । उभयत्रापि पक्षे साध्यविपर्यये हेतोर्बाधकप्रमाणा-भावात् । सन्दिग्धव्यतिरेकित्वेनानैकान्तिकता हेतोः ॥ ३३६५-३३६६ ॥

अथ येषामविकल्पतोऽपि[४] भगवतो वचनप्रवृत्तिरिति पक्ष., तत्राह—चक्रे-त्यादि । [ G 884 ] यथा हि चक्रस्योपरतेऽपि दण्डप्रेरणव्यापारे पूर्ववेगवशाद् भ्रमणम्, एवं भगवति प्रत्यस्तमितकल्पनाजालेऽपि स्थिते मवर्चेत एव पूर्वपुण्य-

---

१. सम्भारावेग०—चै० । २–२. साग—पा० ।
३–३. नामकरणे—पा०; न नामकरणया—गा० ।
४. ०मविकल्पयतो०—गा० ।

इति ये सुधियः प्राहुस्तान् प्रत्यपि न सिध्यति ।
वक्तृत्वं यत्तु लोकेन मतमाध्यवसायिकम् ॥ ३३६८ ॥
तत्र तादृशि हेतौ स्यात् सन्दिग्धव्यतिरेकिता ।
ननु चासिद्धता केन मतेऽत्रानुपपत्तिके ? ॥ ३३६९ ॥
उच्यते यदि वक्तृत्वं स्वतन्त्रं साधनं मतम् ।
तदानीमाश्रयासिद्धं सन्दिग्धासिद्धताऽस्ति[1] वा ॥ ३३७० ॥

ज्ञानसम्भारावेगवशाद् देशनेति सुधियः सौगताः केचन विज्ञानवादिनः प्रतिपन्नाः, तान् प्रति स्फुटतरमसिद्धतादोषो हेतोरवसीयत एव ।

स्यादेतद्—अस्मिन् दर्शने सर्वेषामेव स्वप्रतिभासानुभवमात्रत्वात् परमार्थतो न कस्यचिद् वक्तृत्वमस्ति, किन्त्वध्यवसायवशाद्वदत्यपि परस्मिंस्तथा प्रतिभासिविज्ञानोत्पत्तावधिपतिप्रत्ययभावेन स्थिते वक्तृत्वाभिमानो लोके, तदेवाध्यवसायिकं लोकप्रतीतं वक्तृत्वं हेतुत्वेनाभिप्रेतम् । न हि सिद्धान्तप्रसिद्धो हेतुर्धर्मी वा क्रियते, किं तर्हि ? लोकप्रतीत एव; अतो नासिद्धता हेतोः ? इत्याशङ्कयाह—वक्तृत्वमित्यादि । अत्रापि पूर्ववत् सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकता हेतोः ।

नन्वित्यादिना परो यदसिद्धत्वमत्र विज्ञानवादनये प्रोक्तं तद्विघटयति । एवं मन्यते—य एव तूभयनिश्चितवाची, स एव साधनं दूषणं वा, नान्यतरप्रसिद्धः[2] सन्दिग्धवाची, पुनः साधनापेक्षणादिति न्यायात् । अप्रमाणोपपन्नेऽस्मिन् विज्ञानवादमते कथमसिद्धतोद्भाव्यते, न हि स्वेच्छामात्रेण सिद्धत्वासिद्धत्वपरिकल्पनाया दूषणं भवति, किं तर्हि ? प्रमाणबलोपपादितायाः सिद्धावसिद्धौ वा, न च प्रमाणबलाद् विज्ञाननयः सिद्धः, विस्तरेण निरस्तत्वात् ॥३३६७–३३६९॥

उच्यत इत्यादिना प्रतिविधत्ते । [G 885] अत्र विकल्पद्वयम्—कदाचिद् वक्तृत्वं स्वातन्त्र्येण साधनं नाभिप्रेतं भवेत् प्रसङ्गसाधनं वा । तत्राद्ये पक्षे विशेषेणाश्रयो न सिद्ध इत्याश्रयासिद्धता हेतोः । अथ सामान्येनाश्रयो विवक्षितः ? तथापि यान्तं प्रतिवादिनं प्रति प्रमाणेन वक्तृत्वं साध्यते तावत् सन्दिग्धासिद्धता, य एव तूभयनिश्चितवाची स एव साधनमिति न्यायात् ।

१ ॰सिद्धताथ—पा॰, गा॰ । २ नान्यतरप्रसिद्ध —गा॰ ।

अस्य चार्थस्य सन्देहात् सन्दिग्धासिद्धता स्थिरा ।
प्रसङ्गसाधनं तस्मात् त्वया वक्तव्यमीदृशम् ॥ ३३७१ ॥
तत्र चागममात्रेण सिद्धो धर्मः प्रकाश्यते ।
न तु तद्भावसिद्धयर्थं ज्ञापकं विद्यते परम् ॥ ३३७२ ॥
एवं यस्य प्रमेयत्ववस्तुसत्तादिलक्षणाः ।
निहन्तुं हेतवोऽशक्ताः को न तं कल्पयिष्यति ॥ ३३७३ ॥
वेदवादिमुखस्यैवं युक्तिर्लौकिकवैदिकी ।
न काचिदपि शाक्योपसर्पज्ञानविषापहा ॥ ३३७४ ॥
वृणिवर्धैरिह दृष्टोऽपि स्वल्पशक्तिर्द्विजो जडः ।
उच्छ्वासमपि नो कर्तुं शक्नोति किमु [1]बाधितुम् ॥ ३३७५ ॥
वेदवादिमुखस्था तु युक्तिः साध्व्यपि दुर्भगा ।
कण्ठिका चरणस्थेव जघन्याश्रयसंस्थितेः ॥ ३३७६ ॥
पावकाव्यभिचारित्वं धूमस्यापि न शक्यते ।
वक्तुं तेन यतो धूमस्तन्मतेऽन्यत्र वर्त्तते ॥ ३३७७ ॥

---

अस्येति वक्तृत्वस्य । तस्मान्मा भूदयं दोष इति प्रसङ्गसाधनमङ्गीकर्त्तव्यं त्वया । तत्रापि प्रसङ्गसाधने य एवाविचाररमणीयतयाऽऽगममात्रात् परस्य प्रसिद्धो धर्मः स एव साधनत्वेन प्रकाशनीयः परस्परविरोधोद्भावनाय, त्वसौ प्रमाणेन साधनीयः; निष्प्रयोजनत्वात् । न च वक्तृत्वं परस्यागममात्रेण प्रसिद्धम्—इत्युभयथाऽप्रसिद्धता हेतोः ॥ ३३७०–३३७२ ॥

एवमित्यादिनोपसंहारन् परोक्तेष्वर्थविपर्ययमादर्शयति । को न तं कल्पयिष्यतीति । सम्भवित्वेनेति शेषः । यतो बाधकानुपलम्भादेव तस्य सम्भावना सिद्ध्यतीति भावः । आस्तां तावदेतत्—यदसाध्वी युक्तिर्वेदवादिमुखस्था नैव शोभत इति, नैवात्र चित्रम्; किन्तु साध्व्यप्याश्रयदोषेण भवतोच्यमाना भ्राजते ॥ ३३७३–३३७६ ॥

कथम् ? इत्याह—पावकाव्यभिचारित्वमित्यादि । [G 886] धूमस्य

---

१. बाधितुम्—चौ० ।

इति ये सुधियः प्राहुस्तान् प्रत्यपि न सिध्यति।
वक्तृत्वं यत्तु लोकेन मतमाध्यवसायिकम्॥ ३३६८॥
तत्र तादृशि हेतौ स्यात् सन्दिग्धव्यतिरेकिता।
ननु चासिद्धता केन मतेऽत्रानुपपत्तिके?॥ ३३६९॥
उच्यते यदि वक्तृत्वं स्वतन्त्रं साधनं मतम्।
तदानीमाश्रयासिद्धं सन्दिग्धासिद्धताऽस्ति[1] वा॥ ३३७०॥

ज्ञानसम्भारावेगवशाद् देशनेति सुधियः सौगताः केचन विज्ञानवादिनः प्रतिपन्नाः, तान् प्रति स्फुटतरमसिद्धत्वदोषो हेतोरवसीयत एव।

स्यादेतत्—अस्मिन् दर्शने सर्वेषामेव स्वप्रतिभासानुभवमात्रत्वात् परमार्थतो न कस्यचिद् वक्तृत्वमस्ति, किन्त्वध्यवसायवशाद्वदत्यपि परस्मिंस्तथा प्रतिभासिविज्ञानोत्पत्तावधिपतिप्रत्ययभावेन स्थिते वक्तृत्वाभिमानो लोके, तदेवाध्यवसायिकं लोकप्रतीतं वक्तृत्वं हेतुत्वेनाभिप्रेतम्। न हि सिद्धान्तप्रसिद्धो हेतुर्धर्मी वा क्रियते, किं तर्हि? लोकप्रतीत एवेत्यतो नासिद्धता हेतोः? इत्याशङ्क्याह—वक्तृत्वमित्यादि। अत्रापि पूर्ववत् सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकता हेतोः।

नन्वित्यादिना परो यदसिद्धत्वमत्र विज्ञानवादनये प्रोक्तं तद्विघटयति। एवं मन्यते—य एव तूभयनिश्चितवाची स एव साधनं दूषणं वा, नान्यतरप्रसिद्धः[2] सन्दिग्धवाची पुनः साधनापेक्षणादिति न्यायात्। अप्रमाणोपपन्नेऽस्मिन् विज्ञानवादमते कथमसिद्धतोद्भाव्यते, न हि स्वेच्छामात्रेण सिद्धत्वासिद्धत्वपरिकल्पनाया दूषणं भवति, किं तर्हि? प्रमाणबलोपपादितायाः सिद्धावसिद्धौ वा, न च प्रमाणबलाद् विज्ञाननयः सिद्धः, विस्तरेण निरस्तत्वात्॥३३६७-३३६९॥

उच्यत इत्यादिना प्रतिविधत्ते। [G 885] अत्र विकल्पद्वयम्—कदाचिद् वक्तृत्वं स्वातन्त्र्येण साधनमभिप्रेतं भवेत् प्रसङ्गसाधनं वा। तत्राद्ये पक्षे विशेषेणाश्रयो न सिद्धः इत्याश्रयासिद्धता हेतोः। अथ सामान्येनाश्रयो विवक्षितः? तथापि यावत् प्रतिवादिनं प्रति प्रमाणेन वक्तृत्वं साध्यते तावत् सन्दिग्धासिद्धता, य एव तूभयनिश्चितवाची स एव साधनमिति न्यायात्।

१ ॰सिद्धताऽपि—पा॰, गा॰। २ नान्यतरप्रसिद्धः—पा॰।

अस्य चार्थस्य सन्देहात् सन्दिग्धासिद्धता स्थिरा ।
प्रसङ्गसाधनं तस्मात् त्वया वक्तव्यमीदृशम् ॥ ३३७१ ॥
तत्र चागममात्रेण सिद्धो धर्मः प्रकाश्यते ।
न तु तद्भावसिद्ध्यर्थं ज्ञापकं विद्यते परम् ॥ ३३७२ ॥
एवं यस्य प्रमेयत्ववस्तुसत्तादिलक्षणाः ।
निहन्तुं हेतवोऽशक्ताः को न तं कल्पयिष्यति ॥ ३३७३ ॥
वेदवादिमुखस्यैवं युक्तिर्लौकिकवैदिकी ।
न काचिदपि शाक्येशप्रसर्पज्ञानविपापहा ॥ ३३७४ ॥
दूरेविपर्यंरिह दृष्टोऽपि स्वरूपशक्तिहितो जडः ।
उच्छ्वासमपि नो कर्तुं शक्नोति किमु [1]बाधितुम् ॥ ३३७५ ॥
वेदवादिमुखस्था तु युक्तिः साध्व्यपि दुर्भगा ।
कणिठका चरणस्थेव जघन्याश्रयसंस्थितेः ॥ ३३७६ ॥
पावकाव्यभिचारित्वं धूमस्यापि न शक्यते ।
वक्तुं तेन यतो धूमस्तन्मतेऽन्यत्र वर्त्तते ॥ ३३७७ ॥

---

अस्येति वक्तृत्वस्य । तस्मान्मा भूदयं दोष इति प्रसङ्गसाधनमङ्गीकर्त्तव्यं त्वया । तत्रापि प्रसङ्गसाधने य एवाविचाररमणीयतयाऽऽगममात्रात् परस्य प्रसिद्धो धर्मः स एव साधनत्वेन प्रकाशनीयः परस्परविरोधोद्भावनाय, न त्वसौ प्रमाणेन साधनीयः; निष्प्रयोजनत्वात् । न च वक्तृत्वं परस्यागममात्रेण प्रसिद्धम्—इत्युभयथाऽप्रसिद्धता हेतोः ॥ ३३७०–३३७२ ॥

एवमित्यादिनोपसंहारन् परोक्तेष्वर्थविपर्ययमादर्शयति । को न तं कल्पयिष्यतीति । सम्भवित्वेनेति शेषः । यतो बाधकानुपलम्भादेव तस्य सम्भावना सिद्ध्यतीति भावः । आस्तां तावदेतत्—यदसाध्वी युक्तिर्वेदवादिमुखस्था नैव शोभत इति, नैवात्र चित्रम्; किन्तु साध्व्यप्याश्रयदोषेण प्रवक्त्रोच्यमाना न भाजते ॥ ३३७३–३३७६ ॥

कथम्? इत्याह—पावकाव्यभिचारित्वमित्यादि । [ C. 886 ] धूमस्य

---

१. बाधितुम्—चै० ।

एकवस्तुस्वरूपत्वादुदन्वत्यपि वर्त्तते ।
तत्राप्यनलसद्भावे व्यतिरेकः किमाश्रयः ॥ ३३७८ ॥
तद्रूपकार्यविज्ञप्तिः किं वा तत्रापि नो भवेत् ।
विलक्षणात्मभावे वा वस्तुभेदोऽस्तु तात्त्विकः ॥ ३३७९ ॥
समस्तवस्तुसम्बद्धतत्त्वाभ्यासबलोद्गतम् ।
सार्वज्ञं मानसं ज्ञानं मानमेकं प्रकल्प्यते ॥ ३३८० ॥
स तु नेत्रादिविज्ञानं ततः किमिदमुच्यते ।
नूनं स चक्षुषा सर्वान्[1] रसादीन्[1] प्रतिपद्यते ॥ ३३८१ ॥
सिद्धं च मानसं ज्ञानं रूपाद्यनुभवात्मकम् ।
अविवादः परस्यापि वस्तुन्येतावति स्फुटः ॥ ३३८२ ॥

दहनमपि यद्धन्मतया[2] तदव्यभिचारित्वमागोपालमतिप्रतीतमेव, तस्यापि त्वया सर्वस्य जगतो वस्तुत्वादिना पारमार्थिकमैक्यं वर्णयता दहनाव्यभिचारत्वं न शक्यं प्रतिपादयितुम्, वस्तुरूपत्वेनोदकेऽस्य[3] भवन्मतेन धूमस्य परमार्थतो वृत्ते ।

स्यादेतत्—तत्राप्युदन्वति[4] धूमवद्वस्तुरूपत्वेनानलस्यापि सद्भावात्[4] अव्यभिचारितैव ? इत्याह—तत्रापीत्यादि । तत्राप्युदन्वति तादात्म्येन यद्यनलस्वभावोऽङ्गीक्रियते, तदाऽनले साध्ये जलादिर्न विपक्षः स्यात्, ततश्च विपक्षाभावाद् धूमादेर्लिङ्गस्य किमाश्रयो विपक्षाद् व्यतिरेको भवेत् ॥ ३३७७–३३७८ ॥

यदि जलधौ परमार्थतो दहनोऽवस्थित इति मतम्, किमिति तद्रूपोपलब्धिर्दाहपाकादिलक्षणकार्यनिर्भासा च विज्ञप्तिर्न जायते । वैलक्षण्यमभीष्टमिति चेद् ? आह—विलक्षणात्मेत्यादि । एतच्च विस्तरेण स्याद्वादपरीक्षायां विचारितमित्यास्तां तावदेतत् ॥ ३३७९ ॥

यदुक्तम्—"एकेनैव प्रमाणेन" ( तत्त्व० ३१५७ ) इत्यादि, तत्राह—समस्तेत्यादि । [ C 887 ] यदि चक्षुरादीन्द्रियधिया सर्वार्थपरिज्ञानमभ्युगतं भवेत्, तदा भवेद् यथोक्तदोषप्रसङ्गः, यावता समस्तवस्तुगतानित्यत्वादिलक्षणादोष-

१–१ सर्वान्रसान्—पा० । २. ०जन्म तया—पा०, गा० ।
३. वस्तुस्वरूप०—पा०, पा० । ४–४. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति ।

वर्ण्यते हि स्मृतिस्तेन रूपशब्दादिगोचरा ।
स्वप्ने च मानसं ज्ञानं सर्वार्थानुभवात्मकम् ॥ ३३८३ ॥
ततश्चानियतार्थेन मानसेन प्रकल्पिते ।
सर्वज्ञे चक्षुषा कस्माद् रसादीन् प्रतिपद्यते ॥ ३३८४ ॥
चाक्षुषेणैव तत्सङ्ग्राह्यं दोषो भवेदपि ।
मानसेन[1] तु चित्तेन वेत्त्येव स[2] रसादिकम् ॥ ३३८५ ॥
यत्राप्यतिशयो दृष्टः स्वस्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तितः ॥ ३३८६ ॥
इत्यादिकमतोऽनिष्टं[3] परैरुक्तं न नो यतः ।
स्वार्थाविलङ्घनेनैव मानसेऽतिशयो मतः ॥ ३३८७ ॥
यज्जातीयैः प्रमाणैश्च यज्जातीयार्थदर्शनम् ।
दृष्टं सम्प्रति लोकस्य तथा कालान्तरेऽपि नः ॥ ३३८८ ॥
विशुद्धं वा भवेज्ज्ञानं सर्वं सर्वार्थगोचरम् ।

तत्त्वाभ्यासप्रकर्षपर्यन्त[4] येन[4] मनोविज्ञानेन सत्त्वार्थगोचरेण स्फुटप्रतिभासाविसंवादित्वाभ्यां प्रत्यक्षतामुपगतेन युगपदशेषवस्तुग्रहणात् सर्वविदिष्टः, न तु चक्षुरादिधिया । न च मनोज्ञानं सर्वार्थगोचरतया न प्रसिद्धमिति युक्तं वक्तुम्; यतो भवताऽपि रूपशब्दादिविषयं स्मार्तं ज्ञानमुपवर्णितम्, तच्च मनोज्ञानमेव । स्वप्ने च रूपादिप्रतिभासमतिप्रतीतमेवेति नाप्यपह्नव शक्यक्रियः । तेन स्वार्थाविलङ्घनेनैवातिशयस्येष्टत्वादस्माकं किञ्चिदनिष्टमापादितं भवता ॥३३८०-८८॥

यस्यापि ज्ञानवादिनोऽक्षधिया सर्वविदिष्टः, तस्यापि दोषः[5]; दौष्ठुल्यवासनायाः[5] प्रहाणे सति सर्वार्थवृत्तित्वेन सर्वधियां विमुक्तत्वमस्येष्टत्वात् । दौष्ठुल्यवासनैव हि धियां नियमकारणम्, तत्प्रहाणे सति कुतो नियतार्थविषयत्वमासां सम्भवेत् ?—इति मन्यमान आह—विशुद्धं वेत्यादि । कारणभेदेन हि भावानां

1. समासेन—पा०, गा० ।    २. च—पा०, गा० ।
३. ०ष्टं—पै० पुस्तके पाठः ।    ४-४. ०पर्यन्तं येन—पा०, गा० ।
५-५. दोषादौष्ठुल्य०—पा०, दोषादौष्ठुल्य०—गा० ।

हेतोः सम्भाव्यते कश्चित् फलेऽप्यतिशयः क्वचित् ॥ ३३८९ ॥
न हि सूक्ष्मफला दृष्टा आमलक्यो मराविति ।
सर्वास्तत्त्वेन तद्रूपा अन्यत्रापि भवन्ति ताः ॥ ३३९० ॥
'शृण्वन्ति चक्षुषा सर्पाः' इत्येषापि श्रुतिस्ततः ।
सम्भाव्यार्था विचित्रा हि सत्त्वानां कर्मशक्तयः ॥ ३३९१ ॥
यस्याप्यत्रितयस्यं हि सर्वं वस्त्ववभासते ।
तथा नियतसामर्थ्यं वक्तुमित्थं स शोभते ॥ ३३९२ ॥
यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।
भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥ ३३९३ ॥
इदानीमपि लोकस्य शक्तिर्ज्ञातुं न शक्यते ।
भवता जन्तुमात्रेण सर्वशक्त्यविनिश्चयात् ॥ ३३९४ ॥
निःशेषसत्त्वशक्तीनां जाने सर्वज्ञता बत ।
न चानुमानतः सिद्धिरन्यथाभावशङ्कया ॥ ३३९५ ॥

---

स्वभावभेदप्रतिनियमात्र शक्यते क्वचिदेकत्र दृष्टस्य वस्तुनः सर्वत्र सर्वथा तथा भावो निश्चेतुम्, न हि सूक्ष्मफला आमलक्यो मरुषु समुपलब्धा इत्येतावता सर्वत्र देशे सत्यपि कारणभेदसम्भवे तथात्वेनावधारयितुं दर्शनमात्रेण प्रेक्षावन्तो युक्ताः। तेन चक्षुषापि योगाभ्यासविशेषबलशलाकोन्मीलितेन कश्चिदपि सर्वार्थान् पश्य-तीत्यविरुद्धम् ॥ ३३८९–३३९१ ॥

[ G 888 ] "यज्जातीयै" (तत्त्व० ३१५८) इत्यादावाह—यस्येत्यादि। तथा नियतसामर्थ्यमिति। तेनेष्टरूपेण नियतसामर्थ्यं सर्वं वस्त्ववभासत इति सम्बन्धः ॥ ३३९२ ॥

कीदृशं तद्वक्तुं शोभते ? इत्याह—यज्जातीयैरित्यादि। स्यादेतत्—न वयं प्रत्यक्षतो ज्ञात्वैवं ब्रूमः—'तथा कालान्तरेऽप्यभूत्' (तत्त्व० ३१५८) इति, किं तर्हि ? अनुमानात्, यत्प्रमाणं यज्जातीयार्थग्राहि दृष्टम्, तत्कालान्तरेऽपि तथैवाभूत् प्रमाणत्वादिति ? तत्राह—न चानुमानतः सिद्धिरिति। आमलक्यादि-

अतीन्द्रिययार्थविज्ञानयोगेनाप्युपलभ्यते ।
प्रज्ञादिगुणयोगित्वं पुंसां विद्यादिशक्तितः ॥ ३३९६ ॥
अस्ति हीक्षणिकाद्याख्या विद्यायां सुविभाविता ।
परचित्तपरिज्ञानं करोतीहैव जन्मनि ॥ ३३९७ ॥
भूतानुमितदृष्टं च यत्र यस्त्वत्र जन्मनि ।
भूतं भवद् भविष्यच्च तद् विदन्ति वदन्ति च ॥ ३३९८ ॥
ससंवादमभिव्यक्तमाविष्टाः पुरुषा इह ।
विचित्रमन्त्रनागेन्द्ररक्षोयक्षादिशक्तितः ॥ ३३९९ ॥
मा वा भूद् दृष्टमित्यादि तथाप्यत्र न बाधकम् ।
किञ्चित् प्रमाणमस्तीति तदभावो न सिद्धयति ॥ ३४०० ॥
उक्तेन च प्रकारेण वेदकारे प्रसाधिते ।
अवश्याभ्युपगन्तव्यस्त्वयाऽतीन्द्रियदृग् नरः ॥ ३४०१ ॥

अहेतुविशेषेण[1] कार्यस्य[1] विशेषदर्शनात् । अन्यथापि विजातीयार्थग्रहणद्वारेण सम्भाव्यमानत्वादनैकान्तिकता हेतो ॥ ३३९३–३३९५ ॥

"येऽपि सातिशया दृष्टा" (तत्त्व० ३१५९) इत्यादावाह—अतीन्द्रियार्थविज्ञानयोगेनापीत्यादि । [G 889] न त्वतीन्द्रियार्थदर्शनादित्यसिद्धमेतत्, तथा हि—ईक्षणिकादिविद्याबलेन डाकिन्यादीनां परचित्तज्ञानं भूतभवद्भविष्यद्वस्तुपरिज्ञानं चोपलभ्यत एव । आदिशब्देन गान्धारीप्रभृतीनां ग्रहणम् । [2]विचित्रभूतमहावेशनलब्धातीन्द्रियार्थपरिज्ञानदर्शनादन्यत्राप्यप्रतिक्षेपः । मा भूद्वा व्यभिचारविषयदर्शनम्, तथाप्यदर्शनमात्रेण[3] सर्वविदो भावाभावो निश्चेतुं युक्त । तदभाव = अतीन्द्रियार्थदृगभावो न सिद्धयति ॥ ३३९६–३४०० ॥

"प्राज्ञोऽपि हि" (तत्त्व० ३१६०) इत्यादावाह—उक्तेन चेत्यादि । उक्तेनेति । श्रुतिपरीक्षायाम्[4] ॥ ३४०१–३४०२ ॥

१–१. विशेषणकार्यस्य—पा०, गा० । २. ०महाव्यावेश०—पा० ।
३. ०प्यप्रतिमात्रेण—पा०, ०प्यप्रतिलभ्यमानेण—गा० ।
४. अतिपरीक्षायाम्—पा० ।

अत: प्राज्ञो नरः सूक्ष्मानर्थान् द्रष्टुं क्षमो भवेत् ।
सजातीरप्यतिक्रामन् परानभिभवेन् नरान् ॥ ३४०२ ॥
यथा स्वविषये शक्तिः श्रोत्रादे: प्रविशिष्यते ।
गतियोगविशेषाद्यैर्मनसोऽपि तथा भवेत् ॥ ३४०३ ॥
तथा हि चोल्यते रूपं गृध्रैर्दूरतरस्थितम् ।
तिरस्कृतं निधानादि तथा सिद्धाञ्जनादिकैः ॥ ३४०४ ॥
एव गतिविशेषेण देवादेर्दर्शनं भवेत् ।
सूक्ष्मव्यवहितादीना स्वोपपत्त्यानुरूप्यतः[1] ॥ ३४०५ ॥
योगाभ्यासविशेषाद्य योगिना मानसं तथा ।
ज्ञानं प्रकृष्टरूपं स्यादित्यत्रास्ति न बाधकम् ॥ ३४०६ ॥
गतियोगादिवैकल्ये ज्ञाने स्वतिशयो यदि ।

---

अत्रैवोपपत्तिमाह—यथा स्वविषय इत्यादि । यथा गतिविशेषेण च श्रोत्रादे स्वार्थशक्तिर्विशिष्यते, तथा मनसोऽपि हेतुविशेषेण शक्ति प्रविशिष्यत इति सम्भाव्यम् ॥ ३४०३ ॥

तत्र गतिविशेषकृत श्रोत्रादेर्विशेष दर्शयति—तथा हीत्यादि । योगविशेषकृतमप्याह—तिरस्कृतमित्यादि । सिद्धाञ्जनादिकैरिति । वीक्ष्यत इति सम्बन्ध । हेतौ करणे वा तृतीयेयम् ॥ ३४०४ ॥

एव गतिविशेषस्य ज्ञानशक्तिविशेष प्रति हेतुभाव प्रसाध्य दार्ष्टान्तिकेऽर्थे योजयन्नाह—एवमित्यादि । स्वोपपत्त्यानुरूप्यत इति । अधस्तादेषा ज्ञानदर्शन प्रवर्तते नोर्ध्वमित्येव [ G 890 ] यथास्वमुपपत्त्या आनुरूप्येण ज्ञान भवघातुर्महाराजकायिकादीना[2] देशना केन वार्यते ॥ ३४०५ ॥

योगकृतमपि विशेष योजति—योगाभ्यासेत्यादि ॥ ३४०६ ॥

यदि तु पुनर्यथोक्तगतियोगादिकारणासम्भवमुपदर्श्यातिशयनिषेध क्रियते, तदा सिद्धसाध्यतेति दर्शयन्नाह—गतियोगादिवैकल्य इति । देवानाम् ।

---

1. स्रोपपत्त्य०—जै० पुस्तके पाठा० ।
2. भवघातुमहा०—पा०, भवजातुमहा०—गा० ।

सिध्यतेऽयुक्तमेतद्धि हेत्वभावात् फलं न हि ॥ ३४०७ ॥
यथा शास्त्रान्तरज्ञानं तन्मात्रेण न लभ्यते ।
उत्तरोत्तरतद्धेतुवैकल्येऽतिशयस्तथा ॥ ३४०८ ॥
न चैकदेशविज्ञानात् सर्वज्ञास्तीतोच्यते ।
येन वेदादिविज्ञानात् स्वर्गाद्यध्यक्षता भवेत् ॥ ३४०९ ॥
किन्तु प्रज्ञाकृपादीनामभ्यासाद् वृद्धिदर्शनात् ।
अन्योऽप्यतिशयस्तस्माद् वर्धमानात् प्रतीयते ॥ ३४१० ॥
मनोगुणतयाप्येवां काष्ठापर्यन्तसम्भवः ।
नैर्घृण्यवत् महाभ्यासान्निष्ठाऽशेषार्थबोधनात् ॥ ३४११ ॥
धर्मावबोधरूपा[1] हि प्रज्ञा लक्षणतः स्थिता ।
एकस्याप्यपरिज्ञाने साऽसमाप्तैव वर्तते ॥ ३४१२ ॥

यच्चोक्तम्—"श्रोत्रगम्येषु" (तत्त्व० ३१६१) इत्यादि, तदप्यनेनैव प्रत्युक्तम्; अदर्शनमात्रेण तथाविधस्यातिशयस्य प्रतिषेद्धुमशक्यत्वादित्यभिप्रायः ॥ ३४०७-३४०८ ॥

यच्चोक्तम्—"एवं शास्त्रविचारेषु" (तत्त्व० ३१६३) इत्यादि, तत्राह—न चैकदेशेत्यादि । न ह्यस्माभिरेकदेशपरिज्ञानमात्रादशेषपदार्थपरिज्ञानमभ्युपगम्यते, येनाभ्यधायि भवता—'न[2] शास्त्रान्तरज्ञानं तावन्मात्रेण लभ्यते' इति, किन्त्वभ्यासवशात् प्रज्ञाप्रकर्षोपलम्भादन्योऽप्यतीन्द्रियार्थपरिज्ञानकृतो[3] विशेषस्तस्मादभ्यासाद् वर्धमानात् प्रकर्षविशेषं प्राप्नुवद् भवतीति सम्भाव्यते । एतच्च पूर्वं प्रसाधितं पुनरपि भूयः प्रमाणयति । प्रयोगः—ये ये मनोगुणास्तेऽभ्यासातिशये सति सम्भवत्प्रकर्षपर्यन्तवृत्तयः, यथा [G. 891] श्रोत्रियजनोदितनैर्घृण्यम् । मनोगुणश्च प्रज्ञेति स्वभावहेतुः । न चानैकान्तिकता हेतोः, प्रज्ञायाः पदार्थस्वभावबोधलक्षणायाः प्रकर्षपर्यन्तगमनं नाशेषार्थपरिज्ञानमन्तरेण सम्भवति । नाप्यप्रसिद्धविशेषणतया हेतोरसिद्धता, पूर्वमभ्यासविशेषसम्भवस्य विस्तरेण प्रसाधितत्वात् । काष्ठाशब्दः प्रकर्षपर्यायः ॥ ३४०९-३४१२ ॥

1. अर्थावबोध०—गा० । 2. न तु—गा० ।
3. ०तीन्द्रियपरि०—पा०, गा० ।

ये वा समानजातीयपूर्वबीजप्रवृत्तयः ।
तेऽत्यन्तवृद्धिधर्माणः संस्कारोत्कर्षभेदतः ॥ ३४१३ ॥
व्रीह्यादिवत् सम्भविनो दयामत्यादयोऽपि च ।
यथाभिहितधर्माण. प्रवृद्धौ सर्वदर्शिता ॥ ३४१४ ॥
ये चापचयधर्माण· प्रतिपक्षस्य सन्निधौ ।
अत्यन्तापचयस्तेषां कलधौतमलादिवत् ॥ ३४१५ ॥
सम्भाव्यते तथा चामी क्लेशज्ञेयावृत्तादयः ।
यथोपदिष्टधर्माणस्तत्प्रहाणेऽमला धियः ३४१६ ॥
यथोक्तधर्माणामेषां सम्भाव्यो यदि वा मलः ।
अत्यन्तोन्मूलने दक्षः प्रतिपक्षस्तथैव हि ॥ ३४१७ ॥

---

अथ वा—ये तुल्यजातीयपूर्वबीजप्रसूतय, ते सस्कारविशेषे सत्यत्यन्तवृद्धिधर्माण सम्भविन, यथा व्रीह्यादय । यथोक्तधर्माणश्च दयाप्रज्ञादय इति स्वभावहेतु । अत्रापि पूर्ववदसिद्धानैकान्तिकता न भवति । मति = प्रज्ञा । यथाऽभिहितधर्माण इति ।समानजातीयपूर्वबीजप्रवृत्तय इत्यर्थ ॥३४१३-३४१४॥

अथ वा—ये प्रतिपक्षसन्निधावपचयधर्माणो दृष्टा, ते प्रतिपक्षात्यन्तवृद्धौ सत्या सम्भवदत्यन्तापचयधर्माण, यथा कनकमलादि । नैरात्म्यादिलक्षणप्रतिपक्षसंमुखीभावे[1] चापचयधर्माणो रागादय इति स्वभावहेतुरिति । न चासिद्धता हेतो, नैरात्म्यदर्शनेन सह क्लेशादेर्विरोधस्य प्रसाधितत्वात् । नाप्यनैकान्तिकता, प्रतिपक्षात्यन्तवृद्धौ सत्या विपक्षस्यावस्थानासम्भवात् । अन्यथा योऽत्यन्तमुन्मूलयितुमसमर्थं कथमल्पमप्यपचय कुर्यात् । न हि स्फुटतरस्फुरत्स्फुलिङ्गमालोज्ज्वलज्वलनकल्पपान्तर्गतमपि वज्रमपचयमनुभवति कदाचित् । न चापि विपक्षस्यात्यन्तवृद्धयसम्भवादनैकान्तिकता, पूर्वं विस्तरेणात्यन्तवृद्धिसम्भवस्य प्रसाधितत्वात् ।

अथ वा—ये प्रतिपक्षसन्निधावपचयधर्माण, ते [ G 892 ] सम्भवदत्यन्तोन्मूलनदक्षप्रतिपक्षा, तद्यथा कनकमलादि । यथोक्तधर्माणश्च क्लेशज्ञेयावरणा-

---

[1] ०ऽढक्षणसमुखी०—पा०, गा० ।

तत्त्वदृष्टिनिबन्धत्वादत्यन्तापचयः क्वचित् ।
बाह्यस्येवास्य तमस आन्तरस्यापि गम्यते ॥ ३४१८ ॥
तस्य चापचये जाते ज्ञानमव्याहतं महत् ।
स्वातन्त्र्येण प्रवर्त्तेत सर्वत्र ज्ञेयमण्डले ॥ ३४१९ ॥
ये वा स्थिराश्रये वृत्ताः कथञ्चिदपि चाहिताः ।
तद्भावाधायुनर्यत्नव्यपेक्षा बाधकेऽसति ॥ ३४२० ॥
संस्कारोत्कर्षभेदेन काष्ठापर्यन्तवृत्तयः ।
ते सम्भवन्ति विस्पष्टं शातकुम्भविशुद्धिवत् ॥ ३४२१ ॥
यथाऽभिहितधर्माण इमे मतिदयादयः ।
तेषां पर्यन्तवृत्तौ च सर्ववित्त्वं प्रभास्वरम् ॥ ३४२२ ॥
लङ्घनोदकतापाभ्यां न चेह व्यभिचारिता ।
न हि तल्लङ्घनादेव लङ्घनं बलयत्नयोः[1] ॥ ३४२३ ॥

दयं इति स्वभावहेतुः । अत्रापि पूर्ववदसिद्धानैकान्तिकते परिहार्ये । आदिशब्देन कर्मावरणादिपरिग्रहः ॥ ३४१५-३४१७ ॥

अथ वा—ये तत्त्वदर्शननिबन्धकारिणस्ते सम्भवदत्यन्तापचयाः, यथा बाह्यशार्वरं तमः । तत्त्वदर्शननिबन्धकारिणश्च क्लेशज्ञेयावरणादय इति स्वभावहेतुः । न चास्यानैकान्तिकतेति दर्शयन्नाह—तस्य चेति । तस्य = आन्तरस्य तमसः ॥ ३४१८-३४१९ ॥

अथ वा—ये स्थिराश्रयवर्तिनः सकृच्च यथाकथञ्चिदाहितविशेषाः सन्तोऽसति विरोधिप्रत्यये तद्भावाधायुनर्यत्नापेक्षिणः, ते संस्कारोत्कर्षभेदेन सम्भवत्प्रकर्षपर्यन्तवृत्तयः, तद्यथा कनकविशुद्ध्यादयः । यथोक्तधर्माणश्च प्रज्ञाकृपादय इति स्वभावहेतुः । लङ्घनोदकतापाभ्यां न चेह व्यभिचारितेति । सविशेषणत्वादित्यभिप्रायः । न हि लङ्घनोदकतापौ सकृदाहितौ पुनराधानाय यत्नादिनिरपेक्षौ वर्तेते । नापि स्थिराश्रयौ । यदि वाऽत्रापि समानजातीयबीजवृत्तित्वे सतीति

1. बलयत्नयो —बौ० पुस्तके पाठः ।

यदि वा लङ्घनस्यापि काष्ठापर्यन्तवृत्तिता ।
समाधिबलगत्यादिविशेषात् स्यात् स्वहेतुत ॥ ३४२४ ॥
ऋद्धिर्मनोजवासञ्ज्ञा[1] तथा च श्रूयते परा[2] ।
यया[3] चिन्तितमात्रेण याति दूरमपि प्रभु ॥ ३४२५ ॥
न चाप्यदृष्टिमात्रेण तदभाव प्रसिद्ध्यति ।
न चात्र बाधक किञ्चिद् वक्तुमत्र पर क्षम ॥ ३४२६ ॥

---

विशेषणापेक्षणाद्व्यभिचारो लङ्घनेनेति मन्यमान आह—न हि तल्लङ्घनादेवेति । तल्लङ्घन न हि लङ्घनादेव जायते । कस्मिन् सति नाम जायते ? इत्याह—लङ्घन यत्नयत्नयोरिति । बले यत्ने च सति लङ्घन भवति, न तु लङ्घने सति । तयोश्च बलयत्नयो स्थिरशक्तितया लङ्घनस्यापि [ G 893 ] स्थिरात्मतेति भाव ।

स्यादेतद्—यदि बलयत्नाभ्यामेव लङ्घन भवति न लङ्घनात्, [illegible] सत्यभ्यासे यादृश लङ्घन पुरुषस्य भवति तादृगभ्यासात् प्रागपि प्राप्नोतीति ? नैष दोष, प्राक्तनस्य श्लेष्मादिना देहस्य विगुणत्वात् पश्चाद्धत्र लङ्घनमुपजायते । पश्चात्तु शनै प्रयत्नेन देहवैगुण्येऽपनीते सति यथाबलमेवावतिष्ठते लङ्घनम् । अवश्यं चैतदेव विज्ञेयम्, अन्यथा यदि लङ्घनादेव लङ्घन स्यात्, तदा लङ्घनस्य व्यवस्थितोत्कर्षता न स्यात् ॥ ३४२०-३४२३ ॥

अथ वा—लङ्घनस्यापि हेतुविशेषापेक्षिण स्थितोत्कर्षताया असिद्धेर्न तेन व्यभिचार इति दर्शयति—यदि वेत्यादि । तथा हि—समाधिबलविशेषमयो गाल्लङ्घनस्यास्माभिरिष्यत एवात्यन्तप्रकर्षवत्त्विम्, यथा भगवत 'मनोजवा' नाम सिद्धि पठ्यते, यस्या स्थितस्य मनस इव जवो भवति । अत एव सा 'मनोजवा' इति प्रख्याता । न चास्या बाधक प्रमाणमस्ति । नाप्यदर्शनमात्रेण प्रतिक्षेपो युक्त, अतिप्रसङ्गात् ॥ ३४२४-३४२६ ॥

---

१ सिद्धि॰—पा॰, गा॰ ।
२ प्रभा—पा॰, गा॰ ।
३ यथा—पा॰, गा॰ ।

राजहंसशिशुः शक्तो निर्गन्तुं न गृहादपि ।
याति चाभ्यासभेदेन पारमम्भःपतेरपि ॥ ३४२७ ॥
आश्रयोपाधिकाभ्यासभेदादस्य गतिर्यथा ।
तादृशी तादृशादेव किं न सम्भाव्यतेऽधिका ॥ ३४२८ ॥
बोधिसत्त्वदशायां हि न शक्तस्तादृशीं गतिम् ।
प्राप्तुं प्राप्ते समाधौ तु विशिष्टे शक्नुयान्मुनिः ॥ ३४२९ ॥
दशहस्तान्तरव्योम्नस्तद् यदुत्प्लुत्य गच्छति ।
शक्तिः स्यादीदृशी हेतोस्तस्य दूरगतावपि ॥ ३४३० ॥

अपि च—दृश्यत एवाश्रये विशेषोपाधिकादभ्यासविशेषाद् गतेरत्यन्तविशेष, ततोऽपि भगवतस्तादृशी गति सम्भविनीति दर्शयन्नाह—राजहंसशिशुरित्यादि। यथा च राजहंसशाव प्राक् स्वकुलायादपि निर्गन्तुमशक्त पश्चादस्मीयस्याभ्यासे [ G. 891 ] सति समुपजातपक्षो जलधेरपि पारमुत्पतति, तद्वदन्योऽप्याश्रयविशेषोपाधिकादभ्यासाद् विशिष्टामपि गतिमासादयतीति सम्भाव्यम्। पक्षविशेषलाभादेवासौ दूरतरदेशगामी भवतीति नाभ्यासवशेनेति चेत ? न हि सञ्जातपक्षोऽपि सहसैवोड्डीय गच्छन् दृश्यते शकुनिशाव, किं तर्हि ? शाखान्तराच्छाखान्तरगमनक्रमेणाभ्यस्य कियन्मात्र गमन पश्चादपास्तशङ्को दूरतरमपि देशं भवति।

किञ्च—आश्रयविशेषलाभे सति यथा हंसादे भागाशक्तस्यापि सत पश्चाद् गतिर्विशेष्यते, तथा भगवतोऽपि बोधिसत्त्वावस्थायामशक्तस्यापि सत पश्चात् समाधिविशेषलाभात्तत्सादितात्मयविशेषस्य तथाविधा गति सम्भाव्यत इत्येवम्परमेतत्। अभ्यासमहत्त्वमतन्त्रम्। प्रयोग—य सम्भवदाश्रयविशेषोपाधिरभ्यास स सम्भवदत्यन्तदूरगमनफल, यथा राजहंसशिशोरभ्यास। सम्भवदाश्रयविशेषोपाधिर्मनुष्याणामभ्यास इति स्वभावहेतु ॥ ३४२७-३४२९ ॥

तेन[1] यदुक्तम्—"दशहस्तान्तरम्" (तत्त्व० ३१६७) इत्यादि, तदपास्तमिति दर्शयति—दशेत्यादि ॥ ३४३० ॥

1. पा०, गा० पुस्तकयोर्नास्ति।

उष्णता नीयमानस्य क्षयो भवति चाम्भस ।
अस्थैर्यादाश्रयस्यात कस्य कस्मिन् प्रकृष्टता ॥ ३४३१ ॥
मानसाना गुणाना तु चित्तसन्ततिराश्रय ।
साऽऽधारयोगतो[1] वृत्तेर्न[2] कथञ्चिन्निवर्तते ॥ ३४३२ ॥
यावद् यावद्गुणोघोऽस्याभिमुख्येन वर्त्तते ।
प्रभास्वरतरा तावत् सुतरामेव वर्त्तते ॥ ३४३३ ॥
प्रभास्वरमिद चित्त तत्त्वदर्शनसात्मकम् ।
प्रकृत्यैव स्थित यस्मात् मलास्त्वागन्तवो मता ॥ ३४३४ ॥

---

स्थिराश्रयत्वे सतीति विशेषणोपादानादुदकतापेन नानैकान्तिक इति दर्शयति—उष्णतामित्यादि ॥ ३४३१ ॥

स्यादेतत्, प्रज्ञादेस्तु स्थिराश्रयत्वमेव कथ सिद्धम् ? इत्याह—मानसानामित्यादि[3] । सेति[4] चित्तसन्तति[4] । आधारयोगतो वृत्तेरिति[5] । बोधिसत्त्वाश्रयलक्षणाधारसम्बन्धेन प्रवृत्तेरित्यर्थ , विशिष्टस्याधारस्य विवक्षितत्वात् । तथा हि—परलोकस्य प्रसाधितत्वाद् बोधिसत्त्वाना च सात्मीभूतमहाकृपाणामासंसारम् शेषसत्त्वोद्धरणायावस्थानात् तदाश्रयवर्त्तिनी चित्तसन्ततिरतिस्थिरा स्थिराश्रया । या [illegible] श्रावकादीना सन्तानवर्त्तिनी सा न स्थिराश्रया, तेषा शीघ्रतर परिनिर्वाणाभिमन्दत्वात् कृपायास्तेषामवस्थाने यत्नाभावादिति भाव ॥ ३४३२ ॥

[ G 895 ] द्वितीयमपि विशेषण कथ सिद्धम् ? इति चेदाह—यावदित्यादि ॥ ३४३३ ॥

एतदेव कथ सिद्धम् ? इत्याह—प्रभास्वरमित्यादि । एतच्च पूर्वमेव व्याख्यातमस्माभि । एते च प्रकृत्या तत्त्वदर्शनात्मकतया चित्तस्य स्वभावभूता प्रज्ञादयो विशेषा इति प्रतिपादितमिति स्वभावत्वेन प्रज्ञादीना सकृदाहिताना स्वरसत एव प्रवृत्तिर्भवतीति[6] सिद्धम् ॥ ३४३४ ॥

---

१ साधारणागतो—चै० । २ वृत्तात्र—पा०, गा० ।
३ मानसाना०—चै० । ४-४ सा चित्त०—चै० ।
५ वृत्तादिति—पा०, गा० । ६ प्रकृति०—पा०, गा० ।

परबोधात्मनियतं चेतो यदि हि सम्भवेत् ।
तदाऽसिद्धोपलम्भत्वादर्थवित्तिर्न सम्भवेत् ॥ ३४३५ ॥
तस्मात् स्वसंवेदनात्मत्वं चेतसोऽस्ति प्रकाशनात् ।
अनारोपितरूपा च स्वसंवित्तिरियं स्थिता ॥ ३४३६ ॥
मार्गे सात्म्यमतो याते चेतसोऽभिभवो[1] न हि ।
रागद्वेषादिभिर्दोषैस्ते हि प्रागेव दुर्बलाः ॥ ३४३७ ॥
सात्मीभावाच्च मार्गस्य सर्वापक्षालनाशिनः ।
न यत्नेन विना हानिर्यत्नो न गुणदर्शनात् ॥ ३४३८ ॥
अतो निर्मलनिष्कम्पगुणसन्दोहभूषणः ।
दोषवाताविकम्प्यात्मा सर्वज्ञो गम्यते जिनः ॥ ३४३९ ॥

द्वितीयमपि विशेषणं तत्त्वदर्शनात्मकमेव विज्ञानस्य कथं सिद्धमिति चेद् ? आह—परबोधात्मेत्यादि । मुख्यं हि तावच्चित्तस्य स्वसंवेदनमेव रूपमित्यवश्यं सर्ववादिभिरभ्युपेयम् ; अन्यथा यदि परेण ज्ञानान्तरेण बुध्यत इति स्यात्, तदाऽप्रसिद्धोपलम्भत्वेनार्थवित्तिर्न सिद्धयेत् । तस्मान्मुख्यं चेतस आत्मप्रकाशनमेव रूपम् । स चात्मा तस्यानित्यादिरूप इति सामर्थ्यात् तत्त्वदर्शनात्मकमेव चित्तं सिद्धमिति भावः ॥ ३४३५–३४३६ ॥

स्यादेतत्—भवतु तत्त्वदर्शनात्मकं चेत, तथापि प्रहीणानामपि मलानां पुनरुत्पत्तिसम्भवात् सर्वेषामेव यथोक्तानां हेतूनामनैकान्तिकता दुर्निवारेत्याशङ्क्याह—मार्गे सात्म्यमित्यादि । [ G. 896 ] मार्गे[2] सात्मीभावात्[2] प्रागपि यदा रागादयो मला आगन्तुकतया दुर्बलत्वान्मार्गमभिभवितुमसमर्थाः, तदा सात्मीभावं गते मार्गे कथं तमभिभविष्यन्ति ।

किञ्च—सात्मीभावमुपगतस्य चेतोगुणस्य श्रोत्रियस्य चोदितनैर्घृण्यवत्न यत्नः सम्भवति । कस्मात् ? गुणदर्शनात् । एतच्च पूर्वमावेदितमेव । अपक्षालः = दोषः ॥ ३४३७–३४३९ ॥

१. चेतसोऽभि०—गा० ; चेतसस्तद्वि०—गा० ।
२–२. मार्गसात्मी०—गा० ।

किञ्च ये येऽति[1] भाव्यन्ते[1] ते ते भ्रान्तिपरिस्फुटम्[2] ।
भावनापरिनिष्पत्तौ कामादिविषया इव ॥ ३४४० ॥
सर्वधर्माश्च भाव्यन्ते दीर्घकालमनेकधा ।
शून्यानात्मादिरूपेण तात्त्विकेन महामते ॥ ३४४१ ॥
शून्यानात्मादिरूपस्य भाविकत्वं च साधितम् ।
भूतार्थभावनोद्भूते प्रमाणं तेन तन्मतम् ॥ ३४४२ ॥
प्रत्यक्षं व्यक्तभासित्वात् प्रमाणं वस्तुसम्मते[3] ।
चक्षुराद्याश्रयोद्भूतनीलादिप्रतिभासवत् ॥ ३४४३ ॥

अथ वा—यदप वस्तुत्वादि त्वया सर्वज्ञप्रतिषेधायोक्तम्, तदेव तत्साधने पर्याप्तमिति दर्शयितुं व्याप्तिं तावद् वस्तुत्वादेर्हेतोः साधयन्नाह—किञ्चेत्यादि । तत्रायं मौलः प्रयोगो वक्ष्यमाणः—ये वस्तुत्वज्ञेयत्वादिधर्मयोगिनस्ते सम्भवद्भावनाप्रकर्षपर्यन्तवर्त्त्येकज्ञानस्फुटप्रतिभासिनः, तद्यथा—कामिनीपुत्रचोरादयः कामाद्युपप्लुतैर्भाव्यमानाः । सर्वधर्माश्च वस्तुत्वादिधर्मयोगिन इति स्वभावहेतुः । न चायमनैकान्तिकः । तथा हि—यद्यद् भूतमभूतं वा भाव्यते तत् सर्वं भावनापरिनिष्पत्तौ[4] स्फुटप्रतिभासज्ञानफलं सिद्धम्, यथा कामुकादेरङ्गनादयो विषयाः । सर्वे च धर्मा भाव्यन्ते दीर्घकालं सात्मीभूतकृपैस्तात्त्विकेन रूपेणेति स्वभावहेतुः । अनेन [5]स्फुटप्रतिभासज्ञानफलत्वेन भावना व्याप्तेति दर्शितम् ।

अर्थान्तरानपेक्षित्वात् स्फुटप्रतिभासस्य तात्त्विकत्वमेव शून्यादिरूपस्य कथं सिद्धम् ? इत्याह—शून्येत्यादि ॥ ३४४०–३४४२ ॥

एतच्च शून्यादिज्ञानं प्रत्यक्षप्रमाणं साधयन्नाह—प्रत्यक्षमित्यादि । [ G 897 ] स्फुटप्रतिभासित्वेनाविकल्पतया प्रमाणप्रसिद्धार्थविषयत्वेनाविसंवादितया चक्षुरादिज्ञानवत् प्रत्यक्षप्रमाणमेतत् । ततश्च भावनामात्रभाविनि स्फुटप्रतिभासित्वे सिद्धे सिद्धमेव सर्वधर्माणामेकज्ञाने युगपत्स्फुटप्रतिभासनमिति सिद्धा

१–१ ये विभाव्यन्ते—गा० ।
२ भ्रान्ति परि०—गा० ।
३ ०सद्भूते—पा०, गा० ।
४ भावनानिष्पत्तौ—पा०, गा० ।
५ स्फुटप्रतिभासन ज्ञानफलेन—पा०, गा० ।

सम्भवत्येकविज्ञाने सकृत् स्पष्टावभासनम् ।
सर्वेषामपि धर्माणामतश्चैवं प्रतीयताम् ॥ ३४४४ ॥
तथा विभाव्यमानत्वाद्[1] अङ्गनात्मजचोरवत् ।
इच्छामात्रमुखीभावा भावनापि न दुर्लभा ॥ ३४४५ ॥
भावनोत्कर्षनिष्ठैकबुद्धिस्पष्टप्रकाशनाः ।
वस्तुसत्त्वादिहेतुभ्यः सर्वधर्माः प्रियादिवत् ॥ ३४४६ ॥
एवं च यस्य वस्तुत्वसत्त्वोत्पादादिलक्षणाः ।
निश्चये हेतवः शक्ताः को न तं साधयिष्यति ॥ ३४४७ ॥
एकज्ञानक्षणव्याप्तनिःशेषज्ञेयमण्डलः ।
नरामरशिरोरत्नभूतः[2] सिद्धोऽत्र सर्ववित् ॥ ३४४८ ॥
ज्ञाता धर्मादयो यैस्ते केनचिद् वचनाद् ऋते ।
सत्यात्मनोपदिष्टत्वात् कनकादिविशुद्धिवत् ॥ ३४४९ ॥

---

व्याप्तिः । एवं[3] प्रतीयतामिति[3] सम्भवत्येकविज्ञाने सर्वधर्माणां सकृत्स्पष्टावभासनमिति । प्रयोगः—ये ये विभाव्यन्ते ते सम्भवत्सकृदेकविज्ञानस्फुटप्रतिभासनाः, यथाऽङ्गनादयः । सर्वधर्माश्च भाव्यन्ते इति स्वभावहेतुः । न चायमसिद्धो मन्तव्य[4] इत्यावेदयन्नाह—इच्छेत्यादि । पूर्वं च विस्तरेण भावनासम्भवस्य प्रतिपादितत्वादिति नासिद्धो हेतुः ॥ ३४४३–३४४५ ॥

एवं स्फुटप्रतिभासित्वस्य भावनामात्रानुबन्धित्वप्रतिपादनेन व्याप्तिं प्रसाध्य साम्प्रतं मौलं प्रमाणार्थं दर्शयन्नाह—भावनेत्यादि । भावनोत्कर्षस्य निष्ठा यस्यामेकबुद्धौ सा तथोक्ता । गमकत्वाद्वैयधिकरण्येऽपि बहुव्रीहिः । भावनोत्कर्षनिष्ठायामेकबुद्धौ स्पष्टं प्रतिभासनं येषां ते तथोक्ताः । यस्य च ज्ञाने ते तथा भासन्ते स सकृदेकज्ञानव्याप्ताशेषज्ञेयमण्डलः सकलनरामरचूडामणिभूतः[5] सिद्धः सर्वज्ञ इति ॥ ३४४६–३४४८ ॥

---

1. तथातिभाव्य०—जै० ।
2. सुरासुर०—पा०, गा० ।
3–3. पा०, गा० पुस्तकयोर्नास्ति ।
4. हेतुर्मन्तव्यः—पा०, गा० ।
5. सकलसुरासुर०—पा०, गा० ।

वेदाना पौरुषेयत्वे सिद्धे सिद्ध न साधनम् ।
अज्ञातस्योपदेशोऽस्ति तस्यो यादृच्छिको नर [1] ॥ ३४५० ॥
मुद्रामण्डलमन्त्रादेर्यत् सामर्थ्यमतीन्द्रियम् ।
पिशाचडाकिनीमोक्षविषापनयनादिषु ॥ ३४५१ ॥
श्रुतानुमानभिन्नेन साक्षाज्ज्ञानेन निर्मलम् ।
मुनिताक्ष्यादिविज्ञान न चेत् तद्गदित कथम् ॥ ३४५२ ॥
न चानुमानतो ज्ञान तस्य पूर्वमदृष्टित ।
तेन लिङ्गस्य सम्बन्धदर्शनानुपपत्तित ॥ ३४५३ ॥
श्रुत्वा न चान्यत प्रोक्त तुल्यपर्यनुयोगत ।

---

अथ वा—ये सत्यात्मनोपदिष्टास्ते केनचिद् विदिता, यथा कनकविशुद्धपा दय । सत्यात्मना चोपदिष्टा धर्मादय इति स्वभावहेतु ॥ ३४४९ ॥

स्यादेतत्—वेदतोऽपि ज्ञात्वोपदेशसम्भवात सिद्धसाध्यतेति चेद् ? आह—वेदानामित्यादि । [ G 898 ] पूर्वं श्रुतिपरीक्षाया वेदाना पौरुषेयत्वस्य प्रसाधितत्वान्न सिद्धसाध्यता । अथापि स्याद्—अज्ञात्वा यदृच्छयाऽप्युपदेशसम्भवादनैकान्तिकतेत्याह—अज्ञातस्येत्यादि । न ह्यज्ञात्वा यदृच्छया प्रमाणाविरुद्ध नियमेन बहु शक्यं भाषितुम् ॥ ३४५० ॥

किञ्च—यदेतन्मन्त्रादीना विषापनयनादिसामर्थ्यमत्यन्तपरोक्षम्, तद्यदि बुद्धादिभि साक्षान्न विदित तत् कथ तैर्भाषितमिति वक्तव्यम् ॥ ३४५१–३४५२ ॥

अनुमानतो ज्ञात्वा भाषितमिति चेद् ? आह—न चानुमानत इत्यादि । न ह्यविदितलक्षणसम्बन्ध वस्त्वनुमानविषय, न च तेनात्यन्तपरोक्षेण वस्तुना सह कस्यचिल्लिङ्गस्य सम्बन्ध शक्यते निश्चेतुम् ॥ ३४५३ ॥

परत श्रुत्वा प्रोक्तमिति चेत् ? न, तस्यापि तुल्यपर्यनुयोगात् । तथा हि—तत्राप्ययं विचारोऽवतरति—तेनापि परेण कथ ज्ञातम् ? न ह्यज्ञात्वा तथोपदेश सम्भवेत्—तेनाप्यन्यतो ज्ञातमिति चेत् ? एव तर्ह्यनवस्था स्यात्, ततश्चान्धपरम्पराया सत्या सर्वेषामनभिज्ञत्वान्न सम्यगुपदेश स्यात् । यथोक्तम्—"नवज्ञातीयके-

---

1 न हि—गा० ।

न यदृच्छाविसंवादिरूपमीदृक् च भावितम् ॥ ३४५४ ॥

देशनैवम्परैवेयं नान्यहेतूपकल्पना ।
हेत्वन्तरकृतायां हि वृत्तौ तन्नाम शङ्क्यते ॥ ३४५५ ॥

पिपासाकुलचित्तस्य वाहिनीमुपसर्पतः ।
तथा विद्रुमसम्प्राप्तेर्युक्ता यादृच्छिकी स्थितिः ॥ ३४५६ ॥

विक्षिप्तचेतसामेतन्मूढानां न च भावितम् ।
नियतानुक्रमं ह्येवं प्रकृष्टं फलसाधकम् ॥ ३४५७ ॥

योऽश्रुतानुमितं सत्यं तत्परोऽर्थं प्रकाशते ।
प्रत्यक्षज्ञाततद्रूपः स तादृक्प्रतिपादकः[1] ॥ ३४५८ ॥

---

न्यर्थेषु पुरुषवचनं प्रामाण्यमुपैति, अन्यानामिव वचनं रूपविशेषेषु" ( मी० द०, शा० भा० १. १. २ ) इति । स्यादेतत्—अविसंवादित्व [G 899] घुणाक्षरवद् यादृच्छिकमपि सम्भाव्यते ? इत्याशङ्कयाह—न यदृच्छेत्यादि । यदृच्छया[2] अविसंवादस्तदेव रूपं यस्येति विग्रहः । अन्यार्थसमीहया प्रवृत्तस्यार्थान्तरसंवादो यादृच्छिकः सम्भाव्यते । यथा नदीदेशोपसर्पणाभिप्रायेण प्रवृत्तस्य वृक्षमूलोपसर्पणम् । न चात्रान्यार्थाभिप्रायेण प्रवृत्तिः सम्भवति, तथा हि—"धर्मं वो भिक्षवो देशयिष्यामि" ( म० व० १ ६ १२ ) इत्येन प्रतिज्ञाय प्रवृत्तेर्धर्मानुपदेशपरैवेयं देशना, नान्यार्थपरा—इत्यवसीयते । वाहिनी = नदी । विद्रुम = वृक्ष, प्रवाल वा ॥ ३४५४–३४५६ ॥

मोहादप्युपदेशसम्भवादनैकान्तिकतेति चेद् ? आह—विक्षिप्तचेतसामित्यादि । न हि नियतानुपूर्वीकं पूर्वापराव्याहतं पुरुषार्थसाधकं वाक्यं विक्षिप्तचेतोभिरनल्पं भाषितुं शक्यम् । तस्मात् सिद्धं केनचित् साक्षाद् धर्मादयो विज्ञाता इति ॥ ३४५७ ॥

स्यादेतत्—यदि नाम सामान्येन सिद्धम्, तथापि सुगते धर्मज्ञत्वं साधयितुमिष्टम्, तच्चे कथं सिद्ध्यति ? इत्याशङ्क्य भगवति धर्मज्ञत्वं साधयन्नाह—योऽश्रुतानुमितमित्यादि । प्रयोगः—यस्त्वागमेऽश्रुतानुमितस्य धर्मादेः स

---

१ ०प्रतिपादिक —पै० पुस्तके पाठ० । २ पा० पुस्तके नास्ति ।

प्रत्यक्षदृष्टनीरादिर्यथाऽन्य प्रतिपादकः ।
अश्रुतानुमितं सत्यं तत्परस्वार्थमुक्तवान् ॥ ३४५९ ॥
अतीन्द्रियं पराज्ञातसामर्थ्यं परिनिश्चयात् ।
मुद्रामण्डलकल्पादि लक्षणं मुनिसत्तमः ॥ ३४६० ॥
तस्मादतिशयज्ञानैरुपायबलवर्त्तिभिः ।
सर्व एवाधिको ज्ञातुं शक्यते योऽप्यतीन्द्रियः ॥ ३४६१ ॥
एकापवरकस्थस्य प्रत्यक्षं यत् प्रवर्त्तते ।
शक्तिस्तत्रैव तस्य स्यान्नैवापवरकान्तरे ॥ ३४६२ ॥
इत्येतत् सर्वसत्त्वस्थसामर्थ्यानुभवे सति ।
निश्चेतुं भवतो युक्तमन्यथा किन्निबन्धनम् ॥ ३४६३ ॥
आत्मोदाहरणेनान्यसामर्थ्याभावनिश्चये ।
पुरुषत्वादिहेतुभ्यः कार्ये चातिप्रसज्यते ॥ ३४६४ ॥

---

साक्षाद्विदिततदर्थतत्त्व[1], यथा प्रत्यक्षज्ञातसलिलादिस्तदुपदेष्टा। तथा च भगवानिति स्वभावहेतुः। सत्यत्वादेः प्रसाधितत्वान्नासिद्धता हेतोः। नाप्यनैकान्तिकतेति प्रतिपादितमेतत्। सर्वथा च हेतुनः सपक्षे सत्त्वान्न विरुद्धतेति मन्तव्यम्। पराज्ञातसामर्थ्यमिति। परैरज्ञातं सामर्थ्यं यस्य मुद्रादेस्तत्तथोक्तम् ॥३४५८-३४६०॥

यदुक्तम्—'तस्मादतिशयज्ञाने' (तत्त्व० ३१६८) इत्यादि, तत्राह—तस्मादित्यादि ॥ ३४६१ ॥

[G 900] यत्तःप्रतिज्ञामात्रप्रमाणकमेवोक्तं भवता[2], न सर्वादर्शिनामनुपलम्भमात्रेण सर्वपुंसामतीन्द्रियार्थज्ञानाशक्तिर्निश्चेतुं पार्यते ॥ ३४६२–६३ ॥

स्यादेतत्—नानुपलम्भमात्रेणास्माभिरशक्तिनिश्चयः क्रियते, किं तर्हि ! पुरुषत्वादिभ्यो हेतुभ्यः। तथा हि—सर्व एव पुरुषा दूरव्यवस्थितादिपदार्थपरिज्ञानासमर्था[3] पुरुषत्ववस्तुत्वज्ञेयत्वादिभ्य, यथाऽहमिति। अत्राह—आत्मोदाहरणेत्यादि। निश्चये इत्येतस्य कार्ये इत्येतेन सामानाधिकरण्यम्।

---

१ साक्षाद्विनिदित०—गा०। २ भगवना—पा०।
३ ०परार्थ०—पा०, गा०।

एवं हि भवतो जाड्ये निश्चिते सर्वसूरयः ।
त्वदुदाहरणेनैव भवेयुर्जडबुद्धयः ॥ ३४६५ ॥
"नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित्" ।
(म० भा०, व० प० ७२.८)
इतीदमपि वाङ्मात्रमहेतुकमुदाहृतम् ॥ ३४६६ ॥
स्वसमानथ वा सत्त्वानविशुद्धधियो जडान् ।
अधिकृत्य तथा वाक्यमृतुपर्णेन कीर्तितम् ॥ ३४६७ ॥
प्रमाणं विस्तरेणोक्तं सर्वज्ञस्य च सम्भवे ।
बाधकं च प्रतिक्षिप्तं तस्य पूर्वं परोदितम् ॥ ३४६८ ॥
अनुक्तेऽप्यथ वा तस्मिंस्तस्य सम्भवसाधने ।
बाधकापोहमात्रेण गम्यते तस्य सम्भवः ॥ ३४६९ ॥
तथा हि बाधकेऽदृष्टे साधके चाप्रकाशिते ।
संशयो जायते येन याति सम्भावनामसौ ॥ ३४७० ॥
तस्मिन् सम्भाव्यमाने च नियमस्तेन सिद्ध्यति ।
येनैव स्वतन्त्रेण धर्मो लक्ष्यत इत्ययम् ॥ ३४७१ ॥
अनागते च विज्ञेये प्रत्यक्षस्य तथा भवेत् ।

---

अत्रानैकान्तिकता; हेतूनामतिप्रसङ्गात् । तथा हि इदमपि शक्यं वक्तुम्—'सर्व एव पुरुषा जडबुद्धयः, पुरुषत्वादिभ्यः; यथा भवान्' इति । न चैवं भवति । न चैकत्र पुरुषेऽदृष्टस्य धर्मस्य सर्वत्राभावः शक्योऽवसातुम्; पुरुषाणां विशेषदर्शनात् । यच्च ऋतुपर्णेनोक्तम्—"सर्वः सर्वं न जानाति" (म० भा०, व० प० ७२.८) इत्यादि, तदपि मतिज्ञामात्रमेवाप्रमाणकं तेनोक्तमित्यादर्शयन्नाह—नैकत्रेत्यादि ॥ ३४६४–३४६६ ॥

अथ वा—आत्मसमान् पुरुषानभिसन्धाय ऋतुपर्णेन भाषितम्, तेनाविरोधादज्ञापकमेतदित्यादर्शयन्नाह—स्वसमानित्यादि । स्वेन = आत्मना, समाः = तुल्याः स्वसमाः ॥ ३३६७-३४७१ ॥

"अनागते न दृष्टम्" (तत्त्व० ३१७३) इत्याशङ्क्याह—अनागते चेत्यादि ।

सामर्थ्यं योगिनामुक्त तत् त्रैकाल्यपरीक्षणे ॥ ३४७२ ॥

सौत्रान्तिकाभीष्टमतम्

यदि वा योगसामर्थ्याद् मुक्ताजातनिभ स्फुटम् ।
लिङ्गागमनिराशंस मानस योगिना भवेत् ॥ ३४७३ ॥
स्वात्मावभाससंवित्तेस्तत् स्वलक्षणगोचरम् ।

तत्त्रैकाल्यपरीक्षण इति। तत्र ह्येवमुक्तम्—सर्व एव हि भावा साक्षात् पारम्पर्येण वा कार्यकरणता गता, अत्र वर्तमानमेव वस्त्वतीतस्य साक्षात् पारम्पर्येण वा कार्यभूतम्, अनागतस्य[1] तु कारणभूतम्। प्रत्यक्षेण यथावत् सर्वाकारमनुभवन्तस्तत्पृष्ठलब्धै शुद्धलौकिकै परमार्थतो निर्विषयैर्वस्तुप्रतिबन्धादविसंवादिभिर्विकल्पैर्हेतुफलभूतामतीतामनागता च भावसन्ततिमारूढ्यातीतानागत वस्तु व्यवस्थापयन्ति योगिन इति। यदाह —

"पारम्पर्येण साक्षाद् वा कार्यकारणता गतम्।
यद् रूप वर्तमानस्य तद् विज्ञानन्ति योगिन ॥
अनुगच्छन्ति पश्चाच्च विकल्पानुगतात्मभि।
शुद्धलौकिकविज्ञानैस्तत्त्वतो विषयैरपि ॥
तद्धेतुफलयोर्भूता भाविनीं चैव सन्ततिम्।
समाश्रित्य प्रवर्तन्तेऽतीतानागतदेशना ॥"
(तत्त्व० १८५३ १८५४) इति ॥ ३४७२ ॥

एतच्च सौत्रान्तिकाना नेष्टम्, सर्वत्र भगवत साक्षाद्दर्शित्वाभ्युपगमादित्यत सौत्रान्तिकदृष्टाभीष्टमतमादर्शयन्नाह—यदि वेत्यादि। यथा हि सत्यस्वप्नदर्शिनो ज्ञानमविषयमपि परमार्थतो लिङ्गागमानपेक्ष [ G 902 ] चाश्रयविशेषवशादुत्पन्नमविसंवादि भवति, तथा योगिना योगबलेन यथैव तद्भूत् भविष्यति चातीतमनागत[2] वस्तु तथैव स्फुटप्रतिभास लिङ्गागमानपेक्ष जायते। तच्च प्रत्यक्ष प्रमाणमिष्यते ॥ ३३७३ ॥

स्यादेतत्—स्वलक्षणविषय प्रत्यक्षमिष्यते, न चातीतमनागत स्वलक्षणतोऽस्ति, तत् कथ स्वलक्षणविषय युज्यते? इत्याह—स्वात्मेत्यादि। यद्यप्यतीतादि

1 अनागमस्य—जै०। 2 चातीत०—पा०, गा०।

स्पष्टावभाससंवेदात् तच्च प्रत्यक्षमिष्यते ॥ ३४७४ ॥
तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टैव विद्यते ।
नित्यस्य वचसोऽसत्त्वात् तेन कश्चिन्न पश्यति ॥ ३४७५ ॥
अतीन्द्रियार्थविज्ञानं पूर्वोक्तादनुमानतः ।
मुनेः सुमतयः प्राहुर्नान्यतस्त्वागमात् कृतात् ॥ ३४७६ ॥
कर्तृकृत्रिमवाक्यानामुच्यते न त्वनादिता ।
प्रामाण्यसिद्धये यस्मात् साऽप्रमाणेऽपि वर्त्तते ॥ ३४७७ ॥
तथा हि नास्तिकादीनां तथा तद्वचसामपि ।
वेदानां च प्रवक्तॄणां नानादित्वेऽपि मानता ॥ ३४७८ ॥
वचनकृत्रिमवाक्यानामुच्यते या¹ त्वनादिता¹ ।

---

वस्तु स्वलक्षणतो भाति, तथाप्यात्मसंवेदनात् स्वलक्षणविषयत्वेन शास्त्रे निर्दिष्टमित्यविरोधः । तच्च स्फुटप्रतिभासतया कल्पनापोढं तथाविधवस्तुविसंवादाभावादभ्रान्तमित्यतः प्रत्यक्षलक्षणोपेतत्वात् प्रत्यक्षमिति सिद्धम् ॥ ३४७४-३४७५ ॥

"एतदक्रममाणो य." ( तत्त्व० ३१७५ ) इत्यादावाह—अतीन्द्रियार्थविज्ञानमित्यादि । पूर्वोक्तादनुमानात् सिद्धमागमनिरपेक्षं भावनाबलनिष्पन्नमर्थसाक्षात्कारि यदतीन्द्रियार्थविज्ञानं तन्मुनेर्भगवतः सुधियः सौगताः प्राहुः, नान्यस्मात् कृतकादागमादित्यतः तदनभ्युपगमाददूषणमेव ॥ ३४७६ ॥

यच्चोक्तम्—"कर्तृकृत्रिमवाक्यानाम्" ( तत्त्व० ३१७७ ) इत्यादि, तत्राह—कर्तृकृत्रिमेत्यादि । न ह्यनादितास्माभिः प्रामाण्यसिद्धये साधनत्वेनोच्यते । तस्या विपक्षेऽपि² वृत्तेरनैकान्तिकत्वात् । अतोऽध्यारोप्य दूषणं भवद्भिरभिहितम् ॥ ३४७७-३४७८ ॥

किञ्च—भवतामेव वेदप्रामाण्यसिद्धये वेदप्रवक्तॄणां वेदानां चानादित्वं साधनं ब्रुवतां सर्वमिदं दूषणं स्फुटतरमवतरतीति दर्शयन्नाह—वचनकृत्रिमवाक्यानामित्यादि [ G 903 ] वक्तारश्चाकृत्रिमवाक्यानि चेति द्वन्द्वः । तत्र वक्तारः = वेदानां व्याख्यातारः ॥ ३४७९ ॥

---

१-१. नन्वनादिता—पा०, गा० । २. तथा विपक्षेऽपि—पा० ।

प्रामाण्यसिद्धयं साऽस्माभिः स्वयमेव निषिध्यते॥ ३४७९ ॥
वक्तारः वक्तृभिस्तुल्यास्तदपेक्षा च मानता ।
वेदानां तत्कृताख्यानादर्थप्रत्ययजन्मतः ॥ ३४८० ॥
अतो न वेदवाक्यानां पारतन्त्र्यात् प्रमाणता ।
अपश्यतां स्वयं धर्मं वक्तॄणामपि नैव सा ॥ ३४८१ ॥
तदीदृशां प्रवक्तॄणां कल्प्यमानाप्यनादिता ।
अप्रामाण्यपदस्यत्वान्नास्तिकादेर्न भिद्यते ॥ ३४८२ ॥
तदज्ञानविशेषत्वात् सर्वं यास्यन्ति तुल्यताम् ।
न मानत्वाप्रमाणत्वे स्यातामेवमनादिनी ॥ ३४८३ ॥

वेदतदध्यायिभ्यो बुद्धतच्छास्त्रशिष्यस्य

यद्वाऽस्त्येव विशेषोऽयं मुनौ तद्वचनेषु च ।
स दृष्टवान् स्वयं धर्ममुक्तवांश्च कृपामयः ॥ ३४८४ ॥

कथं निषिध्यन्ते ? इत्याह—वक्तार इत्यादि । तदपेक्षेति वक्त्रपेक्षा । कथम् ? इत्याह—तत्कृताख्यानादिति । तैर्वक्तृभिः कृताद् व्याख्यानादर्थप्रतीत्युत्पत्ते कारणात् तदपेक्षा मानता वेदानाम् ॥ ३४८० ॥

ततश्च को दोषः ? इत्याह—अत इत्यादि । नैवेति । प्रमाणतेति सम्बन्धः । यदा चैवं वेदवाक्यानां पारतन्त्र्यात् प्रमाणता नास्ति तत्प्रवक्तॄणां च सर्वेषामन्धपरम्परातः धर्मपदस्थानामप्रामाण्यम्, अतो यत् परेणोक्तम्—"प्रमाणत्वाप्रमाणत्वे स्यातामेवमनादिनी" ( तत्त्व० ३१८१ ) इति, तदयुक्तमित्यादर्शयन्नाह—न मानत्वाप्रमाणत्वे स्यातामेवमनादिनी इति । सिद्धे हि वक्तृकृत्रिमवचनाप्रामाण्ये प्रमाणं कस्यानादित्वं स्यात्, यावता तदेव न सिद्धमित्ययुक्तं द्वयोरनादित्वमिति भावः ॥ ३४८१-३४८३ ॥

किञ्च—यदेतदस्माभिर्वेदतदध्यायिनां बुद्धतच्छास्त्रे सह तुल्यत्वमापादितम्, तत् स्वपक्षेण, न पुनर्भगवतां तच्छास्त्राणां चैतैस्तुल्यत्वमस्ति, अपि तु विशेषो महानिति दर्शयन्नाह—यद्वेत्यादि । तथा हि प्रमाणनिर्णीतं यथा भगवान् साक्षात् धर्मं दृष्टवान् दिष्टवांश्चेति । अतः, अपश्यतां स्वयं धर्मम् इत्येतदसिद्धमिति भावः ॥३४८४॥

यतोऽभ्युदयनिष्पत्तिर्यतो निःश्रेयसस्य च ।
स धर्म उच्यते तादृक्सर्वैरेव विचक्षणैः ॥ ३४८५ ॥
तदुक्तमन्त्रयोगादिनियमाद् विधिवत् कृतात् ।
प्रज्ञारोग्यविभुत्वादिदृष्टधर्मोऽपि[1] जायते ॥ ३४८६ ॥
समस्तधर्मनैरात्म्यदर्शनात् तत्प्रकाशितात् ।
सत्कायदर्शनोद्भूतक्लेशौघस्य निवर्त्तनम् ॥ ३४८७ ॥
आत्मात्मीयदृगाकारसत्त्वदृष्टिः प्रवर्तते ।

[G 904] स्यादेतत्—'धर्ममुक्तवान् स' इत्येतदेव कथं सिद्धम्? इत्याह—यतोऽभ्युदयेत्यादि। निःश्रेयसस्य चेति। यतो निष्पत्तिरिति सम्बन्धः। तत्र 'अभ्युदयः' = सुखम्, मोक्षः = निःश्रेयसम्। स धर्म उच्यते तादृगिति। 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' (वै० द० १.१.२) इति वचनात् ॥३४८५॥

भवतु नामाभ्युदयनिःश्रेयससिद्धिहेतुर्धर्मः, अस्य तु सुगतवचनस्य कथं तद्धेतुत्वं सिद्धम्, येनास्य धर्मज्ञत्वं भवेत्? इत्याह—तदुक्तेत्यादि। तेन भगवतोक्तश्चासौ मन्त्रयोगादिश्चेति[2] विग्रहः। योगः = समाधिः। आदिशब्देन मुद्रामण्डलादिपरिग्रहः। दृष्टधर्मोऽपीति[3] अस्मिन्नेव जन्मनि। न केवलं परलोक इत्यपिशब्देन दर्शयति ॥ ३४८६ ॥

एवमभ्युदयहेतुत्वमुपदर्श्य निःश्रेयसहेतुत्वं दर्शयन्नाह—समस्तेत्यादि। [G 905] जन्मजरामरणात्यन्तोपशमो हि सर्वेषामेव मोक्ष इतीष्टम्, तस्य च प्राप्तिहेतुर्भगवद्वचनमेव; जन्महेतुक्लेशप्रतिपक्षभूतस्य नैरात्म्यदर्शनस्यात्रैवोपदेशात्, नान्यत्र। सर्वेषामेव चान्यतीर्थ्यानां वितथात्मदर्शनाभिनिविष्टत्वात्। अतो भगवद्वचनमेवाभ्युदयनिःश्रेयसप्राप्त्युपायभूतत्वाद् धर्मलक्षणं युक्तम्, नान्यत्। तेनैतदेव श्रेयोऽर्थिभिराश्रेयम्, नान्यदिति समुदायार्थः।

अवयवार्थस्तूच्यते—सत्कायदर्शनोद्भूतत्वं[4] क्लेशौघस्य कथं सिद्धम्? इति चेदाह—आत्मात्मीयेत्यादि। एतच्चास्माभिः पूर्वमेव व्याख्यातम्। यदि नाम

1. दृष्टधर्मोऽपि—पा०, गा०। 2. ०योगादिनियम०—पा०, गा०।
3. दृष्टधर्मोऽपीति—पा०, गा०। 4. ०त्वार्थं०—पा०, गा०। एवमुत्तरत्र।

अहं ममेति माने च क्लेशौघोऽशेषः प्रवर्त्तते ॥ ३४८८ ॥
सत्त्वदृक्प्रत्यनीकं च तन्नैरात्म्यनिदर्शनम् ।
अभ्यासात् सात्म्यमायाते तस्मिन् सा विनिवर्त्तते ॥ ३४८९ ॥
तन्मूलक्लेशराशिश्च हेत्वभावात् प्रतीयते[1] ।
तस्मिन्नसति तद्धेतुर्न पुनर्जायते भवः ॥ ३४९० ॥
तदत्यन्तविनिर्मुक्तेरपवर्गश्च कीर्त्यते ।
अद्वितीयं शिवद्वारमतो नैरात्म्यदर्शनम् ॥ ३४९१ ॥
सर्वेषामपि तीर्थ्यानामहङ्कारनिवर्त्तनात् ।
मुक्तिरिष्टाऽऽत्मसत्त्वे च नाहङ्कारो निवर्त्तते ॥ ३४९२ ॥

क्लेशौघः सत्कायदर्शनोद्भूतः, तथापि कथमसौ नैरात्म्यदर्शनाद्विवर्त्तते ? इत्याह—सत्त्वदृगित्यादि । सत्त्वदृक् = सत्त्वदर्शनम् । सत्कायदृष्टिरिति यावत् । तस्याः प्रत्यनीकम् = प्रतिपक्षः । एतदपि पूर्वं दर्शितमेव निदर्शनम्[2] । तस्मिन्निति नैरात्म्यनिदर्शने । सेति सत्त्वदृक् । तन्मूल इति सत्त्वदृग्मूलः । हेत्वभावादिति सत्त्वदर्शनाख्यस्य हेतोरभावात् । तस्मिन्निति क्लेशराशौ । तद्धेतुरिति क्लेशराशिहेतुः । न जायत इति । न हि कारणाभावे[3] कार्यस्योत्पादो युक्तः; निर्हेतुकत्वप्रसङ्गात् । तदत्यन्तविनिर्मुक्तेरिति । तेषां क्लेशानां तस्य वा पुनर्भवस्यात्यन्तं पुनरनुत्पत्तौ विमुक्तिस्तदत्यन्तविनिर्मुक्तिः । यथाहुः—'तदत्यन्तविमोक्षोऽपवर्गः' ( न्या० द० १.१.२२ ) इति ।

ननु चान्यमतेष्वपि तत्त्वदर्शनं निःश्रेयसहेतुः, अभ्युदयहेतवश्च दश कुशलाः कर्मपथाः मोक्षाः, तत् कथं नैरात्म्यदर्शनमेवाद्वितीयं मोक्षद्वारमित्युच्यते ? इत्याह—सर्वेषामित्यादि । तथा हि—अहङ्कारोद्भवत्वात् स्कन्धानां तन्निवृत्तौ मुक्तिरिति सर्वेषामेव मुमुक्षूणामविवादः । सा चाहङ्कारनिवृत्तिरन्यतीर्थ्यानां न [4]सम्भवतीति; चित्रात्मदर्शनाभिनिविष्टत्वात् तेषाम्, अहङ्कारस्य चात्मदर्शनमूलत्वात् । तत्कथम-

१. प्रहीयते—गा० । २. पा०, गा० पुस्तकयोर्नास्ति ।
३. कारणाभावे—गा० ।
४. सम्भवति—पा०, गा० ।

शक्तकारणसद्भावाद् विषयस्याप्यदूषणात् ।
तद्दूषणे त्वभावेन विपर्यासः प्रसज्यते ॥ ३४९३ ॥
न युक्तं नाहमित्येवं यद्यहं नाम विद्यते ।
तस्मात् तत्त्वविद् याति निर्वाणमिति वा मृषा ॥ ३४९४ ॥

---

यमात्मसत्त्वे = आत्मसत्त्वाभिनिवेशे स्थिते सत्यविकल्पकारणे, स्वविषये चात्मन्य-विदूषिते निवर्तेत । यथोक्तम्—

"साहङ्कारे मनसि न शमं याति जन्मप्रबन्धो
नाहङ्कारश्चलति हृदयादात्मदृष्टौ तु सत्याम् ।
अन्यः शास्ता जगति भवतो नास्ति नैरात्म्यवादी
नान्यस्तस्मादुपशमविधेस्त्वन्मतादस्ति मार्गः" ॥
( ) इति ।

तथा हि—मनोधर्मा न कण्टकादिवदुत्कील्यापनेतव्या, किं तर्हि ? यथा-भूतविषयाभिनिवेशेन ते प्रहेया; तद्धेतुदूषणात् । विदूषयत्येवात्मानं योगीति चेद् ? आह—तद्दूषणेत्यादि । तथा हि स विदूष्यमाणो नास्तीत्येवमभावाकारेण दूष्यः, अन्यथा तद्दूषणवैयर्थ्यं स्यात् । तथा हि— यदि सत्त्वेनात्मानमभिनिवेश्य दुःखहेतुत्वेन दूषयेत, तदाऽनर्थकमेव दूषणं स्यात् । स्वार्थं हि तद्दूषणम् । न च स्वतो नित्यस्य स्वभावभूतस्य त्यागः सम्भवतीत्यतोऽनर्थकमेव तदापद्यते । न चाभावाकारेण [ O 906 ] दूष्यस्तैरात्मा; आत्मनि सत्त्वासत्त्व-स्वाभिनिवेशेन तेषां विपर्यासप्रसक्तेः ॥ ३४८७–३४९३ ॥

किञ्च—भवतु नाम दुःखहेतुत्वादिनाऽन्येनाकारेण तस्य दूषणम्, तथा-प्यात्मदर्शनमात्रप्रभवस्याहङ्कारस्य निवृत्तिर्न युक्तेति दर्शयन्नाह—न युक्तमि-त्यादि । नाहमित्येवमिति । नाहमित्येवं दर्शनं न युक्तमित्यर्थः । यद्यहं नाम विद्यत इति । यद्यात्माऽस्तीत्यर्थः । तस्मात् तत्त्वविद् भवदीयो निर्वाणं यातीत्येत-न्मृषा, यतोऽहङ्कारविगमान्मुक्तिरिष्टा, न चात्मनि विषयभूते स्थितेऽहङ्कारनिवृत्ति-र्युक्तेति कुतो मुक्तिः[1] ? ॥ ३४९४ ॥

---

१. मुक्तिः—पा० ।

तस्मादन्येषु तीर्थेषु दशाकुशलहानितः ।
लेशतोऽभ्युदयप्राप्तिर्यद्यप्यस्ति लघीयसी ॥ ३४९५ ॥
अपवर्गस्य तु प्राप्तिर्न मनागपि विद्यते ।
सत्त्वदृष्टिनिविष्टत्वात्[1] क्लेशमूलानपोद्धृतेः ॥ ३४९६ ॥
दश [2]कर्मपथाः प्रोक्ताः शुभा ये तायिना पुनः ।
सम्यग्दृष्ट्युपगूढास्ते बलवन्तो भवन्त्यलम् ॥ ३४९७ ॥
सत्त्वदृष्ट्युपगूढास्तु विपर्यासानुषङ्गतः ।
अविशुद्धास्ततः शुद्धं फलं तेभ्यो न जायते ॥ ३४९८ ॥
तदेवं धर्मतत्त्वस्य देशके मुनिसत्तमे ।
अपश्यतः स्वयं धर्ममिति कः स्वस्थधीर्वदेत् ॥ ३४९९ ॥

---

तस्मादित्यादिनोपसंहरति । दशाकुशलहानित इति । प्राणातिपातादत्ता-दानकामिमिथ्याचारमृषावादपैशुन्यपारुष्यासम्भिन्नप्रलापाभिध्याव्यापादमिथ्यादृष्टयो दशा-कुशलाः । यद्वा—परेषामपरित्राणमदानमपरिचरणमसत्यमप्रियवचनमहितमस्वाध्याय-मश्रद्धा मदया[3] स्पृहा चेति दशाकुशलानि पठ्यन्ते । तद्विपर्ययात् कुशलानि दश । तेषामकुशलानां हानि = स्तनो विरतिः, दशकुशलानुष्ठानमिति यावत् । लघीयसीति । विपर्यासपूर्वकत्वात् तस्याः क्षिप्रतरं क्षयात् । क्लेशमूलं सत्त्व-दृष्टिरेव ॥ ३४९५-३४९६ ॥

अभ्युदयहेतुत्वेनापि भगवद्वचनस्य[4] विशेष[5] दर्शयति—दशेत्यादि । बलवन्त इति स्थिरोदारफलत्वात् ॥ ३४९७ ॥

इतरेऽपि कस्मात् बलवन्तो न भवन्ति ? इत्याह—सत्त्वेत्यादि । [G 907] परिशुद्धादेव हि कारणात् परिशुद्धं फलं जायते, नाविशुद्धात् । मुनिसत्तम इति । मुनीनाम् = श्रावकप्रत्येकबुद्धानां मध्ये सत्तमः शोभनतमः[5] मुनिसत्तमः ॥ ३४९८-९९ ॥

---

१ ०त्विनिविष्टत्वात्—पा०, गा० । २. कर्मपथा—पा० ।
३ न अदया—जै० । ४-४ वचनविशेष—पा०, गा० ।
५. शोभन —पा०, गा० ।

स्यान्मतं यो व्यतीतोऽध्वा स शून्यस्तत्त्वदर्शिना[1] ।
कालत्वात् तद्यथा कालो वर्तमानः प्रतीयते ॥ ३५०५ ॥
सन्दिग्धव्यतिरेकित्वाद् युक्तमेतन्न साधनम् ।
वर्तमानश्च कालोऽयं तेन शून्यो न निश्चितः ॥ ३५०६ ॥
हेतुसामग्र्यभावाच्च भूतो नाम न सम्प्रति ।
रामादिवदतीते तु काले केन न सम्भवेत् ॥ ३५०७ ॥
प्रज्ञादीनां च धर्मित्वं कृत्वा लिङ्गमुदीरितम् ।
[2]न नाम[2] दृश्यते लिङ्गं न च सत्ता प्रसाध्यते[3] ॥ ३५०८ ॥

---

[G 908] स्यान्मतमित्यादिना परोपन्यस्तं साधनमाशङ्कते । प्रयोगः — योऽयमतीतः कालः स सर्वज्ञशून्यः, कालत्वात्, साम्प्रतकालवत् । तत्र साध्यविपर्यये बाधकप्रमाणानुपदर्शनात् सन्दिग्धव्यतिरेकित्वमित्यतोऽनैकान्तिकता हेतोः । दृष्टान्तोऽपि सन्दिग्धधर्मत्वादसिद्धः ॥ ३५०५ ३५०६ ॥

भवतु वा दृष्टान्तस्य सिद्धिः, तथापि[4] न दृष्टमात्रेणेष्टसिद्धिर्युक्तेति दर्शयन्नाह — हेत्वित्यादि । कः पुनरत्र प्रतिबन्धो यः इदानीं नास्ति सोऽतीतेऽपि काले नाभूदिति । न हि रामभरतादय इदानीं न सन्तीत्यतीतेऽपि ते[5] काले नाभूवन्निति शक्यमनुमातुम् । अतो रामादिभिरनैकान्त्यादनैकान्तिकता हेतोः ॥ ३५०७ ॥

यच्चोक्तम् — "दृष्टो न चैकदेशोऽपि लिङ्गं वा" (तत्त्व० ३१८५) इत्यत्राह — प्रज्ञादीनामित्यादि । "ये चासमानजातीय" इत्यादिना प्रज्ञादीनां धर्मित्वं विधाय लिङ्गमुदीरितम्, अतो लिङ्गं नास्तीत्येतदसिद्धम् । नापि सत्ता साध्यते, किं तर्हि ? प्रज्ञादीनामत्यन्तोत्कर्षाख्यो धर्मः, तदेव च सर्वज्ञत्वम्, अतः सत्तासाधनेऽपि ये दोषास्तेऽप्यत्र नावतरन्त्येव ॥ ३५०८ ॥

---

१ सर्वदर्शिना—पा०, गा० । २–२ तन्नाम—गा० ।
३ प्रसिध्यते—पा० ।
४ तथापि—पा०, गा० ।
५ पा०, गा० पुस्तकयोर्नास्ति ।

आगमेन च[1] सर्वज्ञो नास्माभिः प्रतिपाद्यते ।
लिङ्गे[2] सति हि पूर्वोक्ते को नामागमतो वदेत् ॥ ३५०९ ॥

सुगतस्य सार्वज्ञ्ये श्रुतेरपि प्रामाण्यम्

किन्तु वेदप्रमाणत्वं यदि युष्माभिरिष्यते ।
तत् किं भगवतो मूढैः सर्वज्ञत्वं न गम्यते ॥ ३५१० ॥
निमित्तनाम्नि सर्वज्ञो भगवान् मुनिसत्तमः ।
शाखान्तरे हि विस्पष्टं पठ्यते ब्राह्मणैर्बुधैः ॥ ३५११ ॥
योऽसौ षड्दन्तमात्मानमयदातद्विपात्मकम् ।
स्वप्ने प्रदर्श्य सञ्जातो बोधिसत्त्वो गुणोदधिः ॥ ३५१२ ॥
विघुष्टशब्दः सर्वज्ञः कृपात्मा स भविष्यति ।
प्राप्तामृतपदः शुद्धः सर्वलोकपितेति[3] च ॥ ३५१३ ॥

"न चागमविधिः कश्चित्" ( तत्त्व० ३१८६ ) इत्याद्यत्राह—आगमेन त्वित्यादि । न हि वस्तुबलप्रवृत्तानुमानसम्भवे सति कश्चिदिच्छामात्रानुविधायिनो वचनाद् वस्तुसिद्धिमन्विच्छेत् । अतो न वयमागमात् सर्वज्ञं साधयामः, किं तर्हि ? अनुमानात् । तच्च पूर्वोक्तमेव ॥ ३५०९ ॥

[ G 909 ] न चाप्येत सिद्धम्—"न चागमविधिः कश्चिन्नित्यः सर्वज्ञबोधने अस्ति"" ( तत्त्व० ३१८६ ) इति[4] दर्शयन्नाह—किन्त्वित्यादि । तथा हि—निमित्तं नाम शाखान्तरमस्ति, तत्र स्फुटतरमयमेव भगवान् शाक्यमुनिः सर्वज्ञः पठ्यते, तत्किमिति मूढैर्वेदं प्रमाणयद्भिरपि भवद्भिरसौ नाधिक्षिप्यते ॥ ३५१०–३५११ ॥

कथमसौ तत्र पठ्यते ? इत्यादर्शयन्नाह—योऽसावित्यादि । विघुष्टशब्द इति सकलजगत्प्रख्यातकीर्तिः । प्राप्तामृतपद इति प्राप्तसवासनक्लेशोपशमलक्षणनिर्वाणपद इत्यर्थः । शुद्ध इति अनास्रवधातुमयः । एतावता भगवतोऽशानप्रहाणलक्षणा स्वार्थसम्पत् परिदीपिता । परार्थसम्पदं दीपयन्नाह—सर्वलोक-

1. तु—पा०, गा० । 2. लैङ्गे—पा०, गा० ।
3. पितापि—पा०, गा० । ४–४. इति—पा०, इति इति—गा० ।

अथ शाखान्तरं नेदं वेदान्तर्गतमिष्यते ? ।
तदत्र न निमित्तं वो द्वेषं मुक्त्वाऽवधार्यते ॥ ३५१४ ॥
स्वरादयश्च ते धर्माः प्रसिद्धाः श्रुतिभाविनः ।
कर्तुमत्रापि शक्यास्ते नरेच्छामात्रसम्भवात् ॥ ३५१५ ॥
ननु नैव[1] परो[1] नित्यः शक्यो लब्धुमिहागमः ।
नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता ॥ ३५१६ ॥
आगमस्य हि[3] नित्यत्वे सिद्धे[3] तत्कल्पना[3] वृथा ।
यतस्ते प्रतिपद्यन्ते धर्ममेव ततो नराः ॥ ३५१७ ॥
न खल्वस्मिन् प्रसिद्धेऽपि वेदे नित्यत्वमस्ति यत् ।
प्रयत्नानन्तरज्ञानक्रमिज्ञानादि तत्फलम् ॥ ३५१८ ॥

---

पितेति । पिता = शास्ता । सर्वस्य जगतो ज्ञानत्रयसुगतिप्रतिष्ठापनात् ॥ ३५१२–३५१३ ॥

अथेत्यादिना परस्योत्तरमाशङ्कते । इदमिति निमित्ताख्यं शाखान्तरम् । तदत्रेत्यादिना प्रतिविधत्ते ॥ ३५१४–३५१५ ॥

नन्वित्यादिना परस्योत्तरमाशङ्कते । [G 910] एवम्परः इति सर्वज्ञप्रतिपादनपरः । कथं न शक्यो लब्धुम् ? इत्याह—नित्यश्चेत्यादि । यद्यसौ सर्वज्ञप्रतिपादनपर आगमो नित्यः स्यात्, तदा नियमेनार्थवादत्वम् = अन्यार्थत्वमस्य प्राप्नोति । अथार्थवादत्वं तस्य नेष्यते, तदा नियमादनित्यत्वमस्यापद्येत ॥ ३५१६ ॥

कस्मात् पुनर्नित्यत्वे सत्यर्थवादत्वमापद्यते ? इत्याह—आगमस्य हीत्यादि[4] । तत्कल्पनेति सर्वज्ञकल्पना । किमिति वृथा ? इत्याह—यत इत्यादि । तत इति नित्यादागमात् ॥ ३५१७ ॥

न खल्वित्यादिना प्रतिविधत्ते । यद्यप्ययमृगादिर्वेदः स्वरूपोऽतिप्रसिद्धः, तथाप्यस्य नित्यत्वमसिद्धम् । कथम् ? इत्याह—यदिति यस्मादर्थे । यत्प्रयत्नानन्तरज्ञानं क्रमज्ञानफलं [illegible] तदनित्यम्, यथा घटादि । तथा च वेद इति स्वभावहेतुः ।

---

१–१ नैतत्परो—पा० । २ च—पा०, गा० ।
३–३. सिद्धे तत्कल्पना—पा० । ४ चेत्यादि—पा०, गा० ।

किन्त्वेतस्य प्रसिद्धस्य प्रामाण्योपगमे सति ।
शाखान्तरेऽपि वेदत्वात् प्रामाण्यं ते प्रसज्यते ॥ ३५१९ ॥
ज्ञापनीयमवेदत्वं यद्वा युक्त्या ध्रुवं त्वया ।
अन्यथाश्रुत्यनुक्तत्वं सन्दिग्धं तस्य ते भवेत् ॥ ३५२० ॥
नित्यत्वं चास्तु वेदस्य तत्परत्वं च तत्र तु ।
तत्परे स्यादनित्यत्वं कस्मान्नाश्यर्थसङ्गतेः ॥ ३५२१ ॥
यच्चेवम्, आज्यनीवारचामीकरजटादयः ।
अनित्याः कथमुच्यन्ते तेन नित्यात्मना सता ॥ ३५२२ ॥
जातिस्तत्रापि नित्या चेन्ननु साऽपि निराकृता ।
तस्मात्तद्वचने वाच्यो न चाज्यादौ मतिर्भवेत् ॥ ३५२३ ॥

---

अस्य च श्रुतिपरीक्षायामसिद्धतादि विस्तरेण निरस्तमिति नात्राभिधीयते । एतस्येति वेदस्य ॥ ३५१८–३५१९ ॥

शाखान्तरस्य वेदत्वमसिद्धमिति चेद् ? आह—ज्ञापनीयमित्यादि । अन्यथेति । यद्यवेदत्वमस्य न ज्ञाप्यते, तदा यत् त्वया श्रुतो = वेदे, अनुक्तत्वं तस्य सर्वज्ञस्योक्तम्, तत् सन्दिग्धासिद्धं भवेत् ॥ ३५२० ॥

यच्चोक्तम्—"तत्परे स्यादनित्यता" (तत्त्व० ३५१६) इत्यत्राह—नित्यत्वं चास्त्वित्यादि । [G 911] कस्मादिति पृष्टः सन् पर आह—नाश्यर्थसङ्गतेरिति । नाशिनार्थेन सङ्गते सम्बन्धात् कारणादनित्यत्वं प्राप्नोति ॥३५२१॥

यच्चेत्यादिनानैकान्तिकत्वमुद्भावयति । आज्यम् = घृतम् । नीवार = व्रीहिविशेष । चामीकरवट = अग्नि । तेनेति वेदेन ॥ ३५२२ ॥

जातिरित्यादिना परस्योत्तरमाशङ्कते । तत्राज्यादौ जातिरस्ति, सा शब्दवाच्या, तेनातिप्रसङ्गो न भविष्यतीति ? तदेतदसम्यक्, सामान्यपरीक्षायां जातेर्विस्तरेण निराकृतत्वात् । भवतु वा जाति, तथाप्याज्यादिशब्दाज्जातिमात्राभिधायिनो व्यक्तौ प्रत्ययो न प्राप्नोति, ततश्च व्यक्तिसाध्यार्थक्रियार्थिनो जात्यभिधानमनर्थकमेव स्यात् । नान्तरीयकतया व्यक्तिः प्रतीयत इति चेत् ? न, प्रतीतिविप्रकर्षाभावात् । न हि शब्दादनन्तरं जातौ प्रथमतरमुपजायते मतिः, पश्चान्नान्तरीयकतया व्यक्ति-

तस्यापि वचने वाचो नित्यता किं न हीयते ।
सर्वज्ञेऽप्याकृतिर्वास्तु[1] तेन तत्परनित्यता ॥ ३५२४ ॥
यदा[2] च वेदवाक्याना स्वातन्त्र्येणार्थनिश्चयः ।
वेदात् स्वतः परस्माच्च मोहादिविवशात्मनः ॥ ३५२५ ॥
तेनाग्निहोत्रं जुहुयात् स्वर्गकाम इति श्रुते ।
जिनः सर्वज्ञ इत्येष नार्थ इत्यत्र का प्रमा ॥ ३५२६ ॥

प्रतीतिः, किं तर्हि ? अन्यव्यपानेनैवार्थक्रियाकारिपदार्थाध्यवसायो लोके शब्दादिति । यदि च जातिमेव शब्दोऽभिदधीत, न व्यक्तिम्, तदा बलीवर्ददोहधोवनादसम्बन्धाभिधायित्वमवगम्य प्रेक्षावान्नैव व्यक्तौ शब्दात् प्रवर्तेत । अथ मा भूदेष दोषप्रसङ्ग इति [3]तस्याभिव्यक्तिरूपस्याभिधानमङ्गीक्रियते, तदा नित्यताहानिर्वेदस्य कथं न प्रसज्यते ।

किञ्च—भवतु नाम मुख्यतो व्यक्त्यभिधानं शब्दानां नान्तरीयकं तद्रूपस्याभिधानम्, तथापि सर्वस्य परस्याप्यागमस्य[4] नित्यता न विरोधिनीति दर्शयति—सर्वज्ञेऽपीत्यादि । एकस्मिन्नपि हि सर्वज्ञेऽवस्थाभेदपरिकल्पितनानात्वेन जातिशब्दवाच्यत्वमुपपद्यते, किं पुनरपरिमितानादिसर्वज्ञपरम्परासु ॥ ३५२३–३५२४ ॥

[G 912] किञ्च—यदि नाम निर्मित्ताख्यं शास्त्रान्तरं वेदत्वेन नाङ्गीक्रियते भवद्भिः, तथापि श्रुत्यनुकरणं सन्दिग्धं भवत्यनेनैवेति दर्शयन्नाह—यदा[5] चेत्यादि । वेदवाक्यानां हि नियततया स्वातन्त्र्ये सति न ततो वेदार्थनिश्चयो जायते, न ह्ययं वेदः—'अयं ममार्थो नान्यः' इत्येवं विरौति । नापि प्रतिपत्तुः स्वतः आत्मनः[6] परस्माद्वा व्याख्यातुरर्थनिश्चयो भवति, सर्वेषामेव भवन्मत्या मोहादिभिर्विप्लुतत्वात् । तेनाग्निहोत्रादिवाक्याद् भगवान् सर्वज्ञ इत्ययमप्यर्थः सम्भाव्यत एव । का प्रमेति नैव काचित् ॥ ३५२५–३५२६ ॥

---

१ सर्वज्ञेऽप्याकृति॰—जै॰ पुस्तक पाठः ।
२. यदा—पा॰, गा॰ ।
३. तस्यापि व्यक्ति॰—गा॰ ।
४ परस्या॰—गा॰ ।
५ यदा—पा॰, गा॰ ।
६ स्वात्मन —पा॰, गा॰ ।

स्वर्गापवर्गमार्गस्य विस्पष्टमुपदेशतः ।
प्रधानार्थपरिज्ञानात् सर्वज्ञ इति गम्यते ॥ ३५२७ ॥
समुद्रसिकतासङ्ख्याविज्ञानं क्वोपयुज्यते ।
तस्यास्माकमतोऽन्यार्थज्ञानसंवेदनेन किम् ! ॥ ३५२८ ॥
गौणत्वेनैव वक्तव्यः सोऽपि मन्त्रार्थवादवित् ।
इत्ययं नियमः सिध्येत् सर्वज्ञे तु निराकृते ॥ ३५२९ ॥
पूर्वोक्तव्यापकायोगे साधिते तु सविस्तरम् ।
सन्दिग्धो गौणनियमो मुख्यार्थस्यापि सम्भवात् ॥ ३५३० ॥
धर्मादिगोचरज्ञानमात्राप्रतिघता यदि ।
सफला वर्ण्यते व्यक्तं तदा वुद्धैर्जितं जगत् ॥ ३५३१ ॥
यस्मादभ्युदये मोक्षे सहेतौ साधिते पुरः ।
ज्ञानमप्रतिघं तेषामावैणिकमतिस्फुटम् ॥ ३५३२ ॥

यद्यात्मन्येव विज्ञानं ध्यानाभ्यासप्रवर्त्तितम् ।
तस्याप्यप्रतिघातित्वं तेषां पूर्वं प्रसाधितम् ॥ ३५३३ ॥
एतदेव हि तज्ज्ञानं यद् विशुद्धात्मदर्शनम् ।
आगन्तुकमलोपेतचित्तमात्रत्ववेदनात् ॥ ३५३४ ॥
अवेद्यवेदकाकारा बुद्धिः पूर्वं प्रसाधिता ।
द्वयोपप्लवशून्या च सा सम्बुद्धैः प्रकाशिता ॥ ३५३५ ॥
संसारानुचितज्ञानास्तेन सिद्धा महाधियः ।
यदाधिपत्यभाविन्यो भासन्तेऽद्यापि देशनाः ॥ ३५३६ ॥
प्रकृत्या भास्वरे चित्ते द्वयाकारकलङ्किते ।
द्वयाकारविमूढात्मा कः कुर्यादन्यथामतिः[1] ॥ ३५३७ ॥

---

यच्चोक्तम्—"यद्याऽऽत्मन्येव विज्ञानम्" ( तत्त्व० ३२०४ ) इति, तत्रापि भगवत्येव तथाविज्ञानसम्भवान्न किञ्चिदनिष्टमापादितमित्यादर्शयन्नाह—यच्चात्मन्येवेत्यादि । तस्यापीति आत्मज्ञानस्य । तेषामिति बुद्धानां भगवताम् । पूर्वमिति "यावद् यावद्गुणौघोऽस्याम्" ( तत्त्व० ३४३२ ) इत्यादिना ॥ ३५३३ ॥

ननु च तत्रात्मज्ञानं स्ववेदनात्मकं[2] वर्णितम्, न स्वन्तर्व्यापारपुरुषज्ञानम्, तत् कथं सिद्धसाध्यता भवति ? इत्याह—एतदेव हीत्यादि ॥ ३५३४ ॥

चित्तमात्रवेदनमेव कथं सिद्धमिति चेद् ? आह—अवेद्येत्यादि । पूर्वमिति बहिरर्थपरीक्षायाम् । संसारानुचितमननुकूलं ज्ञानं येषां ते तथोक्ताः ॥ ३५३५–३५३६ ॥

काः पुनस्तास्तदाधिपत्यभाविन्यो देशना श्रूयन्ते ? इत्याह—प्रकृत्या भास्वर इत्यादि श्लोकद्वयम्[3] ।

---

1. ० दन्यथामतिम्—पा०, गा० ।
2. स्ववेदात्मकं—पा० ।
3. पा०, गा० पुस्तकयोर्नास्ति ।

द्वयनैरात्म्यबोधे च रत्यादिसङ्कल्पभाविनः ।
रागद्वेषादयो दोषा. सक्षीयन्तेऽप्रयत्नतः ॥ ३५३८ ॥
इदं तत् परमं तत्त्वं तत्त्ववादी जगाद यत् ।
सर्वसम्पत्पदं[1] चैव केशवादेरगोचर. ॥ ३५३९ ॥
ज्ञायते हि स्थिरात्माऽन्यैः शुद्धस्फटिकसन्निभः ।
स च तेषा विपर्यासो नित्यात्मप्रतिषेधनात् ॥ ३५४० ॥
आत्मग्राहि च विज्ञानमात्मनो यदि जायते ।
तत. सर्वात्मविज्ञान युगपत् सम्प्रसज्यते ॥ ३५४१ ॥
अथ तस्मान्न जायेत नित्य वाभ्युपगम्यते ।
तदा तद्विषय न स्यात् पुरुषान्तरचित्तवत् ॥ ३५४२ ॥
ग्राह्यलक्षणवैधुर्याद् विस्तरेण च साधितात् ।

[ G 914 ] द्वयाकारायिमूढात्मेति प्रहीणग्राह्यग्राहकाभिनिवेश । द्वय-नैरात्म्यबोध इति पुद्गलधर्मनैरात्म्यबोधे । यद्वा—द्वयम् = ग्राह्य ग्राहक च, तस्य नैरात्म्यम् = नैःस्वाभाव्यमिति[2] विग्रह । केशवादेरगोचर इति । केशव = हरि । आदिशब्देनेश्वरादिपरिग्रह ॥ ३५३७–३५३९ ॥

अथ केशवादेरपि विशुद्धमात्मदर्शन कस्मान्नेष्यते ? इत्याह—ज्ञायते हीत्यादि । अन्यैरिति केशवादिभि । आत्मपरीक्षायामात्मनो निरस्तत्वात् तद्विषय ज्ञान विपर्यस्तत्वादविशुद्धम् । किञ्च—यदेतन्नित्यात्मविषयं तेषा ज्ञानमुप-वर्ण्यते, तत् किं तत आत्मनो जायते, आहोस्विन्न—इति पक्षद्वयम् । तत्र प्रथमे पक्षे युगपद्दोष तद्विषय ज्ञानमविकलकारणतया जायेत । अथ द्वितीय पक्ष, तत्रापि तन्नित्यं वा स्याद् ? अनित्यं वा ? उभयथापि तेनात्मना तस्यानुपकार्यत्वा-दन्यचित्तवत् तद्विषयं न प्राप्नोति ॥ ३५४०–३५४२ ॥

यच्चोक्तम्–"एतदेव हि तज्ज्ञान यद्विशुद्धात्मदर्शनम्" (तत्त्व० ३२०६) इति, तत्राह–ग्राह्येत्यादि । [ G 915 ] यदि तावदात्मा ग्रहरूपोऽभ्युपगम्यते, तदा तद्विषयं ज्ञानमविशुद्धमेव, प्रकृत्या सर्वज्ञानाना ग्राह्यग्राहकवैधुर्यस्य बहिरर्थ-

1. ०सम्पत्पद—पा०, गा० ।   2. नैःस्वभाव्यमिति—पा०, गा० ।

नैतदेव हि तज्ज्ञानं यद्[1] विशुद्धात्मदर्शनम्[1] ॥ ३५४३ ॥
तथापि ज्ञानरूपत्वमात्मनोऽभ्युपगम्यते ।
दृश्यदर्शननानात्वाभावान्नैवमपि[2] ग्रहः ॥ ३५४४ ॥
स्वपरप्रकाशरूपत्वं तज्ज्ञानस्येष्यते यदि ।
स्वसंवित्तिस्तदा प्राप्ता प्रत्यक्षा च मतिर्भवेत् ॥ ३५४५ ॥

ब्रह्मादीनां वेददेहत्वमसङ्गतम्

ब्रह्मादीनां च वेदेन सम्बन्धो नास्ति कश्चन ।
भेदान्नित्यतयाऽपेक्षावियोगाच्च तदन्यवत् ॥ ३५४६ ॥
ततश्च वेददेहत्वं ब्रह्मादीनामसङ्गतम् ।
सर्वज्ञानमयत्वं च वेदस्यार्थाविनिश्चयात् ॥ ३५४७ ॥
स्वातन्त्र्येण च सम्बुद्धः सर्वज्ञ उपपादितः ।
न पुनर्वेददेहत्वाद् ब्रह्मादिरिव कल्प्यते ॥ ३५४८ ॥

---

परीक्षायां प्रसाधितत्वात्। अथ चिद्रूप आत्मेति पक्षः; तदापि दृश्यदर्शनयोरभेदाद् ग्राह्यग्राहकभावानुपपत्तेस्तद्विषयं ज्ञानमिति न स्यात्, भेदे हि विषयविषयिणोर्विषयविषयिभावः स्यात्। अथ प्रदीपवत् प्रकाशतयाऽऽत्मविषयत्वमस्याभ्युपगम्यते, तदा स्वसंवित्तेरनभिमतायाः प्रसङ्गः स्यात्, ज्ञानस्य चाप्रत्यक्षत्वमिष्टं व्याहन्येत। तद् दर्शयति—प्रत्यक्षा च मतिर्भवेदिति ॥ ३५४३-३५४५ ॥

यदुक्तम्—"तथापि वेददेहत्वाद्" (तत्त्व० ३२०७) इत्यादि, तत्राह—ब्रह्मादीनां चेत्यादि। सम्बन्धे सति ब्रह्मादीनां वेददेहत्वं भवेत्, न च वेदेन सार्द्धं ब्रह्मादेः सम्बन्धोऽस्ति। तथा हि—तादात्म्यतदुत्पत्तिलक्षणो द्विविध एव सम्बन्धो भावानामिति प्रतिपादितम्, तत्र भेदाभ्युपगमान्न तादात्म्यसम्बन्धः। नापि तदुत्पत्तिः; द्वयोरपि नित्यत्वेनानुपकार्यतया परस्परमपेक्षाया अभावात्। सर्वज्ञानमयत्वं च वेदस्येति। असङ्गतमिति प्रकृतेन सम्बन्धः। कस्मात्? अर्थानिश्चयात्। विनिश्चिते ह्यर्थे वेदस्य सर्वज्ञानमयत्वं कल्पयितुं युक्तम्, स च भवन्मत्या न सम्भवतीत्यावेदितमेतत्। न च भवद्भिरिवास्माभि-

---

१-१. यदि शुद्धात्म०—पा०, गा०। २. ०नानात्वभावा०—पा०, गा०।

पञ्चगत्यात्मसंसारबहिर्भावान्न मर्त्यता ।
[1]बुद्धानामिष्यतेऽस्माभिर्निर्माणं [1]तु तथा मतम्[1] ॥ ३५४९ ॥
अकनिष्ठे पुरे रम्ये शुद्धावासविवर्जिते ।
[1]बुद्धयन्ते तत्र सम्बुद्धा निर्मितस्त्विह बुध्यते ॥ ३५५० ॥
स्वातन्त्र्येण तु मर्त्यत्वं त्वया निश्चीयते कथम् ।
[1]परकीयागमद्वारान्न तस्यैवमवस्थितेः ॥ ३५५१ ॥
न च तत्स्पर्धयाऽस्माभिस्ते सर्वज्ञा इतीष्यते ।
आकाशकुसुमैः को हि स्पर्धां सत्येषु कल्पयेत् ॥ ३५५२ ॥

---

वेदद्वारेण सर्वज्ञोऽभ्युपगम्यते, किं तर्हि ? स्वयम्भुज्ञानत्वात् स्वयमेव भगवान् सर्वज्ञ इति प्रतिपादितमेतत् ॥ ३५४६-३५४८ ॥

यच्चोक्तम्—"न च बुद्धादयो मर्त्या" ( तत्त्व० ३२०८ ) इति, तत्र मर्त्यत्वं भगवतोऽसिद्धम्—इति दर्शयन्नाह—पञ्चेत्यादि । [G 916] नरक-प्रेततिर्यग्देवमनुष्यभेदेन पञ्चगत्यात्मकः संसारः, तद्बहिर्भूताश्च बुद्धा[1] भगवन्त इत्यसिद्धं मर्त्यत्वमेषाम् । कथं तर्हि शुद्धोदनादिकुलोत्पत्तिरेषां श्रूयते ? इत्याह—निर्माणं तु तथा मतमिति ॥ ३५४९ ॥

एतदेवागमेन सम्पन्दयन्नाह—अकनिष्ठ इत्यादि । अकनिष्ठा नाम देवा[2], तेषामेकदेशे शुद्धावासकायिका नाम देवा[3], अत्र हि आर्या एव शुद्धा आवसन्ति । तेषामुपरि माहेश्वरभवनं नाम स्थानम्, तत्र चरमभविका एव दशभूमिप्रतिष्ठिता बोधिसत्त्वा उत्पद्यन्ते । इह तु तदाधिपत्येन तथा निर्माण-मुपलभ्यत इत्यागमः ॥ ३५५० ॥

नास्माकमिदं सिद्धमिति चेद् ? आह—स्वातन्त्र्येणेत्यादि । यदि हि स्वातन्त्र्येण मर्त्यत्वं भवतोपादीयते, तदा सन्दिग्धासिद्धता । न हि भगवतो मर्त्यत्व प्रसाधकं किञ्चिद् भवतः प्रमाणमस्ति, येन स्वातन्त्र्येण मर्त्यत्वं सिद्धं भवेत् । तस्मात्

---

१-१ तत्तथा०—पा०, गा० । २. पा०, गा० पुस्तकयोर्नास्ति ।
३. देवा —गा० ।

सर्वशक्तिवियोगेन नीरूपत्वं हि साधितम् ।
नित्यानां तेन नो सन्ति परेष्टास्त्र्यम्बकादयः ॥ ३५५३ ॥
किञ्च—तेषां विपर्यस्तं ज्ञानमात्मादिदर्शनात् ।
बुद्धानां त्वविपर्यस्तं विस्तरेणोपपादितम् ॥ ३५५४ ॥
ततस्पर्धा क्रियते तैस्तु न दूरान्तरभावतः ।
को हि तैमिरिकैः स्पर्धां कुर्यात् स्वस्थेक्षणे नरे ॥ ३५५५ ॥
गुणकर्मेश्वरादीनां वेदानां चापहस्तिता ।
नित्यतास्तश्च नास्माभिर्नित्य आगमः इष्यते ॥ ३५५६ ॥
उपमानेन सर्वज्ञसत्तासिद्धिर्न चेष्यते ।
तस्याप्रमाणताप्रोक्तेः सत्तासिद्धिस्ततो न च ॥ ३५५७ ॥

---

परकीयागमद्वारेण त्वया मर्त्यत्वं वक्तव्यम्, स च परस्यागम एवम् = यथोक्तरूपः स्थित इत्यसिद्धमेषां मर्त्यत्वम् ॥ ३५५१–३५५२ ॥

कथमाकाशकुसुमसदृशत्वमेषां सिद्धम् ? इत्याह—सर्वशक्तिवियोगेनेत्यादि। परेण हि शङ्करादयो नित्यत्वेनेष्टाः । नित्यानां च क्रमाक्रमाभ्यामर्थक्रियाविरोधात् सर्वसामर्थ्यरहितत्वं प्रसाधितम् । सर्वसामर्थ्यविरहलक्षणं चासत्त्वमिति परेष्टास्त्र्यम्बकादयो नित्या न सन्त्येव—इत्याकाशकुसुमसदृशत्वमेषां सिद्धमेव । त्र्यम्बकः = शङ्करः ॥ ३५५३ ॥

किञ्च—सन्तु नाम त्र्यम्बकादयः, तथाप्यतिनिकृष्टतया तेषाम्, न भगवता वै सह स्पर्धा क्रियतेऽस्माभिरित्यादर्शयन्नाह—किञ्चेत्यादि । [G 917] सुबोधम् ॥ ३५५४–३५५५ ॥

यच्चोक्तम्—"नित्येऽपि चागमे वेदे" (तत्त्व० ३२०९) इति, तत्राह—गुणकर्मेत्यादि । सर्ववस्तुव्यापिनः क्षणभङ्गस्य प्रसाधनान्न कस्यचिन्नित्यमस्तीति सर्वमेतदसङ्गतमुक्तम् ॥ ३५५६ ॥

यच्चोक्तम्—"सर्वज्ञसदृशः" (तत्त्व० ३२१४) इत्यादि, तत्राह—उपमानेनेत्यादि । न ह्युपमानस्य प्रामाण्यमस्ति, येन ततः सर्वज्ञसिद्धिमभिवाञ्छेद् बौद्धः । सत्यपि वा प्रामाण्ये तस्य सत्तासिद्धावनुपयोग एव । तथा हि—

प्रसिद्धायां हि सत्तायां सादृश्यं गम्यते ततः ।
साधनं प्रकृतं चेदं सत्तायाः सर्ववेदिनः ॥ ३५५८ ॥

तन्नोपमानतः सिद्धिः प्रतिषेधोऽफलः कृतः[1] ।
नरा दृष्टास्त्वसर्वज्ञाः सर्वे चेद् भवता ततः ॥ ३५५९ ॥

त्वमेव सर्ववित्ता स्याद् दूरव्यवहितेक्षणात् ।
अन्यसन्तानसम्बद्धज्ञानशक्तेश्च दृष्टितः ॥ ३५६० ॥

पुरःस्थितेऽपि पुंसि स्यात् कथं तत्र विनिश्चयः ।
नायं सर्वज्ञ इत्येवम्भावेऽतीन्द्रियविद् भवात् ॥ ३५६१ ॥

आत्मासर्वज्ञतादृष्टौ शेषासर्वज्ञनिश्चये ।

---

प्रसिद्धे धर्मिणि गवादौ गवयादिसाधर्म्यमात्रं तेन साध्यते । न च सर्वज्ञो धर्मी प्रसिद्धः; तस्यैव भवन्मतेन साध्यत्वात् । तेन भवन्मत्या सर्वज्ञसत्तायां साध्यत्वेन प्रस्तुतायामुपमानस्य प्रसङ्गाभावात् तत्प्रतिषेधोऽनर्थकः; प्राप्त्यभावात् । प्राप्तिपूर्वकत्वात् प्रतिषेधस्येति भावः ।

"नरान् दृष्ट्वा त्वसर्वज्ञान्" ( तत्त्व० ३२१५ ) इत्यादावाह—नरा दृष्टास्त्वसर्वज्ञा इत्यादि । यदि हि सर्व एव नरा दृष्टा भवता, तदा सर्वज्ञप्रतिषेधे स्ववचनव्याघातः । तथा हि—दूरव्यवहितदेशनरदर्शनाभ्युपगमादन्यसन्तानसम्बन्धिज्ञानशक्तिनिश्चयाभ्युपगमाच्चात्मनि सर्वज्ञत्वं [ G. 910 ] स्फुटतरमेवाभ्युपेतं स्यात्; देशकालस्वभावविप्रकृष्टार्थदर्शनाभ्युपगमात् । न ह्यसर्वज्ञस्यैवं परिज्ञानं सम्भवेत् । तत्प्रतिषेधाय च साधनोपादानात् तदेव प्रतिषिध्यत इति स्ववचनव्याघातः, यथा—माता मे वन्ध्येति ॥ ३५५७–३५६० ॥

असिद्धता च हेतोरिति दर्शयन्नाह—पुरःस्थितेऽपीत्यादि । तथा हि—पुरोऽवस्थिते पुंसि शरीरमात्रदर्शनान्नायं सर्वज्ञ इत्येवमसर्वविन्निश्चयो न सम्भवति, किमुत देशकालव्यवस्थिते पुंसि । एवमस्मात् इति । नायं सर्वज्ञ इत्येवं निश्चयस्य । अथ मा भूदसिद्धता हेतोरित्यात्मासर्वज्ञतया शेषासर्वज्ञनिश्चयोऽभ्युपगम्यते, तदातिप्रसङ्गादनैकान्तिकतेत्यादर्शयन्नाह—आत्मासर्वज्ञता दृष्टावित्यादि । आत्मन्यसर्वज्ञतायां दृष्टायामिति विग्रहः ।

---

1. ततः—गा० ।

अतिप्रसङ्गोऽजाद्यादेः सर्वेषामपि[1] निश्चयात् ॥ ३५६२ ॥
बाधादृष्टेर्न चेत् सर्वधर्मनिश्चय इष्यते ।
बाधाशङ्का ननूक्तेर्ऽपि बाधादृष्टेर्न भिद्यते ॥ ३५६३ ॥
स्वर्गापवर्गमार्गोक्तिरनवद्या[2] प्रसाधिता[2] ।
बुद्धानां तां जडात् कोऽन्यो व्यामोहादभिमन्यते ॥ ३५६४ ॥
दृष्टेऽप्यभ्युदयं चित्तदोषशान्तिं परां तथा ।
ततश्चाप्नुवतां तेन परं व्यामोहनं कृतम् ॥ ३५६५ ॥

---

स्यादेतत्—सर्वधर्मसाधनं क्रियमाणं दृष्टेन प्रज्ञादिभेदेन बाध्यत इत्यतस्तस्य साधनं क्रियते[3], तत् त्वसर्वज्ञत्वं साध्यमानं "केनचिद् बाध्यत इत्यतोऽतिप्रसङ्गो न भविष्यतीति ? तदेतदसम्यक्; यथैव दृष्टबाधं साध्यं हेतुर्न साधयति, तथा शङ्क्यमानबाधमपीत्यतो बाधाशङ्का बाधादृष्टेर्न भिद्यते; तेनासर्वज्ञत्वसाधनमपि मा भूत्; आशङ्क्यमानबाधत्वात् ॥ ३५६१–३५६३ ॥

यच्चोक्तम्—"उपदेशो हि बुद्धादेरन्यथाप्युपपद्यते" ( तत्त्व० ३२२२ ) इत्याह—स्वर्गेत्यादि । अन्यथोपपन्नत्वमुपदेशस्यासिद्धम् । न हि स्वर्गापवर्गमार्गस्य निरवद्य उपदेशो व्यामोहात् सम्भवति । निरवद्यत्वं च भगवद्वचनस्य सर्वाभिः परीक्षाभिः प्रसाधितम् । जडादिति कुमारिलात् । स एव यदि परं मन्यत इत्यर्थः ॥ ३५६४ ॥

"शिष्यव्यामोहनार्थं वा" ( तत्त्व० ३२२४ ) इत्यत्राह—दृष्टेऽपीत्यादि । [G 619] दृष्ट इति अस्मिन्नेव जन्मनि । अभ्युदयम् = नित्यारोग्यैश्वर्यादिलक्षणम् । अवाप्नुवतामिति सम्बन्धः । दोषशान्तिं चेति । रागादिदोषोपशमम् । ततः = मन्त्रध्यानसमयाद्युपदेशात् तत्त्वाद् यथाविहितानुष्ठानादाप्नुवतां शिष्याणां परं व्यामोहनं कृतमित्यतिशयोक्तिरियम् । यदीदृशं व्यामोहं भवान् मन्येत, तदा भवानेव व्यामूढः स्यादव्यामोहमेव व्यामोहमिति गृह्णन् ॥३५६५॥

---

१. सर्वज्ञमपि—पा०, सर्वज्ञस्यापि—गा० ।
२–२ •मार्गोक्ति निरवद्या प्रसाधिताम्—पा०, गा० ।
३. न क्रियते—गा० । ४. न केनचिद्—गा० ।

वेदमूलं च नैवेदं बुद्धानामुपदेशनम् ।
निष्कलङ्कं हि तत् प्रोक्तं सकलङ्कं श्रुतौ पुनः ॥ ३५६६ ॥
स्वार्थसंसिद्धये तेषामुपदेशो न तादृशः ।
आरम्भः सकलस्त्वेष परार्थं कर्तुमीदृशः ॥ ३५६७ ॥
तस्माज्जगद्धिताधानदीक्षिताः करुणात्मकाः ।
अनिबन्धनबन्धुत्वादाहुः सर्वेषु तत् पदम् ॥ ३५६८ ॥
ये हि लोभभयद्वेषमात्सर्यादिवशीकृताः ।
प्रादेशिकी भवेत् तेषां देशना निःकृपात्मनाम् ॥ ३५६९ ॥
करुणापरतन्त्रास्तु स्पष्टतत्त्वनिदर्शिनः ।
सर्वापवादनिःशङ्काश्चक्रुः सर्वत्र देशनाम् ॥ ३५७० ॥
यथायथा च मौर्ख्यादिदोषदुष्टो भवेज्जनः ।
तथातथैव नाथानां दया तेषु प्रवर्त्तते ॥ ३५७१ ॥
नैवावाहविवाहादिसम्बन्धो वाञ्छितो हि तैः ।
उपकारस्तु कर्त्तव्यः साध्वीतमिदं ततः ॥ ३५७२ ॥
"विद्याचरणसम्पन्ने ब्राह्मणे गवि हस्तिनि ।

---

"यदसौ वेदमूल. स्यात" ( तत्त्व० ३२२५ ) इत्यत्राह—वेदमूलं च नैवेदमिति । न हि निष्कलङ्कमुपदेशनं सकलङ्कमूलं युक्तम् ॥ ३५६६ ॥

"यतस्तु मूर्खशूद्रेभ्य" ( तत्त्व० ३२२६ ) इत्यत्राह—स्वार्थसंसिद्धये तेषामित्यादि । पदमिति । सर्वगुणसम्पत्समाधिद्वारेणाभ्युदयनि श्रेयसमार्गः पदमुच्यते ॥ ३५६७-६८ ॥

यैस्तु मन्वादिभिर्वेदवादिभ्य एवोपदेशनं कृतम्, तेषामेव व्यामोहार्थं तत् सम्भाव्यत इति दर्शयति—ये हीत्यादि ॥ ३५६९ ॥

या पुनर्भगवतामाकुमारं देशना, सा तेषां माहात्म्यमेवोद्भावयतीति दर्शयति—करुणेत्यादि । [ G 920 ] कन्याया योषितो भर्तृगृहागमनम् = आवाहः ॥ ३५७०–३५७२ ॥

कि तद् गीतम् ? इत्याह—विद्येत्यादि ॥ ३५७३ ॥

शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" ॥ ३५७३ ॥
(भ० गी० ५.१८)

ब्राह्मणत्वादिजातिखण्डनम्

शतशः प्रतिषिद्धायां जातौ जातिमदश्च किम् ।
तदन्यातिशयासिद्धौ विशिष्टा सा च किं मता ॥ ३५७४ ॥
यदि त्वादिगुणाधाराः प्रक्षीणाशेषकल्मषाः ।
सर्वेऽप्यविशेषेण तद्योगे च द्विजातयः ॥ ३५७५ ॥
भवेयुर्यदि सिद्ध्यन्ति विशिष्टास्तत्समाश्रयाः ।
वैशिष्ट्यमन्यथा नैव लुब्धकद्विजजातिवत् ॥ ३५७६ ॥
जातकर्मादयो ये च प्रसिद्धास्ते तदन्यवत् ।

---

अपि च—भवतैव 'मूर्धगुह्येभ्यः' इत्यतिप्रकटमुच्चैरसद्भूतजातिमदोद्धतेन चेतसा ब्रुवता स्फुटतरमात्मन एव प्रकटितमिह विद्वज्जनसदसि महामोहत्वम् । तथा हि—कदाचिद् ब्राह्मणत्वाख्यं सामान्यं नाम वस्त्वन्तरमस्तीत्येवमुपदर्शयन्तस्तत्रभवन्तो विप्रा गर्वाङ्कुरमुद्वहन्ति ? यद्वा जातकर्मादिभिः संस्कृतत्वमात्मनः समीक्ष्य ? ब्राह्मणपितृकतां चात्मनो ब्राह्मणीगर्भसम्भूतिमालम्ब्य ? तत्र प्रथमे पक्षे केवलस्याकाशकुसुमेनेवात्ममण्डनमेतद् भवतामिति दर्शयति—शतश इत्यादि ।

अपि च भवतु नाम सा जातिः, तथापि तत्कृतमाश्रयस्य यदि वैशिष्ट्यमुपलभ्येत तदा स्याद्भवतां गर्वः, यावता किञ्चिदतिशयं पश्यामः इत्यादर्शयति—तदन्येत्यादि । तेभ्यो ब्राह्मणेभ्योऽन्ये तदन्यः = शूद्रादि:, तस्मादतिशयः, तस्यासिद्धिरिति विग्रहः । तथा हि—शूद्रादिभ्यो न प्रज्ञामेधादिभिर्विण्मूत्रमांसशोणितादिभिर्वा विप्राणामतिशयमुपलभामहे, तत् कथमतिशयासिद्धौ सत्यां सा तदाधारत्वाद्विशिष्यते, येन भवता जातिवादावलेपोद्धतेनैवमभिधीयते—'वेदवादिभ्य एव तं प्रपच्छेयुर्यथा मन्वादयः' इति । यदि तु ब्राह्मणजातिसमाश्रयेण भवन्तः प्रकृत्यैव यदि त्वेविलसत्कान्त्यकल्मषादिगुणाधारा प्रक्षीणाशेषदुरिता भवेयुः, तदा भवेद् भवतां वैशिष्ट्यम्, अन्यथा लुब्धककैवर्तचर्मकारादिब्राह्मणस्येव सत्यपि ब्राह्मणजातियोगे कथमिव वैशिष्ट्यं सिद्ध्येत् ॥ ३५७४–३५७६ ॥

[G. 921] द्वितीयेऽपि पक्षे दोषमाह—जातकर्मादय इत्यादि । तद-

आचाराः सांवृतास्ते[1] हि कृत्रिमेष्वपि भाविनः ॥ ३५७७ ॥
अतीतश्च महान् कालो योषितां चातिचापलम् ।
तद् भवत्यपि निश्चेतुं ब्राह्मणत्वं न शक्यते ॥ ३५७८ ॥
अतीन्द्रियपदार्थज्ञो न हि कश्चित् समस्ति वः ।
त्वदन्वयविशुद्धिं च नित्यो वेदोऽपि नोक्तवान् ॥ ३५७९ ॥
अतो मन्वादयोऽप्येषामविज्ञातद्विजातयः ।
नोपदेशं प्रयच्छेयुर्द्विजेभ्यस्तदनिश्चयात् ॥ ३५८० ॥
निर्युक्तिकत्वं वेदार्थे ज्ञापनाशक्तताऽऽत्मनि ।

---

न्ययदिति । कृत्रिमाभिमतब्राह्मणेष्विव । सांवृता इति । नामकरणादिवत् सांव्यवहारिकाः । तृतीयेऽपि पक्षे न युक्तो मदः, न हि ब्राह्मणब्राह्मणीशरीराणां शूद्रादिशरीरतः शुक्रशोणिताद्यशुचिमयत्वेन कश्चिद्विशेषोऽस्तीत्युक्तमेतत् ॥ ३५७७ ॥

अपि च—सन्दिग्धमेव भवतो ब्राह्मणपितृकत्वमित्यतोऽपि न युक्तो मद इत्यादर्शयन्नाह—अतीतश्चेत्यादि । कालान्तरेण कदाचिदब्राह्मणगोत्रकोऽपि सन् भवान् ब्राह्मणः संवृत्तः[2]—इत्यपि सम्भाव्यते । सत्यपि ब्राह्मणपूर्वत्वे भवतो मातृचारित्रदोषेण जारजातत्वमपि सम्भाव्यत एव । तथा हि—प्रायेण योषितो मन्मथातुराश्चपलचेतसः स्वकुलव्रतसीमानमतिपत्यापि वर्तमानाः समुपलभ्यन्ते । न चातीन्द्रियार्थदर्शी भवद्भिः कश्चिन्नरोऽभ्युपेयते, यतो निश्चयः स्यात् । नापि वेदो निवेदयति भवतोऽन्वयशुद्धिम् ॥ ३५७८–३५७९ ॥

किञ्च—न केवलं भवतामात्मन्यपरिनिश्चितब्राह्मण्यानां जातिमदावलेपो न युज्यते, अपि च—मन्वादीनामप्यविदितद्विजातीनां द्विजातिभ्य एवोपदेशो मोहादिति दर्शयति—अत इत्यादि । अविज्ञाताः[3] = अनिश्चिता द्विजातयो येषां ते तथोक्ताः । तदनिश्चयादिति तेषां द्विजातीनामनिश्चयात् ॥ ३५८० ॥

अपि च—मन्वादिभिरसम्यगेवोपदेशनं कृतमिति नैतद् भवतां महत्त्वकारणम्, अपि तु परं[4] जडत्वमेव सूचयतीति दर्शयन्नाह—निर्युक्तिकत्वमित्यादि ।

---

१. संवृता०—जै० ।
२. साबृत—पा०, गा० ।
३. अविदिता—जै० ।
४. पा०, गा० पुस्तकयोर्नास्ति ।

वेदाधीतिजडा विप्रा न परीक्षाक्षमा इति ॥ ३५८१ ॥
कुतश्चिन्निश्चित शङ्के नून मन्वादिभिस्तत ।
विप्रेभ्य एव वेदादे कृत तैरुपदेशनम् ॥ ३५८२ ॥
पुराण मानवो धर्म साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभि ॥ ३५८३ ॥
मन्ये तेनैव वक्तेय जडेभ्यस्तैर्विभीषिका ।
आज्ञासिद्धत्वमन्यत्र वाङ्मात्रात् किनु वा भवेत् ॥ ३५८४ ॥
यै पुन स्वोक्तिषु स्पष्ट युक्तार्थत्व विनिश्चितम् ।
तत् प्रत्यायनसामर्थ्यमात्मनश्च महात्मभि ॥ ३५८५ ॥
कुतीर्थ्यमत्तमातङ्गमदग्लानिविधायिनम् ।
एवमस्याखिलत्रासा सिंहनाद नदन्ति ते ॥ ३५८६ ॥

[G 922] वेदाधीतिजडा इति । वेदाधीत्या कृता जडा वेदाधीतिजडा । वेदाध्ययनेन दूरीकृतवस्तुबोधशक्तय इति यावत् । कुतश्चिदिति हेतो ॥ ३५८१–३५८२ ॥

अत एव वेदादीनामयुक्तिकत्वमवेत्य मन्वादिभिराज्ञासिद्धत्वमात्मवचनेषूक्तमिति[1] दर्शयति—पुराणमित्यादि । पुराण नाम शास्त्रम् । मानवो धर्म इति मनुना विरचित । साङ्गो वेद इति सह व्याकरणादिभि षड्भिरङ्गैर्वर्तत इति साङ्ग । चिकित्सितमिति चिकित्साशास्त्रम् । तेनैवेति कारणेन । निर्युक्तिकत्वमेषा पुराणादीना भवता च वाच्यमवधार्येति यावत् । अत्रैवोपपत्तिमाह[2]—आज्ञासिद्धत्वमन्यत्रेत्यादि ॥ ३५८३–३५८४ ॥

बुद्धास्तु भगवन्तश्चतुर्वैशारद्यसमन्वागततया नैवासिद्धत्वमात्मनवचनेषु समादिशन्ति, अपि तु पर्षदि सिंहनाद सम्यगेव नदन्तीति दर्शयति[2]—यैरित्यादि । कुतीर्थ्या एव मत्तमातङ्गा, तेषां मदग्लानिं विधातु शील यस्य सिंहनादस्य स तथोक्त । एवमिति वक्ष्यमाणम् ॥ ३५८५–३५८६ ॥

1 °सिद्धत्वमुक्त°—जै° । 2–2 पाठोऽयं पा°, या° पुस्तकयोर्नास्ति ।

"तापाच्छेदाच्च निकषात् सुवर्णमिव पण्डितैः ।
परीक्ष्य भिक्षवो ग्राह्यं मद्वचो न तु गौरवात्" ॥ ३५८७ ॥
ये च वाहितपापत्वाद् ब्राह्मणाः पारमार्थिकाः ।
अभ्यस्तामलनैरात्म्यास्ते मुनेरेव शासने ॥ ३५८८ ॥
इहैव श्रमणस्तेन चतुर्धा परिकीर्त्यते ।
शून्याः परप्रवादा हि श्रमणैर्ब्राह्मणैस्तथा ॥ ३५८९ ॥
नरः कोऽप्यस्ति सर्वज्ञ इत्याद्यपि न साधनम् ।
प्रतिज्ञान्यूनतादोषदुष्टमित्युपपादितम् ॥ ३५९० ॥
निःशेषार्थपरिज्ञानसाधने विफलेऽपि हि ।
सुधियः सौगता यत्नं कुर्वन्तीत्यादिना पुरा ॥ ३५९१ ॥

---

कः पुनरसौ सिंहनादः ? इत्याह—तापादित्यादि ॥ ३५८७ ॥

अपि च—भगवद्भिरेव परमार्थब्राह्मणेभ्यः कृतमुपदेशनम्, न मन्वादिभिरित्येतदाह—ये चेत्यादि । [G 923] "वाहितपापधर्मत्वाद् ब्राह्मणाः" इति निरुक्तिः । ते चेहैव नैरात्म्याभ्यासोपदेशान्मुनेर्भगवतः शासने मुक्ताः, नान्यत्र; पापक्षयोपायविकलत्वात् । अतएव भगवतोक्तम्—"इहैव श्रमणः, इहैव ब्राह्मणः, शून्याः परप्रवादाः श्रमणैर्ब्राह्मणैः" ( ) इति । तत्र चत्वारः श्रमणाः फलस्थाः स्रोतआपन्नादयः[1] । ब्राह्मणा अपि तत्प्रतिपन्नकाश्चत्वार एव ॥ ३५८८–३५८९ ॥

"नरः कोऽप्यस्ति" (तत्त्व० ३२२९) इत्यादावाह—नर, इत्यादि ॥ ३५९० ॥

केन प्रन्थेनोपपादितम् ? इत्याह—निःशेषार्थेत्यादि । किञ्च—नास्माभिः सर्वज्ञोक्तत्वमवगम्य तदनुष्ठानाय सर्वज्ञः प्रसाध्यते, किं तर्हि ? ये सार्वज्ञपदप्राप्तीच्छवस्तदर्थं दोषक्षयो गुणोत्कर्षाय प्रसाध्यते; यतो वस्तुबलप्रवृत्तानुमानत एव सौगताः पुरुषार्थेषु घटन्ते, न प्रवादमात्रेण । प्रमेयत्वादीनां च यथा साधनत्वं भवति तथा प्रतिपादितमेव ।

---

1. स्रोत आपन्नादयः—पा० ।

एकदेशज्ञगीतं तु न स्यात् सर्वज्ञभाषितम् ।
इत्यत्रापि पुरा प्रोक्तं सर्वज्ञानान्वयादिति ॥ ३५९२ ॥
यथैवेष्टादिकानर्थाननुभूयाल्पदर्शनः ।
चेतस्यारोप्य तान् पश्चात् प्रवक्त्यनुभवाश्रयात् ॥ ३५९३ ॥
न च तद्वचनं तस्य तद्वस्तुज्ञानजन्म न ।
एवं सर्वज्ञवाक्यं स्याद्धेतुभेदात् तु भिद्यते ॥ ३५९४ ॥
समस्तवस्तुविज्ञानमस्य कारणतां गतम् ।
किञ्चिन्मात्रार्थविज्ञानं निमित्तं तस्य तु स्थितम् ॥ ३५९५ ॥
विकल्पासम्भवे तस्य विवक्षा ननु कीदृशी ।
प्रहीणावरणत्वाद्धि[1] विकल्पो नास्य वर्त्तते ? ॥ ३५९६ ॥

---

यथोक्तम्—"दशभूमिगत" (तत्त्व० ३२३७) इति, तदपि सिद्धान्तानभिज्ञेन भवतोक्तम् । न हि दशभूमिगतो भगवानिष्यते, किं तर्हि ? बोधिसत्त्वावस्थाऽसौ[2] यावद्दशमभूमी, तत ऊर्ध्वं बुद्धभूमिरिष्यते ॥ ३५९१ ॥

यच्चोक्तम्—"एकदेशज्ञगीतं तु न स्यात् सर्वज्ञभाषितम्" (तत्त्व० ३२३९) इति, तदपि प्रतिविहितमेवेति दर्शयन्नाह—एकदेशेत्यादि ॥ ३५९२ ॥

एतदेव पुनरपि प्रतिपादयन्नाह—यथैवेत्यादि । [G 921] अल्पदर्शन इति अर्वाग्दर्शनः, असर्वज्ञ इति यावत् । तद्वस्तुज्ञानजन्मेति । तस्येष्टादेर्वस्तुनो ज्ञानमनुभवः, तद्वस्तुज्ञानं ततो जन्मोत्पत्तिर्यस्य वचनस्य तत् तथोक्तम् । न नेति द्विप्रतिषेधेन तद्वस्तुज्ञानजन्मैव भवतीति दर्शयति । एवमिति । तदपि तद्वस्तुज्ञानजन्मतया समानम् । यद्येवम्, को विशेषोऽल्पदर्शनवचनाद् बुद्धवचनस्य ? इत्याह—हेतुभेदात्तु भिद्यत इति ॥ ३५९३-३५९४ ॥

एतदेव स्पष्टयति—समस्तेत्यादि । अस्येति बुद्धवचनस्य । तस्येति एकदेशज्ञवचनस्य ॥ ३५९५ ॥

विकल्पेत्यादिना परश्चोदयति । न ह्यसम्भवद्विकल्पस्य विवक्षा सम्भवति,

---

१ प्रहीणावरणत्वात्—गा० । २ बोधिसत्त्वावस्था—पा०, गा० ।

नैवम्; क्लिष्टो हि सङ्कल्पस्तस्य नास्त्यावृतिक्षयात् ।
जगद्धितानुकूलस्तु कुशलः केन वार्यते ! ॥ ३५९७ ॥
न च तस्य विकल्पस्य सोऽर्थवत्तामवस्यति ।
तं हि वेत्ति निरालम्बं मायाकारसमो ह्यसौ ॥ ३५९८ ॥
मायाकारो यथा कश्चिन्निश्चिताश्वादिगोचरम् ।
चेतो निर्विषयं वेत्ति तेन भ्रान्तो न जायते ॥ ३५९९ ॥
इत्यादि कीर्त्यमानं तु श्रद्दधानेषु शोभते ।
प्रकृतार्थानुरूपेण प्रोक्तं नैतद् द्विजातिना ॥ ३६०० ॥

---

तस्या विकल्पविशेषत्वात् । अतोऽसौ विकल्पत्वेन व्याप्ता सती तद्भावे[1] कथमवस्थां लभेत ! न हि वृक्षाभावे शिंशपायाः सम्भवोऽस्ति । न च सर्वज्ञस्य विकल्पसम्भवः; तस्य प्रहीणाशेषक्लेशविशेषाद्यावरणत्वात्, विकल्पस्य[2] च प्रकृत्या भ्रान्तत्वात् । तत्समुदाचारे भ्रान्त्या प्राप्नोति सर्वविदिति ॥ ३५९६ ॥

नैवमित्यादिना प्रतिविधत्ते । द्विविधो हि विकल्प —संक्लेशाद्यनुकूलतया क्लिष्टः, अलोभादिसम्प्रयोगसमुत्थानतया कुशल. । तत्र य. क्लिष्ट', स प्रहीणक्लेशाद्यावरणानां नास्त्येव; कारणाभावात् । यस्तु कुशल., स प्रहीणावरणस्याप्यविरोधीति तेन भगवतां कृपाभ्यासप्रवर्तितो जगद्धितोदयानुकूलतया कुशलो विकल्पः सम्मुखीभवन् केन वार्यते ॥ ३५९७ ॥

स्यादेतत्—सर्वस्यैव विकल्पस्य प्रकृत्या स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेर्भ्रान्तत्वात् [ G 925 ] प्रहीणज्ञेयावरणस्य तत्समुदाचारो विरुद्ध एव !—इत्याशङ्क्याह—न च तस्येत्यादि । यदि हि तस्य विकल्पस्याविषयस्य विषयवत्तां गृह्णीयात्, तदा भ्रान्तो भवेत्; यावता मायाकारवदसौ तज्ज्ञानविषयं तथैवागच्छतीति कथं भ्रान्तो भवेत् ! ॥ ३५९८–३५९९ ॥

यदुक्तम्—"इत्यादि कीर्त्यमान तु श्रद्धानेषु शोभते" (तत्त्व० ३२४२) इति, तत्राह—इत्यादीति ॥ ३६०० ॥

---

१. तद्भावे—पा॰ । २. कल्पस्य—पा॰ ।

तथाऽव्यामूढश्च सर्वार्थः शक्तो नैवोपदेशने ।
इत्येतत् प्रकृतं ह्यत्र तत्र चाहुर्महाधियः ॥ ३६०१ ॥
तस्योपदेशने शक्तिर्न स्याच्चेत् किं तदा भवेत् ।
ततो भवद्भिर्वक्तव्यम्—आगमो न भवेदिति ॥ ३६०२ ॥
तत्राप्याहुर्भवत्येवं किं दृष्टोऽसौ त्वया ब्रुवन् ।
प्रसङ्गसाधनेनेदमनिष्टं चोद्यते यदि ॥ ३६०३ ॥
न चेद् वक्तृत्वमिष्येत नागमोपगमो भवेत् ।
तत्प्रणेतागमेष्टौ तु तस्य वक्तृत्वमिष्यताम् ॥ ३६०४ ॥
यद्येवमीदृशो न्यायः प्रसिद्धो न्यायवादिनाम् ।
प्रसङ्गसाधने धर्मः श्रद्धामात्रात् परैर्मतः ॥ ३६०५ ॥

---

कथम्, किं तत्प्रकृतम् ? यदनुरूपमेतच्च भवति ? इत्याह—तथाऽव्यामूढश्चेत्यादि । एतच्च प्रसङ्गसाधनं मयोक्तं न स्वातन्त्र्येणेत्येवं स्ववाचैव परोऽभिधास्यतीति मन्यमानः प्रसङ्गसाधनत्वमेव तावदस्य प्रकृतस्य समर्थयितुमाह—तत्र चाहुरित्यादि । यदेतद् भवतोक्तम्—सर्वार्थव्यामूढस्योपदेशने शक्तिर्न प्राप्नोतीति, अत्र तावद् भवान् प्रष्टव्यः—'मा भूदुपदेशने तस्य शक्तिः, कोऽत्र दोष आपद्यते ?' इति । एवं पृष्टस्य परस्योत्तरं स्वयमेवाविष्करोति—तत इत्यादि । तत्राप्यभिधीयते[1]—'भवत्येवागमाभावः, कोऽत्र विरोधः, न हि भवताऽसौ ब्रुवाणः समुपलब्धः, येन दृष्ट इति विरोधः स्याद्'—इत्येवं [ G 926 ] पृष्टेन त्वया सामर्थ्यादिदमभिधानीयम्—न मया स्वयमागमस्य तत्प्रणीतत्वमुपलभ्य तस्य वक्तृत्वं प्रसाध्यते, किं तर्हि ? भवद्भिरेवागमस्य तत्प्रणीतत्वमिष्टम्, तच्च भवतां नोपपद्यते, यदि तस्य वक्तृत्वं नेष्येत । तस्मादवश्यमागमस्य तत्प्रणीतत्वमिच्छद्भिर्वक्तृत्वमपि तस्येष्टव्यम्—इत्येवमनिष्टापादनं प्रसङ्गेन क्रियत इति ॥ ३६०१–३६०४ ॥

एवं प्रसङ्गसाधनत्वं समर्थ्य साम्प्रतं प्रकृतार्थानुरूप्यानभिधानं बोधयितुमाह—यद्येवमित्यादि । य एव हि धर्मः परेणागममात्रादभ्युपेतः, स एव प्रसङ्गसाधने-

---

१. तत्राप्यभि०—पा०, गा० ।

युक्तिप्रसिद्धतायां च स्वतन्त्रं साधनं भवेत् ।
ईदृशश्च परेणेष्टस्तत्प्रणीतः स आगमः ॥ ३६०६ ॥
सम्भारावेधतस्तस्य पुंसश्चिन्तामणेरिव ।
निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥ ३६०७ ॥
आधिपत्यप्रपत्त्याऽतः प्रणेता सोऽभिधीयते ।
विकल्पानुगतं तस्य न वक्तृत्वं प्रसज्यते ॥ ३६०८ ॥
वयमश्रद्दधानास्तु ये युक्तीः प्रार्थयामहे ।
इतीदं गदितं तस्माद् प्रसङ्गार्थमजानता ॥ ३६०९ ॥
कुड्यादिनिःसृतानां च कस्मान्नाप्तोपदिष्टता ।
तदाधिपत्यभावेन यदा तासां प्रवर्त्तनम् ॥ ३६१० ॥
सम्भिन्नालापहिंसादिकुत्सितार्थविवर्जिताः ।
क्रीडाशीलपिशाचादिप्रणीताः स्युः कथं च ताः ॥ ३६११ ॥

ऽभिधीयत इति न्यायः । तत्र यदि परेण वक्तृत्वानुगमेन तत्प्रणीतत्वमागमस्येष्टं स्यात्, तदा भवेद् वक्तृत्वाभावादागमस्यातत्प्रणीतत्वप्रसङ्गः, यावताऽऽधिपत्यमात्रेणासौ तस्यागमस्य प्रणेताऽभ्युपगतः, न वक्तृत्वोपगमात् । अतो यत्तत्प्रणीतागमोपगमेन वक्तृत्वापादनम्, तत्प्रसङ्गार्थानभिज्ञेन भवताऽभ्यधायि ॥ ३६०५–९ ॥

यच्चेदमुक्तम्—"कुड्यादिनिःसृतानाम्" ( तत्त्व० ३२४३ ) इत्यादि, तत्राह—कुड्यादीत्यादि । यदि हि तदाधिपत्येन तासां देशनानां न स्यात् प्रवृत्तिः, तदाऽऽप्तोपदिष्टता न भवेत् । [ G 827 ] यदा तु तदाधिपत्येन ताः प्रवर्त्तन्त इत्युपगतम्, तदा किमिति तदुपदिष्टत्वमासां न भवेत् ॥ ३६१० ॥

यच्चोक्तम्—"विश्वासश्च न तासु स्यात्" ( तत्त्व० ३२४३ ) इति, तत्राह—सम्भिन्नेत्यादि । यदि हि नृत्यगीतहिंसागम्यगमनादेः तत्कर्तव्यतया तत्रोपदेशः स्यात्, तदा क्रीडाद्यभिरतपिशाचादिकार्योपलम्भात् तासां तत्प्रणीतत्वं, सम्भावनापथमवतरेत्, यावता प्रमाणाविरुद्धमपरस्परपराहतमार्यजनोचितम्—करुणादिगुणेषु नियोजयितृ स्वर्गापवर्गफलवाहकमेतद् भगवतो वचनमित्युपपादितमेतत् । तदीदृशं कथं क्रीडनशीलस्य पिशाचादेः सम्भाव्यते । यदि भग-

सम्भिन्नालापहिंसादिकुत्सितार्थोपदेशनम् ।
क्रीडाशीलपिशाचादिकार्यं तासु न विद्यते ॥ ३६१२ ॥
प्रमाणद्वयसंवादि मतं तद्विषयेऽखिले ।
यस्य बाधा प्रमाणाभ्यामणीयस्यपि नेक्ष्यते ॥ ३६१३ ॥
यच्चात्यन्तपरोक्षेऽपि पूर्वापरविबाधितम् ।
करुणाविगुणोत्पत्तौ सर्वपुंसां प्रयोजकम् ॥ ३६१४ ॥
सर्वाकारवरोपेतं सद्वृत्तप्रतिपादकम् ।
इहामुत्र च भव्यानां विविधाभ्युदयावहम् ॥ ३६१५ ॥
सर्वानुशयसन्दोहप्रतिपक्षाभिधायकम् ।
निर्वाणनगरद्वारकपाटपुटभेदि च ॥ ३६१६ ॥
तच्चेत् क्रीडनशीलानां रक्षसां वा वचो भवेत् ।
त एव सन्तु सम्बुद्धाः सर्वतल्लक्षणस्थिते ॥ ३६१७ ॥
न हि नामान्तरक्लृप्तौ वस्तुरूपं निवर्तते ।
विशिष्टेऽशिष्टसंज्ञां तु कुर्वन् निन्द्यः सतां भवेत् ॥ ३६१८ ॥

भूतवचनप्रणेतॄणामपि[1] भवता पिशाच इति नाम क्रियते, कामं क्रियताम्, न हि नामकरणे वस्तुस्वभावहानिः । किन्तु भवानेव विशिष्टे भगवत्यशिष्टव्यवहारं कुर्वन् सतां निन्द्यतामापद्येतेति समासार्थः ।

अवयवार्थस्तूच्यते[2] सम्भिन्नालापः = गीताद्युपदेशः । हिंसा = प्राणिवधः । कुत्सितार्थः = काममिथ्याचारादिः । [G 928] प्रमाणद्वयसंवादीति । प्रमाणद्वयम् = प्रत्यक्षानुमाने, ताभ्यां संवादः = तदविरुद्धार्थता, सोऽस्यास्तीति तथोक्तम् । मतमिति निश्चितम् । तद्विषयेऽखिल इति प्रमाणद्वयविषये । प्रमाणद्वयसंवादीति सम्बन्धः । सद्वृत्तम् = आदिमध्यान्तेकल्याणं ब्रह्मचर्यम् । सर्वानुशयसन्दोहः = रागादिक्लेशौघः[3] । तल्लक्षणस्थितेरिति सम्बुद्धलक्षणस्थिते ॥ ३६११–३६१८ ॥

1 ॰तॄणामपि—पा॰ गा॰ ।
2 ॰तूच्येते—गा॰ ।
3 ॰क्लेशौघात्—जै॰ ।

कामिमिथ्यासमाचारप्राणिहिंसादिलक्षणाः ।
असभ्यास्तु क्रिया येन वचसा सम्प्रकाशिताः ॥ ३६१९ ॥
तद् भुजङ्गपिशाचादिप्रणीतमिति शङ्क्यते ।
तच्चेष्टाभिरताना हि तादृक् सम्भाव्यते वचः ॥ ३६२० ॥

सामट यज्ञटमतखण्डनम्

युगपच्छुच्यशुच्यादिस्वभावाना विरोधिनाम् ।
ज्ञानमेकधिया दृष्टं न विरुद्धा धिया हि ते ॥ ३६२१ ॥
अन्योऽन्यपरिहारेण स्थितलक्षणतोऽथ वा ।
एकस्मिन्न सहस्थान विरोधस्तेषु सम्भवेत् ॥ ३६२२ ॥
एकज्ञानावभासित्वे न तु तेषा विरोधिता ।

---

यथोक्तम्—

"अभिज्ञातमभिज्ञेय भावनीय च भावितम् ।
प्रहातव्य च प्रहीण च तेन बुद्धो निरुच्यते[1] ॥" (    ) इति ॥

वेदस्यैव क्रीडाशीलपिशाचादिप्रणीतत्व युक्त सम्भावयितुम्, येन गोसवादिष्वगम्यगमनादयोऽसमाचारा सम्प्रकाशिता इत्येतद्दर्शयन्नाह—कामेत्यादि । भुजङ्ग = धूर्त ॥ ३६१९–३६२० ॥

यदुक्तम्—"युगपच्छुच्यशुच्यादि" (तत्त्व० ३२४८) इत्यादि, तत्राह—युगपदित्यादि । यद्यपि भावा केचित् परस्पर विरोधिन, तथापि ते धिया = ज्ञानेन सहाविरुद्धा एव, युगपदेकेनापि ज्ञानेन विरुद्धानेकार्थग्रहणोपलम्भात् ॥ ३६२१ ॥

एतदेव स्पष्टयन्नाह—अन्योऽन्यपरिहारेणेत्यादि । द्विविध एव हि भावाना विरोध —परस्परपरिहारस्थितलक्षणता, सहानवस्थानता च । तत्र ये परस्परपरिहारेण स्थितलक्षणा, तेषामैक्य विरुद्धम् । ये तु [ G 929 ] सहानवस्थायिन, तेषामेकदेशावस्थान विरुद्धम् । न चैकविज्ञानभासनादेषामैक्यम्, एकदेशत्व वा प्रसज्येत । तेन नैकविज्ञानभासित्वेनैषा विरोध । इष्ट च

---

1. निरुध्यते—पा० ।

शुच्यशुच्यहिशिख्यादेश्चक्षुषा सकृदीक्षणात् ॥ ३६२३ ॥
सुखदुःखादिभेदे तु यत् सकृन्नास्ति वेदनम् ।
हेत्वभावादसांनिध्यात् तज्ज्ञेयं न विरुध्यते ॥ ३६२४ ॥
नीलपीतावदातादिरूपभेदाविरोधिनः ।
देशप्रकृतिभेदेन[1] वीक्ष्यन्ते युगपद् यतः ॥ ३६२५ ॥
एकज्ञानक्षणव्याप्तनिःशेषज्ञेयमण्डलः ।
प्रसाधितो हि सर्वज्ञः क्रमो नाश्रीयते ततः ॥ ३६२६ ॥

---

विरुद्धानामपि सतामेकज्ञानभासनम्, यथा शुच्यशुचिनोश्चक्षुर्ज्ञानेन परस्परपरिहारस्थितलक्षणयोरहेर्मयूरस्य च सहानवस्थायिनोर्युगपद् ग्रहणम्। आदिशब्देन छायातपादीनां ग्रहणम्। यदि तर्हि विरुद्धानामप्येकज्ञानावभासनमविरुद्धम्॥ ३६२२–३६२३ ॥

एवं सति सुखदुःखयो रागद्वेषयोरेकज्ञानभासनं प्राप्नोति? इत्याशङ्क्याह— सुखेत्यादि। तज्ज्ञेयमिति। यत्सुखादीनां सकृद्वेदनम्, तत् कारणाभावेनानुत्पत्तेरसन्निहितत्वात् सुखादीनां[2] विरुद्धत्वादित्येवं ज्ञेयम्, बोद्धव्यमित्यर्थः। एतदुक्तं भवति— कारणवैकल्यादसांनिध्यं तत्र कारणम्, न परस्परविरोध इति ॥३६२४॥

येषां च वास्तवो विरोधः, न तु शुच्यशुच्यादिवत् कल्पनाकृतः, तेषामप्येकज्ञाने भासनमस्तीति दर्शयति— नीलपीतेत्यादि[3]। देशप्रकृतिभेदेन विरोधिन इति सम्बन्धः। तत्र देशभेदः— तदतद्देशत्वम्। प्रकृतिभेदः— नीलपीतादिस्वभावत्वम्, यद्वा नीलाद्युपादानकारणत्वम् ॥ ३६२५ ॥

यच्चोक्तम्— "भूतं भवद्भविष्यच्च" (तत्त्व० ३२४९) इत्यादि, तत्राह— एकज्ञानेत्यादि।

अत्र केचित् स्वयूथ्या एव विज्ञानवादिमतमुपोद्बलयन्तश्चोदयन्ति— "यदि युगपदेकज्ञानक्षणेन अविशेषं[4] ज्ञेयमण्डलं व्याप्यते[5], तदा यावतामि-

---

1. ०भेदेऽपि—जै०, पा०।
2. तत्—पा०, न तु—पा०।
3. नीलपीतादि—जै०।
4. विशेष—जै०, पा०।
5. व्याप्यावे—पा०।

कौमारिलमतेनानैकान्तिकत्वोद्भावनम्

यथा कल्मापवर्णस्य यथेष्टं रूपनिग्रहः ।
चित्रत्वाद् वस्तुनोऽप्येवं भेदाभेदावधारणे ॥ १७४४ ॥
यदा तु शबलं वस्तु युगपत् प्रतिपद्यते ।
तदाऽन्यानन्यभेदादि सर्वमेव प्रलीयते ॥ १७४५ ॥
वस्तुनोऽनेकरूपस्य रूपमिष्टं विवक्षया ।
युगपत्क्रमवृत्तिभ्या नान्योऽस्ति वचसा विधिः ॥ १७४६ ॥

---

यथेत्यादिना कौमारिलमतेन पुनरप्यनैकान्तिकत्वमुद्भावयति । [G. 494] कल्मापवर्णे = शबले वर्णे । तस्य यथा नीलमिति वा, पीतमिति वा, लोहितमिति वा—इत्यादिना यथेष्ट रूपनिग्रहः[2] = रूपावधारणम्, तथा चित्रस्य = अनेकरूपस्य वस्तुनः स्वपररूपाभ्याम् = सदसदात्मना सामान्यविशेषरूपाभ्यां द्व्यात्मन इच्छावशाद् भेदाभेदावधारणा[3] । यदा [4]भेदमवधारयितुमिच्छति तदा तमवधारयति, यदा[5] त्वभेदं सामान्यमवधारयितुमिच्छति तदा तमवधारयति[5] । यदा तु युगपत्सामान्यविशेषात्मकं वस्तु [6]शबलमिति प्रतिपद्यते, तदाऽन्यानन्यभेदादि चोद्यं प्रलीयते, नावतरतीत्यर्थः, प्रत्यक्षेण शबलस्य वस्तुनः प्रतीयमानत्वात् ।

तत्रेदमन्यानन्यादिचोद्यम्—भिन्नेभ्योऽश्वादिपिण्डेभ्योऽनन्यत्वात् सामान्यस्यापि पिण्डवत् स्वरूपभेदप्रसङ्गः, सामान्याच्चाप्यभिन्नत्वादभेदो भेदानां सामान्यस्येव प्रसज्यते । तथा भेदाभेदौ परस्परं सामान्यविशेषयोः कथं विरुद्धौ स्याताम् । आदिशब्देन 'एकत्वानेकत्वे परस्परविरुद्धे', तथा 'तदेव सामान्यं स एव विशेष'—इत्येवमादि गृहीतव्यम् ॥ १७४४–१७४५ ॥

यदीदम्, सर्वत्रैव शबलस्य प्रतीतिः स्यात्कुतः क्रमयौगपद्याभ्याम् ? इत्याशङ्क्याह—वस्तुन इत्यादि । युगपत् क्रमेण वा वस्तुनः सामान्यविशेषादिरूपं व्यवस्थाप्यते, तद्विवक्षावशात् । यदा यौगपद्येन सदसद्रूपे विवक्षति सामान्यविशेषरूपं वा,

---

१. यथेनिग्रह इति त्रिषु पुस्तकेषु पाठः । २. वर्णनिग्रह—पा०, गा० ।
३. ०रणा—पा०, गा० । ४. विशेषमित्यर्थः ।
५-५. पा०, गा० पुस्तकयोर्नास्ति । ६. शुचिमिति—पा० ।

तत्प्रतिविधानम्

नैवम्; चित्रत्वमेकत्वं प्रतिपिद्धं ह्यनन्तरम् ।
अनेकरूपं वैचित्र्यमेकत्वेनासहस्थितम् ॥ १७४७ ॥
ते हि यावन्त आकारास्तस्मिन् वस्तुनि भाविकाः ।
तावन्त्येवोपजातानि[1] वस्तुनीत्येकतास्ति[2] न[2] ॥ १७४८ ॥
एकस्माद् वस्तुनोऽन्यत्वे तादात्म्यविकलं भवेत् ।
नाकाशपुष्पसङ्काशं तद्वचप्यर्थक्रियाक्षमम् ॥ १७४९ ॥

---

तदा तस्य रूपं व्यवस्थाप्यते । अथ क्रमेण विवक्षति सद्रूपमसद्रूपं सामान्य-विशेषं वा, तदास्य तद्व्यवस्थाप्यते । सर्वमेव हि तस्य स्वरूपं स्वेच्छया[3] क्रमाक्रमाभ्यां व्यपदिश्यते, विचित्ररत्नकोश इव मरकतपद्मरागादिरिति । अथ क्रमाक्रमौ मुक्त्वाऽन्येन प्रकारेण कस्मान्न निर्दिश्यते ? इत्याह—**नान्योऽस्ति वचसां विधिरिति** । युगपत्क्रमवृत्तिभ्यामित्यपेक्षणीयम् । विधिः = प्रकारः ॥ १७४६ ॥

**नैवमि**त्यादिना प्रतिविधत्ते । [G 495] 'एकं चित्रम्' इति परस्परविरुद्ध-मेतदिति 'यच्चित्रं न तदेकम्' ( तत्त्व० १७२७ ) इत्यादिना प्रतिपादितम् । यतो विचित्रमित्यनेकत्वमुच्यते । एकत्वानेकत्वयोश्च परस्परपरिहारस्थितिलक्षणो विरोधः । तस्मान्नैकस्मिन् भाविका[4] बहव आकारा सम्भवन्ति ।

अथापि स्युः, तथाप्येकस्यानेकत्वं न प्रतिपादितमेव । तथा हि—तावन्त्येवापराणि वस्तूनि जातानीति, यदि परं भाविकत्वेन प्रतिपादितं स्यात् । न त्वेकस्यानेकत्वम्; परस्परविरोधात् ॥ १७४७–१७४८ ॥

यदुक्तम्—"वस्तुनो हि निवृत्तस्य काऽन्या सम्भाविनी गतिः" ( तत्त्व० १७११ ) इत्याह—**एकस्मादि**त्यादि । यदि हि वस्तुमात्राद् व्यावृत्तिर्हेतुत्वेन क्रियते खपुष्पाविशेषत्वे साध्ये तदा हेतुरसिद्धः । न हि घटस्य वस्तुमात्राद् व्यावृत्तिः सिद्धा, किं तर्हि ? स्वस्वभावं मुक्त्वाऽन्यस्माद् वस्तुविशेषात् । अथ वस्तु-

---

1. °था जातानि—पा०, °वाथ जातानि—गा० ।
2-2. °तास्तिता—पा०, तास्थिता—गा० ।
3. पा०, गा० पुस्तकयोर्नास्ति ।
4. पारमार्थिका इत्यर्थः ।

परोद्भावितवस्तुत्वानुपपत्तिपरिहारः

शक्तं रूपं न चैकस्य वस्तुष्वन्येषु वर्त्तते ।
कार्योपलम्भनिर्भासभेदादेरिति वर्णितम् ॥ १७५० ॥
अतद्रूपस्वात्मकत्वं तु तदश्लेषेण युज्यते ।
नाविशेषमवस्तुत्वं वस्तुलक्षणभावतः ॥ १७५१ ॥
तदप्यर्थक्रियायोग्यमिति वस्त्विति कल्पते ।
असमर्थपरावृत्तिः सादृश्यं तद्विकल्पितम् ॥ १७५२ ॥
ततश्चात्यन्तभेदेऽपि तुल्यताऽस्ति विकल्पिता ।
भावो भावान्तरैस्तुल्यः खपुष्पात् तद्विशिष्यते ॥ १७५३ ॥

---

विशेषाद् व्यावृत्तिर्हेतुत्वेनोपादीयते, तदाऽनैकान्तिको हेतुः । तथा हि—एकस्माद् घटादेर्वस्तुनो व्यावृत्तं पटादिकं वस्तु यदि[1] परं तदात्मकविकलं सिद्ध्येत्, न तु सर्वथा निःस्वभावम्; तस्याप्यर्थक्रियाकारित्वात् ॥ १७४९ ॥

शक्तमित्यादिनैतदेवानैकान्तिकत्वं समर्थयते । यदि अर्थक्रियासामर्थ्यलक्षणं वस्तुत्वं नामानुयायि स्यात्, ततो व्यावृत्तस्य निःस्वभावता स्यादर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः; यावता शक्तं रूपं चैकस्य नीलादेस्त्वन्येषु सितादिषु न वर्त्तत इति पूर्वमुक्तम्—"नीलादेर्न च वस्तुत्वमनुगामि यदीष्यते" ( तत्त्व० १७३९) इत्यादिना । कस्मात्? कार्यभेदात्, उपलम्भनिर्भासभेदाच्च । उपलम्भः = ज्ञानम्, तस्य निर्भासः = आकारः । आदिशब्देनोत्पादस्थितिनिरोधाद्या[2] गृह्यन्ते । तस्मादश्लेषेण [G 496] हेतुनाऽतद्रूपस्वात्मकत्वमित्येव साधयितुं युज्यते, नाविशेषम् = निर्विशेषणम्, अवस्तु न साधयितुं युक्तम् । कुतः? तत्राप्यर्थक्रियाकारित्वस्य वस्तुलक्षणस्य भावात् ॥ १७५०–१७५१ ॥

ननु चात्यन्तभेदे सति कथमनुगामी 'वस्तु वस्तु' इति प्रत्ययो भवेत्? कथं च खपुष्पादेर्भेदो वस्तुनः सिद्ध्यति, यदि सादृश्यं न भवेत्? इत्याह—तदपीत्यादि । असमर्थपरावृत्तिरिति । असमर्थाः = खपुष्पादयः, तेभ्यः

१. पा०, गा० पुस्तकयोर्नास्ति । २. ०निरोधाद्यो—पा०, गा० ।

सुमतेश्चोद्यम्

ननु . येनात्मना वस्तु समानापरवस्तुनः ।
व्यावृत्तं तत्सजातीयैस्तेनैव सदृशं यदि ॥ १७५४ ॥
विज्ञायेत विजातीयैरपि तुल्यतया तदा ।
तस्यात्मनोऽविशिष्टत्वान्न च तज्ज्ञायते तथा ॥ १७५५ ॥
सजातीयासमानोऽपि तस्माद् येन भवत्ययम् ।
आत्मना तत्समानश्च तयोर्भेदः स्वभावयोः ॥ १७५६ ॥

तत्प्रतिविधानम्

तेनैवासौ स्वभावेन समान इति गम्यते ।
एकप्रत्यवमर्शस्य हेतुत्वेनान्यभेदतः ॥ १७५७ ॥

---

परावृत्तिः = अतदात्मता । यतश्च सादृश्यं कल्पितमस्ति, तस्माद्यदुक्तम्—"भावो भावान्तरातुल्यः" (तत्त्व० १७०९) इति, तदसिद्धम् ॥ १७५२–१७५३ ॥

नन्वित्यादिना सुमतेश्चोद्यमाशङ्कते । स आह—येनात्मना सजातीयविजातीयाभ्यां व्यावृत्तं वस्तु तेनैवात्मना तद्वस्तु यदि सजातीयैः सदृशं भवेत्, तदा विजातीयैरपि तुल्यतया विज्ञायेत; तस्यात्मनोऽविशिष्टत्वात् । न च ज्ञायते, तस्माद्येन स्वभावेन सजातीयासमानोऽपि भवति, येन च स्वभावेन तत्सदृशो भवति, तयोः स्वभावयोर्भेदोऽभिवाञ्छितव्यः । ननु स यदि सजातीयः, कथं तेनासमानो भवति; अथ तेनासमानो भवति कथं सजातीयः—इति परस्परव्याहतमेतत् ! नैष दोषः; यतः परेण सर्वमेव वस्तु सामान्यविशेषात्मकमिष्टम्, तस्माद् वस्तुत्वादिना सामान्येन सर्वमेव सजातीयमित्युच्यते, विशेषरूपेण तदेव विजातीयमिष्टमिति, तदपेक्षया पुनरसमान इत्यभिधीयत इत्यदोषः । समानापरवस्तुन [ G 497 ] इति । समानं च तदपरं चेति समानापरवस्तु । अपरमिति समानम् । शेषं सुगमत्वान्न विभक्तम् ॥ १७५४–१७५६ ॥

तेनैवेत्यादिना प्रतिविधत्ते । तेनैव स्वभावेन समान इत्युच्यते; एकप्रत्यवमर्शप्रत्ययकारणत्वात् । एतदुक्तं भवति—ये ह्येकप्रत्यवमर्शं प्रति कारणभावं

अन्यथा निर्विशिष्टत्वाद् भेदेन श्रवणाद्यपि ।
जनकं तस्य किं नेष्टं चक्षू रूपादिभेदवत् ॥ १७६२ ॥

तत्प्रतिविधानम्

व्यावृत्तिश्चक्षुरादीनां न सिद्धा जनकादियम् ।
अविशेषेण यत् तेषामात्मभापि[1] जनको मतः ॥ १७६३ ॥
स्वभावान्न च भावानां व्यावृत्तिरुपपद्यते ।
स्वभावाद्धि परावृत्तौ नैःस्वाभाव्यं प्रसज्यते ॥ १७६४ ॥
अन्यस्माज्जनकात् तेषां व्यावृत्तिरुपवर्ण्यते ।
अतज्जनकरूपत्वं वाच्यं तच्चेष्टमेव नः ॥ १७६५ ॥

देर्व्यावृत्तं चक्षुरिति व्यापकविरुद्धोपलब्धिप्रसङ्गः। न चैवं भवति, तस्माद्विपर्ययः। यो हि यज्जनकः स तज्जनकस्वभावापरावृत्तः, यथा नीलज्ञानजनकं नीलं स्वस्मात् स्वभावात्। नीलज्ञानजनकं च चक्षुरिति स्वभावहेतुः। एवं नीलादयोऽपि पक्षत्वेन वाच्याः। तस्माद् 'अस्ति भावानामन्वय' इति प्रसङ्गविपर्ययेण दृष्टान्तासिद्धिमाह ॥ १७५९–१७६१ ॥

अथापि स्यात्—ततो व्यावृत्तं च भविष्यति तज्जनकं च—इत्यनैकान्तिकं प्रसङ्गसाधनम्? इत्याह—अन्यथेत्यादि। श्रोत्रादीनामपि नीलादिज्ञानजनकत्वप्रसङ्गो विपर्यये बाधकं प्रमाणम्; भेदेनाविशिष्टत्वात् = नीलादिभ्यो यो भेदश्चक्षुषस्तेन भेदेन श्रोत्रादीनां चक्षुरादिना तुल्यत्वात्। यथा चक्षुर्नीलादेर्व्यावृत्तं तथा श्रोत्रमपीति यावत् ॥ १७६२ ॥

व्यावृत्तिरित्यादिना प्रतिविधत्ते। [ G. 499 ] अविशेषेण तज्जनकस्वभावात् परावृत्तिमात्रं यदि हेतुत्वेन वर्ण्यते तदा न सिद्धो हेतुः। न हि चक्षुरादीनां नीलविज्ञानजनकात् स्वभावादविशेषेण व्यावृत्तिः सिद्धा; यतस्तेषामपि चक्षुरादीनां यः स्वभावः सोऽपि जनक इष्टः। को ह्यत्र नियमः—तेनैव तत्कार्यं कर्त्तव्यम्, नान्येनेति। अन्योऽपि कुर्यात्, सोऽपीति न विरोधं पश्यामः। यदि तु पुनरविशेषेण व्यावृत्तिः स्यात्, तदा स्वस्वभावादपि स्यात्, ततश्च निःस्वभावताप्रसङ्गः स्यात्। तस्मान्न स्वभावाद् भावानां व्यावृत्तिर्युक्ता।

1. ०माभापि—पा० ।

**ननु भेदादसक्तास्तेऽभेदे वा विकला कथम् ॥ १७६८ ॥**
**यथा त्वय विशेषेऽपि ॥ सर्वं सर्वकारणम् ।**
**नानात्वस्याविशेषेऽपि तथैव नियमो भवेत् ॥ १७६९ ॥**
**भेदेऽपि जनक· कश्चित् स्वभावनियमाद् भवेत् ।**
**अन्वये त्वेक एकस्य जनकोऽजनकश्च किम् ॥ १७७० ॥**
**भेदोऽप्यत्रास्ति चेदस्तु स किं तस्यैव वस्तुन ।**
**न हि तस्यान्वयाबन्यो ननु भेदादकारक [1] ॥ १७७१ ॥**

यायिन स्वभावाद्, अन्यत्वादिति यावत्। न चाशक्तस्य वैकल्ये कार्यानुत्पत्तिर्युक्ता, कस्यचिदनुत्पत्तिप्रसङ्गात् । अथापि स्यात्— न ह्यस्माभि सामान्यविशेषाणां परस्परमत्यन्त[2] भेद[2] इष्ट, ततश्च 'भेदात्' इत्यसिद्धो हेतु ? इत्याह—अभेदे वा विकलाः कथमिति । सामान्याद्विशेषाणामभेदेऽङ्गीक्रियमाणे न तर्हि वक्तव्यम्—"विशेषान्तरवैकल्यादेक न जनकम्" ( तत्त्व० १७६८ ) इति । अतस्तस्मिन् सामान्ये तिष्ठत्यविकले सति तदव्यतिरेकिणा विशेषाणामपि वैकल्यासिद्धि । न हि यो यदेकयोगक्षेमो न भवति, स तत्स्वभावो युक्त ।

अपि च—समान एवाय प्रसङ्गो भवतामपि, अन्वयस्याविशिष्टत्वात् किमिति सर्व सर्वं न जनयेत् ? यथा भवतामन्वयस्याविशेषेऽपि सर्वं सर्वस्य जनक न भवति, तथाऽस्माकमपीति यत्किञ्चिदेतत् । किञ्च—भेदाविशेषेऽपि कश्चिज्जनयति नापर इति जनकस्वभावप्रतिनियमादेव भवेत्, एकस्य य स्वभावो नासौ परस्येति कृत्वा, न चैव सति किञ्चिद् विरुध्यते ।

यदा त्वनुगतस्यैकात्मनो जनकत्वम्, तदैकस्यैकस्मिन् कार्ये जनकत्वमजनकत्व चेति कथ विधिप्रतिषेधौ युक्तावेकाधारौ । भिन्नाधिकरणौ तु न विरुद्धावित्यत एकस्येत्याह ।

अथापि स्यात्—नास्माभिरेकान्तेनान्वय एवेष्ट, येनैकस्यैकत्र जनकत्वाजनकत्वविरोध स्यात्, किं तर्हि ? भेदोऽप्यत्रास्ति, तेनाजनकत्व न विरुद्धमिति ?

१ भेदो न कारक —पा०, गा० ।
२-२ ०मत्यन्तभेद—पा०, गा० ।

स एव भाविकोऽर्थो यो नामार्थक्रियाक्षमः ।
स च नान्वेति, योऽन्वेति कार्यं तस्मान्न जायते ॥ १७७२ ॥
यं चात्मानमभिप्रेत्य पुमानेष प्रवर्तते ।
चिन्त्येते[1] तद्गतावेव भेदाभेदावकल्पितौ ॥ १७७३ ॥
अन्यथा ह्यात्मना भेदो व्यावृत्त्या च समानता ।
अस्त्येव वस्तु नान्वेति प्रवृत्त्यादिप्रसङ्गतः ॥ १७७४ ॥

अस्तु भेदः, स किं जनकस्वभावाद् भेदस्तस्यैवानुगतस्य जनकात्मनोऽभीष्टः, आहोस्विदन्यस्येति वक्तव्यम्? न तावत्तस्यैव, न हि स्वभावाद् भावस्य परावृत्तिर्युक्ता; निःस्वभावत्वप्रसङ्गात् । नाप्यन्यस्य भेदे तस्य जनकस्वभावस्याविकलस्याजनकत्वं युक्तम्; अतिप्रसङ्गात् । भवतु वा तस्यैव स्वस्वभावाद् भेदः, तथाप्येकस्य जनकत्वाजनकत्वविरोधो न परिहृत एव । तथा हि—भेदादपि तस्यैकस्याक्षतो भवेत् । ननु नान्योऽन्वयात्, किं तर्हि? स एवान्वयः, ततश्च स एवैकस्य [G. 501] जनकत्वाजनकत्वविरोधस्तदवस्थ एव । अन्वेतीत्यन्वयः = जनकस्वभाव उच्यते । नान्वेतीति अभिमुखीकरणम् ।

अपि च—अन्वयव्यतिरेकाभ्यां विशेषेभ्य एव कार्यसिद्धेस्त एव वस्तुलक्षणयुक्ताः[2], न सामान्यार्थम्; क्रियाकारित्वलक्षणत्वाद् वस्तुत्वस्य, ततश्च किं सामान्यं स्वलक्षणाद्भिन्नम्, अहोस्विदभिन्नमिति किमर्थं क्रियार्थिनस्तत्र भेदाभेदचिन्तया; यस्माद् यमेव स्वभावमर्थक्रियायोग्यमभिसन्धायैष पुमानर्थक्रियार्थी प्रवर्त्तते, तद्गतावेव भेदाभेदौ चिन्त्येतेऽर्थक्रियार्थिभिः, न व्यसनितया । अन्यथा हि यदकल्पितौ भेदाभेदौ नेष्येते, तदा तस्यार्थक्रियायोग्यस्यात्मना = स्वेन रूपेण भेदः पारमार्थिकोऽस्त्येव, व्यावृत्त्या च विकल्पबुद्धिप्रतिभासाऽनुरोधिन्या कृतव्यवस्था सामान्यताऽव्यवसितस्वभावाऽस्त्येव—इत्यविवाद एव । इयतैवार्थक्रियार्थिनो भेदसामान्यचिन्ता समाप्तेति किमनर्थक्रियाकारिणः सामान्यस्य भेदाभेदचिन्तया ?

अथापि स्याद्—अस्त्येव सामान्यमस्तु, किं परिकल्पितया व्यावृत्त्या ? इत्याह—अस्तीत्यादि । यदि घटादिरूपं घटादिरन्वियात्, तदा मधूदकाद्याहरणार्थी

१. विशेषे—पा०, गा० ।
२. स्वलक्षण०—पा०, गा० ।

कल्पनारचितस्यैव वैचित्र्यस्योपवर्णने ।
को नामातिशयः प्रोक्तो विप्र-निर्ग्रन्थ-कापिलैः ॥ १७७५ ॥
वर्द्धमानकभङ्गेन रुचकः क्रियते यदा ।
तदा पूर्वार्थिनः शोकः प्रीतिश्चाप्युत्तरार्थिनः ॥ १७७६ ॥
हेमार्थिनस्तु माध्यस्थ्यं तस्माद् वस्तु त्रयात्मकम् ।
नोत्पादस्थितिभङ्गानामभावे स्यान्मतित्रयम् ॥ १७७७ ॥

कुमारिलमतम्

न नाशेन विना शोको नोत्पादेन विना सुखम् ।
स्थित्या विना न माध्यस्थ्यं तेन सामान्यनित्यता ॥ १७७८ ॥

---

घटादावपि प्रवर्त्ततेति प्रवृत्त्यादेः प्रसङ्गः स्यात् । आदिशब्दात् तुल्योत्पत्तिनिरोधादिप्रसङ्गः ॥ १७६३-१७७४ ॥

अथ सौगतैरिव परैरपीदमिष्यते—

"तस्माद्यतो यतोऽर्थो नाम्यावृत्तस्तन्निबन्धनाः ।
जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः" ॥ (        ) इति ?

अत्राह—कल्पनारचितस्येत्यादि । वैचित्र्यस्येति भेदस्य[1] ॥ १७७५ ॥

वर्द्धमानकभङ्गेनेत्यादिना कुमारिलमतमाशङ्कते । स ह्याह—उत्पादस्थितिविनाशस्वभावत्वात् सर्वमेव वस्तु त्र्यात्मकम् । एकस्मादपि प्रीत्यादिकार्यत्रयदर्शनात्, तथा हि—यदा वर्द्धमानकं भङ्क्त्वा रुचकः क्रियते, तदा [G 502] वर्द्धमानकार्थिनः शोक उत्पद्यते, रुचकार्थिनः प्रीतिः, सुवर्णार्थिनस्तु माध्यस्थ्यम् । यदि च वस्त्वेकरूपमेव स्यात्, तदैकाकारैव बुद्धिः स्यात्, न त्रिप्रकारा । वर्द्धमानकरुचकौ = भाजनविशेषौ ॥ १७७६–१७७७ ॥

स्यादेतत्—यदि नाम त्र्यात्मकं वस्त्विति सिद्ध्यति, तथापि नाशादिरूपेण त्र्यात्मकमित्येतत् कुतः ? इत्याह—न नाशेन विनेत्यादि । तेन सामान्यनित्यतेति । यस्मात् स्थित्यादिना न माध्यस्थ्यस्य स्थित्यविनाभावित्वेन, सामान्यस्यापि = सुवर्णत्वस्य, नित्यता प्रतीयते ॥ १७७८ ॥

---

1. जातिभेदादिरूपस्येत्यर्थः ।

तत्प्रतिविधानम्

इत्येतदपि नो युक्तमसमानाश्रयत्वतः[1] ।
उत्पादस्थितिभङ्गानामेकार्थाश्रयता न हि ॥ १७७९ ॥
समानकालताप्राप्ते परस्परविरोधिनाम् ।
इह तु क्षणभङ्गित्वे सति सर्वमनाकुलम् ॥ १७८० ॥
वर्द्धमानकभावस्य कलधौतात्मनः कथम् ।
अनन्वये विनाशे हि कस्यचिच्छोकसम्भव ॥ १७८१ ॥
सर्वथा पूर्वरूपस्य रुचकस्य तदात्मन ।
जन्मन्युत्पद्यते प्रीतिर्नावस्थानं तु कस्यचित् ॥ १७८२ ॥
शातकुम्भात्मकौ भावौ यदा पश्यति मूढधी ।

इत्येतदित्यादिना प्रतिविधत्ते। असामान्याश्रयत्वत इत्येतद्ग्रहणकवाक्यम्। अस्य व्याख्यानम्—उत्पादस्थितीत्यादि। यदि हि वस्त्वेकमप्युत्पादादित्रिस्वभावेन व्यात्मकं स्यात्, तदा युगपत्परस्परविरोधिन उत्पादस्थितिविनाशा प्राप्नुवन्ति। न च विरोधिनामेकत्र युगपद्भावो युक्त, अन्यथा हि विरोधित्वमेव न स्यात्।

कथं तर्हि मतित्रयस्योत्पत्तिर्युक्तेति चेत् ? यथा युक्ता तथा श्रूयतामिति दर्शयन्नाह—इह त्विति वर्द्धमानकभाव। स किंविशिष्ट ? कलधौतात्मा = कलधौतं सुवर्णम्, स एवात्मा स्वभावो यस्येति विग्रह, तस्य स्वत = स्वरसेन, विनाशे सति कस्यचित्तदर्थिन शोक उत्पद्यते। अपूर्वस्य तु रुचकाख्यभावस्य तदात्मन = हेमात्मन जन्मनि = उत्पादे सति, कस्यचिद् रुचकाद्यर्थिनस्तस्य प्रीतिरुत्पद्यते। न तु कस्यचित् सुवर्णात्मनोऽवस्थानमस्ति, निरन्वयत्वादुत्पादविनाशयो ॥ १७७९–१७८२ ॥

[G 503] यद्येवम्, कथं तर्हि माध्यस्थ्यबुद्धि ? इत्याह—शातकुम्भेत्यादि। शातकुम्भात्मकौ सुवर्णस्वभावौ वर्द्धमानरुचकाख्यौ भावौ क्रमेण यदा पश्यति मूढमति। पश्यन्नपि स्वभावविवेकं सदृशापरोत्पत्तिविप्रलब्ध, विवेचयितुमसमर्थत्वात्। अत एव समानाकारभावेन भ्रान्तिनिमित्तेन विप्रलब्धोऽवस्थाद्वयेऽपि

1. °सामान्याश्रयत्वत —पा°, गा° ।

समानापरभावेन स्थिरत्वं मन्यते तदा ॥ १७८३ ॥
हेम्नोऽवस्थितरूपत्वे तद्रूपं रुचकाद्यपि ।
पूर्वोत्तराद्यवस्थासु दृश्येतानेकताऽन्यथा ॥ १७८४ ॥

# त्रैकाल्यपरीक्षा

### बौद्धैकदेशिनो वसुमित्रस्य भावत्रैकाल्यमतम्

हेमानुगमसामान्ये[1] त्रिकालानुगतो ननु[1] ।
अवस्थाभेदवान् भावः कश्चिद् बौद्धैरपीष्यते ॥ १७८५ ॥

---

हेम्नः स्थिरत्वं मन्यते । समानापरभावेनेति[2] । अहेमरूपानुविमानसाधर्म्येण समानस्यापरस्य भावः = उत्पादः समानापरभावः । कथं पुनरवसीयते—समानापरभावेन विमलरूपः स्थिरत्वं मन्यते, न तु पुनर्वस्तुन एव तथाभावात् ! इत्याह—हेम्न इत्यादि । यदि हेम्नः स्थिरत्व स्यात्, तदा तदव्यतिरिक्तं रुचकाद्यपि वर्द्धमानावस्थासु दृश्येत; उपलब्धिलक्षणप्राप्तत्वात् । अन्यथा = यदि रुचकस्य वर्द्धमानावस्थायां न दृष्टिर्वर्द्धमानस्य च[3] रुचकावस्थायामुपलब्धिलक्षणप्राप्तस्य, तदानीं तयोः परस्परतो भेदः, ततश्च व्यतिरेकाच्च तत्स्वभाववद्धेम्नोऽपि भेदः सिद्धः स्यादित्यालोच्याह—अनेकताऽन्यथेति । यच्च "अवधीकृतवस्तुभ्य" ( तत्त्व० १७०० ) इत्यादिना[4] भेदसाधनमुक्तम्, तत्र सिद्धसाध्यतैवेति दूषणमुच्यते ॥ १७८३-१७८४ ॥

इति स्याद्वादपरीक्षा

---

"असङ्क्रान्तिम्" ( तत्त्व० ४ ) इत्यस्य समर्थनार्थमाह—हेमेत्यादि । "नावस्थान तु कस्यचित्" (तत्त्व० १७८०) इत्यत्रेदं चोद्यम्—ननु कथमिद-

---

१—१. हेम्नोऽनुगमसाम्येन स्थिरत्व मन्यते तदा—पा०, गा० ।
२. ०भाव इति—जै० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।
४. इत्यादि—पा०, गा० ।

अवस्थाभेदभावेऽपि यथा वर्ण्यं जहाति न ।
हेमाध्वसु तथाभावो द्रव्यत्वं न त्यजत्ययम् ॥ १७८६ ॥
अतीताजातयोर्ज्ञानमन्यथाऽविषयं भवेत् ।
द्वयाश्रयं च विज्ञानं तायिना कथितं कथम् ॥ १७८७ ॥

---

मुच्यते 'भावस्थानं तु कस्यचित्' इति, भावत्वा केश्चिद् धर्मत्रातप्रभृतिभिर्वैदेशि कालत्रयावस्थितो भाव इष्टः; अवस्थाभेदात्, हेमानुगमसाधर्म्येण ॥ १७८५ ॥

एतदेव द्वितीयेन श्लोकेन दर्शयति । तत्र भावान्यथावादी भदन्तधर्मत्रातः । स किलाह—"धर्मस्याध्वसु वर्तमानस्य भावान्यथात्वमेव केवलम्, न तु द्रव्यस्य" इति । यथा सुवर्णद्रव्यस्य कटककेयूरकुण्डलाद्यभिधाननिमित्तस्य गुणस्यान्यथात्वं न सुवर्णस्य, तथा धर्मस्यानागतादिभावादन्यथात्वम् । तथा हि—अनागतभावपरित्यागेन वर्तमानभाव प्रतिपद्यते धर्मः, वर्तमानभावपरित्यागेन चातीतभावम्, न तु द्रव्यान्यथात्वम्; सर्वत्र द्रव्यस्याव्यभिचारात् । अन्यथाऽन्य एवानागत, अन्यो वर्तमान, अन्योऽतीत —इति प्रसज्यते । क्व पुनर्भावस्तेनेष्टः ? गुणविशेष, यतोऽतीताद्यभिधानज्ञानप्रवृत्ति ।

लक्षणान्यथावादी भदन्तघोषकः । स किलाह—धर्मोऽध्वसु वर्तमानोऽतीतोऽतीतलक्षणयुक्तोऽनागतप्रत्युत्पन्नाभ्यां लक्षणाभ्यामवियुक्त । यथा—पुरुष एकस्यां स्त्रियां रक्त शेषास्वविरक्त, एवमनागतप्रत्युत्पन्नावपि वाच्यौ[1] ।

अस्य अतीतादिलक्षणकृतिलक्षणापेक्षो व्यवहार इति पूर्ववद् भेद ।

अवस्थान्यथावादी भदन्तवसुमित्रः । स किलाह—"धर्मोऽध्वसु वर्तमानोऽवस्थामवस्थां प्राप्यान्योऽन्यो निर्दिश्यतेऽवस्थान्तरत, न द्रव्यत, द्रव्यस्य त्रिष्वपि कालेष्वभिन्नत्वात् । यथा मृद्गुटिका एकाङ्के प्रक्षिप्ता एकमित्युच्यते, शताङ्के शतम्, सहस्राङ्के सहस्रम्, तथा कारित्रेऽवस्थितो भावो वर्तमान, ततः प्रच्युतोऽतीत, तदप्राप्तोऽनागत" इति । अस्य व्यवस्थापेक्षया व्यवहार, यथा मृद्गुटिकायाम् । न हि तस्या स्वभावान्यथात्वं भवति; किं तर्हि ? स्थानविशेषसम्बन्धात् सङ्ख्याभिधेयतः संज्ञान्तरमुपयते ।

---

१. वाच्ये—पा०, मा० ।

कर्मातीतं च निःसत्त्वं कथं फलदमिष्यते ।
अतीतानागतं ज्ञानं विभक्तं योगिनां च किम् ॥ १७८८ ॥

---

अन्यथान्यथिको [1]भदन्तबुद्धदेवः । स किलाह—"धर्मोऽध्वसु वर्त्तमानः पूर्वापरमपेक्ष्यान्योन्य उच्यते" इति । यथैका स्त्री माता चोच्यते, दुहिता चेति । अस्य पूर्वापरापेक्षो व्यवहारः । यस्य पूर्वमेवास्ति नापरः सोऽनागतः, यस्य पूर्वमस्ति अपरं च स वर्त्तमान, यस्यापरमेव न पूर्वं सोऽतीत इति ।

एते चत्वारः [2]सर्वास्तिवादा भावलक्षणाऽवस्थान्यथान्यथिकसंज्ञिताः ।

तत्र प्रथमः परिणामवादित्वात् साङ्ख्यमतान्न भिद्यते । [G 505] यस्तस्य प्रतिषेधः सोऽस्यापि द्रष्टव्यः । तथा हि—पूर्वस्वभावापरित्यागेन वा परिणामो भवेत्, परित्यागेन वा ? यद्यपरित्यागेन, तदाऽध्वसङ्करप्रसङ्गः । अथ परित्यागेन, तदा सदाऽस्तित्वविरोधः ।

द्वितीयस्यापि वादिनोऽयं सङ्कर एव; सर्वस्य सर्वलक्षणयोगात् । रूपस्त्वर्थान्तरभूतरागसमुदाचाराद्रक्त उच्यतेऽविरक्तश्च समन्वागममात्रेण, न तु धर्मस्य लक्षणसमुदाचारो लक्षणसमन्वागमो वा प्रतिलक्षणोऽस्ति, अन्यत्वप्रसङ्गाल्लक्षणस्य प्राप्तिवदिति न साम्यं दृष्टान्तस्य दार्ष्टान्तिकेन ।

तृतीयस्य कारित्रेणाध्वस्यवस्थेति[3] तस्य विस्तरेण दूषणं वक्ष्यते ।

चतुर्थस्याप्येकस्मिन्नेवाध्वनि त्रयोऽध्वानः प्राप्नुवन्ति । तथा हि—अतीतेऽध्वनि पूर्वपश्चिमौ क्षणावतीतानागतौ, मध्यमः क्षण प्रत्युत्पन्न इति । यथा दूषणविशेषः स्पष्टः ।

तृतीयमेवारभ्य भूयस्त्रैकाल्यपरीक्षाऽऽरभ्यते—

हेमदृष्टान्तेन तु सिद्धान्तोपक्षेपमात्रं कृतम्, न तु धर्मत्रातदर्शनमेवाभिमतम् । तथा च वक्ष्यति—"कारित्रेण विभागोऽयमध्वनां यत् प्रकल्प्यते" (तत्त्व० १७९०) इति । न च धर्मत्रातस्य कारित्रेणाध्वव्यवस्था, किं तर्हि ? वसुमित्रस्य । तत्र यद्यतीतानागतं न स्यात्, 'अमून्महासम्मतो भविष्यति

---

१. बुद्धदेवः—पा०, गा० । २. सर्वेऽस्तिवादाः—पा०, गा० ।
३. ०ध्वव्यवस्थेति—पा०, गा० ।

न द्रव्यापोहविषया अतीतानागतास्ततः ।
अध्वसंग्रहरूपादिभावादेर्वर्तमानवत्[1] ॥ १७८९ ॥
न चैवमिह मन्तव्यमध्वभेदः कुतो न्वयम् ।

---

चक्रवर्ती' इत्यतीतानागतयोर्विज्ञानं निरालम्बनमेव स्यात्, ततश्च विज्ञानमेव न स्यात्; आलम्बनाभावादिति भावः । तथा हि—प्रतिवस्तु विज्ञप्त्यात्मकं विज्ञानम्, असति च ज्ञेये न किञ्चिदनेन ज्ञेयमित्यविज्ञानमेव स्यात् । किञ्च—"द्वयं प्रतीत्य विज्ञानमुत्पद्यते" (                ) इति भगवतोक्तम्—"कतमद् द्वयम्? चक्षूरूपाणि यावन्मनोधर्मा" (                ) इति । असति चातीतानागते तदालम्बनं विज्ञानं द्वयं प्रतीत्य न स्यादित्यागमविरोधः । अपि च—अतीतं कर्म फलदं न स्यात्, यदि तस्य सत्त्वं सर्वथाशून्यं भवेत्; फलोत्पत्तिकाले विपाकहेतोरभावात् । न चासतः कार्योत्पादनशक्तिरस्ति; सर्वसामर्थ्यविरहलक्षणत्वादसत्त्वस्य । किञ्च—'आसीन्मान्धाता[2] भवदत्तः, भविष्यति चक्रवर्ती मैत्रेयस्तथागतः' इत्यादिना विभागेन योगिनामतीतादिविषयं विभक्तं विज्ञानं न स्यात् । न ह्यसतो विभागोऽस्ति । यस्मादतीतानागता भावाः श्रीहर्षादयो न द्रव्यप्रतिषेधरूपाः; अध्वसंगृहीतरूपादित्वेनोपदिष्टत्वाद्, वर्तमानवत् । उक्तं हि भगवता—"अतीतं चेद् भिक्षवो रूपं नाभविष्यत्, न श्रुतवानार्यश्रावकोऽतीतरूपेऽनपेक्षोऽभविष्यत् । यस्मात्तर्ह्यस्त्यतीतं रूपम्, तस्माच्छ्रुतवानार्यश्रावकोऽतीतरूपेऽनपेक्षो भवतीति विस्तरः" तथा—"यत्किञ्चिद्रूपमतीतमनागतादि तत्सर्वमभिसंक्षिप्य 'रूपस्कन्ध' इति सङ्ख्यां गच्छति" (                ) इत्यादि । अध्वना संग्रहो येषां तेऽध्वसंग्रहा रूपादयः । आदिशब्देन वेदनादिपरिग्रहः । तेषां भावो [G 506] रूपादित्वम् । अत्राप्यादिशब्देन दुःखसमुदयानित्यानात्मादित्वेनोपदिष्टत्वादिति गृह्यते ॥ १७८६–१७८९ ॥

अथापि स्यात्—आश्रयवत् सदावस्थितत्वादतीतादिव्यवस्था तर्हि कथम्? इत्याह—न चैवमित्यादि । यतः सम्प्राप्तकारित्रो वर्तमान उच्यते, उपरतकारि-

---

१. ॰रूपादिभाव॰—पा॰, मा॰ ।
२. ॰मान्धाता—जै॰; ॰मान्धाती—पा॰, मा॰ ।

कारित्रेण विभागोऽयमध्वनां यत् प्रकल्प्यते ॥ १७९० ॥
कारित्रे वर्त्तते यो हि वर्त्तमानः स उच्यते ।
कारित्रात् प्रच्युतोऽतीतस्तदप्राप्तस्त्वनागतः ॥ १७९१ ॥
फलाक्षेपश्च कारित्रं धर्माणां जनकं न तु ।
न चाक्षेपोऽस्त्यतीतानां नातः कारित्रसम्भवः ॥ १७९२ ॥

तत्प्रतिविधानम्

तैः कारित्रमिदं धर्मादन्यत् तद्रूपमेव वा ।

---

त्रोऽतीतः, अप्राप्तकारित्रोऽनागत इत्यध्वानः कारित्रेण व्यवस्थिताः । किं पुनरत्र कारित्रमभिप्रेतम् ? यदि दर्शनादिलक्षणो व्यापारः, यथा पञ्चानां चक्षुरादीनां दर्शनादिकम्—यतश्चक्षुः पश्यति, श्रोत्रं शृणोति, घ्राणं जिघ्रति, जिह्वा स्वादयतीत्यादिविज्ञानस्यापि विज्ञातृत्वम् विजानातीति कृत्वा रूपादीनामिन्द्रियगोचरत्वम् । एवं सति प्रत्युत्पन्नस्य तत्सभागस्य[1] चक्षुषो निद्राद्यवस्थायां कारित्राभावाद् वर्त्तमानता न स्यात् ।

अथ फलदानग्रहणलक्षणं कारित्रम्, यथा—चक्षुषा सहभवा धर्मा चात्वारः पुरुषाकारफलम्, अनन्तरोत्पन्नं चक्षुरिन्द्रियं पुरुषकारफलमधिपतिफलं निष्यन्दफलं च, एतत् फलं जननात् सभागहेतुभावावस्थानाद् गृह्णच्चक्षुर्वर्त्तमानमुच्यत इति ? एवं तर्ह्यतीतानामपि सभागसर्वत्रगविपाकहेतूनां फलदानाभ्युपगमाद् वर्त्तमानत्वप्रसङ्गः । अथ समस्तमेव फलदानग्रहणलक्षणं कारित्रमिष्यते, एवमतीतस्य सभागहेत्वादेरर्धवर्त्तमानत्वप्रसङ्गः ?—इत्येतद्दोषभयादाचार्यसंहतभद्र[2] आह—"धर्माणां कारित्रमुच्यते फलाक्षेपशक्तिः, न तु फलजननम् । न चातीतानां सभागहेत्वादीनां फलाक्षेपोऽस्ति; वर्त्तमानावस्थायामेवाक्षिप्तत्वात् । न चाक्षिप्तस्याक्षेपो युक्तः; अनवस्थाप्रसङ्गात् । तस्मादतीतानां न कारित्रसम्भव इति नास्ति लक्षणसङ्करः" (    ) इति ॥ १७९०-१७९२ ॥

तैरित्यादिना प्रतिविधत्ते । [G. 507] तत्कारित्रं धर्मादन्यद्वा स्याद्, अनन्यद् वा ?—इति तैरभ्युपगन्तव्यम्; अन्यानन्ययोरन्योऽन्यपरिहारस्थितलक्षणत्वात्,

---

1. तत्समानरूपस्येत्यर्थः ।  2. ०सङ्घभद्र—पा०, गा० ।

अभ्युपेयं यदन्यास्ति गतिः काचिन्न वास्तवी ॥ १७९३ ॥
अन्यत्वे वर्त्तमानानां प्रागूर्ध्वं वाऽस्वभावता ।
हेतुत्वसंस्कृतत्वादेः कारित्रस्येव गम्यताम् ॥ १७९४ ॥
अन्यथा नित्यतासक्तिः[1] स्वभावावस्थितेः सदा ।
नैतद् रूपातिरिक्तं हि विद्यते नित्यलक्षणम् ॥ १७९५ ॥
नित्यस्य हेतुता पूर्वं क्रमाक्रमविरोधतः ।
निषिद्धा संस्कृतत्वं हि व्यक्तं नित्ये निरास्पदम् ॥ १७९६ ॥
स्कन्धादिव्यतिरिक्तस्य कारित्रस्योपवर्णनम् ।
स्वसिद्धान्तविरोधश्च दुर्निवारः प्रसज्यते ॥ १७९७ ॥
अनन्यत्वेऽपि कारित्रं धर्मादव्यतिरेकतः ।

---

प्रकनिषेधस्यापरविधिनान्तरीयकत्वात् । नान्या वस्तुनो गतिरस्ति । तत्र यद्यन्यत्, तदा वर्त्तमानानां प्रागूर्ध्वावस्थयोः निःस्वभावता प्राप्नोति; हेतुत्वसंस्कृतत्वादेर्हेतोः[2], कारित्रवत् । आदिशब्देन वस्तुत्वादयो गृह्यते । अन्यथा यदि प्रागूर्ध्वं च निःस्वभावता न स्यात्, तदा सर्वस्य संस्कृतस्य नित्यता प्राप्नोति; स्वभावस्य सर्वदा व्यवस्थितत्वात् । न च सदासत्त्वव्यतिरेकेण नित्यत्वलक्षणमस्ति । यदाह—"नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यति" (        ) इति ॥ १७९३-१७९५ ॥

स्यादेतत्—यदि नाम नित्यता शक्तिः, हेतुत्वसंस्कृतत्वादेस्तु हेतोः कथं साध्यविपक्षेण विरोधः ? इत्याह—नित्यस्येत्यादि । पूर्वमिति स्थिरभावपरीक्षायाम् । सर्वस्य च संस्कृतस्यानित्यत्वाभ्युपगमात् संस्कृतत्वं नित्ये न सम्भवतीति स्पष्टमेवावसीयते । किञ्च—स्कन्धायतनव्यतिरिक्तस्य कारित्रस्योपवर्णने सिद्धान्तविरोधः । तथा हि भगवतोक्तम्—"सर्वं सर्वमिति ब्राह्मण यदुत पञ्चस्कन्धाः, द्वादशायतनानि, अष्टादश च[3] धातवः[3]" (        ) इति ॥ १७९६-१७९७ ॥

१. नित्यतापत्तिः—पा०, गा० ।
२. ०त्वादेर्वो—पा०, गा० ।
१-३. चामनः—पा०; आभरः—गा० ।

स्वरूपमिव धर्मस्य प्रसक्तं सार्वकालिकम् ॥ १७९८ ॥
ततश्चाध्वविभागोऽयं तद्वशान्न प्रकल्प्यते ।
न हि तस्य च्युतिः प्राप्तिरप्राप्तिर्वा विभागतः ॥ १७९९ ॥
कारित्राव्यतिरेकाद्वा धर्मः कारित्रवद् भवेत् ।
पूर्वापरव्यवच्छिन्नमध्यमात्रकसत्त्ववान्[1] ॥ १८०० ॥
कारित्रं सर्वदा नास्ति सदा [2]धर्मस्तु वर्ण्यते ।
धर्मान्नान्यच्च कारित्रं व्यक्तं देवविचेष्टितम् ॥ १८०१ ॥
कारित्रान्तरसापेक्षा तत्राप्यध्वस्थितिर्यदि ।
तुल्यः पर्यनुयोगोऽयं ननु सर्वत्र धावति ॥ १८०२ ॥

[ G 508 ] अथानन्यत्कारित्रमभ्युपगम्यते, तदा धर्मस्वरूपवत् तदव्यतिरेकात् तदपि सार्वकालिकं प्राप्नोति । ततश्च कारित्रात् प्रच्युतोऽतीतः, तत्प्राप्तो वर्तमानः, तदप्राप्तोऽनागतः—इति कारित्रवशादयमध्वविभागो न स्यात्; यतोऽस्य कारित्रस्य यदि विभागेन [3]च्युतिप्राप्त्यप्राप्तयः स्युः, तदा स्यादयमध्वविभागः, न च तानि विभागेन सम्भवन्ति; सदावस्थितैकरूपस्य विभागाभावात् ॥ १७९८–१७९९ ॥

किञ्च—कारित्रादव्यतिरिक्तत्वाद् धर्मोऽपि पूर्वापरकोटिशून्यसत्तायोगी प्राप्नोति कारित्रवत् । पूर्वापरव्यवच्छिन्नम् = पूर्वापरकोटिशून्यम्, मध्यमात्रकं च तत्सत्त्वं[4] चेति विग्रहः । तदस्यास्तीति तद्वान् ॥ १८०० ॥

कारित्रमित्यादिना परस्परविरुद्धाभ्युपगमोद्भावनेनोपहसति । एवं तर्हि रूपादिधर्मो न सदास्तीति प्रसक्तम्, कारित्रादव्यतिरिक्तत्वात् ? इत्याह—सदा धर्मश्चेति । एवमपि धर्मादन्यत् कारित्रं प्रसज्यते ? इत्याह—धर्मान्नान्यच्च कारित्रम् । देवाः = ईश्वरादयः, ते हि युक्तायुक्तमनालोच्य स्वातन्त्र्येणैव वर्तन्ते इति तेषां यथाचेष्टितं युक्तिनिरपेक्षं स्वातन्त्र्येण प्रवृत्तिः, तद्वदेतदिति यावत् । किञ्च—यदि कारित्रस्य कारित्रमन्तरेणानागतादित्वमिष्यते, न तर्हि वक्तव्यम्—'अध्वानः कारित्रेण

1. सर्वदान्—पा०, गा० । 2. धर्मश्च— पा०, गा० ।
3. यदि प्राप्त्य०—पा०, गा० । 4. तत्सर्वं—पा०, गा० ।

स्वरूपाद् व्यतिरिक्तोऽपि दृष्टः सप्रतिघत्ववत् ।
विशेषश्चेदिदं नैव प्रकृतस्योपकारकम् ॥ १८०३ ॥
न हि सप्रतिघत्वादिः पदार्थस्यानुगामिनः ।
कादाचित्को मतः कश्चिद्भावस्यैव तथोद्भवात् ॥ १८०४ ॥
अनाक्षिप्तान्यभेदेन भाव एव तथोच्यते ।
सद्रूपस्येति[1] शब्देन चेतसो वासनापि च[2] ॥ १८०५ ॥

---

व्यवस्थिता' इति; व्यभिचारात् । यथा कारित्रस्य स्वरूपसत्त्वापेक्षयाऽनागतादित्वं व्यवस्थाप्यते, एवं भावानामप्यनागतादित्वं भविष्यतीति किं कारित्रकल्पनया ! अथ मा भूद् व्यभिचारदोष इति कारित्रस्यापि कारित्रमभ्युपगम्यते ? तदा तत्रापि व्यतिरेकादिचिन्तया तुल्यः पर्यनुयोगः, अनवस्थादोषश्च ॥ १८०१-१८०२ ॥

यदुक्तम्—अनन्यत्वेऽपि कारित्रं सार्वकालिकं प्राप्नोति धर्मस्वरूपवदविशेषा-दिति । अत्र भदन्तसंहतभद्र आह—स्वरूपादित्यादि[3] । [G 509] "स्वरूपाद् व्यतिरिक्तोऽपि विशेषको धर्मो दृष्टः, यथा—सप्रतिघत्वादिः पृथिव्यादीनाम् । ते हि पदार्थत्वेनाविशिष्टा अपि सप्रतिघा अप्रतिघाः, सनिदर्शना अनिदर्शनाश्च इति स्व-रूपाद् व्यतिरिक्तैर्धर्मैर्विशिष्टाः प्रतीयन्ते, तद्वत्कारित्रेणापि धर्मः" इति । तदेतत् प्रकृता-नुपकारकम् । तथा हि इदमत्र प्रकृतम्—'पदार्थात् कारित्रस्याभेदेऽभ्युपगम्यमाने सत्येकस्यैव पदार्थस्यात्मभूतकारित्रस्याविशेषात्तद्वशादयमध्वविभागो नावकल्पते' इति । पृथिव्यादयस्तु परस्परमन्योऽन्यलक्षणभेदात्सन्नाभिन्ना इति युक्तं यत्र केचित् सप्रतिघा भवन्ति केचिदप्रतिघा एव, यथा—वेदनादयः, न तु य एवा-प्रतिघास्त एव सप्रतिघा इति, यतो न कश्चिदेकोऽनुगामी पदार्थोऽस्ति पृथिव्या-दीनां यस्सप्रतिघत्वादिधर्मः कादाचित्को भवेत्, किं तर्हि ? भावस्य निरवयवस्य तथा सजातीयविजातीयव्यावृत्तस्योद्भव इति न स्वरूपाद्व्यतिरिक्तो धर्म एकस्य भेदको युक्तः ॥ १८०३-१८०४ ॥

कथं रूपस्य सप्रतिघत्वमिति व्यतिरेकीव व्यपदेशः, यदि स्वरूपाद्व्यतिरिक्तो धर्मो भेदको न भवेत् ? इत्याह—अनाक्षिप्तेत्यादि । अनाक्षिप्तान्यभेदेनेति

---

1. सद्रूपस्य—पा०, गा० । 2. ०वा—जै० । 3. पा०, गा० पुस्तकयोर्नास्ति ।

पुनस्तत्त्वान्यत्वव्यवस्थानस्य निरसनम्

तत्त्वान्यत्वप्रकाराभ्यामवाच्यमथ वर्ण्यते ।
सन्तानादीव कारित्रं स्यादेवं सांवृतं ननु ॥ १८०६ ॥
अतश्च कल्पितत्वेन तद् क्वचिन्नोपयुज्यते ।
कार्ये सन्ततिवद् यस्माद् वस्त्वेवार्थक्रियाक्षमम् ॥ १८०७ ॥
सन्निधानं च तस्येदं भाविकं नेति तत्कृतम् ।
अध्वत्रयव्यवस्थानं तात्त्विकं नोपपद्यते ॥ १८०८ ॥

---

भेदान्तरप्रतिक्षेपेणेत्यर्थः । तथोच्यत इति व्यतिरेकीव । तदिति समतिघत्वम् । शब्देनेति रूपस्य सप्रतिघत्वमित्यनेन[1] । अत्र दृष्टान्तमाह—चेतसो वासनापिचेति । अपिचेति समुदायो निपात इवार्थे द्रष्टव्यः ॥ १८०५ ॥

पुनः स[2] एवाह—"न कारित्रं धर्मादन्यत्, तद्व्यतिरेकेण स्वभावानुपलब्धेः । नापि धर्ममात्रम्, स्वभावास्तित्वेऽपि कदाचिदभावात् । न च न विशेष, कारित्रस्य प्रागभावात्, सन्तानवत् । तथा धर्मनैरन्तर्योत्पत्तिः सन्तान इत्युच्यते, न चासौ धर्मव्यतिरिक्तस्तदविभागेन गृह्यमाणत्वात् । न च धर्ममात्रम्, एकक्षणस्यापि सन्तानत्वप्रसङ्गात् । न च नास्ति, तत्कार्यसद्भावात्" इति । आह च—

"सन्ततिकार्यं चेष्टं न विद्यते सापि सन्ततिः काचित् ।
तद्वदवगच्छ युक्त्या कारित्रेणाऽध्वससिद्धिम्" ॥ (        ) इति ।

अत्राह—तत्त्वान्यत्वेत्यादि । [G 510] सन्तानादीवेति । आदिशब्देन समूहादिपरिग्रहः । यथा सन्तानिभ्यस्तत्त्वान्यत्वेनावाच्यत्वात् पुद्गलवत् सन्तानो निःस्वभावः, [3]तद्वत् कारित्रमपि निःस्वभाव[3] स्यात् । स्वभावे हि सति तत्त्वमन्यत्वम्, ततश्च तत्कारित्रं कल्पितत्वान्न क्वचित् कार्ये सन्ततिवदुपयुज्येत । न हि कल्पितस्य सन्तानस्य क्वचित् कार्येऽस्त्युपयोगः; तस्य निःस्वभावत्वात् । स्वभावप्रतिबद्धत्वात् कार्योदयस्य । तस्माद् वस्त्वेव सन्तानिस्वभावमर्थक्रियाक्षमम्,

---

१. प्रतिघत्व०—पा० ।
२. भदन्तघट्टभद्र इत्यर्थः ।
३-३. पा० पुस्तके नास्ति; तथा कारित्र निस्वभाव—पा० ।

कारित्राख्या फलाक्षेपशक्तिर्या शब्दगोचरा[1]।
शक्तेरेव च वस्तुत्वात् सा प्रज्ञप्तिसती कथम् ॥ १८०९ ॥

विस्तरेण भावानां त्रैकाल्यनिरसनम्

यच्चेदमीक्ष्यते[2] रूपं दाहपाकादिकार्यकृत्।
अतीतानागतावस्थं किं तदेवाभ्युपेयते ॥ १८१० ॥
तदेव चेत् कथं नाम तस्यैवैकात्मनः सतः।
अक्रिया च क्रिया चापि क्रियाविरतिरित्यपि ॥ १८११ ॥
एकस्मिन् निर्विशिष्टेऽस्मिन् परस्परपराहताः।
प्रकाराः कथमेते हि युज्यन्ते नाम वस्तुनि ॥ १८१२ ॥
एकावस्थापरित्यागे परावस्थापरिग्रहात्।
नैवैतन् निर्विशिष्टं चेद् वस्त्वध्वस्विति कल्प्यते ॥ १८१३ ॥

---

न सन्तानः कल्पित.। ततश्च कारित्रस्य प्रज्ञप्तिसत्त्वात् प्राग्वत्[3] पश्चादपि न परमार्थतः सन्निधानमस्तीति तद्वशादध्वत्रयव्यवस्थानमपि कल्पितमेव स्यात्, न भाविकम् ॥ १८०६–१८०८ ॥

अथापि[4] स्यात्—भवतु कारित्रं प्रज्ञप्तिसत्, तत्कृतं चाप्यध्वव्यवस्थानं प्रज्ञप्तिसत्, ततश्च को दोषः ? इत्याह—कारित्राख्येति।

[G 511] फलाक्षेपशक्तिर्हि धर्माणां कारित्रमिति वर्णितम्। या[5] च फलाक्षेपशक्तिः सा[6] नान्या वस्तुस्वलक्षणात्, किं तर्हि ? तदेव। अत एवासौ न शब्दगोचरा; असाधारणत्वात् स्वलक्षणे शब्दाप्रवृत्तेः। ततश्च शक्तिरेव वस्तु नान्यदिति कथं सा शक्तिः[6] प्रज्ञप्तिसती[7] भवेत्। नैव भवेदिति। ततश्च तद्वशादध्वव्यवस्थानं तात्त्विकमेवेष्टं भवतेति[8] भावः। किञ्च—यदेतद्दाहपाकाद्यर्थक्रियाकारि वह्न्यादिरूपमुपलभ्यते, किं तदेवातीतानागतावस्थम् ? आहोस्विदन्यत् ?

---

1. शब्दगोचरः—जै०। 2. यच्चेदमिष्यते—पा०, गा०।
3. प्रागनु—पा०, गा०। 4. तथापि—पा०, गा०।
5. सा—पा०, गा०। 6–6. पा०, गा० पुस्तकयोर्नास्ति।
7. ०स्ती स्य—गा०। 8. प्रज्ञप्तीति—पा०, गा०।

किं वै भावाद् विभिद्यन्तेऽवस्था नाकर्तृताश्रितः ।
तासामेव हि सद्भावात् कार्यसत्तोपलभ्यते ॥ १८१४ ॥
अभेदमनुमन्यन्ते कथमध्वसु वस्तुनः ।
ता अभूत्वा भवन्त्यश्च तदात्मिकाः ॥ १८१५ ॥
अवस्थायां च मध्यायां स्वरूपेणैव कारकम् ।
तत् तदेव स्वरूपं च दशयोरन्ययोरपि ॥ १८१६ ॥
तदक्रियाक्रियाभ्रंशौ कथमस्य तयोर्मतौ ।
पररूपेण कर्तृत्वे प्राप्ताऽस्याकर्तृता पुनः ॥ १८१७ ॥

---

यदि तदेव, कथमेकस्मिन्निविशिष्टेऽस्मिन् रूपादिके वस्तुन्यक्रियादयः परस्परविरुद्धा धर्मा युज्यन्ते, येन यथाक्रममनागतवर्त्तमानातीतव्यवस्था स्यात् ? यदि हि विरुद्धधर्माध्यासेऽप्येकत्वं स्यात्, उत्सन्ना तर्हि भेदव्यवस्था, ततश्च सर्वमेव जगदेकमेव स्यात्, एकत्वे च सहोत्पत्त्यादिप्रसङ्गः ! अथाप्यवस्थापरित्यागपरिग्रहभेदेन भिन्नत्वादध्वसु वस्तु न निर्विशिष्टमिति कल्प्यते, एवमपि किं ता अवस्था भावाद्भिन्नाः ? आहोस्विदभिन्नाः ?—इति वक्तव्यम् । पर आह—नेति । भिद्यन्ते भावादिति सम्बन्धः । कस्मात् ? भावस्याकर्तृत्वाश्रितः[1] = अकर्तृत्वप्रसङ्गात् । अन्वयव्यतिरेकाभ्यां तासामेवावस्थानां कार्यं प्रति सामर्थ्यसिद्धेः ॥ १८०९-१८१४ ॥

अत्र दूषणमाह—अभेदमित्यादि । वस्तुनः सकाशादभेदं कथमवस्थास्वनुमन्यन्ते[2] = प्रतिपद्यन्ते ? नैव; यस्मादभूत्वा भवन्त्यवस्थाः, भूत्वा च विनश्यन्ति । न च तथा वस्त्विष्टम्; सर्वदाऽस्तित्वाभ्युपगमात् । ततश्च कथं ता अभूत्वा भवन्त्यो विनश्यन्त्यश्च तदात्मिका युक्ताः ? नैव; भिन्नयोगक्षेमत्वात् । अन्यथा हि तदात्मत्वेनासामपि सदास्तित्वप्रसङ्गो वस्तुस्वभाववत्, [G 512] ततोऽव्यतिरेकाद् वस्तुनो वाऽभूत्वाभावादिप्रसङ्गोऽवस्थास्वरूपवत् ।

भवतु चावस्थाभेदपरिकल्पना, तथापि विरुद्धधर्माध्यासो न परिहृत एव । तथा हि—वस्तु मध्यावस्थायां किं स्वरूपेण कारकम् ? आहोस्वित् पररूपेण ? यदि

---

1. कर्तृत्वाश्रितः—पा०, गा० । 2. ०वस्थानुमन्यन्ते—पा० ।